# नैषधचरितम्।

प्रथमखण्डम्।

[प्रथमावधि नवमसर्गपर्य्यन्तम्]

महाकवि श्रीहर्षविरचितम्।

मल्लिनाथकृतां व्याख्यामवलम्ब्य

वि, ए, उपाधिधारिणा

पण्डितकुलपतिना

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया

समुद्भासितम्।

द्वितीयसंस्करणम्।

कलिकातानगर्य्याम्

नारायणयन्त्रे

मुद्रितम्।

इं १८९०।

# नैषधचरितम्।

## प्रथमः सर्गः।

निपीय यस्य क्षितिरक्षिणः कथां
तथाद्रियन्ते न बुधाः सुधामपि।
नलः सितच्छत्रितकीर्त्तिमण्डलः
स राशिरासीन्महसां महोज्ज्वलः॥ १॥

अथ तत्रभवान् श्रीहर्षकविः काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे इत्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनत्वाच्च काव्यालापांश्च वर्जयेदिति तन्निषेधस्यासत्काव्यविषयतां पश्यन् नैषधाख्यं महाकाव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्तिहेतोराशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखमित्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणात् कथानायकस्य राज्ञो नलस्य इतिवृत्तरूपं मङ्गलं वस्तु निर्दिशति निपीयेति। यस्य क्षितिरक्षिणः क्ष्मापालस्य नलस्य कथाम् उपाख्यानं निपीय नितरामास्वाद्य पीङ् स्वादे इति त्वबिति भवादेशः न तु पिबतेः न ल्यपीतिप्रतिषेधादीत्वासम्भवात्।

रसैः कथा यस्य सुधावधीरिणी
नलः स भूजानिरभूद्गुणाद्भुतः।
सुवर्णदण्डैकसितातपत्रित-
ज्वलत्प्रतापावलीकीर्त्तिमण्डलः॥ २॥

बुधास्तज्ज्ञाः सुराश्च स्त्राद्यचान्द्रिसुराबुधा इति क्षीरस्वामी सुधामपि तथा यथेयं कथा तद्वदित्यर्थः नाद्रियन्ते, सुधामपेक्ष्य बहु मन्यन्ते इति यावत्। सितच्छत्रितं सितच्छत्रं सितातपत्रीकृतमित्यर्थः तत्कृताविति एयन्तात् कर्म्मणि क्तः। कीर्त्तिमण्डलं येन सः महसां तेजसां राशिः रविरिवेति भावः। महैः उत्सवैः उज्ज्वलः दीप्यमानः नित्यमहोत्सवशालीत्यर्थः। मह उद्धव उत्सव इत्यमरः। स नल आसीत्। अत्र नले महसां राशिरिति कीर्त्तिमण्डले च सितच्छत्रत्वरूपस्यारोपात् रूपकं कथायाश्च सुधापेक्षया उत्कर्षात् व्यतिरेकश्चेत्यनयोः संसृष्टिः। तदुक्तं दर्पणे। रूपकं रूपितारोपाद् विषये निरपह्नवे इति आधिक्यमुपमेयस्योपमानान्न्यूनताथवा। व्यतिरेक इति मिथोऽपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते इति च। अस्मिन् सर्गे वंशस्थं वृत्तं जतौ तु वंशस्थमुदीरितं जराविति तल्लक्षणात्॥ १॥

इममेवार्थमन्यथा आह रसैरिति। यस्य नलस्य कथा रसैः स्वादैः रसो गन्धः रसः स्वाद इति विश्वः। सुधाम् अवधीरयति तिरस्करोतीति तथोक्ता अमृतादतिरिच्यमानस्वादेति यावत् ताच्छील्ये णिनिः। भूर्जाया यस्य स भूजानिः भूपतिरित्यर्थः जायाया निङिति बहुव्रीहौ जायायाश्च

पवित्रमत्रातनुते जगद्युगे
स्मृता रसक्षालनयेव तत्कथा ।
कथं न सा मद्गिरमाविलामपि
स्वसेविनीमेव पवित्रयिष्यति ॥ ३ ॥

नेन्द्रादेशः । स नलः गुणैः शौर्य्यदाक्षिण्यादिभिः अद्भुतः
लोकातिशयमहिमेत्यर्थः अभूत् । कथम्भूतः सुवर्णदण्डश्च
कं सितातपत्रञ्च ते कृते इन्द्वात् तत्कृताविति स्वम्तात्
कर्म्मणि क्तः । ज्वलत्प्रतापावलिः कीर्त्तिमण्डलञ्च यस्य
थाभूतः । इह कीर्त्तेः सितातपत्रत्वरूपणं पूर्वोक्तमपि
वर्णदण्डवैशिष्ट्यात् राज्ञश्च गुणाद्भुतत्वेन वैचित्र्यात् न पुन-
रुक्तिदोषः । अत्रापि पूर्ववद् व्यतिरेकरूपकयोः संसृष्टिः ॥ २ ॥

सम्प्रति कविः स्वविनयमाविष्करोति पवित्रमिति । अत्र
गे कलौ इति यावत् यस्य नलस्य कथा स्मृता स्मृतिपथं
तेत्यर्थः सती जगत् लोकं रसक्षालनयेव जलक्षालनयेवे-
त्युत्प्रेक्षा देहधात्वम्बुपारदा इति रसपर्य्याये विश्वः । पवित्रं
शुद्धम् आतनुते करोति सा कथा आविलां कलुषामपि
दोषामपीति यावत् स्वसेविनीमेव केवलं स्वकीर्त्तनपरा-
वेति भावः मद्गिरं मम वाचं कथं न पवित्रयिष्यति अपि तु
वित्रां करिष्यत्येवेत्यर्थः । तथाचोक्तं कर्कोटकस्य नागस्य
मयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलि-
शनमिति । या स्मृतिमात्रेण शोधनी सा कीर्त्तनात्
शुद्धेति कैमुत्यन्यायेनार्थान्तरापत्त्या अर्थापत्तिरलङ्कारः ।

अधीतिबोधाचरणप्रचारणै-
र्दशाश्चतस्रः प्रणयन्नुपाधिभिः।
चतुर्दशत्वं कृतवान् कुतः स्वयं
न वेद्मि विद्यासु चतुर्दशस्वयम्॥ ४॥

तदुक्तम् एकस्य वस्तुनो भावात् यत्र वस्त्वन्यथा भवे-
कैमुत्यन्यायतः सा स्यादर्थापत्तिरलङ्क्रियेति॥ ३॥

अस्य सर्वविद्यापारदर्शित्वमाह अधीतीति। अयं नल
चतुर्दशसु विद्यासु अङ्गानि वेदाश्चत्वारो मीमांसा न्याय
विस्तरः। धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दशेत्युक्त
अधीतिरध्ययनं गुरुमुखात् श्रवणमित्यर्थः बोधः अर्थावग
आचरणं तदर्थानुष्ठानं प्रचारणम् अध्यापनं शिष्येभ्यः प्रति
पादनमित्यर्थः तैश्चतुर्भिः उपाधिभिः विशेषणैः आचरण
विशेषैरित्यर्थः। उपाधिर्धर्म्मचिन्तायां कैतवे च विशेषणे इति
विश्वः। चतस्रो दशाः अवस्थाः प्रणयन् कुर्वन्नित्यर्थः स्व
चतस्रो दशा यासां तासां भावः चतुर्दशत्वं त्वतलोर्गुणवचन
स्येति पुंवद्भावो वक्तव्य इति स्त्रियाः पुंवद्भावः। सं
जातिव्यतिरिक्ताश्च गुणवचना इति सम्प्रदायः। चतुर्द
संख्याकत्वं कुतः कस्मात् कृतवान् न वेद्मि न जाने इति
स्वतःसिद्धस्य स्वयङ्करणं कथं पिष्टपेषणवदिति चतुर्दशान
चतुरावृत्तौ षट्पञ्चाशत्त्वात् कथं चतुर्दशत्वमिति च विरोध
भासद्वयम्। चतुरवस्थत्वमिति तत्परिहारश्च। तदुक्त
आभासत्वे विरोधस्य विरोधाभास उच्यते इति॥ ४॥

अमुष्य विद्या रसनाग्रनर्त्तकी
त्रयीव नीताङ्गगुणेन विस्तरम्।
अगाहताष्टादशतां जिगीषया
नवद्वयद्वीपपृथग्जयश्रियाम्॥ ५॥

अथास्यापरा अपि चतस्रो विद्याः सन्तीत्याह अमुष्येति अमुष्य नलस्य रसनाग्रनर्त्तकी जिह्वाग्रसञ्चारिणीत्यर्थः। विद्या पूर्वोक्ता सूदविद्या चेति गम्यते रसनाग्रनर्त्तित्वधर्म्मा-दिति भावः। त्रयीव त्रिवेदीव इति वेदास्त्रयस्त्रयीत्यमरः। अङ्गानां शिक्षा कल्पोव्याकरणं निरुक्तं छन्दसां चितिः। ज्योतिषञ्चेति विज्ञेयं षड़ङ्गं बुधसत्तमैरित्युक्तानां षणां मधु-राम्लकषायलवणकटुतिक्तानाञ्च रसानां षणां गुणेन आवृत्त्या वैशिष्ट्येन च अथ च अङ्गगुणेन शरीरसामर्थ्येन स्वकीयव्युत्-पत्तिविशेषेणेति यावत् विस्तरं वृद्धिं नीता प्रापिता सती नवानां द्वयं नवद्वयं लक्षणया अष्टादशेत्यर्थः तेषां द्वीपानां पृथग्भूता जयश्रियः तासां जिगीषया व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा। जेतुमिच्छयेवेत्यर्थः अष्टादशताम् अगाहत अभजत। पूर्वोक्तासु चतुर्दशसु विद्यासु विशिष्टव्युत्पत्त्या आयुर्वेदादीनामनुशीलनसौकर्य्यात् तत्पारदर्शित्वेन सूद-विद्यापक्षे च षणां रसानाम् उल्वणानुल्वणसमतारूपवै-विध्येन त्रयीपक्षे च एकैकवेदस्य प्रत्येकशः अङ्गानां शिक्षा-दीनां षाड्विध्यवैशिष्ट्येन चाष्टादशत्वसिद्धिः। प्रागुक्ताश्चतु-र्दशविद्याः। आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः। अर्थ-

दिगीशवृन्दांशविभूतिरीशिता
दिशां स कामप्रसभावरोधिनीम्।
बभार शास्त्राणि दृशं द्वयाधिकां
निजत्रिनेत्रावतरत्वबोधिकाम्॥ ६॥

शास्त्रं चतुर्थन्तु विद्या ह्यष्टादश स्मृता इति। अङ्गविद्या-गुणनेन त्वथ्या अष्टादशत्वमित्युपाध्याय-विश्वेश्वरभट्टारक-व्याख्याने तु अङ्गानि वेदाश्चत्वार इत्याथर्वणस्य पृथग्वेदत्वे त्रयीत्वहानिः। त्रय्यन्तर्भावे तु नाष्टादशत्वसिद्धिरिति चिन्त्यम् उपमोत्प्रेक्षयोः संसृष्टिः॥ ५॥

अथास्य देवांशत्वमाह दिगीशेति। दिशामीशा दिगीशाः दिक्पाला इन्द्रादयः तेषां वृन्दं समूहः तस्य मात्राभिः अंशैः विभूतिरुद्भवः यस्य तथाभूतः तथाच। इन्द्रानिलयमा-र्काणामग्नेश्च वरुणस्य च। चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीरिति। अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृप इति च स्मृतिः। दिशाम् ईशिता ईश्वरः स नलः शास्त्राणि दिशामिति च बहुवचननिर्देशात् इन्द्रादीनामेकैकदिगीशत्वम् अस्य तु सर्वदिगीशित्वमिति व्यतिरेको व्यज्यते। कामम् इच्छां मदनञ्च मदनस्य प्रसभेन बलात् अवरुणद्धीति तथोक्तां स्वेच्छाप्रवृत्तिनिवारिणीं कन्दर्पदहनकारिणीञ्चेत्यर्थः काम-प्रसरावरोधिनीमिति पाठे कामस्य प्रसरः विस्तारः वृद्धिरिति यावत् तमवरुणद्धीति तथैवार्थः। निजम् आत्मीयं यत् त्रि-नेत्रावतरत्वं दिगीशेश्वरांशप्रभवत्वं तस्य बोधिकां ज्ञापि

निजस्य तेजःशिखिनः परःशता
वितेनुरङ्गारमिवायशः परे ॥ ९ ॥
अनल्पदग्धारिपुरानलोज्ज्वलै-
र्निजप्रतापैर्वलयं ज्वलद्भुवः ।
प्रदक्षिणीकृत्य जयाय सृष्टया
रराज नीराजनया स राजघः ॥ १० ॥

निस्वनौ चापघोषौ इन्द्रचापगर्जिते च यस्य यत्र वा तथोक्तः स: नल एव घनः मेघः तस्य आशुगानां शराणाम् अन्यत्र आशुगा वेगगामिनी यद्वा आशुगेन वेगगामिना वायुना प्रमत्ता महती वृष्टिः आशुगौ वायुविशिखावित्यमरः । तया व्ययितस्य निर्वापितस्य विपूर्वादयतेः कर्म्मणि क्तः । निजस्य तेजःशिखिनः प्रतापाग्नेः अङ्गारमिव अयशः अपकीर्त्तिं वितेनुः विस्तारितवन्तः । पराजिता इति भावः । अत्र रूपकोत्प्रेक्षयोरङ्गाङ्गिभावः सङ्करः ॥ ९ ॥

अनल्पेति । राज्ञः प्रतिपक्षानिति भावः हन्तीति राजघः शत्रुघातीत्यर्थः राजघ उपसंख्यानमिति निपातः । स नलः अनल्पं दग्धानि अरिपुराणि शत्रुराष्ट्राणि यैः तथोक्ताः अनलवत् उज्ज्वलाः तैः निजप्रतापैः कोषदण्डसमुत्थतेजोभिः स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजमित्यमरः । ज्वलत् दीप्यमानं भुवः वलयं भूमण्डलं प्रदक्षिणीकृत्य प्रदक्षिणं परिभ्रम्य क्रमेण सर्वदिग्विजेतृत्वादिति भावः । जयाय सृष्टया सर्वभूजयनिमित्तं कृतयेत्यर्थः पुरोहितैरिति शेषः नीरा-

निवारितास्तेन महीतलेऽखिले
निरीतिभावं गमितेऽतिवृष्टयः।
न तत्यजुर्नूनमनन्यसंश्रयाः
प्रतीपभूपालमृगीदृशां दृशः॥ ११॥

जनया आरात्रिकया रराज शुशुभे। दिशो विजित्य प्रत्यावृत्तं विजिगीषुं स्वपुरोहिताः मङ्गलसंविधानाय नीराजयन्तीति प्रसिद्धिः। केचित्तु निजप्रतापैरिव जयाय सृष्टया जयार्थयैवेत्यर्थः नीराजनया आरात्रिकया ज्वलत् दीप्यमानं भुवो वलयं भूचक्रं प्रदक्षिणीकृत्य प्रदक्षिणं परिभ्राम्य रराज। अत्र ज्वलत्प्रतापानलो नानादिग्जैत्रयात्रायां प्राच्यादिप्रादक्षिण्येन भूमण्डलं परिभ्रमन् निजप्रतापनीराजनया भूदेवतां नीराजयन्निव रराजेत्युत्प्रेक्षा व्यञ्जकाद्यप्रयोगाद्गम्या। इति व्याचक्षते तन्न समीचीनं निजप्रतापैरित्यस्य नीराजनयेत्यनेन सामानाधिकरण्यासङ्गतेरिति॥ १०॥

निवारिता इति। तेन नलेन अखिले समग्रे महीतले न सन्ति ईतयः अतिवृष्ट्यादयः यत्र तत् निरीति: तस्य भावः तम् ईतिराहित्यमित्यर्थः ईतयश्चोक्ता यथा अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृता इति गमिते प्रापिते सति निवारिताः स्वराष्ट्रात् निराकृता इत्यर्थः अतिवृष्टयः नास्ति अन्यः संश्रयः आश्रयः यासां तथाभूताः सत्यः प्रतीपभूपालानां प्रतिपक्षनृपतीनां या मृगीदृशः मृगनयनाः कान्ताः तासां दृशः

पदैश्चतुर्भिः सुकृते स्थिरीकृते
कृतेऽमुना के न तपः प्रपेदिरे ? ।
भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन्
दधावधर्मोऽपि कृशस्तपस्विताम् ॥ ७ ॥

अत्र तृजकाभ्यां कर्त्तरीति कृद्योगसमासस्यैव निषेधात् शेष-षष्ठीसमासः तत्प्रयोजक इत्यादि-सूत्रकार-प्रयोगदर्शनादिति बोध्यम्। त्रयाधिकां तृतीयामित्यर्थः दृशं नेत्रं बभार दध्रे । एतेन अस्य शास्त्रेणैव कार्य्यदर्शित्वं व्यज्यते । शास्त्राणि दृश-मिति उद्देश्यविधेयरूपकर्म्मद्वयम् । अवतरेत्यत्राप्प्रत्ययान्तेन तरशब्देन सुप्सुपेति समासः न तूपसृष्टात् प्रत्ययोत्पत्तिः । अत्र शास्त्राणि दृशमिति व्यस्तरूपकम् ॥ ६ ॥

अथास्य प्रभावं दर्शयति पदैरिति । अमुना नलेन कृते सत्ययुगे सुकृते धर्मे वृषरूपत्वात् चतुर्भिः पदैः चरणैः । तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दान-मेकं कलौ युगे इत्युक्तचतुर्विधैरिति भावः स्थिरीकृते निश्चलीकृते इति यावत् के जनाः तपः चान्द्रायणादिरूपं कठिनं व्रतं का कथा ज्ञानादीनामिति भावः न प्रपेदिरे ? अपि तु सर्व एव तपस्विनरित्यर्थः यत् यतः अधर्मोऽपि का कथा अन्येषामित्यपि शब्दार्थः कृशः दुर्बलः सन् एकया अङ्घ्रेश्चरणस्य कनिष्ठया कनिष्ठया अङ्गुल्येत्यर्थः भुवं स्पृशन् कृतेऽपि अधर्मस्य लेशतः सम्भवादंशेनेति भावः तपस्वितां तापसत्वं दीनत्वञ्च मुनिदीनौ तपस्विनाविति विश्वः । दधौ

यदस्य यात्रासु बलोद्धतं रजः
स्फुरत्प्रतापानलधूममञ्जिम ।
तदेव गत्वा पतितं सुधाम्बुधौ
दधाति पङ्कीभवदङ्कतां विधौ ॥ ८ ॥

स्फुरद्धनुर्निस्वनतद्घनाशुग-
प्रगल्भवृष्टिव्ययितस्य सङ्गरे ।

धारयामास । अस्य शासनादधर्मोऽपि धर्मेषु आसक्तोऽभूत् किमुत अन्य इति कैमुत्यन्यायादर्थान्तरापत्त्या अर्थापत्तिरलङ्कारः अधर्मोऽपि धार्मिक इति विरोधश्चेत्यनयोः संसृष्टिः ॥ ७ ॥

अथास्य सप्तभिः प्रतापं वर्णयति यदित्यादिभिः । अ- नलस्य यात्रासु जैत्रयानेषु बलोद्धतं सैन्योत्क्षिप्तं स्फुरत् ज्वलतः प्रतापानलस्य यो धूमः तस्येव मञ्जिमा मनोहार- यस्य तथोक्तं सप्तम्युपमानेत्यादिना बहुव्रीहिः । मञ्जुशब्दात् मणिच्प्रत्ययः । यत् रजः धूलिः, तदेव गत्वा उत्क्षेपवेगादिति भावः सुधाम्बुधौ क्षीरनिधौ पतितम् अतएव पङ्कीभवत् स- विधौ चन्द्रे तद्वासिनीति भावः अङ्कतां कलङ्कत्वं दधाति, अत्रापि व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा तथाच कलङ्कत्वं दधातीवेत्यर्थः ॥ ८ ॥

स्फुरदिति । सङ्गरे युद्धे शतात् परे परः शताः शता- धिका इत्यर्थः बहव इति यावत् पञ्चमीति योगविभागात् समासः राजदन्तादित्वादुपसर्जनस्य परनिपातः पारस्करा- दित्वात् सुडागमश्च । परे शतवः स्फुरन्तौ प्रसरन्तौ धनु-

सितांशुवर्णैर्वयति स्म तद्गुणै-
र्महासिवेम्नः सहकृत्वरी बहुम्।
दिगङ्गनाङ्गाभरणं रणाङ्गणे
यशःपटं तद्भटचातुरी तुरी ॥ १२ ॥
प्रतीपभूपैरिव किं ततो भिया
विरुद्धधर्मैरपि भेत्तृतोज्झिता।

नयनानि न तत्यजुः। नूनं मन्ये इत्यर्थः उत्प्रेक्षावाचक-
मिदं तदुक्तं दर्पणे। मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमा-
यः। उत्प्रेक्षाव्यञ्जकाः शब्दा इवशब्दोऽपि तादृश इति।
नलनिहतभर्तृका राजपत्न्यः सततं रुरुदुरिति भावः ॥ ११ ॥

सितांश्विति। महान् असिरेव वेमा वायदण्डः पुंसि वेमा
वायदण्ड इत्यमरः। तस्य सहकृत्वरी सहकारिणी सहे चेति
करोतेः क्वनिप्प्रत्ययः। वनोरचेति ङीप् रश्च। तस्य नलस्य
भटानां सैनिकानां यद्वा स नल एव भटः वीरः तस्य चातुरी
चतुरता नैपुण्यमिति यावत् एव तुरी वयनसाधनं वस्तुविशेष
इत्यर्थः माकु इति प्रसिद्धा रण एव अङ्गनं चत्वरं तस्मिन्
सितांशुवर्णैः शुभ्रैरित्यर्थः तस्य नलस्य गुणैः शौर्य्यादिभिः
तन्तुभिश्च दिश एव अङ्गनाः तासाम् अङ्गाभरणम् अङ्ग-
भूषणम् अङ्गावरणमिति पाठे अङ्गाच्छादनं बहु यश
एव पटः वसनं तं वयति स्म ततान। साङ्गरूपकमलङ्कारः।
संग्रामे तथा नैपुण्यमनेन प्रकटितं यथा तेन सर्वा दिशो
यशसा प्रपूरिता इति भावः ॥ १२ ॥

अमित्रजिन्मित्रजिदोजसा स यद्
विचारदृक् चारदृगप्यवर्त्तत ॥ १३ ॥
तदोजसस्तद्यशसः स्थिताविमौ
वृथेति चित्ते कुरुते यदा यदा।

प्रतीपेति। प्रतीपाः प्रतिकूलाः भूपा राजानः ते विरुद्धधर्मैः असमानाधिकरणधर्मैः विपरीतवृत्तिभिरित्यर्थः अपि ततः नलात् भिया भयेनेव हेतुना भेत्तृता स्वाश्रयभेदकत्वं परोपजाप इत्यर्थः उज्झिता त्यक्ता किम्? यत् यस्मात् स नलः ओजसा तेजसा अमित्रान् शत्रून् जयतीति तथोक्तः मित्रं सूर्य्यं जयतीति तथाभूतः अत्र यः खलु अमित्रजित् स कथं मित्रजिदिति विरोधाभासः परिहारस्तु पूर्वमुक्तः। तथा विचारेण पश्यतीति विचारदृक् चारैः गूढ़पुरुषैः पश्यतीति चारदृक् राजानश्चारचक्षुष इति चारैः पश्यन्ति राजान इति च नीतिशास्त्रम्। अत्रापि यो विचारदृक् स कथं चारदृग् भवतीति विरोधाभासः परिहारस्तु पूर्वमुक्तः। अवर्त्तत आसीत् अपिर्विरोधे। सूर्य्यतेजसं चारदृशञ्च नलं ज्ञात्वा शत्रवः भयात् परस्परोपजापादिवैरभावं तत्यजुरिति भावः। अत्र विरोधोत्प्रेक्षयोरङ्गाङ्गिभावः॥ १२ ॥

तदिति। तस्य नलस्य ओजः तेजः प्रताप इत्यर्थः तस्य तथा तस्य नलस्य यशः तस्य स्थितौ सत्तायाम् इमौ भानुविधू इमौ निरर्थकौ इति चित्ते यदा यदा कुरुते विमेचय-

तनोति भानोः परिवेषकैतवा-
त्तदा विधिः कुण्डलनां विधोरपि ॥ १४ ॥
अयं दरिद्रो भवितेति वैधसीं
लिपिं ललाटेऽर्थिजनस्य जाग्रतीम्।
मृषा न चक्रेऽल्पितकल्पपादपः
प्रणीय दारिद्र्यदरिद्रतां नृपः ॥ १५ ॥

तीत्यर्थः विधिः तदा तदा परिवेषः परिधिः परिवेषस्तु
परिधिरुपसूर्य्यकमण्डले इत्यमरः। एव कैतवं छलं तस्मात्
भानोः सूर्य्यस्य विधोरपि चन्द्रस्य च कुण्डलनाम् अतिरिक्तता-
सूचकवेष्टनमित्यर्थः करोति अधिकाक्षरवर्जनार्थं लेखकादि-
रिति भावः। विजितचन्द्रार्कौ अस्य कीर्त्तिप्रतापौ इति
तात्पर्य्यम्। अत्र प्रकृतस्य परिवेषस्य प्रतिषेधेन अप्रकृतस्य
कुण्डलनस्य स्थापनात् अपह्नुतिरलङ्कारः तदुक्तं दर्पणे। प्रकृतं
प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति। प्राचीनास्तु परि-
परिवेषमिषेण सूर्य्याचन्द्रमसोः कुण्डलनोत्प्रेक्षणात् साप-
ह्नोत्प्रेक्षा सा च गम्या व्यञ्जकाप्रयोगादित्याहुः ॥ १४ ॥
अस्य वदान्यतां द्वाभ्यां वर्णयति अयमिति। विभज्येति
। अल्पितः अल्पीकृतः निर्जित इति यावत् दानशौण्डत्वा-
दिति भावः कल्पपादपः कल्पतरुः वाञ्छितफलप्रदश्च इति
यावत् येन तथाभूतः स नृपः दारिद्र्यस्य अभावस्य निर्धनत्वस्य
इति यावत् दरिद्रताम् अभावमिति यावत् प्रणीय कृत्वा
दरिद्रेभ्यः प्रभूतधनदानेन तेषां दारिद्र्यम् अपनीयेति भावः
अयं दरिद्रः अभाववानिति यावत् भविता इति अर्थिजनस्य

विभज्य मेरुर्न यदर्थिसात् कृतो
न सिन्धुरुत्सर्गजलव्ययैर्मरुः।
अमानि तत्तेन निजायशोयुगं
द्विफालबद्धाश्चिकुराः शिरःस्थितम्॥ १६॥

याचकजनस्य ललाटे जाग्रतीं दीप्यमानामिति यावत् वेधस इयं वैधसी तां लिपिं मृषा मिथ्या न चक्रे न कृतवान्। विधातुर्लिपौ सामान्यतः दरिद्रशब्दस्य स्थितौ दरिद्रशब्दस्य यथायथं धनदरिद्रः पापदरिद्रः ज्ञानदरिद्र इत्यादिप्रयोगदर्शनात् अभावमात्रबोधकत्वमङ्गीकृत्य राजा दरिद्राणां धनाभावरूपं दारिद्र्यमपाचकार इति निष्कर्षः॥ १५॥

विभज्येति। मेरुः हेमाद्रिः विभज्य विभक्तीकृत्य अर्थिसात् अर्थिभ्यो देयः न कृतः अर्थिने देयमिति त्रात्रेति त्राच्प्रत्ययः। सिन्धुः समुद्रः उत्सर्गजलानां व्ययैः दानाम्बुप्रक्षेपैः मरुः निर्जलदेशः न कृतः इति यत् तत् तस्मात् तेन नलेन द्विफालबद्धाः द्वयोः फालयोः शिरःपार्श्वयोः बद्धाः रचिता इति यावत् फलतेर्विशरणार्थे अप्प्रत्ययः। विलासिनां पुंसां सीमन्तितशिरोरुहत्वात् चिकुराणां द्विफालबद्धत्वमिति भावः द्विधा विभक्ता इति यावत् चिकुराः केशाः चिकुरः कुन्तलो बालः कचः केशः शिरोरुह इत्यमरः। शिरःस्थितं मस्तकधृतमिति भावः निजं स्वीयम् अयशोयुगम् अपकीर्त्तिद्वयं पूर्वोक्तमेरुविभागसिन्धुजलव्ययाकरणजनितमिति भावः अमानि केशरूपेण द्विधास्थितं स्वशिरसि अयशोयुगमेव तिष्ठति इति अमन्यत इत्यर्थः। अयशसः पापरूपत्वात् कृष्णवर्णत्वेन वर्णनं कविसमयसिद्धं तथाच मालिन्यं व्योम्नि पापे इत्यादि। उद्देश्यविधेयरूप

अजस्रमभ्यासमुपेयुषा समं
मुदैव देवः कविना बुधेन च।
दधौ पटीयान् समयं नयन्नयं
दिनेश्वरश्रीरुदयं दिने दिने॥ १७॥
अधो विधानात् कमलप्रवालयोः
शिरःसु दानादखिलक्षमाभुजाम्।

कर्म्मद्वयम्। केशेषु कार्ष्ण्यसाम्यात् अयश्चोरूपणमिति व्यस्त-रूपकम्॥ १६॥

अस्य विद्वज्जनसम्माननामाह अजस्रमिति। दिनेश्वरस्येव श्रीर्यस्य अन्यत्र दिने ईश्वरस्येव श्रीः यस्य तथाभूतः पटीयान् समर्थतरः अयं देवो राजा सूर्य्यश्च देवः सूर्य्ये यमे राज्ञीति विश्वः। अजस्रं सततम् अभ्यासं सान्निध्यम् उपेयुषा प्राप्तवता सहचारिणा इति यावत् उपेयिवाननाश्वाननूचानश्चेति नि-पातः। कविना काव्यशास्त्रविदा पण्डितेन शुक्रेण च बुधेन विदुषा धर्म्मशास्त्रादिदर्शिनेति भावः सौम्येन च समं सह मुदैव आनन्देनैव न तु दुःखेनेत्येवकारार्थः। समयं नयन् अतिवाहयन् दिने दिने प्रतिदिनम् उदयम् अभ्युन्नतिम् आवि-र्भावञ्च दधौ धारयामास। अत्र श्लेषालङ्कारः॥ १७॥

अध इति। कमलप्रवालयोः पद्मपल्लवयोः कर्म्मभूतयोः अधोविधानात् अधःकरणात् न्यक्करणादिति यावत्। तथा अखिलानां सर्वेषां क्षमाभुजां प्रतिकूलवर्त्तिनां राज्ञां शिरःसु दानात् निधानात् इदम् अस्य नलस्य पदम् ऊर्द्ध्वम् उत्कृष्टम् ऊर्द्ध्वस्थितञ्च पुरा भवति भविष्यतीत्यर्थः यावत् पुरा निपा-

पुरेदमूर्द्धं भवतीति वेधसा
पदं किमस्याङ्कितमूर्द्धरेखया ॥ १८ ॥
जगज्जयं तेन च कोषमक्षयं
प्रणीतवान् शैशवशेषवानयम्।
सखा रतीशस्य ऋतुर्यथा वनं
वपुस्तथालिङ्गदथास्य यौवनम् ॥ १९ ॥
अधारि पद्मेषु तदङ्घ्रिणा घृणा
क्व तच्छयच्छायलवोऽपि पल्लवे।

तयोर्लट् इति पुराशब्दयोगात् भविष्यदर्थे लट्। इति इदं मत्वा इति शेषः गम्यमानार्थत्वादप्रयोगः। वेधसा विधात्रा कर्त्रा ऊर्द्धरेखया अङ्कितं चिह्नितं किम्? ऊर्द्धरेखाङ्कितपदः सर्वोत्कर्षं भजेत् पुमानिति सामुद्रिकाः। सौन्दर्यसुलक्षणाभ्यां युक्तमस्य पदमिति भावः ॥ १८ ॥

अथ अस्य यौवनागमं क्रमेण वर्णयति जगदित्यादिभिः। अयं नलः शैशवशेषवान् ईषदवशिष्टशैशव एवेत्यर्थः जगतां जयं तेन च जयेनेत्यर्थः कोषं धनजातम् अक्षयं प्रणीतवान् कृतवान्। अथानन्तरं रतीशस्य, कामस्य सखा ऋतुः वसन्त इत्यर्थः वनं यथा यौवनम् अस्य नलस्य वपुः शरीरं तथा आलिङ्गत् संश्लिष्टवत्। उपमालङ्कारः ॥ १९ ॥

अधारीति। तस्य नलस्य अङ्घ्रिणा चरणेन पद्मेषु घृणा अवज्ञा घृणा जुगुप्साकृपयोरिति विश्वः। अधारि धृता। पल्लवे नवकिसलये तस्य नलस्य शयः पाणिः पञ्चशाखः शयः पाणिरित्यमरः। तस्य छाया तच्छयच्छायं विभाषेत्यादिना

तदास्यदास्येऽपि गतोऽधिकारितां
न शारदः पार्विकशर्वरीश्वरः ॥ २० ॥
किमस्य रोम्णां कपटेन कोटिभि-
र्विधिर्न लेखाभिरजीगणद् गुणान् ।
न रोमकूपौघमिषाज्जगत्कृता
कृताश्च किं दूषणशून्यविन्दवः ॥ २१ ॥

समासे छायाया नपुंसकत्वम्। तस्य लवो लेशोऽपि क्व? नैव लेशोऽस्तीत्यर्थः। शरदि भवः शारदः शरत्कालीन इत्यर्थः। सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्प्रत्ययः। पर्वणि पौर्णमास्यां भवः पार्विकः पार्वणेति पाठान्तरं कालाट्ठञस्तद्धित इति टिलोपः। स च असौ शर्वरीश्वरश्चेति तथोक्तः पूर्णचन्द्र इत्यर्थः तस्य नलस्य यत् आस्यं मुखं तस्य दास्ये कैङ्कर्य्येऽपि अधिकारितां योग्यतां न गतः न प्राप्तः। एतेनास्य पाणिपादवदनानामनौपम्यं व्यज्यते। अत्र अङ्घ्र्यादीनां पद्मादिषु छायाद्यसम्भवेऽपि सम्बन्धोक्तेः अतिशयोक्तिः अलङ्कारः ॥ २० ॥

किमिति। विधिर्विधाता अस्य नलस्य गुणान् रोम्णां कपटेन व्याजेन कोटिभिः कोटिसंख्याभिः लेखाभिः न अजीगणत् न गणितान् किम्? अपितु गणितवानेवेत्यर्थः। तथा जगत्कृता स्रष्टा विधिनेत्यर्थः रोम्णां कूपाः विवराणि तेषाम् ओघः समूह एव मिषं व्याजः तस्मात् दूषणानां दोषाणां शून्यस्य अभावस्य विन्दवः ज्ञापकचिह्नभूता वर्त्तुलरेखाः न कृताः किम्? अपि तु कृता एवेत्यर्थः। अस्मिन् गुणा एव सन्ति न कदाचित् दोषा इति भावः। अत्र रोम्णां रोम-

अमुष्य दोर्भ्यामरिदुर्गलुण्ठने
ध्रुवं गृहीतार्गलदीर्घपीनता।
उरःश्रिया तत्र च गोपुरस्फुरत्-
कवाटदुर्द्धर्षतिरःप्रसारिता ॥ २२ ॥
स्वकेलिलेशस्मितनिन्दितेन्दुनो
निजांशदृक्तर्जितपद्मसम्पदः।

कृपाणाश्च कपटमिषशब्दाभ्याम् अपह्नवे गुणगणनालेखत्व-दूषणशून्यविन्दुत्वयोरुत्प्रेक्षणात् सापह्नवोत्प्रेक्षयोः संसृष्टिः ॥ २१ ॥

अमुष्येति। अमुष्य नलस्य दोर्भ्यां भुजाभ्यां कर्त्तृभ्याम् अरिदुर्गलुण्ठने शत्रुदुर्गभञ्जने अर्गलस्य कपटविष्कम्भदारु-विशेषस्य तद्विष्कम्भोऽर्गलं न ना इत्यमरः। दीर्घश्च पीनश्च तयोर्भावः दीर्घपीनता आयतपीवरत्वमित्यर्थः किञ्चेति चार्थः उरसः वक्षसः श्रिया लक्ष्म्या कर्त्र्या तत्र अरिदुर्गलुण्ठने गोपु-रेषु पुरद्वारेषु पुरद्वारन्तु गोपुरमित्यमरः। स्फुरतां राजतां कवाटानां दुर्द्धर्षाणि च तानि तिरःप्रसारीणि च तेषां भावः तत्ता अप्रधृष्यत्वं तिर्य्यक्प्रसारित्वञ्चेत्यर्थः गृहीता ध्रुवम् अव-लम्बिता किम्? ध्रुवमित्युत्प्रेक्षाव्यञ्जकं तदुक्तं दर्पणे। मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः। उत्प्रेक्षाव्यञ्जकाः शब्दा इव शब्दोऽपि तादृश इति। दीर्घबाहुः कवाटवक्षाश्चायमिति भावः ॥ २२ ॥

स्वकेलीति। स्वस्य केलिलेशः विलासविन्दुर्यत् स्मितं मन्द-हसितं तेन निन्दितः तिरस्कृतः इन्दुश्चन्द्रः येन तस्योक्तस्य

अतद्द्वयीजित्वरसुन्दरान्तरे
न तन्मुखस्य प्रतिमा चराचरे ॥ २३ ॥
सरोरुहं तस्य दृशैव तर्जितं
जिताः स्मितेनैव विधोरपि श्रियः ।
कुतः परं भव्यम् ? अहो महीयसी
तदाननस्योपमितौ दरिद्रता ॥ २४ ॥

स्मितरूपकिरणेन निर्जितशीतांशुमयूखस्येति भावः निजांशः स्वावयवः या दृक् नेत्रं तया तर्जिता निर्भर्त्सिता पद्मानां सम्पद् सौभाग्यं येन तथाभूतस्य तन्मुखस्य नलमुखस्य तयोश्चन्द्र-पद्मयोः द्वयी तस्या जित्वरं जयशीलं ततोऽधिकमिति यावत् सुन्दरान्तरं नास्ति यत्र तथाविधे चराचरे जगति चराचरं स्याज्जगदिति विश्वः । प्रतिमा उपमानं न आसीदिति शेषः । अत्र चन्द्रारविन्दजयविशेषणतया मुखस्य निरौपम्यप्रतिपाद-नात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । तदुक्तं दर्पणे । हेतो-र्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति ॥ २३ ॥

उक्तार्थं भङ्ग्यन्तरेणाह सरोरुहमिति । तस्य नलस्य दृशैव नयनेनैव सरोरुहं पद्मं तर्जितं न्यक्कृतम् । स्मितेनैव विधो-श्चन्द्रस्य श्रियः कान्तयः अपि जिताः तिरस्कृताः । परम् अन्यत् आस्थामिति शेषः भव्यं रम्यं वस्तु कुतः ? न कुत्राप्यस्ती-त्यर्थः । अहो आश्चर्यं तस्य नलस्य यत् आननं मुखं तस्य उप-मितौ तोलने महीयसी अतिमहती दरिद्रता अभावः अत्यन्ता-भाव इत्यर्थः सर्वथा निरुपममस्य मुखमित्याश्चर्यम् । अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २४ ॥

स्वबालभारस्य तदुत्तमाङ्गजैः
समं चमर्य्येव तुलाभिलाषिणः।
अनागसे शंसति बालचापलं
पुनः पुनः पुच्छविलोलनच्छलात्॥ २५॥

महीभृतस्तस्य च मन्मथश्रिया
निजस्य चित्तस्य च तं प्रतीच्छया।
द्विधा नृपे तत्र जगत्त्रयीभुवां
नतभ्रुवां मन्मथविभ्रमोऽभवत्॥ २६॥

स्वबालेति। चमरी मृगीविशेषः तस्य नलस्य उत्तमाङ्गजैः शिरोरुहैः समं सहैव तुलाभिलाषिणः सादृश्यकाङ्क्षिणः स्वबालभारस्य निजलोमनिचयस्य अनागसे अनपराधाय नीचस्य उत्तमैः सह साम्याभिगमोऽपि महान् अपराध इति भावः। क्वचित्तदभावे नञ्समासो दृश्यते। पुनः पुनः पुच्छस्य लाङ्गूलस्य विलोलनं विचालनम् एव छलं तस्मात् बालचापलं रोमचाञ्चल्यम् अथच शिशुचापल्यं शंसति कथयति बालचापल्यं सोढव्यमिति धियेति भावः। अत्र पुच्छविलोलनप्रतिषेधेन अन्यस्य बालचापलस्य स्थापनादपह्नुतिरलङ्कारः तदुक्तं दर्पणे। प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति॥ २५॥

महीभृत इति। तस्य महीभृतो नलस्य मन्मथस्येव श्रीः कान्तिः तया च निजस्य चित्तस्य तं नलं प्रति इच्छया रागेण च तत्र नृपे नले जगत्त्रयीभुवां त्रिभुवनवर्त्तिनीनां नतभ्रुवां कामिनीनां द्विधा द्विप्रकारेण मन्मथविभ्रमः अयं मन्मथ इति

निमीलनभ्रंशजुषा दृशा भृशं
निपीय तं यस्त्रिदशीभिरर्जितः ।
अमूस्तमभ्यासभरं विवृण्वते
निमेषनिःस्वैरधुनापि लोचनैः ॥ २७ ॥

अदस्तदाकर्णि फलाढ्यजीवितं
दृशोर्द्वयं नस्तदवीक्षि चाफलम् ।
इति स्म चक्षुःश्रवसां प्रिया नले
स्तुवन्ति निन्दन्ति हृदा तदात्मना ॥ २८ ॥

विशिष्टा भ्रान्तिः कामावेशस्य अभवत् अत्र श्लेषसङ्कीर्णो यथा-संख्यालङ्कारः ॥ २६ ॥

निमीलनेति । त्रिदशीभिः सुराङ्गनाभिः निमीलनभ्रंश-जुषा निर्निमिषयेत्यर्थः दृशा नयनेन तं नलं भृशम् अतिमात्रं निपीय सतृष्णं दृष्ट्वेत्यर्थः यः अभ्यासभरः अभ्यासातिशयः कृतः, अमूस्त्रिदश्यः देव्यः अधुनापि निमेषनिःस्वैः निमेषशून्यैः लोचनैः तम् अभ्यासभरं विवृण्वते प्रकटयन्ति । तासां स्वाभा-विकस्य निमिषाभावस्य तादृशनिरीक्षणाभ्यासवासनाय तत्त्व-मुत्प्रेक्ष्यते ॥ २७ ॥

अद इति । चक्षुःश्रवसां नागानां प्रियाः पन्नग्य इत्यर्थः अदः इदं नोऽस्माकं दृशोश्चक्षुषोर्द्वयं तं नलम् आकर्णयतीति तदाकर्णि तद्गुणश्रावीत्यर्थः तासां चक्षुःश्रवस्त्वादिति भावः अतएव फलाढ्यजीवितं सफलजीवितम् । न वीक्षते इत्यवीक्षि अत्रोभयोस्ताच्छील्ये णिनिः । तस्य नलस्य अवीक्षि तदवीक्षि तददर्शीत्यर्थः अतएव अफलञ्च इति हेतोः तदा तस्मिन् काले

विलोकयन्तीभिरजस्रभावना-
बलादमुं तव निमीलनेष्वपि।
अलम्भि मर्त्याभिरमुष्य दर्शने
न विघ्नलेशोऽपि निमेषनिर्मितः॥ २९॥

न का निशि स्वप्नगतं ददर्श तं?
जगाद गोत्रस्खलिते च का न तम्?।
तदात्मताध्यातधवा रते च का
चकार वा न स्वमनोभवोद्भवम्?॥ ३०॥

आत्मना स्वेन हृदा मनसा नले नलविषये स्तुवन्ति प्रशंसन्ति निन्दन्ति कुत्सयन्ति च अतिशयोक्तिरलङ्कारः॥ २८॥

विलोकयन्तीभिरिति। अजस्रभावनाबलात् निरन्तर-ध्यानप्रभावात् अमुं नलं तत्र भावनायामिति भावः निमीलनेषु अपि निमेषावस्थासु अपि विलोकयन्तीभिः उन्मेषावस्थाया-मिव साक्षात् कुर्वतीभिः मर्त्याभिः मानवीभिः अमुष्य नलस्य दर्शने निमेषनिर्मितः नेत्रनिमीलनजनितः विघ्नलेशोऽपि अन्तराय लवोऽपि न अलम्भि न प्राप्तः। विभाषा चिखमुलो इति मुमागमः। मानव्यः दृष्टिगोचरं दृष्ट्वा अदृष्टिगोचरञ्च तं मनसा सततं पश्यन्ति स्मेति भावः, अतिशयोक्तिरलङ्कारः॥२९॥

नेति। का नारी निशि रात्रौ तं नलं स्वप्नगतं न ददर्श? सर्वैव ददर्शेत्यर्थः। का च गोत्रस्खलितेषु नामस्खलनेषु तं न जगाद स्वभर्त्तृनाम्नि उच्चरितव्ये तन्नाम न उच्चरितवती अपितु सर्वैव तथा कृतवती इत्यर्थः। का च रते सुरतव्यापारे तदात्म-तया नलात्मतया ध्यातः चिन्तितः धवः भर्त्ता यया तथाभूता

श्रियास्य योग्याहमिति स्वमीक्षितुं
करे तमालोक्य सुरूपया धृतः।
विहाय भैमीमपदर्पया कया
न दर्पणः श्वासमलीमसः कृतः? ॥ ३१ ॥
यथोह्यमानः खलु भोगभोजिना
प्रसह्य वैरोचनिजस्य पत्तनम्।

धवः प्रियः पतिर्भर्त्तेत्यमरः। स्वस्य आत्मनः मनोभवः कामः तस्य उद्भवः तं वा न चकार? अपि तु सर्वैव तथा चकारेत्यर्थः। अतिशयोक्तिरलङ्कारः ॥ ३० ॥

श्रियेति। तं नलम् आलोक्य दृष्ट्वा श्रिया सौन्दर्य्येण अहमस्य नलस्य योग्या अनुरूपा इति धियेति शेषः स्वम् आत्मानं स्वावयवमित्यर्थः ईक्षितुं द्रष्टुं करे धृतः गृहीतः दर्पणः भैमीं भीमनन्दिनीं दमयन्तीमित्यर्थः विहाय विनेत्यर्थः कया सुरूपया शोभनरूपवती अहमित्यभिमानवत्या नार्य्या अपदर्पया दर्पशून्यया सत्या श्वासेन दुःखनिश्वासेन मलीमसः मलदूषितः मलीमसन्तु मलिनं कच्चरं मलदूषितमित्यमरः। न कृतः? अपि तु सर्वयैव कृतः इत्यर्थः। सौन्दर्य्यगर्विताः सर्वा एव भैमीव्यतिरिक्ताः कामिन्यः तमवलोक्य अहमेवास्य सदृशीत्यभिमानात् करधृतदर्पणे आत्मानं निर्वर्ण्य नाहमस्य योग्येति निश्चयेन विषण्णाः कदुष्णनिश्वासेन तं दर्पणं मलिनयन्ति स्मेति निष्कर्षः ॥ ३१ ॥

एवमस्यालौकिकसौन्दर्य्यद्योतनाय स्त्रीमात्रस्य तदनुरागमुक्त्वा सम्प्रति दमयन्त्यास्तन्मात्रानुरागं प्रस्तौति यथेति। मदनः

विदर्भजाया मदनस्तथा मनो
नलावरुद्धं वयसैव वेशितः ॥ ३२ ॥
नृपेऽनुरूपे निजरूपसम्पदां
दिदेश तस्मिन् बहुशः श्रुतिं गते।

कामः प्रद्युम्न इति यावत् भोगभोजिना सर्पशरीराशिना वयसा पक्षिणा गरुड़ेनेत्यर्थः उह्यमानः नीयमानः वहेः कर्मणि यकि सम्प्रसारणे पूर्वरूपम्। अनलावरुद्धम् अग्निपरिवेष्टितं विरोचनस्य अपत्यं पुमान् वैरोचनिः बलिः तज्जस्य तत्पुत्रस्य बाणासुरस्येत्यर्थः पत्तनं नगरं शोणितपुरमिति यावत् प्रसह्य सहसा यथा वेशितः खलु प्रवेशित एव ततो गरुड़मारुह्य स्मृतमात्रगतं हरिः। उषाहरणे विष्णुपुराणात्। तथा नलावरुद्धं नलासक्तं विदर्भजायाः दमयन्त्या मनः भोगभोजिना सुखभोगासक्तेनेत्यर्थः वयसा यौवनेन उह्यमानः परैस्तर्क्यमाणः ऊहेर्वितर्कार्थात् कर्मणि यक्। वेशितः प्रवेशितः। भोगः सुखे स्त्र्यादिभृता वहेश्च फणकाययोरित्यमरः। पुरा उषा नाम्नी बाणदुहिता स्वप्ने प्रद्युम्नपुत्रमनिरुद्धं दृष्ट्वा सुप्तप्रतिबुद्धा सहचरीं चित्रलेखामवदत्। सा च योगिनी योगबलेन तस्यामेव रात्रौ द्वारकायां प्रसुप्तमनिरुद्धं विहायसा समानीय तया समगमयत्। कालेन नारदमुखात् तदाकर्ण्य कृष्णः प्रद्युम्नबलरामाभ्यां बहुभिर्बलैश्च गत्वा बाणनगरमरौत्सीदिति कथा अत्रानुसन्धेया। अत्र यथोह्यमानो नलावरुद्धमिति शब्दश्लेषः। तदनुप्राणिता उपमा च सा च वयसेति वयसोरभेदाध्यवसायमूलातिशयोक्तिमूला चेत्येषां सङ्करः ॥ ३२ ॥

इह विरहिणां चक्षुः प्रीत्यादयो दशावस्थाः सन्ति तत्र

विशिष्य सा भीमनरेन्द्रनन्दना
मनोभवाज्ञैकवशंवदं मनः ॥ ३३ ॥
उपासनामेत्य पितुः स्म रज्यते
दिने दिने सावसरेषु वन्दिनाम् ।
पठत्सु तेषु प्रति भूपतीन् अलं
विनिद्ररोमाजनि शृखती नलम् ॥ ३४ ॥

चक्षुःप्रीतिः श्रवणानुरागस्य आद्युपलक्षणम् अतस्तत्पूर्विकां मनःसङ्गाख्यां द्वितीयामवस्थां वर्णयति नृपे इति सा भीम-नरेन्द्रनन्दना दमयन्ती नन्द्यादित्वात् ल्युप्रत्ययः। निजरूप-सम्पदाम्। स्वलावण्यसम्पत्तीनाम् अनुरूपे सुयोग्ये बहुशः वारंवारं बह्वल्पार्थाच्छस् कारकादन्यतरस्यामिति शस्प्रत्ययः। श्रुतिं श्रवणं गते एतेन श्रवणानुरागो व्यज्यते। तस्मिन् नृपे नले मनोभवस्य कामस्य आज्ञाया एकम् अद्वितीयं वशंवदम् एकस्यैव विधेये शिवभागवतवत् समासः। प्रियवशेवदः खच्, अरुर्द्विषदित्यादिना तस्य मुम्। मनो विशिष्य इतरेभ्यो व्यव-च्छिद्येत्यर्थः दिदेश निश्चितवती तद्गुणश्रवणात् तदेकासक्त-मना आसीदिति यावत् ॥ ३३ ॥

श्रवणन्तु भवेत् तत्र दूतवन्दिसखीमुखादित्युक्तेर्वन्दिभ्यः श्रवणमाह उपासनामिति। सा भैमी दिने दिने प्रतिदिनं नित्यवीप्सयोरिति वीप्सायां द्विर्भावः। वन्दिनां स्तुतिपाठका-नाम् अवसरेषु स्तुतिकालेषु एत्य आगत्य सभामिति शेषः पितुः उपासनाम् अनुवृत्तिं सेवामिति यावत् रज्यते स्म कृतवती। तत्र तेषु वन्दिषु भूपतीन् राज्ञः प्रति उद्दिश्येति

कथाप्रसङ्गेषु मिथः सखीमुखात्
तृणेऽपि तन्व्या नलनामनि श्रुते।
द्रुतं विधूयान्यदभूयतानया
मुदा तदाकर्णनसज्जकर्णया ॥ ३५ ॥
स्मरात् परासोरनिमेषलोचनाद्

भावः पठत्सु नान्दीमिति शेषः नलं स्तूयमानमिति भावः शृखती सती अलम् अतिमात्रं विनिद्ररोमा रोमाञ्चितकलेवरा अजनि समपद्यत। यद्वा पितुरुपासनां सेवाम् एत्य प्राप्य पितरं परिचरन्तीति भावः तेषु वन्दिषु प्रति भूपतीन् पठत्सु कीर्त्तयत्सु सत्सु नलं कीर्त्त्यमानमिति शेषः शृखती अलम् अतिमात्रं सृज्यते स्म तदनुरक्ता अभूदित्यर्थः। सृजेर्दैवादिकाल्लट्। अतएव विनिद्ररोमा रोमाञ्चिता अजनीति सात्त्विकभावोक्तिः। जनेः कर्त्तरि लुङ् दीपजनेत्यादिना च्लेश्चिणादेशः। नलगुणश्रवणजन्यो रागः तस्याः रोमाञ्चेन व्यक्तोऽभूदिति भावः ॥ ३४ ॥

सखीमुखात् श्रवणमाह कथेति। मिथः परस्परं रहसि वा कथाप्रसङ्गेषु विश्रम्भालापेषु अनया तन्व्या कृशाङ्ग्या भैम्या नलनामनि नलाख्ये तृणेऽपि श्रुते द्रुतं तत्क्षणम् अन्यत् अन्यमिति शेषः विहाय परित्यज्य मुदा हर्षेण तस्य नलस्य आकर्णने सज्जौ अवहितौ कर्णौ यस्याः तथाभूतया नलशब्दाकर्णने अवहितया इति भावः अभूयत अभावि भुवो भावे लङ्। अर्थान्तरप्रयुक्तोऽपि नलशब्दः तत्स्मारकतया तदाकर्णकोऽभूदिति रागातिशयोक्तिः ॥ ३५ ॥

स्मरादिति। सा दमयन्ती परासोः गतजीवितात् अत एव

बिभेमि तन्निन्नमुदाहरेति सा।
जनेन यूनः स्तुवता तदास्पदे
निदर्शनं नैषधमभ्यषेचयत् ॥ २६ ॥

नलस्य पृष्टा निषधागता गुणान्
मिषेण दूतद्विजवन्दिचारणाः।
निपीय तत्कीर्त्तिकथामथानया
चिराय तस्थे विमनायमानया ॥ २७ ॥

अनिमिषलोचनात् निश्चलनेत्रात् देवादिति च गम्यते। स्मरात् कामात् बिभेमि तस्मात् स्मरात् भिन्नम् अलौकिकसुन्दर-मिति भावः उदाहर कीर्त्तय इति उक्तेनेति शेषः यूनः तरुणान् स्तुवता कीर्त्तयता जनेन सखीजनेन प्रयोज्येन कर्त्रा तदास्पदे तस्य स्मरस्य आस्पदे स्थाने निदर्शनं दृष्टान्तभूतं नैषधं निषधाधिराजं नलम् निषधानां जनपदानाम् अयम् इति अण्प्रत्ययः। अभ्यषेचयत् अभिषेचितवती। स्मरस्थाने तत्सदृशस्य एव अभिषेक्तुं युक्तत्वादिति भावः। अत्रायमभि-प्रायः। स्मृतम् अतएव अनिमिषलोचनं स्मरं विना अन्यं सुन्दरं पुरुषं वर्णय इति दमयन्त्या उक्तेन सखीजनेन नल-स्यैव स्तुतिः कृता ॥ २६ ॥

दूतादिमुखात् श्रवणमाह नलस्येति। निषधेभ्यः जन-पदेभ्यः आगता दूताः सन्देशहराः स्यात् सन्देशहरो दूत इति दर्पणः। द्विजा ब्राह्मणाः वन्दिनः स्तावकाः चारणा देशभ्रमणजीविनः सर्वे मिषेण केनचित् व्याजेन नलस्य गुणान् पृष्टाः अनुयुक्ताः पृच्छतेर्दुहादित्वाद् प्रधाने कर्मणि क्तः। येन

प्रियं प्रियाञ्च त्रिजगज्जयिश्रियौ
लिखाधिलीलागृहभित्ति कावपि।
इति स्म सा कारुवरेण लेखितं
नलस्य च स्वस्य च सख्यमीक्षते॥ ३८॥
मनोरथेन स्वपतीकृतं नलं
निशि क्व सा न स्वपती स्म पश्यति।

केनचिज्जनेन स्वयं वा कर्त्रा इति शेषः अथ प्रश्नानन्तरम् अनया भैम्या तस्य नलस्य कीर्त्तिकथां निपीय निःशेषेण पीत्वा सादरमाकर्ण्य इति यावत् चिराय विमनायमानया उत्कण्ठमानया भृशादित्वात् क्यङि सलोपश्च अकृतसार्वधातुकयोर्दीर्घः ततो लटः शानचादेशः। तस्थे स्थितं तिष्ठतेर्भावे लिट्। अयञ्च दूतादिव्यवधानेन गुणकीर्त्तनलक्षणः प्रलापाख्यो रत्यनुभवः॥ ३७॥

प्रतिकृतिस्वप्नदर्शनादयो विरहिणां विनोदाः तत्कथनमुखेन दर्शनानुरागमस्या दर्शयन् प्रतिकृतिदर्शनं तावदाह प्रियमिति। सा भैमी त्रीणि जगन्ति समाहृतानीति त्रिजगत् समाहारो द्विगुरेकवचनम्। तस्य जयिनी श्रीः शोभा कान्तिरित्यर्थः ययोः तथाभूतौ कावपि प्रियं प्रियाञ्च अधिलीलागृहभित्ति लीलागृहभित्तौ विभक्त्यर्थेऽव्ययीभावः क्रीडामन्दिरकुड्ये इत्यर्थः लिख इति नियुक्तेनेति शेषः कारुवरेण विशिष्टशिल्पिना प्रयोज्येन लेखितं चित्रितं नलस्य च स्वस्य आत्मनश्च सख्यं रूपसाम्यनिबन्धनं सम्मेलनम् ईक्षते स्म ददर्श॥ ३८॥

मनोरथेनेति। स्वपती निद्राती सा भैमी क्व कस्यां निशि

अदृष्टमप्यर्थमदृष्टवैभवात्
करोति सुप्तिर्जनदर्शनातिथिम् ॥ ३९ ॥
निमीलितादक्षियुगाच्च निद्रया
हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।
अदर्शि सङ्गोप्य कदाप्यवीक्षितो
रहस्यमस्याः स महन्महीपतिः ॥ ४० ॥

मनोरथेन सङ्कल्पेन स्वपतीकृतं स्वभर्त्तृकृतम् अभूततद्भावे च्वी दीर्घश्च । नलं न पश्यति स्म ? अपि तु सर्वस्यामेव निशि इत्यर्थः । तथा हि सुप्तिः स्वप्नः अदृष्टम् अत्यन्ताननुभूतमपि अर्थं किमुत दृष्टमिति भावः अदृष्टवैभवात् प्राक्तनभाग्यबलात् जनदर्शनातिथिं लोकदृष्टिगोचरं करोति । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः तदुक्तं दर्पणे । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत इति ॥३९॥

निमीलितादिति । निद्रया प्रयोजिकया निमीलितात् मुकुलितात् उपरतव्यापारादित्यर्थः अक्षियुगाच्च नयनयुगलाच्च तथा बाह्येन्द्रियाणां चक्षुरादीनां मौनेन व्यापाररराहित्येन मुद्रितात् प्रतिष्टब्धात् व्यापाररहितादिति भावः स्वतो वहिरस्वातन्त्र्यादिति भावः हृदो हृदयादपि सङ्गोप्य सम्यक् गोपायित्वा अन्तर्धौ येनादर्शनमिच्छतीत्यक्षियुग-हृदोरपादानत्वम् । अदर्शनञ्चात्र मनसो बाह्येन्द्रियमौनमुद्रितादिति विशेषणसामर्थ्यादिन्द्रियार्थसंप्रयोगजन्यज्ञानविरह एवेति ज्ञायते । स्वप्नज्ञानन्तु मनोजन्यमेव । तदजन्यज्ञानमत्रेत्याह कदापि अवी-

अहो अहोभिर्महिमा हिमागमे-
ऽप्यतिप्रपेदे प्रति तां स्मरार्दिताम्।
तपर्त्तुपूर्त्तावपि मेदसां भरा
विभावरीभिर्बिभराम्बभूविरे ॥ ४१ ॥
स्वकान्तिकीर्त्तिव्रजमौक्तिकस्रजः
श्रयन्तमन्तर्घटनागुणश्रियम्।

चित इति। कदापि कस्मिन्नपि काले अवीचितः अत्यन्ता-दृष्टचर इत्यर्थः महत् रहस्यम् अतिगोप्यं वस्तु स महीपतिर्नलः अस्याः भैम्याः अदर्शि दर्शयाञ्चक्रे। दृशेर्ण्यन्तात् कर्म्मणि लुङ्। यथा काचित् सखी कस्यैचित् कामिन्यै कञ्चन कान्तम् अन्येभ्यः सङ्गोप्य दर्शयति तद्वदिति भावः ॥ ४० ॥

अथास्याश्चिन्तया जागरणमाह अहो इति हिमागमे हेमन्तेऽपि अहोभिर्दिवसैः स्मरार्दितां कामार्त्तां तां दमयन्तीं प्रति महिमा माहात्म्यं वृद्धिरिति यावत् अतिप्रपेदे अतिशयेन प्राप्तः तथा तपर्त्तुपूर्त्तावपि ग्रीष्मर्त्तुशेषेऽपि विभावरीभिः रात्रिभिः मेदसां भराः मांसराशयः अतिवृद्धय इति भावः विभ-राम्बभूविरे आश्रिता इत्यर्थः भृञः कर्म्मणि लिट् आमप्रयोगश्च। अहो आश्चर्य्यं शास्त्रविरोधादनुभवविरोधाच्चेति भावः। विर-हिणां तथा प्रतीयते इत्यविरोधः। एतेनास्या निरन्तरोत्कण्ठया जागरणं गम्यते। अहो शब्दस्य ओदिति प्रगृह्यत्वात् प्रकृति-भावः ॥ ४१ ॥

स्वकान्तीति। नलोऽपि कदाचित् स्वस्य कान्तेः सौन्दर्य्यस्य कीर्त्तिव्रजः ख्यातिराशिरित्यर्थः एव मौक्तिकस्रक् मुक्ताहारः

कदाचिदस्या युवधैर्य्यलोपिनं
नलोऽपि लोकादशृणोद्गुणोत्करम् ॥

तमेव लब्ध्वावसरं ततः स्मरः
शरीरशोभाजयजातमत्सरः ।
अमोघशक्त्या निजयेव मूर्त्तया
तया विनिर्जेतुमियेष नैषधम् ॥ ४३ ॥

अकारि तेन श्रवणातिथिर्गुणः
क्ष्माभुजा भीमनृपात्मजाश्रियः ।

तस्याः अन्तः अभ्यन्तरे घटनागुणश्रियं गुम्फनसूत्रलक्ष्मीं अयन्तं भजन्तं युवधैर्य्यलोपिनं तरुणचित्तस्थैर्य्यहारिणं बुधधैर्य्यलोपिनमिति पाठे बुधानां विदुषामपि धैर्य्यध्वंसिनमित्यर्थः अस्याः दमयन्त्याः गुणोत्करं शीलसौन्दर्य्यादिसमूहं लोकात् आगन्तुकजनात् अशृणोत्। अत्र कीर्त्तिव्रजगुणोत्करयोर्मुक्ताहारगुम्फनसूत्रत्वरूपणात् रूपकमलङ्कारः ॥ ४२ ॥

अथास्य तस्यां रागोदयमाह तमेवेति ततः गुणोत्करश्रवणानन्तरं शरीरस्य देहस्य शोभायाः कान्त्याः जयेन जातमत्सरः उत्पन्नवैरः स्मरः कामः तमेव अवसरम् अवकाशं लब्ध्वा मूर्त्तया देहवत्या निजया अमोघशक्त्येव अकुण्ठितसामर्थ्येनेवेत्युत्प्रेक्षा तया दमयन्त्या नैषधं नलं विनिर्जेतुम् इयेष इच्छति स्म। रन्ध्रान्वेषिणो हि विद्वेषिण इति भावः। एतेनास्य रागोदयसूत्रपातः सूच्यते ॥ ४३ ॥

अकारीति। तेन क्ष्माभुजा पृथिवीपालेन नलेन भीमनृपात्मजाया दमयन्त्याः श्रीः तस्याः गुणः माधुर्य्यमित्यर्थः

तदुच्चधैर्य्यव्ययसंहितेषुणा
स्मरेण च स्वात्मशरासनाश्रयः ॥ ४४ ॥
अमुष्य धीरस्य जयाय साहसी
तदा खलु ज्यां विशिखैः सनाथयन्।
निमज्जयामास यशांसि संशये
स्मरस्त्रिलोकीविजयार्जितान्यपि ॥ ४५ ॥

भीमनृपात्मजालय इति भीमनृपात्मजाश्रय इति च पाठे भीमनृपात्मजा आलयः आश्रयो यस्य तथाभूतः गुणः सौन्दर्य्यादिरित्यर्थः श्रवणातिथिः श्रोत्रविषयः अकारि कृतः श्रुत इत्यर्थः। करोतेः कर्म्मणि लुङ्। स्मरेण कामेन च तस्य नलस्य उच्चं महत् धैर्य्यं तस्य व्ययाय ध्वंसाय संहितः इषुः शरो येन तथाभूतेन सता स्वात्मनः शरासनाश्रयः चापनिष्ठः गुणः मौर्वी मौर्वीज्याशिञ्जिनी गुण इत्यमरः। श्रवणातिथिः अकारि आकर्णं कृष्ट इत्यर्थः। दमयन्तीगुणश्रवणात् नलमनसि महान् मदनविकारो जात इति भावः। अत्रोक्तवाक्यार्थस्य पूर्ववाक्यार्थहेतुकतया काव्यलिङ्गमलङ्कारः ॥ ४४ ॥

अमुष्येति। स्मरः कामः साहसी साहसकरः न साहसमनारुह्य नरो भद्राणि पश्यतीत्युक्तेरविलम्बकारीत्यर्थः सन् तदा तस्मिन् काले नलकर्त्तृकदमयन्तीगुणश्रवणकाले इत्यर्थः अमुष्य धीरस्य नलस्य जयाय शरासनज्यां धनुषो मौर्वीं विशिखैः शरैः सनाथयन् संयोजयन् त्रयाणां लोकानां समाहारः त्रिलोकी तद्धितार्थ इत्यादिना समासः अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यत इति स्त्रीलिङ्गत्वाद् द्विगोरिति ङीप्।

अनेन भैमीं घटयिष्यतस्तथा
विधेरवन्ध्येच्छतया व्यलासि तत्।
अभेदि तत् तादृगनङ्गमार्गणै-
र्यदस्य पौष्पैरपि धैर्य्यकञ्चुकम् ॥ ४६ ॥
किमन्यदद्यापि यदस्त्रतापितः
पितामहो वारिजमाश्रयत्यहो ।

तस्या विजयेन अर्जितानि लब्धान्यपि यशांसि संशये निमज्जयामास वृद्धापेक्षया अनुचितकर्म्मारम्भे मूलमपि नश्येदिति संशयितवानित्यर्थः अतिशयोक्तिरलङ्कारः ॥ ४५ ॥

अथ कथञ्चित् दैवानुकूल्यात् कामस्यैव पुरुषकारः फलित इत्याह अनेनेति। अनेन नलेन सह भैमीं तथा तेन प्रकारेण घटयिष्यतः योजयिष्यतः विधेः विधातुः अवन्ध्येच्छतया अमोघसङ्कल्पत्वेन तत् तथेत्यर्थः व्यलासि विलसितं लसतेर्भावे लुङ्। यत् यथा पौष्पैः पुष्पमयैरपि नतु कठिनैरिति भावः। अनङ्गमार्गणैः कामशरैः अस्य नलस्य तत्प्रसिद्धं तादृक् तथाभूतम् अभेद्यमिति भावः धैर्य्यमेव कञ्चुकं गात्रावरणभूतं वर्मेत्यर्थः अभेदि भिन्नं कर्म्मणि लुङ्। दमयन्तीनलयोर्दाम्पत्यघटनाय अनङ्गमार्गणैः नलस्य धैर्य्यकञ्चुकभेदनात् विधेरवन्ध्येच्छत्वं विलसितमित्यर्थः। दैवानुकूल्ये न किं साध्यते इति भावः। अत्रानङ्गपौष्पयोः कञ्चुकं भिन्नमिति विरोधः तस्य विलासेनाभासीकरणाद्विरोधाभासः स च धैर्य्यकञ्चुकमिति रूपकोत्थापित इति तयोरङ्गाङ्गिभावेन सङ्करः ॥ ४६ ॥

अथ विधिमपि जितवतः किं विध्यपेक्षयेत्याह किमिति

स्मरं तनुच्छायतया तमात्मनः
शशाक शङ्के स न लङ्घितुं नलः ॥ ४७ ॥
उरोभुवा कुम्भयुगेन जृम्भितं
नवोपहारेण वयस्कृतेन किम्?।

किमन्यत् अन्यत् किमुच्यते इत्यर्थः। पितामहो विधिः यस्य स्मरस्य अस्त्रेण तापितः सन् अद्यापि वारिजं पद्मम् आश्रयति तापशान्त्यर्थमिति शेषः तस्य पद्मासनत्वादिति भावः। अहो आश्चर्यं विधेरपि स्मरविधेयत्वमद्भुतमित्यर्थः। स नलः तं पितामहस्यापि तापिनमित्यर्थः स्मरं कामम् आत्मनः तनुः शरीरं तस्याश्छायेव छाया कान्तिर्यस्य तस्य भावः तत्ता तया अथच तनोः शरीरस्य छाया तनुच्छायम् अनातपः तत्पुरुषे-च्छायाया नपुंसकत्वम्। छायात्वनातपे कान्ताविति वैजयन्ती तस्य भावः तत्ता तया हेतुना लङ्घितुम् अतिक्रमितुं न शशाक इति शङ्के मन्ये। न हि स्वच्छाया लङ्घितुं शक्येति भावः। स्मरलङ्घने पितामहोऽप्यशक्तः किमुत नल इत्यर्थापत्तिरल-ङ्कारः। तनोश्छायेव छायेत्युपमा एतद् द्वयोपजीवनेनालङ्कारत्वे तनुच्छायतताया हेतुत्वोत्प्रेक्षणात् उत्प्रेक्षा सङ्कीर्णा शङ्के इति व्यञ्जकप्रयोगाद् वाच्या। पुरा ब्रह्मा स्वसृष्टायां दुहितरि सन्ध्यायां सन्निहितायां कामेन तदानीं शरविद्धः नितरां चुक्षुभे इति पुरातनी कथा ॥ ४७ ॥

उरोभुवेति। सा तन्वी भैमी त्रपा लज्जा एव सरित् सैव दुर्गं नलसम्बन्धीति शेषः तदपि प्रतीर्य्य नलस्य हृदयं विवेश इति यत् तत् प्रवेशनं यत्तदोर्नित्यसम्बन्धात्। वयस्कृतेन वयसा यौवनेन कुलालेन चेति ध्वनि कृतं नवोपहारेण नूतन-

त्वपासरिद्दुर्गमपि प्रतीर्य्य सा
नलस्य तन्वी हृदयं विवेश यत् ॥ ४८ ॥
अपह्नुवानस्य जनाय यन्निजा-
मधीरतामस्य कृतं मनोभुवा।
अबोधि तज्जागरदुःखसाक्षिणी
निशा च शय्या च शशाङ्ककोमला ॥ ४९ ॥

निर्म्माणेन उरोभुवा वक्षोजेन कुम्भयुगेन कुचद्वयेनेति भावः न लोकेत्यादिना क्तयोगे षष्ठीप्रतिषेधात् कर्त्तरि तृतीया नपुंसके भाव उपसंख्यानमिति तु शेषविवक्षायाम्। जृम्भितं जृम्भणं किम्?। दमयन्तीकुचकुम्भविभ्रमश्रवणात् तत्स्वरूपं विज्ञाय तस्यामासक्तोऽभूदिति भावः। एतेन मन.सङ्गाख्यदशोक्ता। उत्प्रेक्षालङ्कारः अतिशयोक्तिमूलत्व इति सङ्करः ॥ ४८ ॥

अथास्य जागरावस्थामाह अपह्नुवानस्येति निजाम् अधी-रतां चापल्यं जनाय अपह्नुवानस्य अपलपतः श्लाघह्नुङस्थेत्या-दिना सम्प्रदानत्वात् जनायेति चतुर्थी। अस्य नलस्य मनोभुवा कामेन यत् दुःखमिति शेषः कृतं जनितं तत्सर्वं जागरदुःखस्य साक्षिणी साक्षात् द्रष्टरि संज्ञायामिति साक्षाच्छब्दादीनि प्रत्यये ङीप्। शशाङ्केन चन्द्रेण कोमला रमणीया शशाङ्कवत् कोमला मृद्वी च निशा च शय्या च अबोधि ज्ञातवती। दीप-जनेत्यादिना कर्त्तरि च्लेश्चिणादेशः। उत्कण्ठया सर्वासु रात्रिषु तस्य निद्राराहित्यमासीत्। निशायाः साक्षित्वे प्रमाणं यथा आदित्यचन्द्रावनिलो नलश्च द्यौर्भूमिरापोहृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तमिति ॥ ४९ ॥

स्मरोपतप्तोऽपि भृशं न स प्रभु-
र्विदर्भराजं तनयामयाचत।
त्यजन्त्यसून् शर्म्म च मानिनो वरं
त्यजन्ति न त्वेकमयाचितव्रतम्॥ ५० ॥

मृषाविषादाभिनयादयं क्वचित्
जुगोप निःश्वासततिं वियोगजाम्।
विलेपनस्याधिकचन्द्रभागता-
विभावनाच्चापललाप पाण्डुताम्॥ ५१ ॥

ननु किमनेनात्मनः सन्तापस्वीकारेण याच्यतां भीमनृपो दमयन्तीमित्यत्राह स्मरेति सः प्रभुर्नलः भृशम् अतिमात्रं स्मरेण कामेन उपतप्तः निपीड़ितः अपि विदर्भराजं भीमनृपतिं तनयां तद्दुहितरं दमयन्तीं न अयाचत न प्रार्थितवान्। दुहियाचीत्यादिना याचेर्द्विकर्म्मकता। ननु प्रभुरित्यनेनास्य राजचक्रवर्त्तित्वं व्यज्यते ततश्च चक्रेश्वरेण प्रार्थितः सामन्तनृपतिभीमोऽवश्यमेव तनयां दास्यति नात्र याञ्चाया मोघत्वशङ्केत्यत आह त्यजन्तीति मानिनः मानोन्नताः जनाः असून् प्राणान् शर्म्म च सुखञ्च शर्म्मशातसुखानि चेत्यमरः। वरं त्यजन्ति, एकं केवलम् अयाचितव्रतम् अभिज्ञानियमं न तु त्यजन्ति मानिनां प्राणत्यागदुःखादपि याञ्चा दैन्यख्यापनमतीव दुःसहमिति भावः॥ ५० ॥

मृषेति। अयं नलः क्वचित् कुत्रचित् वस्तुनि विषये मृषा अलीको विषादः उद्वेगः तस्य अभिनयात् प्रकटनात् छलाद्वा वियोगजां दमयन्तीविरहजनितां निश्वासततिं निःश्वास-

शशाङ्क निह्नोतुमनेन तत्प्रिया-
मयं बभाषे यदलीकवीक्षिताम्।
समाज एवालपितासु वैणिकै-
र्मुमूर्च्छ यत्पञ्चममूर्च्छनासु च॥ ५२॥

परम्परां जुगोप संववार अपह्नुते स्मेत्यर्थः। तथा विलेपनस्य अङ्गरागस्य अधिकः चन्दनादिति शेषः चन्द्रभागः कर्पूरांशः यस्मिन् तस्य भावः तत्ता तस्या विभावनात् प्रकटनात् व्याजाद्वा घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुकेत्यमरः। पाण्डुतां शरीरस्य पाण्डिमानम् अपललाप च निजुह्नुवे॥ ५१॥

शशाङ्केति। अयं नलः समाज एव सभायामेव अलीकवीक्षिताम् अजस्रभावनया तन्मयत्वात् मिथ्यावलोकितां प्रियां यत् बभाषे आललाप एतेनास्य गोत्रस्खलनमुक्तम्। तथा वैणिकैः वीणा शिल्पमेषां ते वैणिकाः तैः वीणावादकैः शिल्पमिति ठक्। आलपितासु सुस्वरितासु व्यक्तिं नीतास्विति यावत् रागव्यञ्जक आलाप इति लक्षणात् पञ्चमस्य तदाख्यस्य स्वरस्य मूर्च्छनासु आरोहावरोहणक्रमेषु क्रमात् स्वराणां सप्तानाम् आरोहादवरोहणं मूर्च्छनेत्युच्यते इति पञ्चमग्रहणं तस्य कोकिलालापवत् कोमलमधुरत्वेन उद्दीपकतातिशय-विवक्षार्थम्। यत् मुमूर्च्छ च मुग्धता मगाच्च ज्ञानशून्यश्च आसीदित्यर्थः। एतदुभयम् अलीकवीक्षितप्रियालपनं पञ्चम-मूर्च्छनासु मुग्धतागमनञ्चेत्यर्थः अनेन प्रकारेण केनचित् व्याजेन इति भावः निह्नोतुं गोपयितुं शशाङ्क शक्तोऽभूदित्यर्थः। एतेन क्रोन्मादोन्मादमूर्च्छावस्थाः सूचिताः॥ ५२॥

अवाप सापत्रपतां स भूपति-
र्जितेन्द्रियाणां धुरि कीर्त्तितस्थितिः ।
असंवरे शम्बरवैरिविक्रमे
क्रमेण तत्र स्फुटतामुपेयुषि ॥ ५३ ॥

अलं नलं रोद्धुममी किलाभवन्
गुणा विवेकप्रभवा न चापलम् ।
स्मरः स रत्यामनिरुद्धमेव यत्
सृजत्ययं सर्गनिसर्ग ईदृशः ॥ ५४ ॥

अवापेति । जितेन्द्रियानां वशीकृतेन्द्रियाणां धुरि अग्रे कीर्त्तिता स्थितिः मर्य्यादा यस्य तथाभूतः स भूपतिर्नलः तत्र समाजे असंवरे संवरितुमशक्ये शम्बरवैरिविक्रमे शम्बरनामकदानवरिपोः कामस्य प्रतापे मनसिजविकारे इत्यर्थः । क्रमेण स्फुटतां स्पष्टताम् उपेयुषि गते सति सापत्रपतां सलज्जताम् अवाप । धैर्य्यशालिनां तन्नङ्गस्त्रपाकार इति भावः ॥ ५३ ॥

ननु विवेकवतः कुत इदं चापल्यमित्यत आह अलमिति । युक्तायुक्तविचारो विवेकः तत्प्रभवाः अमी गुणाः धैर्य्यादयः नलं चापलं प्रियानुरागजामुत्कण्ठामिति यावत् रोद्धुं निवारयितुमिति भावः दुहियाचीत्यादिना रुन्धेर्द्विकर्मत्वम् । अलं समर्थाः अलं व्यर्थसमर्थयोरित्यमरः न अभवन् किल, नैव शक्ता अभूवन्नित्यर्थः । तथाहि स प्रसिद्धः स्मरः रत्यां रागे अनिरुद्धम् एव निरोद्धुमशक्तमेव अवशमेवेत्यर्थः सृजति करोति रतिदेव्याम् अनिरुद्धं नाम कुमारं सृजति चेति गम्यते । इति यत् अयम् ईदृशः सर्गनिसर्गः सृष्टिस्वभावः । रतिः स्मर-

अनङ्गचिह्नं स विना शशाक नो
यदासितुं संसदि यत्नवानपि।
क्षणं तदाऽऽरामविहारकैतवा-
न्निषेवितुं देशमियेष निर्जनम्॥ ५५॥

अथ श्रिया भर्त्सितमीनकेतनः
समं वयस्यैः स्वरहस्यवेदिभिः।
पुरोपकण्ठोपवनं किलेक्षिता
दिदेश यानाय निदेशकारिणः॥ ५६॥

प्रियायाश्च रागेऽपि सुरतेऽपि चेति। अनिरुद्धः कामपुत्रेऽरुद्धे चानीश्वरेऽपि च विश्वः। अत्र स्मररागदुर्वारतायाः सर्वसृष्टि-साधारण्येन चापलदुर्वारतासमर्थनात् सामान्येन विशेषसम-र्थनरूपोऽर्थान्तरन्यासः॥ ५४॥

अथास्य मनोरथसिद्ध्यौपयिक-दिव्यहंससंवादनिदानभूतम् उद्यानविहारं प्रस्तौति। अनङ्गेति। स नलः यत्नवानपि अव-हितोऽपि यदा संसदि सभायाम् अनङ्गचिह्नं मूर्च्छाप्रलापादि-स्मरविकारं विना क्षणमपि आसितुम् अवस्थातुं न शशाक न शक्तोऽभूत् तदा आरामः उपवनम् आरामः स्यादुपवनमित्य-मरः। तस्मिन् विहार एव कैतवं व्याजः तस्मात् यदर्थे पञ्चमी आरामविहारकैतवमवलम्ब्येत्यर्थः निर्जनं देशं निषेवितुम् आश्रयितुम् इयेष अभिलषितवान् एतेनास्य चापलाख्ये सञ्चा-रिणि भ्रमणलक्षणोऽनुभाव उक्तः॥ ५५॥

अथेति। अथानन्तरं श्रिया देहसौन्दर्येण भर्त्सितः न्यक्-कृतः मीनकेतनः कामः येन तथोक्तः स नलः स्वस्य रहस्यम् अन्तः-

अमी ततस्तस्य विभूषितं सितं
जवेऽपि मानेऽपि च पौरुषाधिकम्।
उपाहरन्नश्वमजस्रचञ्चलैः
खुराञ्चलैः क्षोदितमन्दुरोदरम्॥ ५७॥

अथान्तरेणावटुगामिनाध्वना
निशीथिनीनाथमहःसहोदरैः।

कारणतत्वमित्यर्थः दमयन्त्यनुरागरूपमिति भावः। विदन्तीति तथाभूतैः वयस्यैः वयसा तुल्या वयस्याः स्निग्धाः तैः स्निग्धो वयस्यः सवया इत्यमरः। समं सह पुरोपकण्ठोपवनं नगरसमीपोद्यानम् ईक्षिता द्रष्टा किलेत्यलीके उत्कण्ठाविनोदनस्यैव प्रच्छन्नत्वेन उद्यानदर्शनस्य छलत्वादिति भावः। छलमलमेवैतत् न लोकेत्यादिना षष्ठीप्रतिषेधः। यानाय यानार्थं यानमानेतुं वा क्रियार्थोपेत्यादिना चतुर्थी। निदेशकारिणो भृत्यान् दिदेश आज्ञापयामास॥ ५६॥

अमी इति। अमी भृत्याः ततः निदेशानन्तरं तस्य नलस्य विभूषितम् अलङ्कृतं जवेऽपि वेगेऽपि मानेऽपि च परिमाणेऽपि च पौरुषात् पुरुषगतिवेगात् पुरुषप्रमाणाच्च अधिकम् अतिरिक्तम् ऊर्द्ध्वविस्तृत दोः पाणि नृमाने पौरुषं त्रिष्वित्यमरः। पुरुषहस्तिभ्यामण् चेत्यण्प्रत्ययः। अजस्रं चञ्चलैः चटुलैः खुराञ्चलैः शफाग्रैः क्षोदितं कुट्टितं मन्दुरायाः अश्वशालायाः उदरम् अभ्यन्तरं येन तथोक्तं वाजिशाला तु मन्दुरेत्यमरः। सितं श्वेतवर्णम् अश्वम् उपाहरन् आनिन्युरित्यर्थः॥ ५७॥

निगालगाद्देवमणेरिवोत्थितै-
र्विराजितं केशरकेशरश्मिभिः ॥ ५८ ॥
अजस्रभूमीतटकुट्टनोद्गतै-
रुपास्यमानं चरणेषु रेणुभिः ।
रयप्रकर्षाध्ययनार्थमागत-
र्जनस्य चेतोभिरिवाणिमाङ्कितैः ॥ ५९ ॥

अथ सप्तभिः कुलकेनाश्वं विशिनष्टि अथेत्यादिभि । अथा-नयनानन्तरं स नलः हयमाकरोद्दित्युत्तरेणान्वयः । कथम्भूतम् आन्तरेण अभ्यन्तरवर्त्तिना अवटुगामिना ककाटिकाख्य-मस्तकपृष्ठभाजा अवटु घाटा ककाटिकेत्यमरः । अध्वना मार्गेण निगालगात् गलोद्देशात् निगालस्तु गलोद्देश इत्यमरः । देव-मणेः आवर्त्तविशेषात् निगालजो देवमणिरिति तल्लक्षणात् । दिव्यमाणिक्याच्च गम्यते । उत्थितैरिव स्थितैरित्युत्प्रेक्षा । निशी-थिनीनाथमहःसहोदरैः चन्द्रांशुसदृशैरित्युपमा केशरकेशा जटा-रोमाणि एव रश्मयः किरणाः तैरिति रूपकम् । विराजितं शोभितम् । तदेषामुत्प्रेक्षोपमारूपकाणां संसृष्टिः ॥ ५८ ॥

अजस्रेति । पुनः अजस्रं भूमीतटस्य कुट्टनेन उद्गतैः उत्थितैः रेणुभिः रजोभिः रयप्रकर्षस्य वेगातिशयस्य अध्य-यनार्थम् अभ्यासार्थम् आगतैः अणिमाङ्कितैः अणुत्वपरिमाण-विशिष्टैः जनस्य लोकस्य चेतोभिरिव चरणेषु उपास्यमानं सेव्यमानम् अणुपरिमाणं मन इति तार्किकाः । अत्र उत्प्रेक्षा-स्वभावोक्तिव्यतिरेकालङ्काराणां सङ्करः ॥ ५९ ॥

चलाचलप्रोथतया महीभृते
स्ववेगदर्पानिव वक्तुमुत्सुकम्।
अलं गिरा वेद किलायमाशयं
स्वयं हयस्येति च मौनमास्थितम्॥ ६०॥

महारथस्याध्वनि चक्रवर्त्तिनः
परानपेक्षोद्वहनाद्यशः सितम्।
रदावदातांशुमिषादनीदृशां
हसन्तमन्तर्बलमर्वतां रवेः॥ ६१॥

चलाचलेति। पुनः, चलाचलप्रोथतया स्वभावतः स्फुरद्-घोणतया चरिचलिपदीनामुपसंख्यानाच्चलेर्द्विर्वचनं दीर्घश्च। घोणा तु प्रोथमस्त्रियामित्यमरः। महीभृते नलाय स्ववेग-दर्पान् निजवेगातिरेकानिति यावत् वक्तुमुत्सुकम् उद्युक्त-मिवेत्युत्प्रेक्षा। अथावचने हेतुमुत्प्रेक्षते अलमिति। गिरा वाचा अलं कृत इत्याह अयं नलः स्वयम् आत्मना हयस्य अश्वस्य आशयम् अभिप्रायं वेद किल जानात्येवेत्यर्थः नलस्य हयतत्त्वज्ञतायाः प्रसिद्धत्वादिति भावः। इति हेतोरिव मौनं तूष्णीम्भावञ्च आस्थितं प्राप्तम्॥ ६०॥

महारथस्येति। महान् रथो यस्य स महारथः तल्लक्षण-मुक्तं यथा। आत्मानं सारथिं चाश्वान् रक्षन् युध्येत यो नरः। स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः। एको दशसहस्राणि योधयेद् यस्तु धन्विनाम्। अस्त्रशस्त्रप्रवीणश्च स महारथ उच्यते इति च। तस्य चक्रवर्त्तिनः मण्डलेश्वरस्य नलस्य हरिश्चन्द्रो नलो राजा पुरुः कुत्सः पुरूरवाः। सगरः कार्त्त-

सितत्विषश्चञ्चलतामुपेयुषो
मिषेण पुच्छस्य च केशरस्य च।
स्फुटं चलच्चामरयुग्मचिह्नकै-
रनिह्नुवानं निजवाजिराजताम्॥ ६२
अपि द्विजिह्वाभ्यवहारपौरुषे

वीर्य्यस्य षड़ेते चक्रवर्त्तिन इत्यागमः। अध्वनि मार्गे नापेक्षते इत्यनपेक्षं पचाद्यच्प्रत्ययः। परेषामनपेक्षम् अन्यसहायनिरपेक्षमित्यर्थः यत् उद्वहनं तस्मात् परानपेक्ष्येति पाठे परान् अन्यान् अश्वानिति शेषः अपेक्ष्य अतिशय्येत्यर्थः उद्वहनात् हेतोः यशसा सितं धवलं कीर्त्तिविशदमित्यर्थः। अतएव अनीदृशामीदृशयशोरहितानामित्यर्थः सप्त युञ्जन्ति रथमेकचक्रमिति सप्तानां सम्भूयोद्वहनश्रवणादिति भावः चक्रवर्त्तिनः एकचक्ररथस्थितस्य रवेः सूर्य्यस्य अर्वताम् अश्वानां सप्तानामिति शेषः अन्तर्बलम् अन्तःसारं रदानां दन्तानाम् अवदाताः सिताः ये अंशवः किरणाः तेषां मिषात् व्याजात् हसन्तं हसन्तमिव स्थितमिति प्रतीयमानोत्प्रेक्षा। रदना दशना दन्ता रदा इत्यमरः॥ ६१॥

सितेति। पुनः, सितत्विषः विशदप्रभस्य चञ्चलताम् उपेयुषः गतस्य पुच्छस्य लाङ्गूलस्य केशरस्य ग्रीवास्थरोमचयस्य च मिषेण छलेन चलतश्चामरयुग्मस्य चिह्नकैः लक्षणैः स्फुटां निजवाजिराजतां स्वस्य अश्वराजत्वम् अनिह्नुवानं प्रकाशयन्तम् अन्यथा कथं चामरयुग्मचिह्नमिति भावः। अत्रापि पूर्ववदलङ्कारः॥ ६२॥

मुखानुषक्तायतवल्गुवल्गया ।
उपेयिवांसं प्रतिमल्लतां रय-
स्मये जितस्य प्रसभं गरुत्मतः ॥ ६३ ॥

स सिन्धुजं शीतमहःसहोदरं
हरन्तमुच्चैःश्रवसः श्रियं हयम् ।
जिताखिलक्ष्माभृदनल्पलोचन-
स्तमारुरोह क्षितिपाकशासनः ॥ ६४ ॥

अपीति । पुनः, रयस्मये वेगप्रयुक्ताहङ्कारे प्रसभं प्रसह्य सम्यगित्यर्थः जितस्य पराभूतस्य प्रागिति शेषः गरुत्मतः गरुडस्य द्विजिह्वानां सर्पाणाम् अभ्यवहारे आहारे यत् पौरुषं पुरुषकारः स्वशक्तिप्रकटनमिति भावः तस्मिन्नपि मुखानुषक्ता मुखलग्ना आयता दीर्घा वल्गुः मनोज्ञा या वल्गा रज्जु-विशेषः तया मिषेणेति भावः प्रतिमल्लतां प्रतिस्पर्द्धिताम् उपेयि-वांसं प्राप्तमिवेति प्रतीयमानोत्प्रेक्षा । उपेयिवाननश्वाननूचान-श्चेति क्वसुप्रत्ययान्तो निपातः ॥ ६३ ॥

स इति । जिता अखिलाः समग्राः क्ष्माभृतः राजानः पर्वताश्च येन तथोक्तः अनल्पलोचनः दीर्घनेत्रः सहस्रलोचनश्च क्षितिपाकशासनः क्षितीन्द्रः सः नलः देवेन्द्रश्च सिन्धुजं सिन्धु-देशभवं समुद्रोद्भवञ्च देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः । शीतमहःसहोदरं चन्द्रसवर्णं चन्द्रभ्रातरञ्च एकयोनित्वादिति भावः । उच्चैःश्रवसः श्रियं हरन्तमिवेत्युत्प्रेक्षा । सा श्लेषसंकीर्णा ॥ ६४ ॥

निजा मयूखा इव तिग्मदीधितिं
स्फुटारविन्दाङ्कितपाणिपङ्कजम् ।
तमश्ववारा जवनाश्वयायिनं
प्रकाशरूपा मनुजेशमन्वयुः ॥ ६५ ॥

चलन्नलङ्कृत्य महारयं हयं
स वाहवाहोचितवेशपेशलः ।
प्रमोदनिष्पन्दतराक्षिपक्ष्मभि-
र्व्यलोकि लोकैर्नगरालयैर्नलः ॥ ६६ ॥

निजा इति । निजाः आत्मीयाः प्रकाशरूपाः उज्ज्वलाकृतयः भास्वररूपाश्च अश्ववाराः अश्वारोहिणः स्फुटारविन्दाङ्कितपाणि-पङ्कजं स्फुटेन प्रकटेन अरविन्देन पद्मेन तच्चिह्नेनेति भावः अङ्कितं चिह्नितं पाणिपङ्कजं करकमलं यस्य तथोक्तं पद्महस्तञ्च जवनाश्वयायिनं सवेगाश्वगामिनं तं मनोर्जाताः मनुजा नराः तेषामीशं प्रभुं तं नलं मयूखाः तिग्मदीधितिमिव सूर्य्यमिव अन्वयुः अनुजग्मुः । यातेर्लङ् अन उसादेशश्च ॥६५॥

चलन्निति । वाहवाहोचितवेशपेशलः अश्ववाहोचितनेपथ्यमनोहर इत्यर्थः चारौ दक्षे च पेशल इत्यमरः । स नलः महारयं महाजवं हयम् अश्वम् अलङ्कृत्य शोभयित्वा चलन् स्वयमश्वस्य भूषणीभूय गच्छन्नित्यर्थः । प्रमोदेन हर्षेण निष्पन्दतराणि अतिनिश्चलानि अक्षिपक्ष्माणि नेत्रलोमानि येषां तथाभूतैः निर्निमेषदृष्टिभिरित्यर्थः नगरालयैः पुरवासिभिः लोकैः जनैः व्यलोकि विशेषेण दृष्ट इत्यर्थः । चलन्नलमिति महारयं हयमिति वाहवाहेति व्यलोकि लोकैरिति

क्षणादथैष क्षणदापतिप्रभः
प्रभञ्जनाध्येयजवेन वाजिना
सहैव ताभिर्जनदृष्टिवृष्टिभि-
र्वहिः पुरोऽभूत्पुरुहूतपौरुषः ॥ ६७ ॥
ततः प्रतीच्छप्रहरेति भाषिणी
परस्परोल्लासितशल्यपल्लवे।
मृषामृधे सादिबले कुतूहला-
न्नलस्य नासीरगते वितेनतुः ॥ ६८ ॥

चैकस्यानेकस्य च व्यञ्जनस्य साम्यात् वृत्त्यनुप्रासालङ्कारः। तदुक्तं दर्पणे। अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा। एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते इति ॥ ६६ ॥

क्षणादिति। अथानन्तरं क्षणदापतिप्रभश्चन्द्रनिभः तथा पुरुहूतपौरुषः इन्द्रविक्रमः एष नलः प्रभञ्जनेन वायुना अध्येयः पाठ्यः जवो वेगः यस्य यस्माद्वा तथाविधः तेन वाजिना अश्वेन ताभिः जनानां दृष्टिवृष्टिभिः दृक्पातैः सहैव क्षणात् अल्पेनैव समयेन पुरः नगरात् वहिः वहिर्गतः अभूत्। पुर इति वहिर्योगे पञ्चमी ॥ ६७ ॥

तत इति। ततः पुरात् वहिर्गमनानन्तरं प्रतीच्छ गृहाण प्रहर इति भाषिणी शब्दायमाने इत्यर्थः परस्परं प्रति उल्ला-सितानि निक्षिप्तानि शल्यानि तोमराख्यास्त्रविशेषाः पल्लवाः किसलया इव याभ्यां तथोक्ते पल्लवोपमित्या शल्यानामतीक्ष्णप्रहा-रित्वसूचकं कोमलत्वं ध्वन्यते। नलस्य नासीरगते सेनामुख-वर्त्तिनी सेनामुखन्तु नासीरमित्यमरः। सादिबले अश्वारोहि-

प्रयातुमस्माकमियं कियत्पदं
धरा तदम्भोधिरपि स्थलायताम्।
इतीव वाहैर्निजवेगदर्पितैः
पयोधिरोधक्षममुद्धतं रजः॥ ६९॥

हरेर्यदक्रामि पदैककेन खं
पदैश्चतुर्भिः क्रमणेन तस्य नः।
त्रपा हरीणामिति नम्रिताननै-
र्न्यवर्त्ति तैरर्द्धनभःकृतक्रमैः॥ ७०॥

सैन्ये कुतूहलात् कौतुकात् मृषा मृधं मिथ्या युद्धं युद्धाभिनयमिति भावः वितेनतुश्चक्रतुः। मृधमायोधनं सङ्ग्राममित्यमरः॥ ६८॥

प्रयातुमिति। इयं धरा पृथिवी समुद्रव्यतिरिक्तेति भावः अस्माकं प्रयातुं कियत्पदं गन्तव्यं स्थानम्? न पर्य्याप्त[illegible]। तत् तस्मात् अम्भोधिरपि समुद्रोऽपि स्थलायतां स्थलवत् आचरतु भूरिव भवत्वित्यर्थः कर्त्तुः क्यङ् सलोपश्चेति क्यङ्प्रत्ययः। इतीव इति मत्वेवेत्यर्थः निजवेगेन दर्पितैः वाहैः अश्वारोहिणामश्वैः कर्तृभिः पयोधिरोधक्षमं समुद्राच्छादनपर्य्याप्तं रजः उद्धतम् उत्क्षिप्तम् उत्थितमिति पाठे अश्वैः हेतुभूतैः उत्थितम् उत्पतितं कर्त्तरि क्तप्रत्ययः॥ ६९॥

हरेरिति। यत् खमाकाशं हरेर्विष्णोः वामनरूपिण इति भावः पदैककेन एकमात्रेण पदेनेत्यर्थः एकादाकिनच्चासहाये क इति चकारात् कन्प्रत्ययः। अक्रामि क्रान्तं लङ्घित-

चमूचरास्तस्य नृपस्य सादिनो
जिनोक्तिषु श्राद्धतयेव सैन्धवाः।
विहारदेशं तमवाप्य मण्डली-
मकारयन् भूरि तुरङ्गमानपि ॥ ७१ ॥

मित्यर्थः तस्य खस्य चतुर्भिः पदैः क्रमणे लङ्घने सति हरीणाम् अश्वानां विष्णूनाञ्चेति गम्यते यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिष्वित्यमरः। नोऽस्माकं त्रपा लज्जा स्यादितीव नम्रितानि आननानि मुखानि यैः तथाभूतैः अर्द्धे नभसि कृतः क्रमः पदप्रसारणं यैः तथोक्तैः लङ्घनार्थमुद्यतैरपीति भावः न्यवर्त्ति निवृत्तम्। भावे लुङ्। यदन्येन लघूपायेन साधितं तत्र गुरूपायप्रयोगो लाघवाय समानानामिति भावः। एतेन द्रुतगतिरुक्ता तत्र गगनसम्भवादिति भावः ॥ ७० ॥

इति। तस्य नृपस्य चमूषु चरन्तीति चमूचराः चरेष्टच्। सिन्धुदेशभवाः सैन्धवाः अश्वाः हयसैन्धवसप्तय इत्यमरः तत्र भवेत्यण्प्रत्ययः। तत्सम्बन्धिनोऽपि सैन्धवाः तस्येदमित्यण्। अश्वारोहिण इत्यर्थः जिनोक्तिषु जैनोक्तदर्शनशास्त्रेषु श्राद्धतया श्रद्धावत्त्वेनैवेत्युत्प्रेक्षा तं विहारदेशं सञ्चारभूमिं सुगतालयञ्च विहारो भ्रमणे स्कन्धे लीलायां सुगतालय इति विश्वः। अवाप्य प्राप्य तुरङ्गमान् अश्वान् अपि किमात्मन इति भावः भूरि बहुलं मण्डलीं मण्डलाकारभ्रमणमित्यर्थः अकारयन् कारयन्ति स्म। बौद्धा विहारं प्राप्य प्रदक्षिणीकुर्वन्तीति प्रसिद्धिः ॥ ७१ ॥

द्विषद्भिरेवास्य विलङ्घिता दिशो
यशोभिरेवाब्धिरकारि गोष्पदम्।
इतीव धारामवधीर्य्य मण्डली-
क्रियाश्रियाऽमण्डि तुरङ्गमैः स्थली ॥ ७२ ॥
अचीकरच्चारुहयेन या भ्रमी-
र्निजातपत्रस्य तलस्थले नलः।
मरुत् किमद्यापि न तासु शिक्षते
वितत्य वात्यामयचक्रचङ्क्रमान् ? ॥ ७३ ॥

द्विषद्भिरिति। अस्य नलस्य द्विषद्भिरेव शत्रुभिरेव पलायमानैरिति भावः दिशः लङ्घिताः उत्तीर्णाः। यशोभिरेव अब्धिः समुद्रः गोष्पदम् अकारि कृतः गोष्पदवत् लङ्घित इत्यर्थः समुद्रपारं गतमिति भावः इतीव इति मत्वेवेत्यर्थः उत्प्रेक्षालङ्कारः। अनन्यसाधारणमेव कर्म्म उत्कर्षायेति विविच्येवेति भावः तुरङ्गमैः अश्वैः धारां गतिविशेषम् आस्कन्दितं
वल्गितं प्लुतं गतयोऽमूः पञ्च धारा इत्यमरः
पञ्चापि धारा इत्यर्थः अवधीर्य्य अनादृत्य परित्यज्येत्यर्थः मण्डलीक्रियाश्रिया मण्डलीकरणलक्ष्म्या मण्डलगत्यैवेत्यर्थः। स्थली अकृत्रिमा भूः जानपदेत्यादिना कृत्रिमार्थे ङीप्। अमण्डि अभूषि अलङ्कारीत्यर्थः। मण्डि भूषणे इति ण्यन्तात् कर्म्मणि लुङ् ॥ ७२ ॥

अचीकरदिति। नलः चारु मनोज्ञं यथा तथा हयेन अश्वेन यद्वा चारु हयेनेत्येकं पदं चारुणा मनोज्ञेन हयेनेत्यर्थः प्रयोज्येन कर्त्रा निजातपत्रस्य निजच्छत्रस्य तलस्थले अधःप्रदेशे

विवेश गत्वा स विलासकाननं
ततः क्षणात् क्षौणिपतिर्धृतीच्छया
प्रवालरागच्छुरितं सुषुप्सया
हरिर्घनच्छायमिवाम्भसां निधिम् ॥ ७४ ॥
वनान्तपर्य्यन्तमुपेत्य सस्पृहं
क्रमेण तस्मिन्नवतीर्णदृक्पथे।

अधःस्वरूपयोरस्त्री तलमित्यमरः। या भ्रमीः मण्डलगतीः अचीकरत् कारयामास, करोतेर्णौ चङ्। तासु भ्रमिषु मरुत् वायुः अद्यापि वातानां समूहः वात्या वातादिभ्यो यः। लक्षणया तद्भ्रम इत्यर्थः तन्मयान् चक्रचङ्क्रमान् मण्डलगतिविशेषान् वितत्य विस्तीर्य्य विस्तरेणेति भावः किं न शिक्षते? नाभ्यस्यति? अपि तु अभ्यस्यत्येवेत्यर्थः। वात्याभ्रमेरपि समधिका भ्रमीः कारितवानिति निष्कर्षः ॥ ७३ ॥

विवेशेति। ततः सः क्षौणिपतिः भूपतिर्नलः क्षणात् गत्वा धृतीच्छया विनोदाकाङ्क्षया प्रवालाः पल्लवाः विद्रुमाश्च प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे इत्यमरः। तेषां रागेण लौहित्येन छुरितं रञ्जितं घनच्छायं निविड़ानातपं मेघच्छविञ्च छायात्वनातपे कान्ताविति विश्वः। विलासकाननं क्रीड़ोद्यानम् अन्यत्र विले आसते इति विलासकाः विलेशयाः सर्पा इत्यर्थः तेषाम् आननं प्राणनं जीवनरक्षणस्थानमित्यर्थः सुषुप्सया स्वप्तुमिच्छया अम्भसां निधिं समुद्रं हरिरिव नारायण इव विवेश प्रविष्टवान्। श्लिष्टोपमा ॥ ७४ ॥

वनान्तेति। तस्मिन् नले क्रमेण अवतीर्णदृक्पथे अति-

 

न्यवर्त्ति दृष्टिप्रकरैः पुरौकसा-
मनुव्रजद्बन्धुसमाजबन्धुभिः ॥ ७५ ॥
ततः प्रसूने च फले च मञ्जुले
स सम्मुखस्थाङ्गुलिना जनाधिपः ।
निवेद्यमानं वनपालपाणिना
व्यलोकयत्काननरामणीयकम् ॥ ७६ ॥
फलानि पुष्पाणि च पल्लवे करे

क्रान्तदृष्टिविषये सति अनुव्रजताम् अनुगच्छतां बन्धुसमाजानां बन्धुसमूहानां बन्धवः मित्राणि तैः अनुगामिबन्धुजनस्निग्धै-रित्यर्थः पुरौकसां पुरवासिनां दृष्टिप्रकरैः दृष्टिसमूहैः वनान्तपर्य्यन्तं काननोपान्तसीमाम् उदकप्रान्तसीमामिति च गम्यते वने सलिलकानने इत्यमरः। स्निग्धै रोदकान्तमनुगम्यते इति श्रुतेः । सस्पृहं सतृष्णं यथा तथा उपेत्य गत्वा न्यवर्त्ति निवृत्तम् भावे लुङ् ॥ ७५ ॥

तत इति। ततः वनप्रवेशानन्तरं स जनाधिपः नृपतिर्नलः सम्मुखस्था अङ्गुलयः यस्य तथाभूतेन वनपालस्य काननरक्षिणः पाणिना मञ्जुले मनोहारिणि प्रसूने पुष्पे च फले च निवेद्यमानं विज्ञाप्यमानं प्रदर्श्यमानमिति यावत्। काननस्य उद्यानस्य रामणीयकं रम्यतां कामनीयतामिति पाठेऽपि स एवार्थः। रामणीयकमित्यत्र वुञ्प्रत्ययः। व्यलोकयत्। स्वभावोक्तिरलङ्कारः तदुक्तं दर्पणे। स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनमिति। स्वभावोक्तिरसौ चारु यथावद् वस्तुवर्णनमिति तु प्राञ्चः ॥ ७६ ॥

वयोऽतिपातोद्गतवातवेपिते।
स्थितैः समाधाय महर्षिवार्द्धकाद्
वने तदातिथ्यमशिच्चि शाखिभिः॥ ७७॥

विनिद्रपत्रालिगतालिकैतवान्
मृगाङ्कचूड़ामणिवर्जनार्जितम्।
दधानमाशासु चरिष्णु दुर्यशः
स कौतुकी तत्र ददर्श केतकम्॥ ७८॥

फलानीति। वयोऽतिपातेन वयसां पक्षिणाम् अतिपातेन प्रपतनेन वयसां बाल्ययौवनप्रौढ़ानामतिपातेन अपगमेन च उद्गतः उत्थितः जातश्च यो वातः वायुः रोगविशेषश्च तेन वेपितः कम्पितः तस्मिन् खगबाल्यादिनोर्वय इत्यमरः। पल्लवे एव करे व्यस्तरूपकम्। फलानि पुष्पाणि च समाधाय निधाय स्थितैः वने शाखिभिर्वृक्षैः वेदशाखाध्यायिभिश्च शाखाभेदे द्रुमे शाखा वेदेऽपीति वैजयन्ती। महर्षिवार्द्धकात् महर्षीणां वृद्धसङ्घात् तत्रत्यादिति भावः शिवभागवतवत् समासः। वृद्धसङ्घे तु वार्द्धकमित्यमरः वृद्धाच्चेति वक्तव्यमिति समूहार्थे वुञ्प्रत्ययः। तस्य नलस्य आतिथ्यम्, अतिथ्यर्थं कर्म्म अतिथेर्ञ्य इति ञ्यप्रत्ययः। अशिच्चि शिच्चितम् अभ्यस्तमिवेत्यर्थः कर्म्मणि लुङ्। रूपकस्य षानुप्राणिता गम्योत्प्रेच्चा॥ ७७॥

विनिद्रेति। तत्र वने स नलः कौतुकी सन् विनिद्राणां विकचानां पत्राणाम् आलिषु श्रेणिषु गताः स्थिता ये अलयः भ्रमराः तेषां कैतवात् व्याजात् मृगाङ्कचूड़ामणेरीश्वरस्य कर्त्तर्वर्जनं परित्यागः तेन अर्जितं न केतक्या सदाशिवमिति

वियोगभाजां हृदि कण्टकैः कटु-
र्निधीयसे कर्णिशरः स्मरेण यत्।
ततो दुराकर्षतया तदन्तकृद्
विगीयसे मन्मथदेहदाहिना ॥ ७९ ॥
त्वदग्रसूचीसचिवः स कामिनो-
र्मनोभवः सीव्यति दुर्यशःपटौ।

निषेधादिति भावः आशासु दिक्षु चरिष्णु सञ्चरत् अलङ्कृञि-त्यादिना चरेरिष्णुच्प्रत्ययः। दुर्यशः अपकीर्त्तिं दधानं केतकं केतकीपुष्पं ददर्श। अत्रालिकैतवादित्यलित्वप्रतिषेधेन तत्र दुर्यशसः स्थापनादपह्नुतिरलङ्कारः। तदुक्तं दर्पणे। प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति ॥ ७८ ॥

अथ त्रिभिः केतकोपालम्भमाह वियोगेति। हे केतक! यत् यस्मात् त्वं स्मरेण कामेन वियोगभाजां विरहिणां हृदि कण्टकैः निजतीक्ष्णावयवैः कटुः तीक्ष्णः कर्णवत् कर्णि प्रति-लोमशल्यं तदेव शरः कर्णिशरः सन् निधीयसे निहितो भवसि कण्टककटोः कैतकस्य कर्णिशरत्वरूपणात् रूपकालङ्कारः। ततः कर्णिशरत्वात् ततो हृद्रो वा दुराकर्षतया दुरुद्धारतया तदन्तकृत् तेषां वियोगभाजाम् अन्तकृत् विनाशकम् असीति शेषः तस्मात् मन्मथदेहदाहिना ईश्वरेण विगीयसे द्वेष्यवत् विगर्ह्यसे। द्वेष्याणामुपकरणमपि असह्यमेव तत्रापि हिंसत्वे किमु वक्तव्यमिति भावः। अत्रेश्वरकर्त्तृकस्य केतकविगर्हणस्य तद्गतवियोगिहिंसताहेतुत्वेनोपन्यासात् हेतूत्प्रेक्षा सा च व्यञ्जकाप्रयोगादगम्या रूपकोत्थापिता इति सङ्करः ॥ ७९ ॥

स्फुटश्च पत्रैः करपत्रमूर्त्तिभि-
र्वियोगिहृद्दारुणि दारुणायते ॥ ८० ॥
धनुर्मधुस्विन्नकरोऽपि भीमजा-
परं परागैस्तव धूलिहस्तयन्।
प्रसूनधन्वा शरसात्करोति
मामितिक्रुधाक्रुश्यत तेन केतकम् ॥ ८१ ॥

त्वदिति। तव अग्रसूच्यः अग्रिमतीक्ष्णावयवाः सचिवाः सहकारिणो यस्य तथोक्तः सः प्रसिद्धो मनोभवः कामः कामी च कामिनी च तयोः कामिनोः पुमान् स्त्रियेत्येकशेषः। स्त्रीपुंसयोः दुर्यशसी एव पटी वसने रूपकमलङ्कारः। सीव्यति त्वत्कण्टकेन सूच्येव स्यूते करोतीत्यर्थः। किञ्चेति चार्थः। किञ्च करपत्रमूर्त्तिभिः क्रकचाकारैः क्रकचोऽस्त्री करपत्रमित्यमरः पत्रैः वियोगिनां हृत् दारु काष्ठमिव तस्मिन् दारयतीति दारुणो विदारकः स इवाचरतीति दारुणायते अतिनिर्दयमाचरतीति भावः। कर्त्तुः क्यङ् सलोपश्चेति क्यङन्तात् लट्। दारुणायत इत्युपमा। तदनयोः संसृष्टिः॥ ८० ॥

धनुरिति। प्रसूनं पुष्पं धन्व धनुर्यस्य स प्रसूनधन्वा कामः वा संज्ञायामित्यनङादेशः। अतएव धनुषः पुष्पमयत्वेति भावः। मधुना मकरन्देन स्विन्नकरः आर्द्रपाणिरपि तव परागैः रजोभिः धूलिहस्तयन् पुनः पुनः धूल्युद्धासितहस्तम् आत्मानं कुर्वन्नित्यर्थः अन्यथा धनुषः संसरणादिति भावः तत्करोतेर्ण्यन्ताल्लटः शत्रादेशः। सन् भीमजापरं दमयन्त्यासक्तं मां शरसात् करोति शराधीनं करोति तदधीने चेति सातिप्रत्ययः।

विदर्भसुभ्रूस्तनतुङ्गताप्तये
घटानिवापश्यदलं तपस्यतः।
फलानि धूमस्य धयानधोमुखान्
स दाड़िमे दोहदधूपिनि द्रुमे ॥ ८२ ॥
वियोगिनीमैक्षत दाड़िमीमसौ
प्रियस्मृतेः स्पष्टमुदीतकण्टकाम्।

अन्यथा त्यक्तचापः सः मां किं कुर्य्यादिति भावः। इति इत्थं क्रुधा कोपेन तेन नलेन केतकम् आक्रुश्यत अपराधोद्घाटनेन व्यगर्ह्यतेत्यर्थः। अतिभीमजापरमिति पाठे भीमजायां दमयन्त्याम् अत्यासक्तमित्यर्थः॥ ८१॥

विदर्भेति। तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादिकं द्रव्यं दोहदं स्यात्तु तत् क्रियेति शब्दार्णवात् दोहदश्चासौ धूपश्चेति दोहदधूपः तदुक्तं मेषामिषाम्बुसंसेकस्तत्केशामिषधूपनम्। श्रेयानयं प्रयोगः स्याद् दाड़िमीफलवृद्धये। मत्स्याज्यत्रिफलालेपैर्मांसैः राजाविकोद्भवैः। लेपिता धूपिता सूते फलं तालीव दाड़िमी। आविक्षाथेन संसिक्ता धूपिता तप्तरोमभिः। फलानि दाड़िमी सूते सुबहूनि पृथूनि चेति। तद्वति दाड़िमे द्रुमे वृक्षे स नलः फलानि दाड़िमीफलानि विदर्भसुभ्रूर्दमयन्ती तस्याः स्तनयोः या तुङ्गता औन्नत्यं तस्या आप्तये लाभाय तादृशौन्नत्यप्राप्तये इत्यर्थः अलमत्यर्थं तपस्यतः तपश्चरतः अधोमुखान् धूमस्य दोहदधूमस्य धयन्तीति धयाः पातारः तान्। घटानिव अपश्यत्। महाफलार्थिनः इत्थम् उग्रं तपस्यन्ति इति भावः। उत्प्रेक्षालङ्कारः॥ ८२॥

फलस्तनस्थानविदीर्णरागिहृद्-
विशत्कुकास्यस्मरकिंशुकाशुगाम्॥ ८३॥
स्मरार्द्धचन्द्रेषु निभे क्रशीयसां
स्फुटं पलाशेऽध्वजुषाम्पलाशनात्।
स वृन्तमालोकत खण्डमन्वितं
वियोगिहृत्खण्डिनि कालखण्डजम्॥८४॥

वियोगिनीमिति। असौ नलः प्रियस्य कान्तस्य स्मृतिः स्मरणं तस्याः हेतोः स्पष्टं सुव्यक्तम् उदीताः ईण् गताविति धातोः कर्त्तरि क्तः। कण्टकाः स्वावयवसूचय एव कण्टकाः रोमाञ्चाः यस्याः ताम्। वेणौ द्रुमाङ्गे रोमाञ्चे क्षुद्रशत्रौ च कण्टक इति वैजयन्ती। तथाभूतामिवेति श्लिष्टरूपकानुप्राणिता गम्योत्प्रेक्षा व्यञ्जकाप्रयोगादिति। फलान्येव स्तनाः स्थानं तत्र विदीर्णं रागि लौहित्यवत् अनुरक्तञ्च यत् हृद् हृदयं तस्मिन् विशत् बीजभक्षणार्थं प्रविशत् शुकास्यं शुकपक्षिमुखमेव स्मरस्य कामस्य किंशुकं पलाशमुकुलमेव आशुगः शरः यस्याः तथाविधां वियोगिनीं विरहिणीं विः पक्षी तस्य योगशालिनीञ्च दाड़िमीं दाड़िमलताम् ऐक्षत दृष्टवान्। रूपकालङ्कारः॥ ८३॥

स्मरेति। स नलः स्मरस्य यः अर्द्धचन्द्रः अर्द्धचन्द्राकार इत्यर्थः इषुः शरः तन्निभे तत्सदृशे नित्यसमासत्वादस्वपदविग्रहः। तथा च अमरः। स्युरुत्तरपदेत्यमी निभसङ्काशनीकाशप्रतीकाशोपमादय इति। वियोगिनां विरहिणां हृत्खण्डिनि हृदयभेदिनि क्रशीयसाम् अतिक्रशानाम् अध्वजुषाम् अध्वगानां पलाशनात् मांसभक्षणात् पलाशे पलं मांसम् अश्नातीति

नवा लता गन्धवहेन चुम्बिता
करम्बिताङ्गी मकरन्दशीकरैः।
दृशा नृपेण स्मितशोभिकुड्मला
दरादराभ्यान्दरकम्पिनी पपे ॥ ८५ ॥

त्या पलाशसंज्ञाभाजि किंशुककुसुमे इत्यर्थः अन्वितं सम्बद्धं ..लखण्डजं यत्कृज्जातं खण्डं तत्स्वरूपमित्यर्थः वृन्तं प्रसव-बन्धनम् आलोकत दृष्टवान्। व्यस्तरूपकम्। कालखण्डं यकृत् समे इत्यमरः। तच्च दक्षिणपार्श्ववर्त्ती कृष्णवर्णमांस-पिण्डविशेषः। विरहिणां सर्वमांसानि भक्षितानि जीर्णानि यकृदंशस्य अतीवकाठिन्यात् तन्मात्रमेव अजीर्णतां गतमस्य उदरे दृष्टवानिवेत्युत्प्रेक्षा गम्या। अतीवोद्दीपकं पलाशकुसुम-मिति भावः ॥ ८४ ॥

नवेति। नृपेण नलेन, गन्धवहेन वायुना अङ्गरागगन्ध-वता च पुंसेति गम्यते चुम्बिता स्पृष्टा कृतचुम्बना च मकरन्द-शीकरैः मधुविन्दुसन्दोहैः करम्बिताङ्गी व्याप्तावयवा स्विन्नाङ्गी च स्मितशोभिनः विकासरमणीयाः मृदुहासरम्या च कुड्मला मुकुला रदनाश्च यस्याः तथाभूता दरकम्पिनी ईषत् कम्पमाना सत्त्वोदयजनितवेपथुमती च, नवा लता दरादराभ्यां भय-तृष्णाभ्याम् उद्दीपकत्वात् दर्शने भयं रम्यत्वात् तृष्णेति भाव· दृशा दृष्ट्या पपे अत्यर्थं दृष्टेत्यर्थः। अत्र समेन विशेषणेन प्रस्तु-ताया लतायाः साम्यात् अप्रस्तुताया नायिकायाः प्रतीतिः समासोक्तिरलङ्कारः। तदुक्तं दर्पणे। समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति ॥ ८५ ॥

विचिन्वतोः पान्थपतङ्गहिंसनै-
रपुण्यकर्माण्यलिकज्वलच्छलात्।
व्यलोकयच्चम्पककोरकावलीः
स शम्बरारेर्बलिदीपिका इव॥ ८६॥

अमन्यतासौ कुसुमेषुगर्भजं
परागमन्धङ्करणं वियोगिनाम्।
स्मरेण मुक्तेषु पुरा पुरारये
तदङ्गभस्मेव शरेषु सङ्गतम्॥ ८७॥

विचिन्वतीरिति। स नलः पन्थानं गच्छन्ति नित्यमिति पान्थाः नित्यपथिका इत्यर्थः पथोऽण् नित्यमित्यण्प्रत्ययः पन्थादेशश्च। त एव पतङ्गाः क्षुद्रपक्षिविशेषाः पतङ्गौ पक्षिसूर्य्यौ चेत्यमरः। तेषां हिंसनैः बधैः अलयः भ्रमराः कज्जलानीवेत्युपमितसमासः। तेषां छलात् अपुण्यकर्म्माणि पापानीत्यर्थः विचिन्वतीः संगृह्णतीः चम्पककोरकावलीः चम्पककलिकापरम्पराः शम्बरारेः कामस्य बलिदीपिका इव पूजाप्रदीपानिवेत्युत्प्रेक्षा व्यलोकयत् अपश्यत्। चम्पककलिकानामतीवोद्दीपकत्वादिति भावः॥ ८६॥

अमन्यतेति। असौ नलः कुसुमान्येव इषवः शराः कामस्येति शेषः तेषां गर्भजम् अभ्यन्तरजातं वियोगिनां विरहिणाम् अन्धाः क्रियन्ते अनेनेत्यन्धङ्करणम् आद्यसुभगेत्यादिना च्यूर्थे ख्युण्प्रत्ययः अरुर्द्विषदित्यादिना मुमागमः। परागं रजः पुरा पूर्वं स्मरेण कामेन पुरारये हराय मुक्तेषु प्रहितेषु शरेषु सङ्गतं संसक्तं तस्य पुरारेः अङ्गभस्मेव अमन्यत उत्प्रेक्षितवान्। पुरा

पिकाद्वने शृखति भृङ्गहुङ्कृतै-
र्दशामुदञ्चत्करुणां वियोगिनाम्।
अनास्थया सूनकरप्रसारिणीं
ददर्श दूनः स्थलपद्मिनीं नलः॥ ८८॥
रसालसालः समदृश्यतामुना
स्फुरद्द्विरेफारवरोषहुङ्कृतिः।

पुरारये मुक्ता ये कुसुमशराः त एव पुरोवर्त्तिन एव तदङ्गभस्म-सम्बद्धाः वियोगिनां प्राणहारिण इति तर्कितवानिति निष्कर्षः। उत्प्रेक्षालङ्कारः॥ ८७॥

पिकादिति। नलः दूनः दुःखितः सन् दूङः कर्त्तरि क्तः स्वादिभ्यश्चेति निष्ठानत्वम्। वने उपवने श्रोतरीति भावः पिकात् कोकिलात् वक्तुरिति शेषः सकाशात् भृङ्गाणां हुङ्कृतैः वियोगिनां दशां दुरवस्थामित्यर्थः उदञ्चन् उद्गच्छन् करुणः शोकः दयेति यावत् तद् यथा तथा उदञ्चत् करुणे इति पाठे उदञ्चन् विकसन् करुणः वृक्षविशेषः यस्मिन् तथाभूते, वने इत्यस्य विशेषणम्। शृखति सति करुणस्तु रसे वृक्षे कृपायां करुणा मतेति विश्वः। अनास्थया श्रोतुमिच्छयेत्यर्थः सूनं कुसुममेव करं प्रसारयतीति तथोक्तां पुष्परूपहस्तविस्तारिणीं परदुःखकथायाः साधोरश्राव्यत्वात् करेण कथनं वारयन्तीमिव स्थितां स्थलपद्मिनीं ददर्श॥ ८८॥

रसालेति। अमुना नलेन स्फुरताम् उल्लसतां द्विरेफाणां भ्रमराणाम् आरवः झङ्कार एव रोषहुङ्कृतिः कोपजनित-हुङ्कारः यस्य तथाभूतः समीरलोलैः वायुचपलैः मुकुलैः अङ्गुलि-

समीरलोलैर्मुकुलैर्वियोगिने
जनाय दित्सन्निव तर्जनाभियम्॥ ८९॥
दिने दिने त्वं तनुरेधि रेऽधिकं
पुनः पुनर्मूर्च्छ च तापमृच्छ च।
इतीव पान्थं शपतः पिकान् द्विजान्
सखेदमैचिष्ट स लोहितेक्षणान्॥ ९०॥
अलिस्रजा कुट्मलमुच्चशेखरं
निपीय चाम्पेयमधीरया दृशा।

भिरिति भावः वियोगिने जनाय तर्जनाभियं दित्सन्निव दातुमिच्छन्निव ददातेः सन्प्रत्ययः, सनि मीमेत्यादिना इसादेशः। रसालसालः चूतवृक्षः समदृश्यत सम्यक् दृष्टः। द्विरेफेत्यादिरूपकोत्थापितेयं तर्जनाभयजननोत्प्रेक्षेति सङ्करः। चूताङ्कुरस्यातीव विरहोद्दीपकत्वात् विरहिणो नलस्य तथा दर्शनमिति भावः॥ ८९॥

दिने इति। स नलः रे पान्थ! त्वं दिने दिने अधिकं तनुः क्षीणः एधि भव, पुनः पुनः मूर्च्छ मोहं गच्छ, तापं सन्तापम् ऋच्छ च प्राप्नुहि च। इतीव इत्थमेव पान्थं शपतः आक्रोशतः लोहितेक्षणान् रक्तनेत्रान् स्वभावतः कोपाच्चेति भावः पिकान् द्विजान् पक्षिणः ब्राह्मणांश्चेति गम्यते दन्तविप्राण्डजा द्विजा इत्यमरः। सखेदं सविषादम् ऐक्षिष्ट ददर्श॥ ९०॥

अलिस्रजेति। स नलः अलिस्रजा भ्रमरमालया उच्चशेखरम् उन्नतशिरोभूषणं शिखास्वापीड़शेखरावित्यमरः। चाम्पेयं नागकेशरं चाम्पेयः केशरो नागकेशरः काञ्चनाह्वय इत्यमरः।

स धूमकेतुं विपदे वियोगिनाम्
उदीतमातङ्कितवानशङ्कत ॥ ९१ ॥
गलत्परागं भ्रमिभङ्गिभिः पतत्
प्रसक्तभृङ्गावलि नागकेशरम्।
स मारनाराचनिघर्षणस्खल-
ज्ज्वलत्कणां शाणमिव व्यलोकयत् ॥ ९२ ॥

तत्सम्बन्धीत्यर्थः कुड्मलं मुकुलम् अधीरया दृशा दृष्ट्या निपीय नितरां दृष्ट्वेत्यर्थः आतङ्कितवान् सञ्जाताशङ्कः सन् वियोगिनां विरहिणां विपदे विपत्पाताय उदीतम् उद्गतं धूमकेतुम् आशङ्कत उत्प्रेक्षितवान्। केचित्तु चाम्पेयं चम्पकम् अथ चाम्पेयश्चम्पको हेमपुष्पक इत्यमरः तत्सम्बन्धि कुड्मलमित्याहुः तन्न युक्तं न षट्पदो गन्धफलीमजिघ्रदित्यादावलीनां चम्पकस्पर्शाभावस्योक्तत्वात् यन्नादृतस्त्वमलिना मलिनाशयेन किं तेन चम्पक विषादमुरीकरोषि। विश्वाभिराममवनीरदनीलवेशाः केशाः कुशेशयदृशां कुशलीभवन्त्विति भामिनीविलासे अलीनां चम्पकपरिहारस्य प्रतिपादनाच्च। अपरे तु चम्पकानामलिसम्बन्धस्य अप्रसिद्धेरपि कवीनां निरङ्कुशत्वेन तथोत्प्रेक्षितमित्याचक्षते। उत्प्रेक्षालङ्कारः ॥ ९१ ॥

गलदिति। स नलः गलन्तः स्रवन्तः परागा रजांसि यस्मात् तथोक्तं भ्रमिभङ्गिभिः भ्रमणविशेषैः पतन्ती प्रसक्तानां भृङ्गाणाम् आवलिः श्रेणिः यस्मिन् तथाभूतं नागकेसरं तदाख्यपुष्पविशेषं मारस्य कामस्य ये नाराचाः अस्त्रविशेषाः तेषां निर्घर्षणेन स्खलन्तः प्रचरन्तः ज्वलन्तः स्फुरन्तः कणाः स्फु-

तदङ्गमुद्दिश्य सुगन्धि पातुकाः
शिलीमुखालीः कुसुमाद्गुणस्पृशः।
स्वचापदुर्निर्गतमार्गणभ्रमात्
स्मरः स्वनन्तीरवलोक्य लज्जितः॥ ८३ ॥
मरुल्ललत्पल्लवकण्टकैः क्षतं

लिङ्गाः यस्य यस्माद्वा तथाभूतं शाणमिव निकषोपलमिव शाणस्तु निकषः कष इत्यमरः। व्यलोकयत् उत्प्रेक्षितवान्। उत्प्रेक्षालङ्कारः॥ ८२ ॥

तदिति। स्मरः कामः सुगन्धि सौरभवत् गन्धस्येत्यादिना समासान्त इत्यमरः। तस्य नलस्य अङ्गं शरीरम् उद्दिश्य गुणः गन्धः मौर्वी च तं स्पृशन्तीति तथोक्ताः गन्धलुब्धाः मौर्वीनिहिताश्चेत्यर्थः गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुष्विति वैजयन्ती। कुसुमात् पातुकाः पतन्तीः लषपतेत्यादिना उकञ्प्रत्ययः। स्वनन्तीः गुञ्जन्तीः शिलीमुखालीः भ्रमरपङ्क्तीः बाणपङ्क्तीश्च अवलोक्य स्वस्य चापात् पौष्यादिति भावः दुर्निर्गता विषमनिःसृताः मार्गणाः शराः तेषां भ्रमात् भ्रान्तेः हेतोः लज्जितः अभूदिति शेषः। दुर्निर्गतेषवो हि समधिकं स्वनन्ति तच्च धानुष्कस्यातीव लज्जाकरमिति भावः। अत्र स्वनच्छिलीमुखेषु दुर्निर्गतमार्गणभ्रमात् भ्रान्तिमदलङ्कारः तदुक्तं दर्पणे। साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति। स च शिलीमुखेति श्लेषेणानुप्राणिताः ततश्च अवस्य लज्जितत्वेनोत्प्रेक्षणादुत्प्रेक्षालङ्कारः तद्द्वयोरङ्गाङ्गिभावः सङ्करः॥ ८३ ॥

समुच्चरच्चन्दनसारसौरभम्।
स वारनारीकुचसञ्चितोपमं
ददर्श मालूरफलं पचेलिमम् ॥ ९५ ॥

युवद्वयीचित्तनिमज्जनोचित-
प्रसूनशून्येतरगर्भगह्वरम्।
स्मरेषुधीकृत्य धिया भियान्धया
स पाटलायाः स्तवकं प्रकम्पितः ॥ ९५ ॥

मरुदिति। स नलः मरुता वायुना ललन्तश्चलन्तः ये पल्लवाः किसलयाः तेषां कण्टकैः अन्यत्र ललन्तः विलसन्तः ये पल्लवाः विटाः तेषां कण्टकैः तत्सदृशैरित्यर्थः नखैरिति भावः क्षतं तथा समुच्चरत् सम्प्रसरत् चन्दनसारस्य सौरभं यस्मात् यस्य वा तथोक्तम् अतएव वारनारीकुचेन वेश्यास्तनेन सञ्चिता लब्धा उपमा येन तथाभूतं वारस्त्री गणिका वेश्येत्यमरः। कुलाङ्गनानां स्तनेषु नखक्षतानां लज्जाजनकत्वेन तथा प्रकटनानौचित्यात् वारेति विशेषणम्। पचेलिमं स्वतःपक्वं कर्म्मकर्त्तरि केलिमम् उपसंख्यानमिति पचेः केलिमच्प्रत्ययः। मालूरफलं विल्वफलं विल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपीत्यमरः। ददर्श वारनारीकुचसञ्चितोपममित्युपमालङ्कारः ॥ ९४ ॥

युवेति। स नलः युवा च युवती च तयोर्यूनोर्द्वयी मिथुनं तस्याश्चित्तयोः निमज्जने निपतने उचितैः योग्यैः प्रसूनैः पुष्पैः शरभूतैरिति भावः शून्येतरत् अशून्यम् अन्वितमित्यर्थः गर्भगह्वरम् अभ्यन्तरकुहरं यस्य तथाभूतं पाटलायाः पाटलावृक्षस्य

मुनिद्रुमः कोरकितः शितिद्युतिः
वनेऽमुनामन्यत सिंहिकासुतः।
तमिस्रपक्षत्रुटिकूटभक्षितं
कलाकलापं किल वैधवं वमन्॥ ९६॥
पुरो हठाक्षिप्ततुषारपाण्डर-
च्छदावृतेर्वीरुधि नद्धविभ्रमाः।

स्तवकं पुष्पगुच्छं भिया भयेन अन्धया मूढयेत्यर्थः धिया भयजनितभ्रान्त्येति यावत् स्मरेषुधीकृत्य कामस्य तूणीरं मत्वेति यावत् प्रकम्पितः प्रकर्षेण चकम्पे इत्यर्थः। अत्र पाटलस्तवके मदनतूणीरभ्रमात् भ्रान्तिमदलङ्कारः॥ ९५॥

मुनिद्रुम इति। अमुना नलेन वने कोरकितः सञ्जातकलिकः कलिका कोरकः पुमानित्यमरः। शितिद्युतिः कृष्णकान्तिः पत्रेष्विति भावः मुनिद्रुमः अगस्त्यवृक्षः तमिस्रपक्षे कृष्णपक्षे क्षयव्याजेन भक्षितम् अभक्षितत्वे कुतः क्षय इति भावः। अत्र कूटशब्देन क्षयापह्नवेन भक्षणारोपादपह्नुतिरलङ्कारः। विधोरयं वैधवः चन्द्रसम्बन्धीत्यर्थः कलाकलापम् अंशसमूहं वमन् उद्गिरन् सिंहिकासुतो राहुः अमन्यत किल, उत्प्रेक्षितः खलु। उत्प्रेक्षालङ्कारः पूर्वोक्तापह्नुत्यानुप्राणित इत्यनयोरङ्गाङ्गिभावः सङ्करः॥ ९६॥

पुर इति। पुरोऽग्रे हठात् झटिति आक्षिप्ता आकृष्टा तुषारेण हिमेन पाण्डराणां धवलानां छदानां पत्राणाम् अन्यत्र तुषारवत् पाण्डरस्य धवलस्य छदस्य आच्छादकस्य वस्त्रस्येति भावः आवृतिः आवरणं येन तथाभूतस्य नभस्वतः वायोः पुंस-

मिलन्निमीलं विदधुर्विलोकिता
नभस्वतस्तं कुसुमेषु केलयः ॥ ९७ ॥
गता यदुत्सङ्गतले विशालतां
द्रुमाः शिरोभिः फलगौरवेण ताम्।
कथं न धात्रीमतिमात्रनामितैः
स वन्दमानानभिनन्दति स्म तान् ॥ ९८ ॥

श्लेषेति ध्वनिः वीरुधि लतायां कामिन्यामिति ध्वनिः नद्धा अनुबद्धाः विभ्रमाः चलनानि विलासाश्च यासां यासु वा तथाविधाः कुसुमेषु पुष्पेषु केलयः क्रीड़ाः कामक्रीड़ाश्च विलोकिताः दृष्टाः सत्यः तं नलं मिलन् निमीलः निमीलनं यस्य तथोक्तं निमीलिताक्षमित्यर्थः विदधुः चक्रुः। विरहिणां तथोद्दीपकदर्शनस्य दुःसहदुःखहेतुत्वात् नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनामिति निषेधाच्चेति भावः। अत्र प्रस्तुतनभस्वद्विशेषणसामर्थ्यात् अप्रस्तुतस्य कामुकस्य तथाचरणप्रतीतेः समासोक्तिरलङ्कारः। तदुक्तं दर्पणे। समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति ॥ ९७ ॥

गता इति। द्रुमास्तरवः यस्याः उत्सङ्गतले क्रोड़देशे विशालताम् उन्नततां विवृद्धिमित्यर्थः गताः प्राप्ताः, तां धात्रीं पृथिवीम् उपमातरञ्च धात्री जनन्यामलके वसुमत्युपमातृष्विति विश्वः कर्त्तरि ष्ट्रन्निति दधाते ष्ट्रन्प्रत्ययः। फलगौरवेण फलानां भरेण गुरुतातिशयेन हेतुना अतिमात्रनामितैः अतिशयेन प्रह्वीकृतैः नमेर्मित्त्वविकल्पात् ह्रस्वाभावः। शिरोभिः

नृपाय तस्मै हिमितं वनानिलैः
सुधीकृतं पुष्परसैरहर्महः।
विनिर्मितं केतकरेणुभिः सितं
वियोगिनेऽधत्त न कौमुदी मुदः॥ ९९॥

वियोगभाजोऽपि नृपस्य पश्यता
तदेव साक्षादमृतांशुमाननम्।
पिकेन रोषारुणचक्षुषा मुहुः
कुहूरुताहूयत चन्द्रवैरिणी॥ १००॥

शिखरैः मस्तकैश्च वन्दमानान् स्तुवतः अभिवादयमानांश्च तान् द्रुमान् स नलः कथं न अभिनन्दन्ति स्म? अपि तु अभिननन्दैवेत्यर्थः। वृक्षाणाम् अनुरूपफलसम्पत्त्यावनतत्वम् अपत्यानाञ्च उपमातृभक्तिरवश्यमेवाभिनन्दनीयेति भावः। अत्रापि समासोक्तिरलङ्कारः॥ ९८॥

नृपायेति। वनानिलैः वनवायुभिः हिमितं शीतलीकृतमित्यर्थः तत्करोतेर्ण्यन्तात् कर्मणि क्तप्रत्ययः। पुष्परसैः कुसुममधुभिः सुधीकृतम् अमृतीकृतं तथा केतकानां केतकीपुष्पाणां रेणुभिः रजोभिः सितं विनिर्मितं धवलीकृतमित्यर्थः अहर्महः दैवसं तेजः आलोकः एव कौमुदी चन्द्रिका व्यस्तरूपकम्। वियोगिने तस्मै नृपाय मुदः प्रमोदान् न आधत्त न कृतवती न दत्तवतीत्यर्थः प्रत्युत उद्दीपकैवाभूदिति भावः॥ ९९॥

वियोगेति। वियोगभाजोऽपि विरहिणोऽपि नृपस्य नलस्य तदेव विकस्वरमेवेति भावः आननं मुखं साक्षात् प्रत्यक्षम् अमृतांशुं चन्द्रं पश्यता अतएव रोषेण अधुनापि ईदृशमस्वी-

अशोकमर्थान्वितनामताशया
गतान् शरण्यं गृहशोचिनोऽध्वगान्।
अमन्यतावन्तमिवैष पल्लवैः
प्रतीष्टकामज्वलदस्त्रजालकम् ॥ १०१ ॥

यतां न जहातीति क्रोधेनेव अरुणचक्षुषा रक्तनेत्रेण पि कोकिलेन कुहूकता कुहूनिजालाप एव कुहूः नष्टचन्द्रा अमावास्या सा नष्टेन्दुकला कुहूरित्यमरः। कुहूः स्यात् कोकिलाप-नष्टेन्दुकलयोरपीति विश्वश्च। तां रौतीति तथोक्तेन कुहूरवं कुर्वतेत्यर्थः सता मुहुः पुनः पुनः चन्द्रवैरिणी अमावास्या आह्वयत आहूता किमित्यध्याहार्य्यम्। अमावस्या यथा चन्द्र-क्षयकरी तथा कोकिलकुहूरवस्तस्य मुखचन्द्रं विषादेन क्षीण-मकरोदिति भावः। प्रतीयमानोत्प्रेक्षालङ्कारः॥ १०० ॥

अशोकमिति। एष नलः पल्लवैः किसलयैः प्रतीष्टानि गृहीतानि संच्छादितानीति भावः कामस्य ज्वलताम् अस्त्राणां जालकानि समूहाः तत्कुसुमस्तवका इति भावः येन तथाभूतं पल्लव-संच्छादितकुसुमगुच्छरूपकामास्त्रमित्यर्थः अन्यथा तद्दर्शनादेव तेषां मरणसम्भव इति भावः अशोकम् अर्थान्वितं नास्ति शोको यस्मात् यस्मिन् वेति व्युत्पत्तिलभ्यार्थयुक्तं नाम यस्य तस्य भावः तत्ता तत्र आशा तया अस्मानयमशोकान् करिष्यतीत्यभिलाषे-णेत्यर्थः शरणे साधुः शरण्यः तं रक्षणसमर्थमित्यर्थः शरणं गृह-रक्षित्रोरित्यमरः। तत्र साधुरिति यत्प्रत्ययः। गतान् प्राप्तान् शरणागतानिति यावत् गृहान् दारान् शोचन्तीति गृह-शोचिनः तान् कान्ता उद्दिश्य शोचत इत्यर्थः गृहः पत्न्यां गृहेऽपि चेति विश्वः। अध्वगान् पथिकान् प्रोषितानित्यर्थः

विलासवापीतटवीचिवादनात्
पिकालिगीतेः शिखिलास्यलाघवात्।
वनेऽपि तौर्य्यत्रिकमारराध तं
क्व भोगमाप्नोति न भाग्यभाग् जनः?॥१०२॥

तदर्थमध्याप्य जनेन तद्वने
शुका विमुक्ताः पटवस्तमस्तुवन्।
स्वरामृतेनोपजगुश्च शारिका-
स्तथैव तत्पौरुषगायनीकृताः॥ १०३ ॥

अवन्तमिव रक्षन्तमिव शरणागतरक्षणे महाफलस्य तदरक्षणे च महादोषस्य श्रवणादिति भावः अमन्यत उत्प्रेक्षितवान् अस्त्रभीरूणां तद्गोपनमेव रक्षणमिति भावः। उत्प्रेक्षालङ्कारः॥ १०१ ॥

विलासेति। वनेऽपि विलासवापी क्रीड़ासरः तस्याः तटेषु वीचीनां तरङ्गाणां वादनात् वाद्यवद्ध्वननात् पिकानां कोकिलानाम् अलीनां भ्रमराणाञ्च गीतेः सङ्गीतात् तथा शिखिनां मयूराणां लास्यस्य नर्त्तनस्य लास्यं नृत्यञ्च नर्त्तनमित्यमरः तस्मिन् लाघवं नैपुण्यं तस्मात् तौर्य्यत्रिकं वाद्यगीतनृत्यत्रयं तं नलम् आरराध सिषेवे। तथाहि भाग्यभाक् सौभाग्यशाली जनः क्व कुत्र भुज्यते इति भोगः सुखं तं न आप्नोति न लभते? सर्व्वत्रैवाप्नोतीत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ १०२॥

तदर्थमिति। तदर्थं नलस्तुत्यर्थम् अध्याप्य शिक्षयित्वा स्तुतिवादानिति शेषः जनेन पार्श्ववर्त्तिना उद्यानपालेन वेति

इतीष्टगन्धाढ्यमटन्नसौ वनं
पिकोपगीतोऽपि शुकस्तुतोऽपि च
अविन्दतामोदभरं वहिश्चरं
विदर्भसुभ्रूविरहेण नान्तरम् ॥ १०४ ॥

करेण मीनं निजकेतनं दधत्
द्रुमालबालाम्बुनिवेशशङ्कया ।
व्यतर्कि सर्वर्त्तुघने वने मधुं
स मित्रमत्रानुसरन्निव स्मरः ॥ १०५ ॥

शेषः तस्मिन् वने विमुक्ताः पञ्जरबन्धनात् विसृष्टा इत्यर्थः पटवः स्फुटगिरः शुकाः पक्षिभेदाः तं नलम् अस्तुवन् । तथैव शुकवदेव तस्य नलस्य पौरुषं पुरुषकारः विक्रमः तस्य गायन्त्यः सत्यः शारिकाश्च शुकाङ्गनाश्च स्वरामृतेन मधुरस्वरेणेत्यर्थः उपजगुः सङ्गीतं चक्रुः ॥ १०३ ॥

इतीति । असौ नलः इतीत्थम् इष्टगन्धाढ्यम् अभिलषित-सौरभयुक्तं वनम् अटन् परिभ्रमन् पिकैः कोकिलैः उपगीतो-ऽपि शुकैः स्तुतोऽपि च वहिश्चरं वाह्यम् आमोदभरम् आन-न्दातिशयम् अविन्दत लेभे, विदर्भसुभ्रुवाः दमयन्त्या विरहेण आन्तरम् अन्तरिन्द्रियभोग्यमित्यर्थः आमोदभरं न अविन्दत न लब्धवान् प्रत्युत दुःखमेवान्वभूदिति भावः । आमोदो गन्ध-हर्षयोरिति विश्वः ॥ १०४ ॥

करेणेति । स नलः निजकेतनं मीनमित्यर्थः द्रुमाणां वृक्षाणां ये आलवालाः तलेषु जलरक्षणार्थं परिधयः तेषाम् अम्बुषु जलेषु निवेशशङ्कया प्रवेशभिया करेण दधत् दधानः

लताबलालास्यकलागुरुस्तरु-
प्रसूनगन्धोत्करपश्यतो हरः ।
असेवतामुं मधुगन्धवारिणि
प्रणीतलीलाप्लवनो वनानिलः ॥ १०६ ॥
अथ स्वमादाय भयेन मन्थना-
च्चिरत्नरत्नाधिकमुच्चितं चिरात् ।

तादृशशुभ्ररेखाव्याजेनेति भावः सर्वर्त्तुघने सर्वैः ऋतुभिः घने सान्द्रे सम्पन्ने इति यावत् अत्र वने मित्रं सखायं वसन्तमित्यर्थः अनुसरन् अन्विष्यन् स्मर इव काम इव व्यतर्कि अमानि लोकैरिति शेषः । उत्प्रेक्षालङ्कारः ॥ १०५ ॥

लतेति । लता एव अबलाः कामिन्यः तासां लास्यकलासु नृत्यविद्यासु गुरुः उपदेष्टा नर्त्तनाचार्य्य इत्यर्थः तरूणां यानि कुसुमानि तेषां गन्धोत्करस्य सौरभसम्पदः पश्यतोहरः पश्यन्त-मनादृत्य हरतीति पश्यतोहरः प्रसह्यापहारीत्यर्थः पश्यतो यो हरत्यर्थं स चौरः पश्यतो हर इति हलायुधः । पचाद्यच् षष्ठी च अनादरे इति षष्ठी । वाग् दिक् पश्यद्भ्यो युक्तिदण्डहरेष्विति वक्तव्यादलुक् । मधु मकरन्द एव गन्धवारि सुगन्धिसलिलं तस्मिन् प्रणीतं कृतं लीलया विलासेन प्लवनं सन्तरणं येन तथाभूतः वनानिलः उद्यानवायुः अमुं नलम् असेवत सेवित-वान् ॥ १०६ ॥

अथेति । अथ वनदर्शनानन्तरं मन्थनात् भयेन धनार्थं पुनर्मन्थिष्यतीति भियेत्यर्थः चिरात् उच्चितं सञ्चितं चिरत्नं चिरन्तनं चिरमकत्वादिभ्यस्त्नो वक्तव्य इति त्नप्रत्ययः । तच्च

निलीय तस्मिन्निव सन्नपां निधि-
र्वने तड़ागो ददृशेऽवनीभुजा ॥ १०७ ॥
पयोनिलीनाभ्रमुकामुकावली
रदाननन्तोरगपुच्छसच्छवीन्।
जलार्द्धरुद्धस्य तटान्तभूभिदो
मृणालजालस्य निभाद् बभार यः ॥ १०८ ॥

तत् रत्नेषु अधिकम् उत्कृष्टम् श्रेष्ठवस्त्विति यावत् रत्नं स्व-जातौ श्रेष्ठेऽपीत्यमरः। स्वं धनम् आदाय तस्मिन् वने निलीय अन्तर्धाय •निवसन् तिष्ठन् अपान्निधिः समुद्र इवेत्युत्प्रेक्षा सा च गम्या व्यञ्जकाप्रयोगात्। तड़ागः सरोवरम् अवनी-भुजा भूपालेन नलेन ददृशे दृष्टः॥ १०७ ॥

अपांनिधिरित्युक्तमर्थं नवभिः श्लोकैर्वर्णयति पय इत्या-दिभिः। यस्तड़ागः जलेन अर्द्धरुद्धस्य अर्द्धसंच्छन्नस्य तटान्त-भूभिदः तटप्रान्तं भित्वा निर्गतस्येत्यर्थः 'मृणालजालस्य विस-विरहस्य निभात् व्याजात् निभो व्याजसदृशयोरिति विश्वः। अनन्तोरगस्य शेषाहेः पुच्छसच्छवीन् पुच्छसमानप्रभान् पयसि निलीनानां निभृतस्थितानाम् अभ्रमुकामुकावलीनाम् ऐरावत-श्रेणीनां रदान् दन्तान् बभार धारयामास। समुद्रे एकं एवैरावतः स्थितः अत्र त्वसंख्या इति व्यतिरेकः। अभ्रमुका-मुका इति द्वितीयासमासो मधुपिपासुवत् न लोकेत्यादिना षष्ठीप्रतिषेधात् लषपतेत्यादिना कमेरुकञ्प्रत्ययः। अत्र मृणालजालस्य प्रकृतस्य प्रतिषेधेन अप्रकृतैरावतरदस्थापनात्

तटान्तविश्रान्ततुरङ्गमच्छटा
स्फुटानुबिम्बोदयचुम्बनेन यः।
बभौ चलद्वीचिकशान्तशातनैः
सहस्रमुच्चैःश्रवसामिव श्रयन् ॥ १०९ ॥

सिताम्बुजानां निवहस्य यच्छलाद्
बभावलिश्यामलितोदरश्रियाम्।
तमःसमच्छायकलङ्कसङ्कुलं
कुलं सुधांशोर्बहुलं वहन् बहु ॥ ११० ॥

अपह्नुतिरलङ्कारः तदुक्तं दर्पणे। प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति ॥ १०८ ॥

तटान्तेति। यः तड़ागः तटान्तेषु विश्रान्तानां तुरङ्गमच्छटानाम् अश्ववृन्दानां नलानीतानामिति भावः स्फुटानि प्रकटानि अनुबिम्बानि प्रतिबिम्बानि तेषाम् उदयस्य आविर्भावस्य चुम्बनेन स्पर्शेन प्राप्त्येत्यर्थः वीचयस्तरङ्गा एव कशाः ताड़नरज्जुविशेषाः अश्वादेस्ताड़नी कशेत्यमरः। तासाम् अन्तैः प्रान्तभागैः शातनानि प्रहाराः तैः चलत् उल्ललत् उच्चैःश्रवसाम् अश्वविशेषाणां सहस्रं श्रयन्निव धारयन्निव बभौ विरराज। उत्प्रेक्षालङ्कारः। व्यतिरेकश्च पूर्ववत्। नलाश्वानामुच्चैःश्रवःसाम्यमित्यलङ्कारेण वस्तुध्वनिश्च ॥ १०९ ॥

सितेति। यस्तड़ागः अलिभिः भ्रमरैः श्यामलिता उदरश्रीरभ्यन्तरशोभा येषां तथाभूतानां सिताम्बुजानां श्वेतपद्मानां निवहस्य सङ्घस्य छलात् तमसः तिमिरस्य समा छाया कान्तिर्यस्य तादृशेन कलङ्केन सङ्कुलम् आश्रितोदरमिति यावत्

रथाङ्गभाजा कमलानुषङ्गिणा
शिलीमुखस्तोमसखेन शार्ङ्गिणा।
सरोजिनीस्तम्बकदम्बकैतवा-
न्मृणालशेषाहिभुवान्वयायि यः॥ १११॥
तरङ्गिणीरङ्कभुषः स्ववल्लभाः
तरङ्गलेखा बिभराम्बभूव यः।

बहुलं पूर्णं सुधांशोश्चन्द्रस्य बहु अनेकं कुलं वहन् बभौ। अत्रापि पूर्ववत् अपह्नुतिरलङ्कारो व्यतिरेकश्च॥ ११०॥

रथाङ्गेति। यस्तड़ागः सरोजिन्याः पद्मिन्याः स्तम्बा गुल्माः अप्रकाण्डे स्तम्बगुल्ममित्यमरः। तेषां कदम्बः सञ्चयः तस्य मिषात् व्याजात् रथाङ्गं चक्रवाकं चक्रायुधञ्च यद्यपि चक्रवाके रथाङ्गनामेति च प्रयोगो रूढ़ः तथापि प्रायेणास्य चक्रशब्द-पर्य्यायत्वप्रयोगदर्शनात् पदस्याप्युभयत्र प्रयोगं मन्यते कवि-रिति बोध्यम्। भजते इति तथोक्तेन भजो ण्विः। कमलैः कमलया लक्ष्म्या च अनुषङ्गिना संसर्गवता शिलीमुखस्तोम-सखेन अलिकुलसहचरेण अन्यत्र सखिशब्दः सादृश्यवचनः तत्सवर्णेनेत्यर्थः मृणालं शेषाहिरिवेत्युपमितसमासः तद्भुवा तदाकारेण अन्यत्र मृणालमिव शेषाहिः तद्भुवा तदाश्रयेण शार्ङ्गिणा विष्णुना अन्वयायि अनुसृतः अधिष्ठित इति यावत्। अत्रापि कैतवशब्देन स्तम्बत्वप्रतिषेधात् शार्ङ्गित्वस्थापनरूपो-ऽपह्नुत्यलङ्कारः॥ १११॥

तरङ्गिणीति। यस्तड़ागः अङ्कभुषः उत्सङ्गसङ्गिनीरित्यर्थः स्ववल्लभाः निजकान्ताः तरङ्गलेखास्तरङ्गराजीः तरङ्गिणीर्नदीः

दरोद्गतैः कोकनदौघकोरकै-
र्धृतप्रवालाङ्कुरसञ्चयश्च यः ॥ ११२ ॥
महीयसः पङ्कजमण्डलस्य य-
श्छलेन गौरस्य च मेचकस्य च ।
नलेन मेने सलिले निलीनयो-
स्त्विषं विमुञ्चन् विधुकालकूटयोः ॥११३॥
चलीकृता यत्र तरङ्गरिङ्गणै-
रबालशैवाललतापरम्पराः ।

स्वस्वरूपकं विभराम्बभूव । भीह्रीभृहुवां श्लुवच्चेति भृञो विकल्पादाम्प्रत्ययः । किञ्चेति चार्थः यः तड़ागः दरोद्गतैः ईषदुदितैः कोकनदौघकोरकैः रक्तोत्पलसङ्घकलिकाभिः धृतः प्रवालाङ्कुराणां विद्रुमाङ्कुराणां सञ्चयः निवहः येन तथाभूतश्च । अत्रापि कोकनदौघकोरकैरित्यस्य तद्व्याजेनेत्यर्थस्य गम्यमानत्वादपह्नुत्यलङ्कारः ॥ ११२ ॥

महीयस इति । नलेन यः तड़ागः महीयसः अतिमहतः गौरस्य धवलस्य च मेचकस्य श्यामलस्य च पङ्कजमण्डलस्य कमलनिवहस्य छलेन सलिले निलीनयोः अन्तर्भूयस्थितयोः विधुकालकूटयोः चन्द्रहलाहलयोः त्विषं कान्तिं विमुञ्चन् विसृजन् मेने अत्र छलेनेत्यपह्नुतिव्यञ्जकेन मेने इत्युत्प्रेक्षाव्यञ्जकक्रियया च सापह्नवोत्प्रेक्षालङ्कारः ॥ ११३ ॥

चलीकृता इति । यत्र तड़ागे तरङ्गाणां रिङ्गणैः कम्पनैः चलीकृताः चञ्चलिताः अबालानां कठोराणां शैवाललतानां

ध्रुवन्दधुर्वाड़वहव्यवाड़व-
स्थितिप्ररोहत्तमभूमधूमताम्॥ ११४॥
प्रकाममादित्यमवाप्य कण्टकैः
करम्बितामोदभरं विवृण्वती।
धृतस्फुटश्रीगृहविग्रहा दिवा
सरोजिनी यत्प्रभवाप्सरायिता॥ ११५॥

परम्पराः श्रेणयः हव्यं वहतीति हव्यवाड़ग्निः वहेश्चेति ञ्यप्रत्ययः। तस्य छन्दोमात्रविषयत्वादनादरेण भाषायां प्रयोगः। वड़वा अश्वा तत्सम्बन्धी वाड़वः वड़वामुखनिर्गत इति यावत् हव्यवाट् तस्य अवस्थित्या अन्तरवस्थानेन प्ररोहत्तमः वह्निःप्रादुर्भवत्तमः भूमाः विस्तर इति भावः येषां ते च ते धूमाश्चेति तथोक्ताः तेषां भावः तत्ता तां दधुः ध्रुवमित्युत्प्रेक्षा। उपर्य्युत्थितधूमपटलवत् बभुरित्यर्थः॥ ११४॥

प्रकाममिति। आदित्यं सूर्य्यम् अदितिसुतमिन्द्रञ्च अवाप्य प्रकामं कण्टकैः नालगतैस्तीक्ष्णाग्रैरवयवैः पुलकैश्च करम्बिता दन्तुरिता अतएव आमोदभरं परिमलसम्पदम् आनन्दातिरेकञ्च विवृण्वती प्रकटयन्ती; दिवा दिवसे धृतानि स्फुटानि विकचानि श्रीगृहाणि लक्ष्मीनिवासभूतानि कमलानीत्यर्थः येन तथाभूतः विग्रहः स्वरूपं यस्याः तादृशी अन्यत्र दिवा स्वर्गेण तद्वासेनेति भावः स्फुटम् उज्ज्वलं श्रीगृहं शोभास्पदं विग्रहः शरीरं यस्याः तथाभूता यत्सरःड़ागः प्रभवत्यस्मादिति प्रभवः उत्पत्तिस्थानं यस्याः तथोक्ता सरोजिनी पद्मिनी अप्सरायिता अप्सरा इवाचरिता। उपमानात् कर्त्तुः क्यङ् कर्त्तरि क्त-

यदम्बुपूरप्रतिबिम्बितायति-
र्मरुत्तरङ्गैस्तरलस्तटद्रुमः।
निमज्य मैनाकमहीभृतः सत-
स्ततान पक्षान् धुवतः सपक्षताम् ॥ ११६ ॥

पयोधिलक्ष्मीमुषि केलिपल्वले
रिरंसुहंसीकलनादसादरम्।
स तत्र चित्रं विचरन्तमन्तिके
हिरण्मयं हंसमबोधि नैषधः॥ ११७ ॥

प्रत्ययः। ओजसोऽप्सरसोरित्यप्सरसः सकारलोपः। श्लिष्ट-विशेषणेयमुपमा ॥ ११५ ॥

यदिति। यस्य तडागस्य अम्बुपूरे प्रतिबिम्बिता प्रति-फलिता आयतिः आयामः यस्य तथाभूतः मरुत्तरङ्गैः वायु-चलनैः तरलः चञ्चलः तटद्रुमः निमज्य सतः वर्त्तमानस्य पक्षान् धुवतः कम्पयतः मैनाकमहीभृतः मैनाकपर्वतस्य सपक्षतां साहश्यं ततान विस्तृतवान् प्रापेत्यर्थः। उपमालङ्कारः ॥ ११६ ॥

पयोधीति। स निषधानां राजा नैषधः नलः जनपद-शब्दात् क्षत्रियादेरित्यञ्प्रत्ययः। पयोधिलक्ष्मीमुषि सागर-श्रीहारिणि तत्सदृशे इत्यर्थः तत्र केलिपल्वले क्रीडासरसि रिरंसूनां रन्तुमिच्छूनां हंसीनां कलनादेषु मधुरनिस्वनेषु सादरं सस्पृहम् अन्तिके सविधे विचरन्तं हिरण्मयं काञ्चनमयं दाण्डिनायनादिना निपातनात् साधुः। अतएव चित्रम् अद्भुतं हंसम् अबोधि अद्राक्षीत् दीपजनेत्यादिना कर्त्तरि चिण् ॥ ११७ ॥

प्रियासु बालासु रतिक्षमासु च
द्विपत्रितं पल्लवितञ्च बिभ्रतम्।
स्मरार्जितं रागमहीरुहाङ्कुरं
मिषेण चञ्च्वोश्चरणद्वयस्य च ॥ ११८ ॥

प्रियास्विति हंसं पुनर्विशिनष्टि। बालासु अरतिक्षमासु किन्तु आसन्नयौवनास्विति भावः अन्यथा रागाङ्कुरोदयासम्भवात्। रतिक्षमासु तरुणीषु च द्विविधासु प्रियासु क्रमात् चञ्च्वोः त्रोट्योः चञ्चुस्त्रोटिरुभेस्त्रियामित्यमरः। चरणद्वयस्य च मिषेण व्याजेन द्विपत्रितं सञ्जातद्विपत्रं चञ्च्वोर्द्वयोः सम्पुटितत्वेन साम्यादिति भावः पल्लवितं सञ्जातपल्लवञ्च चरणयोर्विभ्रमरागवत्त्वेन पल्लवसाम्यादिति भावः स्मरार्जितं स्मरेणैव वृक्षरोपणक्रमेण उत्पादितमिति भावः राग एव महीरुहः वृक्षः तस्य अङ्कुरं बिभ्रतं चञ्चुपुटमिषेण द्विपत्रितं नानाविषयं रागं चरणमिषेण पल्लवितं तरुणीगोचरं रागञ्च दधानमित्यर्थः। अबोधीति पूर्वेणान्वयः। नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः। वृक्षाङ्कुरो हि प्रथमं द्विपत्रितो भवति पश्चात् कालेन पल्लवित इति प्रसिद्धिः। अत्र रागं विभ्रतमिति हंसविशेषणात् तद्रागस्य हंसाधिकरणत्वोक्तिः प्रियास्वधिकरणभूतास्वित्युपाध्यायविश्वेश्वरव्याख्यानं प्रत्याख्येयम् अन्यनिष्ठस्य रागस्यान्याधिकरणत्वायोगात् न च अयमेक एवोभयनिष्ठ इति भ्रमितव्यं तस्येच्छापरतरपर्य्यायस्य तथात्वयोगात् बुद्ध्यादीनामपि तथात्वापत्तौ सर्वसिद्धान्तविरोधात् विषमानुरागाभावप्रसङ्गाच्च उभयोरपि रागत्वसाम्यादुभयनिष्ठभ्रमः केषाञ्चित् कस्मात् कामिनोरन्योन्याधिकरणरागयोरन्योन्यविषयत्वमेव नाधिकरणत्वमेव-

महीमहेन्द्रस्तमवेक्ष्य स क्षणं
शकुन्तमेकान्तमनोविनोदिनम् ।
प्रियावियोगाद्विधुरोऽपि निर्भरं
कुतूहलाक्रान्तमना मनागभूत् ॥ ११९ ॥

अवश्यभव्येष्वनवग्रहग्रहा
यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयानुगम्यते
जनस्य चित्तेन भृशावशात्मना ॥ १२० ॥

मिति सिद्धान्तः । प्रियास्विति विषयसप्तमी मत्वाधारसप्तमीति सर्वं रमणीयम् । अत्र रागमहीरुहाङ्कुरमिति रूपकं चञ्चुचरणमिषेणेत्यपह्नवानुप्राणितमित्युभयोः सङ्करः । तेन च बाह्याभ्यन्तररागयोर्भेदे अभेदलक्षणातिशयोक्त्युत्थापिता चञ्चुचरणव्याजेनान्तरस्येव बहिरङ्कुरितत्वोत्प्रेक्षा व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ ११८ ॥

महीति । महीमहेन्द्रः भूदेवेन्द्रः स नलः एकान्तम् अत्यर्थं मनो विनोदयतीति तथोक्तं तं शकुन्तं पक्षिणं हंसम् अवेक्ष्य दृष्ट्वा प्रियायाः दमयन्त्याः वियोगात् विरहात् निर्भरम् अतिमात्रं विधुरोऽपि व्याकुलोऽपि मनाक् ईषत् कुतूहलाक्रान्तमनाः कौतुकितचित्तः समुत्सुकमानसः इत्यर्थः अभूत् जिघृक्षुरभूदिति भावः ॥ ११९ ॥

कथमीदृशे चापल्ये प्रवृत्तिरस्य धीरोदात्तस्येत्याशङ्क्य नात्र जन्तोः स्वातन्त्र्यं किन्तु भाव्यर्थानुबन्धिनी विधातुरिच्छैव तथा प्रेरयतीत्याह । अवश्येति । अवश्यं भव्येषु भाव्यर्थेषु

अथावलम्ब्य क्षणमेकपादिकां
तदा निदद्रावुपपल्वलं खगः।
स तिर्य्यगावर्त्तितकन्धरः शिरः
पिधाय पक्षेण रतिक्लमालसः॥ १२१॥
सनालमात्माननिर्जितप्रभं
ह्रिया नतं काञ्चनमम्बुजन्म किम्?।

विषये भव्यगेयादिना कर्त्तरि यत्प्रत्ययान्तो निपातः। लुपे-दवग्रमः कृत्ये इत्यवग्रमो मकारलोपः। अनवग्रहग्रहा अप्रतिबन्धनिर्बन्धा निरङ्कुशाभिनिवेशेत्यर्थः। वेधसः विधातुः स्पृहा इच्छा यया दिशा येनाध्वना धावति प्रवर्त्तते, तयैव दिशा भृशावशात्मना नितान्तवश्यस्वभावेन अनस्य चित्तेन क्षणेन वात्येव वातसमूह इव अनुगम्यते वेधसः स्पृहेत्यत्र कर्मा-नया अन्वेति॥ १२०॥

चिकीर्षितार्थे दैवानुकूल्यं कार्य्यतो दर्शयति। अथेति। अथानन्तरं स खगः पक्षी रतौ यः क्लमः क्लान्तिः तेन अलसः सन् तदा नलकुतूहलसमये क्षणम् एकः पादो यस्यां क्रियाया-मित्येकपादिका एकपादेनावस्थानं ताम् अवलम्ब्य तिर्य्यक् तिरश्चीनं यथा तथा आवर्त्तितकन्धरः आनमितग्रीवः पक्षेण शिरः पिधाय आच्छाद्य उपपल्वलं पल्वलसमीपे निदद्रौ सुष्वाप स्वभावोक्तिरलङ्कारः तदुक्तं दर्पणे। स्वभावोक्तिर्दुरू-हार्थस्वक्रियारूपवर्णनमिति॥ १२१॥

सनालमिति। स नलः तं निद्राणं हंसम् आत्मनः स्वस्य आननेन मुखेन निर्जितप्रभं तिरस्कृतशोभम् अतएव ह्रिया

अबुद्ध तं विद्रुमदण्डमण्डितं
स पीतमम्भःप्रभुचामरञ्च किम्? ॥ १२२ ॥
कृतावरोहस्य हयादुपानहौ
ततः पदे रेजतुरस्य बिभ्रती।
तयोः प्रवालैर्वनयोस्तथाम्बुजै-
र्नियोद्धुकामे किमु बद्धवर्मणी? ॥ १२३ ॥
विधाय मूर्त्तिं कपटेन वामनीं
स्वयं बलिध्वंसिविडम्बिनीमयम्।

लज्जया नतं सनालं नालदण्डसहितं काञ्चनं सौवर्णम् अम्बु-जन्म अम्बुजं किम्? अथवा विद्रुमदण्डेन प्रवालनालेन मण्डितम् अलङ्कृतं पीतं पीतवर्णम् अम्भःप्रभोः जलाधिपस्य वरुणस्य चामरञ्च किम् इति प्रश्नोऽत्राध्याहार्यः। अबुद्ध उत्प्रेक्षितवानित्यर्थः। बुध्यते लुङि तङ् सगस्तथोर्द्धोऽध इति तकारस्य धकारः॥ १२२ ॥

कृतेति। ततः तथा वितर्कानन्तरमित्यर्थः। हयात् अश्वात् कृतावरोहस्य अवतरत इत्यर्थः। अस्य नलस्य उपानहौ पाद-त्राणे बिभ्रती दधाने पदे चरणौ तयोर्वनयोः सलिलकाननयोः वने सलिलकानने इत्यमरः। प्रवालैः पल्लवैः तथा अम्बुजैः पद्मैश्च सहार्थे तृतीया। नियोद्धुं कामोऽभिलाषो ययोः ते नियोद्धुकामे युद्धार्थं कृतोद्यमे इति यावत्। तुं काममनसो-रपीति तुमुनो मकारलोपः। अतएव बद्धवर्म्मणी किमु परि-हितकवचे इव रेजतुः शुशुभाते किमित्युत्प्रेक्षा॥ १२३ ॥

विधायेति। अयं नृपः नलः स्वयं कपटेन छद्मना वामनीं

उपेतपार्श्वश्चरणेन मौनिना
नृपः पतङ्गं समधत्त पाणिना ॥ १२४ ॥
तदात्तमात्मानमवेत्य सम्भ्रमात्
पुनः पुनः प्रायसदुत्प्लवाय सः ।
गतो विरुत्योड्डयने निराशतां
करौ निरोद्धुर्दशति स्म केवलम् ॥ १२५ ॥
ससम्भ्रमोत्पातिपतत्कुलाकुलं
सरः प्रपद्योत्कतयानुकम्पिताम् ।

ह्रस्वाम् अवनतामिति भावः गौरादित्वात् ङीप् । बलिध्वंसि-विडम्बिनीं कपट-वामनावतार-विष्णुमूर्त्यनुकारिणीमित्यर्थः मूर्त्तिं विधाय देहं सङ्कोच्येति भावः मौनिना निःशब्दसञ्चारेणेति यावत् चरणेन उपेतपार्श्वः प्राप्तसन्निधिरित्यर्थः पाणिना करेण पतङ्गं पक्षिणं हंसमित्यर्थः पतङ्गौ पक्षिसूर्य्यौ चेत्यमरः । समधत्त संगृहीतवान् । स्वभावोक्तिरलङ्कारः ॥ १२४ ॥

तदेति । स हंसः तेन नलेन आत्तं गृहीतम् आत्मानम् अवेत्य ज्ञात्वा सम्भ्रमात् भयात् उत्प्लवनात् उत्पतनाय पुनः पुनः प्रायसत् प्रकर्षेण यत्नमकरोदित्यर्थः यसु प्रयत्न इति धातोर्लुङि पुषादित्वात् च्लेरङादेशः । ततः उड्डयने उत्प्लवने निराशतां गतः सन् विरुत्य विक्रुश्य निरोद्धुः गृहीतुः करौ केवलं करावेव पुनः पुनः दशति स्म दष्टवान् । स्वभावोक्तिरलङ्कारः ॥ १२५ ॥

ससम्भ्रमेति । ससम्भ्रमं सभयत्वरम् उत्पातिना उत्पतनवता

तमूर्मिलोलैः पतगग्रहान्नृपं
न्यवारयद् वारिरुहैः करैरिव ॥ १२६ ॥

पतत्त्रिणा तद्रुचिरेण वञ्चितं
श्रियः प्रयान्त्याः प्रविहाय पल्वलम्।
चलत्पदाम्भोरुहनूपुरोपमा
चुकूज कूले कलहंसमण्डली ॥ १२७॥

उड्डीयमानेनेत्यर्थः पतगं पक्षिणां कुलेन सङ्घेन आकुलं सरः कर्तृ उत्कतया उन्मनस्कतया उत्क उन्मना इति निपातनादिविधानाच्च साधु। अनुकम्पितां कृपालुतां प्रपद्य प्राप्य ऊर्मिलोलैः तरङ्गचपलैः वारिरुहैः पङ्कजैः करैरिति व्यस्तरूपकं पतगग्रहात् पक्षिग्रहणात् तं नृपं न्यवारयदिव निवारयामासेवेत्यर्थः वास्तवनिवारणासम्भवात् उत्प्रेक्षा। निवारणस्य करसञ्चालनसाध्यत्वात् तत्र रूपकाश्रयणम् अतएवेवशब्दस्य उपमाबाधेनार्थानुसाराद् व्यवहितयोजनयोत्प्रेक्षाव्यञ्जकत्वमिति रूपकोत्प्रेक्षयोरङ्गाङ्गिभावः सङ्करः ॥ १२६ ॥

पतत्त्रिणेति। रुचिरेण मनोहरेण विचित्रेणेत्यर्थः हिरण्मयत्वादिति भावः पतत्त्रिणा पक्षिणा हंसेन वञ्चितं विरहितं तत् पल्वलं सरः प्रविहाय परित्यज्य प्रयान्त्या गच्छन्त्याः श्रियः लक्ष्म्याः चलद्भ्यां पदाम्भोरुहनूपुराभ्याम् उपमा साम्यं यस्याः तथाभूता कलहंसमण्डली हंसविशेषश्रेणी कूले तटे चुकूज कूजनमेषां स्वभाव इति। अत्र हंसेन सहैव गच्छन्त्याः सरः शोभारूपया श्रीदेव्या सह अभेदाध्यवसायेन कूजत्कलहंसमण्डल्यां तन्नूपुरत्वमुत्प्रेक्षते ॥ १२७ ॥

न वासयोग्या वसुधेयमीदृश-
स्त्वमङ्ग ! यस्याः पतिरुज्झितस्थितिः ।
इति प्रहाय क्षितिमाश्रिता नभः
खगास्तमाचुक्रुशुरारवैः खलु ॥ १२८ ॥

न जातरूपच्छदजातरूपता
द्विजस्य दृष्टेयमिति स्तुवन् मुहुः ।
अवादि तेनाथ स मानसौकसा
जनाधिनाथः करपञ्जरस्पृशा ॥ १२९ ॥

नेतिः। इयं वसुधा भूः न वासयोग्या न निवासार्हा कुत इत्याह। अङ्गेति। अङ्ग भोः त्वं यस्याः वसुधायाः ईदृशः इत्थम्भूतः निरपराधप्राणिहिंसक इति भावः अतएव त्यक्त-मर्य्यादः परित्यक्तराजोचितसदाचारः पतिः पालकः। इतीत्थं खगाः पक्षिणः क्षितिं पृथ्वीं प्रहाय परित्यज्य नभः आकाशम् आश्रिताः उत्पतिता इत्यर्थः तं नलम् आरवैः उच्चध्वनिभिः चीत्कारैरित्यर्थः आचुक्रुशुः खलु आक्रुष्टवन्त इवेत्युत्प्रेक्षा सा च स्वभावोक्त्यनुप्राणितेत्युभयोरङ्गाङ्गिभावेन सङ्करः ॥ १२८ ॥

नेति। अथ पक्षिणामाक्रोशनानन्तरं करः एव पञ्जरं तत् स्पृशतीति तथोक्तेन करपञ्जरधृतेनेति यावत् तेन मानसौकसा मानससरोवासिनेत्यर्थः हंसेन हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकस इत्यमरः। द्विजस्य पक्षिणः इयम् ईदृशीत्यर्थः जातरूपच्छदैः सौवर्णपक्षैः जातरूपता उत्पन्नसौन्दर्य्यं न दृष्टा हिरण्मयः पक्षी न कुत्रापि दृष्ट इत्यर्थः इति उच्चमकारेण

धिगस्तु तृष्णातरलं भवन्मनः
समीक्ष्य पक्षान्मम हैमजन्मनः।
तवार्णवस्येव तुषारशीकरै-
र्भवेदमीभिः कमलोदयः कियान्॥ १३०॥

न केवलं प्राणिवधो बधो मम
त्वदीक्षणाद्विश्वसितान्तरात्मनः।
विगर्हितं धर्मधनैर्निवर्हणं
विशिष्य विश्वासजुषां द्विषामपि॥ १३१॥

मुहुः पुनःपुनः स्तुवन् प्रशंसन् स जनाधिपः नृपतिर्मंसः अवादि उक्तः। वदेः कर्मणि लुङ्॥ १२९॥

तदेव चतुर्भिराह धिगित्यादिभिः। हैमजन्मनः सौवर्णान् मम पक्षान् पतत्राणि समीक्ष्य विलोक्य तृष्णातरलं लोभचपलं भवतः मनः धिगस्तु निन्दितं भवतु धिङ्निर्भर्त्सननिन्दयो-रित्यमरः। धिगुपर्य्यादिषु त्रिष्वित्यादिना धिग्योगात् मन इति द्वितीया। तुषारशीकरैः शिशिरविन्दुभिः अर्णवस्येव समुद्रस्येव तव अमीभिः मत्पक्षैरिति भावः कियान् कमलाया लक्ष्म्या कमलस्य जलस्य च उदयः वृद्धिर्भवेत्? न कियानपी-त्यर्थः। अत्र कमलोदय इति श्लेषेणानुप्राणितार्णवस्येवेत्युपमा इत्यनयोरङ्गाङ्गिभावेन सङ्करः॥ १३०॥

नेति। तव ईक्षणात् त्वन्मूर्त्तिदर्शनात् विश्वसितः साधु-रयमिति प्रत्ययितः अन्तरात्मा अन्तःकरणं यस्य तथाभूतस्य मम बधः हिंसनं केवलं प्राणिवधः जीवहिंसनमात्रं न, विश्वास-घातपातकमपीति भावः। ततः किमित्यत आह विगर्हित-

पदे पदे सन्ति भटा रणोद्भटा
न तेषु हिंसारस एष पूर्य्यते ?।
धिगीदृशं ते नृपतेः कुविक्रमं
कृपाश्रये यः कृपणे पतत्त्रिणि ॥ १३२ ॥

फलेन मूलेन च वारिभूरुहां
मुनेरिवेत्थं मम यस्य वृत्तयः।
त्वयाद्य तस्मिन्नपि दण्डधारिणा
कथं न पत्या धरणी ह्रिणीयते ? ॥ १३३ ॥

मिति विश्वासजुषां विश्रम्भभाजां द्विषां शत्रूणामपि किमन्येषामित्यपि शब्दार्थः। निबर्हणं हिंसनं धर्म्मधनैः धर्म्मपरैः जनैः मन्वादिभिरिति शेषः विशिष्य विशेषेणोक्ता विगर्हितम् अतिशयेन निन्दितमित्यर्थः। तथाच, मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः। ते सर्वे नरकं यान्ति यावच्चन्द्रदिवाकरौ इति ॥ १३१ ॥

पदे इति। रणोद्भटाः संग्रामशूराः भटाः वीराः पदे पदे सर्वत्रैवेत्यर्थः सन्ति विद्यन्ते वीप्सायां द्विर्भावः। एष हिंसारसः हिंसानुरागः तेषु भटेषु न पूर्य्यते ? अपि तु पूर्य्यत एवेत्यर्थः। नृपतेर्महाराजस्य ते तव ईदृशम् अवधार्हवधरूपं कुविक्रमं कुत्सितपराक्रमं धिक् निर्भर्त्सयामीति भावः। यः कुविक्रमः कृपाश्रये अनुकम्पनीये कृपणे दीने पतत्त्रिणि पक्षिणि क्रियत इति शेषः ॥ १३२ ॥

फलेनेति। यस्य मम मुनेरिव वारिभूरुहां जलरुहां पद्मादीनां भूमिरुहां वृक्षाणाञ्च फलेन मूलेन च इत्थमनेन प्रका-

इतीदृशैस्तं विरचय्य वाङ्मयैः
स चित्रवैलक्ष्यकृपं नृपं खगः।
दयासमुद्रे स तदाशयेऽतिथी-
चकार कारुण्यरसापगा गिरः॥ १३४॥

मदेकपुत्त्रा जननी जरातुरा
नवप्रसूतिर्वरटा तपस्विनी।

रेव वृत्तयः जीविकाः, तस्मिन्नपि अनपराधेऽपीति भावः मयीति शेषः। दण्डधारिणा दण्डकारिणा अदण्ड्यदण्डकेनेत्यर्थः पत्या त्वया हेतुना अद्य अरणी पृथिवी कथं न ह्रिणीयते? न लज्जते? अपि तु ह्रिणीयत एवेत्यर्थः कण्ड्वादियगन्तात् लट्, तत्र यति घृणिङिति ङित्करणादात्मनेपदम्। अकार्यकारिणं भर्त्तारं दृष्ट्वा स्त्रियो लज्जन्ते इति भावः॥ १३३॥

इतीति। स खगः पक्षी इतीत्थम् ईदृशैः दीनाविष्कारकैरिति भावः। वाङ्मयैः वाग्विकारैः एकाचो नित्यं मयटमिच्छन्तीति विकारार्थे मयट्प्रत्ययः। तं नृपं पक्षिवचनात् चित्रम् अकार्य्योद्घटनात् वैलक्ष्यं तया अप्रतिभत्वं वा परार्त्तिदर्शनात् कृपा तन्निवारणेच्छा च ताभिः सह वर्त्तते इति तथोक्तं विरचय्य विधाय दयासमुद्रे तदाशये तस्य नलस्य चित्ते कारुण्यरसापगाः करुणरसनदीः गिरः करुणरसोद्दीपिनीर्वाच इत्यर्थः अतिथीचकार प्रवेशयामासेत्यर्थः। समुद्रे नदीप्रवेशो युक्त इति भावः॥ १३४॥

तावद्गोभिर्गिरः अप्यन्वयन् प्रथमं तावदैवमुपालभते मदिति। हे विधे! दैव! विधिर्विधाने दैवे चेत्यमरः। जननी माता

गतिस्तयोरेष जनस्तमर्दयन्
अहो विधे! त्वां करुणा रुणद्धि न ?॥ १३५॥
मुहूर्त्तमात्रं भवनिन्दया दया-
सखाः सखायः स्रवदश्रवो मम ।
निवृत्तिमेष्यन्ति परं दुरुत्तरः
त्वयैव मातः ! सुतशोकसागरः ॥ १३६ ॥

अहमेव एकः पुत्रो यस्याः तथाभूता मद्विनाशे तस्या गत्यन्तरं नास्तीति भावः। जरातुरा जरया वार्द्धकेन आतुरा विवशा स्वयमप्यसमर्थेत्यर्थः। वरटा स्वपत्नी। हंसस्य योषिद् वरटेत्यमरः। नवप्रसूतिः अचिरप्रसूता स्वयमक्षमेति भावः। ननु पत्यन्तरग्रहणेन तस्याः योगक्षेमनिर्वाहः स्यादित्यत आह तपस्विनी पतिव्रता। एष जनः स्वयमित्यर्थः तयोर्जायाजनन्योः गतिः शरणं, तं जनं मामित्यर्थः अर्दयन् पीड़यन् घ्नन्नित्यर्थः। करुणा दया त्वां न रुणद्धि ? न वारयति ? अहो आश्चर्यम् एतादृशादत्याचारात् तव निवर्त्तितव्यं दयालुतयेति भावः॥ १३५॥

मातरं शोचति मुहूर्त्तेति। हे मातः! दयासखाः दयालव इत्यर्थः। मम सखायः सुहृदः स्रवदश्रवः गलद्वाष्पाः सन्तः मुहूर्त्तमात्रम् अल्पक्षणमात्रं भवस्य संसारस्य गर्हणेन क्षणिकोऽयं संसारः तत्रापि प्रियजनवियोगदुःखसङ्कट इत्यादिक्रमेण निन्दयेत्यर्थः। निवृत्तिं शान्तिं शोकस्येति भावः एष्यन्ति प्राप्स्यन्ति, परं किन्तु त्वयैव केवलं सुतस्य शोकसागरः दुरुत्तरः दुष्पारः दुःखेनोत्तीर्य्यते इति तरतेः खल्यर्थे खल्प्रत्ययः। पुत्रशोको मातुरेव दीर्घकालस्थायीति भावः॥ १३६॥

मदर्थसन्देशमृणालमन्थरः
प्रियः कियद्दूर इति त्वयोदिते।
विलोकयन्त्या रुदतोऽथ पक्षिणः
प्रिये! स कीदृग् भविता तव क्षणः?॥१३७॥

कथं विधातर्मयि पाणिपङ्कजात्
तव प्रियाशैत्यमृदुत्वशिल्पिनः।
वियोक्ष्यसे वल्लभयेति निर्गता
लिपिर्ललाटन्तपनिष्ठुराक्षरा॥ १३८॥

अथ भार्य्यामुद्दिश्य विलपति मदर्थेति। हे प्रिये! मह्य-मिमे मदर्थे अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्येति तयोः सन्देशमृणालयोः वाचिकविसयोः सन्देशवाक् वाचिकं स्यादित्यमरः। मन्थरः प्रेषणे विलम्बितप्रवृत्तिरिति यावत् प्रियः कान्तः कियद्दूरे वर्त्तते इति शेषः इति त्वया उदिते उक्ते पृष्टे इति यावत् सति अथ प्रश्नानन्तरं रुदतः अनिष्टोच्चारणा-शङ्कया अश्रूणि विमुञ्चतः पक्षिणः इतःप्रत्यागतानिति भावः। विलोकयन्त्याः पश्यन्त्याः तव स क्षणः समयः कीदृक् भविता? वज्रपातसदृशो भविष्यतीत्यर्थः॥ कर्त्तरि लुट्॥ १३७॥

पुनश्च विधिमुपालभते कथमिति। हे विधातः! प्रियायाः वरटायाः शैत्यं शीतलत्वं मृदुत्वं कोमलत्वं तयोः शिल्पिनः निर्म्माणकारकात् तव पाणिपङ्कजात् करकमलात् पङ्कजवत् मृदुशिशिरात् पाणेरित्यर्थः मयि विषये त्वं वल्लभया तथाभूतया प्रियया वियोक्ष्यसे विहीनो भविष्यसि इत्येवंरूपा ललाटं तपन्ति दहन्तीति ललाटन्तपानि सूर्य्यललाटयोर्दृशि तयो-

अपि स्वयूथ्यैरशनिक्षतोपमं
ममाद्य वृत्तान्तमिमं वतोदिता ।
मुखानि लोलाक्षि ! दिशामसंशयं
दशापि शून्यानि विलोकयिष्यसि ॥ १३९ ॥
ममैव शोकेन विदीर्णवक्षसा
त्वयापि चित्राङ्गि ! विपद्यते यदि ।
तदस्मि दैवेन हतोऽपि हा हतः
स्फुटं यतस्ते शिशवः परासवः ॥ १४० ॥

रिति खलुप्रत्ययः । अरुर्द्विषदित्यादिनामुमागमः । निष्ठुराणि कठोराणि अक्षराणि यस्याः यस्यां वा तथाभूता लिपिः अक्षर-पंक्तिः कथं निर्गता निःसृता ? असम्भवमिदमित्यर्थः कारण-गुणाः कार्य्यगुणमारभन्ते इति न्यायविरोधादिति भावः । अत्र कारणविरुद्धकार्य्योत्पत्तिकथनाद् विषमालङ्कारभेदः । तदुक्तं विरुद्धकार्य्यस्योत्पत्तिर्यत्रानर्थस्य भावयेत् । विरूपघटना वा स्याद् विषमालङ्कृतिर्मतेति ॥ १३८ ॥

अपीति । किञ्चेत्यप्यर्थः अपि किञ्च, हे लोलाक्षि ! चञ्चल-नेत्रे ! वत खेदे । स्वयूथ्यैः स्वसङ्चरैः हंसैः अद्य अस्मिन् दिने सद्यः परुदित्यादिना निपातः । अशनिक्षतोपमं वज्र-प्रहारसदृशं मम इमं वृत्तान्तम् अनर्थवार्त्तामित्यर्थः । उदिता उक्ता सती वदतेर्दुहिलादप्रधाने कर्मणि क्तप्रत्ययः । वचिस्व-पीत्यादिना सम्प्रसारणम् । दिशां दशापि मुखानि असंशयं निश्चितं शून्यानि विलोकयिष्यसि द्रक्ष्यसि ॥ १३९ ॥

ममेति । हे चित्राङ्गि ! मनोहराङ्गि ! त्वया मम शोकेनैव

तवापि हाहा विरहात् क्षुधाकुलाः
कुलायकूलेषु विलुठ्य तेषु ते।
चिरेण लब्धा बहुभिर्मनोरथै-
र्गताः क्षणेनास्फुटितेक्षणा मम ॥ १४१ ॥
सुताः! कमाहूय चिराय चूङ्कृतै-
र्विधाय कम्प्राणि मुखानि कं प्रति।

महिपत्तिदुःखेनैव विदीर्णं वक्षः यस्याः तथाभूतया सत्या यद्वा विदीर्णं वक्षो येन तथाभूतेन शोकेनेत्यस्य विशेषणम्। विपद्यते यदि म्रियते चेत् तत्तर्हि दैवेन हतः स्फुटं हा खेदे पुनर्हतोऽस्मि हा विस्मयविषादयोरिति विश्वः। यतः ते शिशवः परासवः मातुरप्यभावे पोषकाभावात् मृताः भविष्यन्तीति शेषः। पुत्रे विद्यमाने मृतस्यापि आत्मभूतस्य पुत्रस्य सत्वादमरणमेव, तत्र यदि पुत्रस्यापि नाशः स्यात् तदा मृतस्य पुनर्मरणमेव स्यादिति भावः ॥ १४० ॥

चिरेणेति। ननु मन्मृतौ कथं तेषां मृतिरित्यत आह तवेति। हे प्रिये! बहुभिर्मनोरथैः चिरेण लब्धाः कष्टलब्धा इत्यर्थः अस्फुटितेक्षणाः अद्याप्यनुन्मीलितनेत्राः मम ते शिशवः तवापि अपिकारात् मम च विरहात् विनाशात् क्षुधाकुलाः क्षुत्पीड़िताः तेषु कुलायकूलेषु नीड़ान्तिकेषु कुलायो नीड़मस्त्रियामित्यमरः। विलुठ्य विपरिवृत्य क्षणेन अल्पसमयेनैवेत्यर्थः गताः मृताः भविष्यन्तीति शेषः। हाहेति खेदे ॥ १४१ ॥

अथ सुतानुद्दिश्य विलपति सुता इति। हे सुताः! पुत्रकाः!

कथासु शिष्यध्वमिति प्रमीह्य स
स्रुतस्य सेकाद् बुबुधे नृपास्रुणः ॥ १२४ ॥

इत्थममुं विलपन्तममुञ्चत्
दीनदयालुतयाऽवनिपालः ।
रूपमदर्शि धृतोऽसि यदर्थं
गच्छ यथेच्छमथेत्यभिधाय ॥ १४३ ॥

आनन्दजास्रुभिरनुस्रियमाणमार्गान्
प्राक्शोकनिर्गलितनेत्रपयःप्रवाहान् ।

चूत्कृतैः चूत्कारैः चिराय कम् आहूय कं प्रति सुखानि कम्पाणि चञ्चलानि विधाय कथासु शिष्यध्वं कथामात्रशेषा भवत म्रियध्वमित्यर्थः प्राप्तकाले लोट् मरणकालो युष्माकं प्राप्त इत्यर्थः इति उक्त्वेति शेषः गम्यमानार्थत्वादप्रयोग इत्यर्थः। प्रमीह्य मूर्च्छां प्राप्येत्यर्थः स हंसः स्रुतस्य दयार्द्रतया प्रस्रवतः नृपस्य अस्रुणः वाष्पवारिणः सेकात् बुबुधे संज्ञां लेभे। स्वभावोक्ति-रलङ्कारः ॥ १४२ ॥

सम्प्रति वृत्तान्तरेण सर्गशेषस्य महाकाव्यलक्षणत्वात् भिन्नवृत्ताभ्यां श्लोकद्वयमाह इत्थमित्यादि। अवनिपालः पृथ्वीपतिर्नलः दीनदयालुतया विपन्नजनदुःखमोचनतया इत्थं विलपन्तं शोचन्तम् अमुं हंसं यस्मै यदर्थं यस्य रूपस्य दर्शनार्थमित्यर्थः धृतोऽसि गृहीतोऽसि तत् रूपम् आकृतिः तवेति शेषः। अदर्शि अवलोकितम् अथ इदानीं यथेच्छं गच्छ इति अभिधाय उक्त्वा अमुञ्चत् तत्याज। दोधकवृत्तं दोधकमिच्छति भत्रितयाद् गाविति तल्लक्षणात् ॥ १४३ ॥

चक्रे स चक्रनिभचङ्क्रमणच्छलेन
नीराजनां जनयतां निजबान्धवानाम्॥ १४४॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।

आनन्देति। सः राजविमुक्तो हंसः चक्रनिभं मण्डलाकारं यत् चङ्क्रमणं प्रदक्षिणीकरणमित्यर्थः तस्य छलेन नीराजनां जनयतां कुर्वतामित्यर्थः निजबान्धवानां बन्धयुक्तं बान्धवा नीराजयन्तीति समाचारः। प्राक् मोचनात् पूर्वं शोकेन निर्मलिता ये नेत्राणां पयःप्रवाहाः वाष्पपूराः तान् आनन्दाश्रुभिः मोचनजनितानन्दवाष्पैः अनुस्रियमाणमार्गान् अनुगम्यमानपद्धतीन् चक्रे कृतवान्। अत्र पक्षिणां स्वभावसिद्धबन्धनमुक्तौ चक्रभ्रमणप्रतिषेधेन नीराजनारोपादपह्नुत्यलङ्कारः अत्र च नीराजनारूपमङ्गलाचारः कीर्त्तितः यथाह भगवान् भाष्यकारः। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि विहितानि शास्त्राणि श्रूयन्ते वीरपुरुषाण्यायुष्मत् पुरुषाणि चाभवन्ति अध्येतारश्च प्रवक्तारो भवन्तीति। वसन्ततिलकं वृत्तं वसन्ततिलकं तभजाजगौग इति तल्लक्षणात्। सर्गान्तत्वाद् वृत्तभेदः यथाह दण्डी। सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः। सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जनमिति॥ १४४॥

अथ कविः स्वनामसम्बलितश्लोकेन सर्गमुपसंहरति श्रीहर्षमिति। कविराजराजीनां विद्वच्छ्रेष्ठसङ्घानां ये मुकुटालङ्काराः तेषु हीरः वज्रमणिः श्रीहीरः मामल्लदेवी च यं जितेन्द्रियचयं वशीकृतेन्द्रियवर्गं श्रीहर्षं नाम सुतं सुषुवे जनया-

तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गतः १४५

मास तस्य श्रीहर्षस्य चिन्तामणेरभीष्टदेवस्य मन्त्रचिन्तनं मनुजपः तस्य फलं फलभूतं तस्मिन् शृङ्गारस्य आद्यरसस्य भङ्ग्या विलासेन चारुणि मनोहरे नैषधीयं नलसम्बन्धि चरितं यस्मिन् तथोक्ते महाकाव्ये अयम् उक्तरूपः आदिः सर्गः गतः समाप्त इत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्। महाकाव्यलक्षण-मुक्तं दर्पणे। सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः। सद्-वंश्यः क्षत्रियो वापि धीरोदात्तगुणान्वितः। एकवंशभवा भूपाः कुलजा बहवोऽपि वा। शृङ्गारवीरशान्तानामेकोऽङ्गी-रस इष्यते। अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः। इति-हासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम्। चत्वारस्तस्य वर्गाः स्यु-स्तेष्वेकञ्च फलं भवेत्। आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा। क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्त्तनम्। एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः। नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह। नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते। सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्। सन्ध्या सूर्य्येन्दुरजनीप्रदोषध्वान्तवासराः। प्रातर्मध्याह्नमृगयाशैलर्त्तु वनसागराः। सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः। रण-प्रयाणोपयममन्त्रपुत्रोदयादयः। वर्णनीया यथायोगं साङ्गो-पाङ्गा अमी इह। कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा। नामास्य सर्गोपादेयकथया सर्गनामतु। इति। शार्दूलविक्री-ड़ितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्री-ड़ितमिति तल्लक्षणात्॥ १४५॥

## द्वितीयः सर्गः।

अधिगत्य जगत्यधीश्वरात्
अथ मुक्तिं पुरुषोत्तमात्ततः।
वचसामपि गोचरो न यः
स तमानन्दमविन्दत द्विजः॥ १॥
अधुनीत खगः स नैकधा
तनुमुत्फुल्लतनूरुहीकृताम्।

अधिगत्येति। अथ मोचनानन्तरं स द्विजः पक्षी विप्रश्च दन्तविप्राण्डजा द्विजा इत्यमरः। जगत्यधीश्वरात् पृथिवीश्वरात् जगदीश्वराच्च पुरुषोत्तमात् पुरुषश्रेष्ठात् विष्णोश्च ततः नलात् प्रसिद्धाच्च मुक्तिं मोचनम् अपवर्गञ्च अधिगत्य प्राप्य यः आनन्दः वचसामपि न गोचरः वक्तुमशक्य इत्यर्थः यतो वाचो निवर्त्तन्ते इत्यादेरवाग्विषयश्च तम् आनन्दं परमानन्दञ्च अविन्दत अलभत विदेर्लाभार्थात् कर्त्रभिप्राये क्रियाफले इत्यात्मनेपदं नुमागमश्च। अत्राभिधायाः प्रकृतार्थमात्रनियन्त्रणात् उभयश्लेषानुपपत्तेर्भेदान्तरानवकाशाल्लक्षणायाश्च मुख्यार्थबाधमन्तरेणासम्भवात् ध्वनिरेवायं ब्राह्मणस्य विष्णोर्मोक्षानन्दप्राप्तिलक्षणार्थान्तरप्रतीतेर्न श्लेषः प्रकृताप्रकृतोभयगतः। अस्मिन् सर्गे एकशतश्लोकपर्य्यन्तं वियोगिनीवृत्तं विषमे ससजा गुरुः समे सभरालोऽथ गुरुर्वियोगिनीति तल्लक्षणात्॥१॥

अधुनीतेति। स खगः हंसः उत्फुल्लतनुरुहीकृतां नृपकरपीड़नात् उद्बुद्धपतत्रीकृतां पतत्रञ्च तनूरुहमित्यमरः। तनुं शरीरं नैकधा अनेकधा बहुधेत्यर्थः नञर्थस्य नशब्दस्य

कारयन्वदन्तुरान्तर
व्यलिखच्चञ्चुपुटेन पक्षती ॥ २ ॥
अयमेकतमेन पक्षते-
रधिमध्योर्द्ध्वजङ्घमङ्घ्रिणा ।
स्खलनक्षण एव शिश्रिये
द्रुतकण्डूयितमौलिरालयम् ॥ ३ ॥
स गरुद्वनदुर्गदुर्ग्रहान्
कटु कीटान् दशतः सतः क्वचित् ।

सुप्सुपेति समासः अधुनोत कम्पयामास धूञः क्रयादेर्लङिति तङ् । प्वादीनां ह्रस्व इति ह्रस्वः । तथा करयन्त्रणेन नृपस्य करपीडनेन दन्तुरम् आनतोन्नतम् अन्तरम् अवकाशो ययोः तथाभूते अन्तरमवकाशावधि परिधानान्तर्धिभेदतादर्थ्ये इत्यमरः । पक्षती पक्षमूले पक्षतिः स्त्री पक्षमूलमित्यमरः । चञ्चुपुटेन व्यलिखत् विलिखनेन ऋजूचकारेत्यर्थः । स्वभावोक्तिरलङ्कारः । एवमुत्तरेषु त्रिषु श्लोकेषु ॥ २ ॥

अयमिति । अयं हंसः स्खलनक्षण एव मोचनानन्तरमेवेत्यर्थः एकतमेन अङ्घ्रिणा चरणेन पक्षतेः पक्षमूलस्य अधिमध्यं मध्ये ऊर्द्ध्वगा ऊर्द्ध्वगामिनी जङ्घा यस्मिन् तद् यथा तथा द्रुतं कण्डूयितः कृतकण्डूयनः मौलिः शिरः केशबन्धः येन तथाभूतः आलयं निजावासं शिश्रिये आश्रितवान् ॥ ३ ॥

स इति । पण्डितः निपुणः स हंसः गरुतः पक्षा एव वनदुर्गाणि तेषु दुर्ग्रहान् ग्रहीतुमशक्यान् कटु तीक्ष्णं यथा तथा दशतः दन्तैस्तुदतः क्वचित् कुत्रचिदेव निश्चलदेशे इति शेषः

नुनुदे तनुकण्डु पण्डितः
पटुचञ्चूपुटकोटिकुट्टनैः ॥ ४ ॥
अयमेत्य तड़ागनीडजै-
र्लघु पर्य्यव्रियताथ शङ्कितैः।
उदडीयत वैकृतात् कर-
ग्रहजादस्य विकस्वरस्वरैः ॥ ५ ॥
दधतो बहुशैवलक्ष्मतां
धृतरुद्राक्षमधुव्रतं खगः।

सतः वर्त्तमानान् कीटान् क्षुद्रजन्तून् पटुचञ्चूपुटस्य समर्थ-चञ्चूपुटस्य कोट्योः शिखरयोः अग्रभागयोरित्यर्थः कुट्टनैः घट्टनैः तनुरल्पा कण्डुर्यस्मिन् तत् यथा तथा गोस्त्रियोरुपसर्ज्जनस्येति ह्रस्वः। नुनुदे निवारितवान् स्वरितञित्वात्मनेपदम्। यद्वा तनुकण्डुपण्डित इत्येकमेव पदं तनोः शरीरस्य कण्डौ कण्डू-यने पटुर्निपुण इत्यर्थः ॥ ४ ॥

अयमिति। अयं हंसः तड़ागनीड़जैः सरोवासिभिः पक्षिभिः नीड़ोद्भवा गरुत्मन्त इत्यमरः। लघु क्षिप्रमेत्य आगत्य पर्य्यव्रियत परिवेष्टितः। वृणोतेः कर्म्मणि लङ्। अथ परि-वेष्टनानन्तरम् अस्य नलस्य करग्रहजात् पाणिपीड़नजात् वैकृतात् विकारदर्शनादित्यर्थः स्वार्थेऽण्प्रत्ययः। शङ्कितैः अत-एव विकस्वरस्वरैः उच्चघोषैः सद्भिः उदडीयत उड्डीनम्। डीङो भावे लङ् ॥ ५ ॥

दधत इति। स खगः हंसः बहुशैवला प्रभूतशैवला क्ष्मा भूः प्रदेश इत्यर्थः यस्य तत् बहुशैवलक्ष्मं तस्य भावः तत्ता तां

स नलस्य ययौ करं पुनः
सरसः कोकनदभ्रमादिव ॥ ६ ॥
पतगाश्चिरकाललालनात्
अतिविश्रम्भमवापितोनु सः ?।
अतुलं विदधे कुतूहलं
भुजमेतस्य भजन्महीभुजः ॥ ७ ॥

दधतः वहतः वहत इति पाठान्तरं सरसः सरोवरात् बहूनि भूरीणि शैवलक्ष्माणि शिवभक्तचिह्नानि त्रिपुण्ड्रकादीनि यद्वा मङ्गलचिह्नानि यस्य तस्य भावः तत्ता तां वहतः दधानस्य नलस्य धृताः रुद्राक्षा मधुव्रता भ्रमरा इवेति उपमितसमासः। ते येन तं करं हस्तं बलिहस्तांशवः करा इत्यमरः। कोकनदस्य भ्रमः कोकनदभ्रमः तस्मादिव रक्तोत्पलभ्रान्तेरिव रक्तोत्पलं कोकनदमित्यमरः कोकनदन्तु रुद्राक्षसदृशभ्रमरैः युक्तं भवतीति भावः पुनः ययौ गतवान्। यद्वा रुद्रस्य हरस्य अक्षमा असहाः द्वेषिणः इत्यर्थः तान् शिवद्रोहिण इत्यर्थः धुनोति कम्पयति हिनस्तीत्यर्थः तत् रुद्राक्षमधु, तत् व्रतं नियमः यस्य तथाभूतं शिवविद्वेषिध्वंसिनमित्यर्थः। अत्र बहुशैवलेत्यादौ शब्दश्लेषः रुद्राक्षमधुव्रतमिति तदनुप्राणितोपमानतापेक्षा चेयं कोकनदभ्रमादिवेत्युत्प्रेक्षेत्येषां सङ्करः ॥ ६ ॥

अथ अस्य स्वयं पुनरागमनात् नलस्य कौतुकमाह। पतग इति। चिरकालं बहुक्षणं यत् लालनं हस्तेन सयत्नधारणमित्यर्थः तस्मात् अतिविश्रम्भम् अतिविश्वासं समौ विश्रम्भविश्वासौ इत्यमरः। अवापितः नु? प्रापितः किम्? इति उत्प्रेक्षा अन्यथा कथमागच्छेदिति भावः। स पतगः पक्षी हंसः एतस्य

नृपमानसमिष्टमानसः
स निमज्जत् कुतुकामृतोर्म्मिषु।
अवलम्बितकर्णशष्कुली-
कलसीकं रचयन्नवोचत ॥ ८ ॥
मृगया न विगीयते नृपैः
अपि धर्मागममर्मपारगैः।

महीं भुनक्तीति महीभुक् तस्य भुजः क्विप्प्रत्ययः। पृथिवीपालस्य नलस्य भुजं करं भुजो बाहौ च पाणौ चेति विश्वः। भजन् आश्रयन् सन् अतुलं निरतिशयं कुतूहलं कौतुकं हर्षमिति यावत् विदधे कृतवान्। महीभुज इत्यस्य भुजं कौतुकञ्चेति द्वाभ्यामन्वयः। अत्रोत्प्रेक्षा-वृत्त्यनुप्रासयोः शब्दार्थालङ्कारयोस्तिलतण्डुलवत् संसृष्टिः। एकद्वित्र्यादिवर्णानां पुनरुक्तिर्भवेद् यदि। सङ्ख्यानियममुल्लङ्घ्य वृत्त्यनुप्रास ईरित इति ॥ ७ ॥

अथ अस्य वचनमुपक्रमते। नृपेति। इष्टं प्रियं मानसं तदाख्यं सरः चित्तं वा यस्य तथोक्तः स हंसः कुतुकं हर्षः तदेव अमृतं पीयूषं तस्य ऊर्मिषु तरङ्गेषु निमज्जत् अन्तर्गच्छत् नृपस्य नलस्य मानसं हृदयम् अवलम्बिते आश्रयीकृते कर्णशष्कुल्याविव कर्णविवरे एव इव वा कलस्यौ येन तादृशं नद्यृतश्चेति कप्। रचयन् कुर्वन् स्ववचनश्रवणोत्सुकं विदधदिति यावत् अवोचत उक्तवान्। अन्योऽपि जले निमज्जन् कलसमवलम्बते तद्वदिति भावः। कर्णशष्कुल्यौ कलसाविव कर्णशष्कुल्यावेव कलस्यावित्युपमारूपकयोः सन्देहसङ्करः ॥८॥

किमवोचदित्याह मृगयेति। धर्मागमाः धर्मशास्त्राणि

स्मरसुन्दर ! मां यदत्यज-
स्तव धर्मः स दयोदयोज्ज्वलः ॥ ८ ॥
अबलस्वकुलाशिनो झषान्
निजनीडद्रुमपीड़िनः खगान् ।

मन्वादिप्रणीतानि धर्मप्रतिपादकनिबन्धाः तेषां मर्म तत्त्वं तस्य पारम् अन्तं गच्छन्तीति पारगाः तैः तत्पारदर्शिभिरित्यर्थः अपि किमन्यैरित्यपि शब्दार्थः । अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु ड इति गमेर्डप्रत्ययः । नॄन् मानवान् पान्ति रक्षन्तीति नृपाः राजानः तैः पालरक्षणे इत्यस्मात् कर्त्तरि डप्रत्ययः । मृगया आखेटः मृगमारणव्यापार इत्यर्थः न विगीयते न निन्द्यते प्रत्युत क्रियते इति भावः न विगीयते इत्यत्र नावगीयते इति पाठे अवगीयते निन्द्यते इति स एवार्थः तथापि हे स्मरसुन्दर ! मदनमनोहर इत्यर्थः यद्वा हे सुन्दर ! स्मर पूर्ववृत्तं मद्ग्रहणव्यापारं मनसा चिन्तयेत्यर्थः । माम् अत्यजः त्यक्तवान् असि इति यत् स त्यागः मन्मोचनमित्यर्थः तव दयाया अनुकम्पाया उदयेन उद्रेकेण उज्ज्वलः प्रदीप्तः धर्मः सुकृतं न केवलं त्वम् आकृत्या सुन्दरः किन्तु धर्मतोऽपि इत्याशयः । यत्राकृतिस्तत्र गुणा वसन्तीति च ध्वन्यते । अत्र दयोदयोज्ज्वल इति वृत्त्यनुप्रासः । मृगयाया अनिन्द्यरूपहेतावपि तदकरणादविशेषोक्तिश्चेत्यनयोः शब्दार्थालङ्कारयोस्तिलतण्डुलवत् संसृष्टिः । सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा इति दर्पणः ॥ ८ ॥

मृगयाया अनिन्द्यत्वे हेतुमाह अबलेति । नास्ति बलं सामर्थ्यं येषां तानि स्वकुलानि स्ववंश्यानि क्षुद्रमत्स्यादीनि

अनवद्यतृणार्दिनो मृगान्
मृगयाघाय न भूभृतां घ्नताम् ॥ १० ॥
यदवादिषमप्रियं तव
प्रियमाधाय नुनुत्सुरस्मि तत्।
कृतमातपसंज्वरं तरो-
रभिवृष्यामृतमंशुमानिव ॥ ११ ॥

इत्यर्थः अश्नन्ति खादन्तीति तथोक्तान् झषान् मत्स्यान् मत्स्या हि दुर्बलस्वकुलं भक्षयन्तीति प्रसिद्धिः। निजः स्वीयः स्वाश्रय इत्यर्थः नीड़द्रुमः आवासतरुः तं पीड़यन्ति विरमोचादिना फलखण्डनेन तापयन्तीति तान् खगान् पक्षिणः तथा अनवद्यानि अनिन्द्यानि निरपराधानीति यावत् तृणानि अर्दयन्ति हिंसन्तीति तथाभूतान् मृगान् तरुतृणादीनामपि अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विता इति मनुस्मरणात् तत्तद्धिंसा पीड़ैवेति भावः सर्वत्रापि ताच्छील्ये णिनिप्रत्ययः। घ्नतां हिंसतां भुवं बिभ्रतीति भूभृतः महीपालाः बिभर्त्तेः कर्त्तरि क्विप्प्रत्ययः। तेषाम् अघाय पापाय न भवति तद्वधस्य दण्डरूपत्वात् प्रत्युत तदकरणे अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति स्वपदाच्चैव हीयते इति दोषस्मरणादिति भावः। अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। तदुक्तं दर्पणे, हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति ॥ १० ॥

साम्प्रतमागमनप्रयोजनमाह यदिति। अहं तव यत् अप्रियं "धिगस्तु तृष्णातरलं भवन्मन" इत्यादिनिन्दावचनम् अवादिषम् उक्तवानस्मि, प्रियं प्रीतिप्रदं कार्य्यम् आधाय कृत्वा

उपनम्रमयाचितं हितं
परिहर्त्तुं न तवापि साम्प्रतम् ।
करकल्पजनान्तराद्विधेः
शुचितः प्रापि स हि प्रतिग्रहः ॥ १२ ॥

तत् अप्रियं तरोः वृक्षस्य कृतम् आत्मना जनितम् आतपेन स्वतेजसा संज्वरं सन्तापम् अमृतं पयः। पयः कीलालम् अमृतमित्यमरः। अभिवृष्य अभिषिच्य अंशुमानिव सूर्य्य इव आदित्याज्जायते वृष्टिरिति मनुस्मरणात् नुनुत्सुः नोदितुमिच्छुः प्रमार्ष्टुमिच्छुरित्यर्थः अस्मि भवामि। नुदप्रेरणे इत्यस्मात् धातोः सन्नन्तात् उप्रत्ययः। अनेन उपमालङ्कारेण तव भूयान् उपकारो, मया कर्त्तव्य इति सूच्यते। एतदेव च आगमनप्रयोजनमिति भावः ॥ ११ ॥

ननु भवन्मोचनेनैव मम सुकृतं पर्य्याप्तं तस्य च मदधीनतया तव सम्बन्धे उपपादितमेवेति किमन्येन तव उपकारेण इत्याशङ्क्य आह उपनम्रमिति। उपनम्रम् उपनतम् उपस्थितमित्यर्थः अयाचितम् अप्रार्थितं हितं प्रियं तवापि सम्राजोऽपीति भावः परिहर्त्तुं परित्यक्तुम् उपेक्षितुमित्यर्थः न साम्प्रतं न युक्तम् अयाचितम् उपग्राह्यमपि दुष्कृतकर्म्मण इति स्मरणात्। युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। एतच्च विधिनियतमित्याह करेति। हि यतः स प्रतिग्रहः ग्रहणीयं हितं करकल्पं करादीषदूनं करस्थानीयमिति यावत् ईषदसमाप्तौ कल्पप्रत्ययः जनान्तरम् अन्यो जनः स्वयमिति भावः यस्य तस्मात् शुचितः शुचेः शुद्धादित्यर्थः अनुकूलादिति भावः विधेः विधातुः दैवाद्वा प्रापि प्राप्तः न तु मादृशात् सामान्यजना-

पतगेन मया जगत्पते-
रुपकृत्यै तव किं प्रभूयते ? ।
इति वेद्मि न तु त्यजन्ति मां
तदपि प्रत्युपकर्त्तुमर्त्तयः ॥ १३ ॥
अचिरादुपकर्त्तुराचरे-
दथवात्मौपयिकीमुपक्रियाम् ।

दित्याशयः । विधिरनुकूलतया तुभ्यं तत् प्रियं दास्यति अहन्तु निमित्तमात्रमिति आप्नोतेः कर्मणि लुङ् प्रयोगात् तस्य भूतकालिकत्वाच्च पूर्वमेव एतदिष्टं विधिना तव दत्तत्वेन निरूपितमिति भावः ॥ १२ ॥

साम्प्रतं स्वस्य उपकारप्रस्तावजनितमौद्धत्यं परिहरति पतगेनेति । पतगेन पक्षिणा अतिक्षुद्रजात्येनेति भावः मया जगत्पतेः सार्वभौमस्य तव उपकृत्यै उपकाराय प्रभूयते शक्यते किम् ? नैव प्रभूयते इत्यर्थः भावे लट् । इति वेद्मि ममाक्षमत्वं जानामीत्यर्थः तदपि तथापि स्वस्य अक्षमत्वज्ञानेऽपीति भावः प्रत्युपकर्त्तुं प्रत्युपकारं कर्त्तुम् अर्त्तयः कथमस्योपकारिणः प्रत्युपकर्त्तव्यं मयेत्येवंरूपाः आवेगाः मां न तु नैव त्यजन्ति प्रत्युपकाराय मां नियोजयन्तीत्यर्थः । क्षुद्रोऽपि अहं तव महदुपकारिणोऽमहान्तमुपकारं करिष्यामीति भावः ॥ १३ ॥

ननु अनुरूपोपकाराक्षमेण त्वया सम्राजो मम किमुपकर्त्तव्यं तत्राह अचिरादिति। अथवा अनुरूपोपकारकरणाक्षमपक्षे इति भावः उपकर्त्तुः उपकारिणः अचिरात् अविलम्बेन । श्वः कार्य्यमद्य कर्त्तव्यं पूर्वाह्ने चापराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतमिति वचनादिति भावः। उपाय एव

पृथुरित्थमथाणुरस्तु सा
न विशेषे विदुषामिह ग्रहः ॥ १४ ॥
भविता न विचारचारु चेत्
तदपि श्रव्यमिदं मदीरितम् ।
खगवागियमित्यतोऽपि किं
न मुदं धास्यति कीरगीरिव ? ॥ १५ ॥

औपयिकः विनयादित्वात् स्वार्थे ठक्। उपधाया ह्रस्वत्वश्चेति ह्रस्वः तत आगता औपयिकी तत आगत इत्यण्प्रत्यये टिड्ढाणञित्यादिना ङीप् । आत्मनः औपयिकी तां स्वोपायसाध्यामित्यर्थः उपक्रियाम् उपकारम् आचरेत् कुर्य्यात् चरतेर्विधिलिङ् । इत्थमेवं सति सा उपक्रिया पृथुः महती अथ किंवा अणुः अल्पा अस्तु भवतु, इह अस्मिन् विषये विशेषे उपकारस्य महत्त्वाल्पत्वरूपे इत्यर्थः विदुषां विवेकवतां ग्रहः निर्बन्धः विचार इति यावत् न अस्तीति शेषः विद्वांसः कृतज्ञतामेव पश्यन्ति न तु तत्र स्वल्पाधिकतारतम्यमिति भावः । स्वसामर्थ्येन मया कृतः उपकारो भवता स्वीकर्त्तव्य इत्याशयः ॥१४॥

अथ मदीयवचसि कौतुकेनापि आदरः करणीय इत्यत आह भवितेति । मदीरितम् इदं वक्ष्यमाणं मम वचः विचारे समालोचने चारु मनोज्ञं न भवतीति शेषः चेत् यदि, तदपि मद्वचसो विचारचारुत्वाभावेऽपीत्यर्थः खगवागिति तुच्छत्वेनाप्रामाण्यज्ञानेऽपीति भावः श्रव्यं श्रवणीयं श्रवणार्हमित्यर्थः इयं खगवाक् पक्षिवाक्यमित्यतोऽपि हेतोः कीरगीरिव शुकवागिव मुदं हर्षं न धास्यति किम् ? न जनयिष्यति किम् ? अपितु धास्यत्येवेत्यर्थः । प्रयोजनविशेषाभावेऽपि शुक-

स जयत्यरिसार्थसार्थकी-
कृतनामा किल भीमभूपतिः।
यमवाप्य विदर्भभूः प्रभुं
हसति द्यामपि शक्रभर्तृकाम् ॥ १६ ॥

वचनमिव मद्वचनं कौतुकादपि श्रोतव्यमेवेति भावः। अत्र उपमालङ्कारेण मद्वचसो मधुरत्वमप्यस्तीति सूचितम् ॥ १५ ॥

साम्प्रतं वचः प्रक्रमते स इति। अर्थेन अभिधेयेन सह वर्त्तते इति सार्थकं तेन सहेति तुल्ययोगे इति बहुव्रीहिः। वोपसर्जनस्येति सहशब्दस्य विकल्पात् सभावः शेषाद् विभाषेति कप् समासान्तः ततः असार्थकं सार्थकं कृतमिति अभूततद्भावे च्विप्रत्यये सार्थकीकृतम्। अरिसार्थेषु शत्रुसमूहेषु सार्थकीकृतं अन्वर्थीकृतं नाम भीम इत्याख्या येन सः शत्रुसमूहेषु भयप्रद इति भावः सः प्रसिद्धः बिभ्यत्यस्मादिति भीमः भियो म इत्यपादानार्थे निपातनात् मप्रत्यय औणादिकः भीम इति भूपतिः पृथिवीपालः जयति किल सर्वोत्कर्षेण वर्त्तते खलु। विदर्भभूः विदर्भदेशः यं भीमं प्रभुं पतिम् अवाप्य लब्ध्वा शक्रः भर्त्ता यस्याः तां शक्रभर्त्तृकां देवेन्द्रपालितामिति भावः द्यामपि स्वर्गमपि नद्यृतश्चेति कप्। हसति किमुत अन्यभर्त्तृकां भुवमित्यप्यर्थः। स्त्रियो हि भर्त्तुरुत्कर्षेण सुभगम्मन्याः अन्या अनीदृशीर्दृष्ट्वा हसन्तीति प्रसिद्धिः। केचित्तु शक्यते जेतुमिति कर्म्मणि रप्रत्यये शक्रः तद्भर्त्तृका द्यौरहन्तु भीमपालितत्वादजेयभर्त्तृकेत्युपहासवीजमित्याहुः। वस्तुतस्तु शक्नोति शत्रून् जेतुमिति व्युत्पत्तिलभ्यमपि इन्द्रनाम कदाचिदसुरपराजितत्वात् सार्थकत्वहीनं स्यात् अहन्तु सततं शत्रुभीतिप्रदपति-

दमनादमनाक् प्रसेदुष-
स्तनयां तथ्यगिरस्तपोधनात् ।
वरमाप स दिष्टपिष्टप-
त्रितयानन्यसदृग्गुणोदयाम् ॥ १७ ॥

केति हासबीजमिति बोध्यम् । अत्र विदर्भभुवो द्युहासा सम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः उपमानभूताया दिवोऽपि उपमेयभूताया विदर्भभुव उत्कर्षात् व्यतिरेकश्चेत्यनयोः संसृष्टिः । आधिक्यमुपमेयस्योपमानान्न्यूनताथवा । व्यतिरेक इति दर्पणः ॥ १६ ॥

दमनादिति । स भीमभूपतिः अमनाक् अनल्पम् अत्यर्थमित्यर्थः प्रसेदुषः प्रसन्नात् स्वोपासनागुणेनेति भावः भाषायां सदवसश्रुव इति सदेर्लिटः क्वसादेशः दमयति नियच्छति इन्द्रियाणीति दमनः तस्मात् तदाख्यादित्यर्थः तथ्या अवितथा गीर्वाक् यस्य तस्मात् अमोघवाच इत्यर्थः तप एव धनं यस्य स तपोधनः तस्मात् महर्षेरित्यर्थः दिष्टानां कालानां भूतभवद्भविष्यतां पिष्टपानां भुवनानाञ्च कालो दिष्टोऽप्यनेहापीति पिष्टपं भुवनं जगदिति चामरः । त्रितययोः अतीतवर्त्तमानभविष्यत्सु कालेषु स्वर्गमर्त्त्यपातालेषु चेत्यर्थः अनन्यसदृक् अन्यासाधारणः गुणानां सौन्दर्य्यादीनाम् उदयः सद्भावः यस्यां यस्या वा ताम् असामान्यगुणप्रकर्षामित्यर्थः तनयां कन्यां वरं प्रसादलब्धं धनम् आप लब्धवान् देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक् प्रिय इत्यमरः । केचित्तु दिष्टेन भाग्येन दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिरित्यमरः । पिष्टपेषु भुवनेषु अनन्यसदृग्गुणोदयामिति व्याख्यानं कुर्वन्ति ॥ १७ ॥

भुवनत्रयसुभ्रुवामसौ
दमयन्ती कमनीयतामदम्।
उदियाय यतस्तनुश्रिया
दमयन्तीति ततोऽभिधां दधौ ॥ १८ ॥
श्रियमेव परं धराधिपाद्
गुणसिन्धोरुदितामवेहि ताम्।

अथास्या नामधेयं व्युत्पादयति। भुवनेति। असौ वरलब्धा कन्या यतः यस्मात् कारणाद्धेतोः तनुश्रिया शरीरसौन्दर्य्येण भुवनानां स्वर्गमर्त्त्यपातालानां त्रयं तस्मिन् याः सुभ्रुवः सुन्दर्य्यः तासां त्रिलोकीरमणीनामित्यर्थः कमनीयतया रम्यतया यो मदः गर्वः तं दमयन्ती निराकुर्वती दमिरयन्तात् पाठमित्यादिना कर्त्त्रभिप्राये आत्मनेपदापवादः परस्मैपदप्रतिषेधेऽप्यकर्त्त्रभिप्रायविवक्षायां परस्मैपदे लटः शत्रादेशः। उदियाय उदभूत् इणो लिट्। ततस्तस्मादेव निमित्तात् दमयन्तीति अभिधां यौगिकीमाख्यां दधौ प्राप। दधातेर्लिट्। दमयन्ती किल रूपजं मदमिति पाठे किल प्रसिद्धावुत्प्रेक्षायां वा रूपजं सौन्दर्य्यभवमित्यर्थः ॥ १८ ॥

अथैनां विशेषेण उत्कर्षयन्नाह श्रियमिति। तां दमयन्तीं गुणसिन्धोः गुणपयोनिधेः धराधिपात् पृथ्वीपतेः भीमात् उदिताम् उद्भूतां श्रियमेव लक्ष्मीमेव परं ध्रुवम् अवेहि। देवी च श्रीः समुद्रात् धराधिपात् भूधरात् मन्दरादिति यावत् तद्विलोड़नादिति भावः समुत्थितेति पुराणम्। परामिति पाठे परां श्रेष्ठां श्रिया देव्या अपि उत्कृष्टामित्यर्थः यतः सा केवलात् समुद्रादुत्पन्ना, इयन्तु गुणसमुद्रादिति ततोऽपि

व्यवधावपि वा विधोः कलां
मृड़चूड़ानिलयां न वेद कः ? ॥ १८ ॥
चिकुरप्रकरा जयन्ति ते
विदुषी मूर्द्धनि सा बिभर्त्ति यान् ।

श्रेष्ठत्वमिति भावः। अवपूर्वादिणो लोटि सेर्हिरिति ह्यादेशे ऽङित्त्वान्न सार्वधातुकगुणः। अत्र केवलावपूर्वस्य इणो ज्ञानार्थत्वादाङि प्रश्लेषे तदलाभात् प्रश्लेषेऽपि ओमाङोश्चेति पररूपमिति केषाञ्चित् प्रक्रियोपन्यासो वृथा प्रयासः त्यागः। अवैहीति वृद्धिरवयेति नामसूत्रमपि अनाङ्प्रश्लेषे एव भ्रान्तिप्राप्तवृद्धिप्रतिषेधपरं गुण एव युक्तिरिति व्याख्यानात् अन्यथा ओमाङोश्चेति पररूपमेव युक्तमित्युच्यते इति। सा च दूरवर्त्तिनी अपि अवश्यमेव त्वया विदितेत्याह व्यवधाविति। व्यवधौ व्यवधानेऽपि दूरदेशस्थितावपीत्यर्थः मृड़ः शिवः तस्य चूड़ा शिर एव निलयः स्थानं यस्याः तां विधोः चन्द्रस्य कलां रेखां को वा जनः न वेद? न जानाति? सर्व एव जानातीत्यर्थः विदो लटो वेति वैकल्पिको लिटादेशः। यथा हरशिरोगता चन्द्रकला सर्वजनविदिता तथा भीमनरेन्द्रगृहजातापि एषा सौन्दर्य्यातिशयमहिम्ना सर्वजनप्रसिद्धा श्रीरेवेति भावः। अत्र श्रीकलयोः नृपमृड़ौ वाक्यद्वये विम्बप्रतिविम्बभावेन सामान्यधर्म्मवत्तया निर्दिष्टाविति दृष्टान्तालङ्कारः तथाचोक्तं यत्र वाक्यद्वये विम्बप्रतिविम्बतयोच्यते। सामान्यधर्म्मः काव्यज्ञैः स दृष्टान्तो निगद्यते इति ॥ १८ ॥

अथास्याश्चिकुरादारभ्य एकविंशतिश्लोकैः प्रत्यङ्गं वर्णयति। चिकुरेति। विदुषी विद्यावती विवेकवतीति भावः विदेः शतु-

पशुनाप्यपुरस्कृतेन तत्-
तुलनामिच्छतु चामरेण कः ? ॥ २० ॥
स्वदृशोर्जनयन्ति सान्त्वनां
खुरकण्डूयनकैतवात् मृगाः ।

वसुः उगितश्चेति ङीप् वसोः सम्प्रसारणम्। सा दमयन्ती मूर्द्धनि शिरसि यान् बिभर्त्ति धारयति, ते चिकुरप्रकराः केशसमूहाः चिकुरः कुन्तलो बालः कचः केशः शिरोरुह इत्यमरः चिकुरप्रचया इति पाठान्तरं जयन्ति सर्वोत्कर्षेण वर्त्तन्ते। विदुदाश्रय एव सर्वस्योत्कर्षहेतुरिति भावः। केचिदाबिभर्त्तीति सोपसर्गं क्रियापदं कृत्वा आबिभर्त्ति आभरणरूपेण धारयतीति व्याचक्षते। ननु चामरेणैषां साम्यमस्ति तत् कथमीदृगुत्कर्ष इत्याह पशुनेति। पशुना तिरश्चा चमरमृगेण अपीत्यर्थः किं वक्तव्यमपरैः इत्यपिशब्दार्थः अपुरस्कृतेन अनादृतेन लाङ्गूलधृतत्वात् पश्चात्कृतेन चामरेण चमरपुच्छलोमजातेन तेषां चिकुरप्रकराणां तुलनां साम्यं कः इच्छतु अभिलषतु ? न कोऽपीत्यर्थः। विद्वज्जनसमादृतस्य वस्तुनो नीचजनेनापि न्यक्कृतवस्तुना कुतः साम्यमिति भावः। सम्भावनायां लोट्। अत्र तुलनानिषेधस्यापुरस्कृतपदार्थहेतुकत्वात् काव्यलिङ्गमलङ्कारः तदुक्तं दर्पणकारेण। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति ॥ २० ॥

स्वदृशोरिति। मृगाः हरिणाः खुरैः शफैः शफं क्लीवे खुरः पुमानित्यमरः। यत् कण्डूयनं कर्षणं तस्य कैतवात् छलात् तस्याः दमयन्त्याः अखर्वयोः आयतयोः ईक्षणयोः नयनयोः खर्वो ह्रस्वश्च वामन इत्यमरः। शोभया सौन्दर्य्येण जितयोः

जितयोरुदयत्प्रमीलयो-
स्तदखर्व्वचक्षुःशोभया भयात् ॥ २१ ॥
अपि लोकयुगं दृशावपि
श्रुतदृष्टा रमणीगुणा अपि ।
श्रुतिगामितया दमस्वसुः
व्यतिभाते सुतरां धरापते ! ॥ २२ ॥

पराभूतयोः अतएव भयात् त्रासात् उदयन् उत्पद्यमानः प्रमीलः निमीलनं ययोः तथाभूतयोः स्वदृशोः निजनयनयोः सान्त्वनां समाश्वासनं जनयन्ति कुर्व्वन्ति। पराजिताः स्वजयिनः सततं बिभ्यति.तेन निमीलिताक्षा एव तिष्ठन्ति ततस्वजनाश्च तान् करतलपरामर्शादिना समाश्वासयन्तीति लोकस्थितिः। अत्र कैतवशब्देन प्रकृतं कण्डूयनं प्रतिषिध्य सान्त्वनार्थं खुरपरामर्शारोपणात् अपह्नुतिरलङ्कारः तदुक्तं दर्पणे। प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुति। मृगनयनापेक्षया तस्या नयनस्योत्कर्षप्रतिपादनात् व्यतिरेकश्चेत्यनयोः संसृष्टिः ॥ २१ ॥

अपीति। हे धरापते! महीपते! दमो नाम भीमनरेन्द्रपुत्रः तस्य स्वसा भगिनी तस्याः दमयन्त्याः लोकयुगं मातापितृकुलद्वयमपि दृशावपि नयने अपि श्रुतदृष्टा श्रुताः पुराणादौ दृष्टाः कदाचित् कस्याञ्चित् दृष्टा इत्यर्थः विशेषणयोरपि विशेषणविशेष्यभावविवक्षया विशेषणसमासः। रमणीगुणाः स्त्रीधर्म्माः शीलसौन्दर्य्यादयः श्रुतिगामितया वेदशास्त्रानुवर्त्तितया लोकश्रवणप्रसिद्धतया च अन्यत्र आयतत्वात् कर्णान्तविश्रान्ततया अपरत्र श्रवणगोचरतया च श्रुतिः श्रोत्रे

नलिनं मलिनं विवृण्वती
पृषतीमस्पृशती तदीक्षणे।
अपि खञ्जनमञ्जनाञ्चिते
विदधाते रुचिगर्वदुर्विधम्॥ २३॥

तथाम्नाये वार्त्तायां श्रोत्रकर्मणीति विश्वः। सुतराम् अतिमात्रं व्यतिभाते व्यतिहारेण शोभते, शोभेते शोभन्ते च। सर्ववचनेषु अयं प्रयोगः। आत्मनेपदेष्वनत इति झस्यदादेशः सर्वत्र, कर्त्तरि कर्त्तृव्यतिहारे इत्यात्मनेपदम्। अदादित्वाच्छपो लुक् सर्वत्र टेरेत्वम्। अत्र लोकयुगादीनां त्रयाणामपि प्रकृतदमयन्तीपदतया प्रकृतत्वात् केवलप्रकृतविषयिणी तुल्ययोगिता तथाचोक्तम्। प्रस्तुताप्रस्तुतानाञ्च केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगितेति॥ २२॥

नलिनमिति। नलिनं कमलं वा पुंसि पद्मं नलिनमरविन्दं महोत्पलमित्यमरः। मलिनं पराजितत्वात् हीनकान्ति विवृण्वती कुर्वती तथा पृषतीं मृगीम् अस्पृशती साम्याभावात् दूरादेव परिहरन्ती न्यक्कुर्वती इत्यर्थः तस्या दमयन्त्या ईक्षणे नेत्रे अञ्जनाञ्चिते कज्जलालङ्कृते सती खञ्जनं तदाख्यं पक्षिविशेषं खञ्जरीटस्तु खञ्जन इत्यमरः अपि रुचिगर्वे सौन्दर्य्यमदे दुर्विधं दरिद्रं निस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि स इत्यमरः विदधाते कुर्वाते। रुचीत्यस्य पृथक्पदत्वे रुचि कान्त्यामित्यर्थः। तदीक्षणाभ्यां पद्मं मृगीनयनञ्च स्वतएव जितं खञ्जनस्य तु कज्जलरेखातुल्यरेखासम्बन्धात् साञ्जनाभ्यामिव तज्जयः कृत इति निष्कर्षः। केचित्तु विवृण्वती निजकान्तिं प्रकटयन्ती तदीक्षणे पृषतीम् अञ्जनशलाकां हरिणां पृषती

अधरं खलु विम्बनामकं
फलमाभ्यामिति भव्यमन्वयम् ।
लभतेऽधरविम्ब इत्यदः
पदमस्या रदनच्छदौ वदत् ॥ २४ ॥

प्रोक्ता शलाका कज्जलस्य चेति रन्तिदेवः । अस्प्रशती स्पृष्टामकुर्वती सती नलिनं मलिनं तथा अञ्जनाञ्चिते सती खञ्जनमपि रुचिगर्वदुर्विधं विदधाते इति व्याचक्षते । अत्रेक्षणयोः नलिनादिमलिनीकरणाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः तया च नलिनादीनाम् उपमानानाम् उपमेयाभ्याम् ईक्षणाभ्यां न्यक्करणात् व्यतिरेकालङ्कारो व्यज्यते इति अलङ्कारेणालङ्कारध्वनिः ॥ २३ ॥

अधरमिति । अधरविम्बमित्यदः पदम् अधरं विम्बम् इवेति उपमितसमाश्रयणेन रमणीनाम् अधरस्य सौन्दर्य्यवत्तया मनोहरत्वेन यत् प्रयुज्यते तत् पदमिति भावः अस्या दमयन्त्या रदनच्छदौ ओष्ठाधरौ वदत् अभिदधत् ओष्ठाधरौ तु रदनच्छदौ दशनवाससी इत्यमरः । तदभिधानाय प्रयुक्तमिति यावत् विम्बनामकं फलम् आभ्यां रदनच्छदाभ्याम् अधरम् अपकृष्टं खलु इति अधरशब्दस्य अपकृष्टार्थकत्वेन अधरम् अपकृष्टं विम्बं तदाख्यं फलं यस्मादिति बहुव्रीहिसमाश्रयणे एव सति भव्यं सुसङ्गतं निर्बाधमित्यर्थः अन्वयं व्युत्पत्तिलभ्यसम्बन्धं लभते प्राप्नोति अधरस्तु पुमानोष्ठे हीनेऽनूर्द्धे च वाच्यवदिति मेदिनी । अधरं विम्बमिति कर्म्मधारयसमासाश्रयणे नोपमा सङ्गच्छते । अत्र दमयन्तीरदनच्छदस्य विम्बाधरीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्च

हृतसारमिवेन्दुमण्डलं
दमयन्तीवदनाय वेधसा ।
कृतमध्यबिलं विलोक्यते
धृतगम्भीरखनीखनीलिम ॥ २५ ॥
धृतलाञ्छनगोमयाञ्चलं
विधुमालेपनपाण्डरं विधिः ।

अधरस्य बिम्बसाम्यप्रतीतेरुपमालङ्कारो व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ २४ ॥

हृतसारमिति । इन्दोश्चन्द्रस्य मण्डलं बिम्बं दमयन्तीवदनाय दमयन्तीवदननिर्माणार्थमित्यर्थः क्रियार्थोपपदस्येति चतुर्थी । वेधसा ब्रह्मणा हृतः गृहीतः सारः मध्यस्थितोत्कृष्टांशः यस्य तदिव कृतं मध्ये बिलं रन्ध्रं यस्य तथाभूतं सत् धृतः गम्भीरस्य खनीखस्य आकरमध्यरन्ध्रावकाशस्य नीलिमा श्यामलत्वं येन तत् विलोक्यते दृश्यते । खनिः स्त्रियामाकरः स्यादित्यमरः । कृदिकारादक्तिनो वा ङीप् वक्तव्य इति ङीप्प्रत्ययः । अत्र प्रकृतकलङ्कप्रतिषेधेन खनीलिमस्थापनादपह्नुतिरलङ्कारः तदुक्तं दर्पणे । प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति । स च कृतमध्यबिलमिति पदार्थहेतुकेन काव्यलिङ्गेनानुप्राणितः तदपेक्षिणी च हृतसारमिवेत्युत्प्रेक्षेत्यङ्गाङ्गिभावसङ्करः तेन दमयन्तीवदनमिन्दुमण्डलमित्युपमा व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिश्च पूर्ववत् ॥ २५ ॥

धृतेति । विधिर्विधाता धृतं लाञ्छनं कलङ्क एव गोमयाञ्चलं गोमयखण्डं येन तत् तथोक्तं गोमयाञ्चनमिति पाठे धृतं

भ्रमयत्युचितं विदर्भजा-
ननमीराजनवर्द्धमानकम् ॥ २६ ॥
सुषमाविषये परीक्षणे
निखिलं पद्ममभाजि तन्मुखात् ।

लाञ्छनमेव गोमयं येन अञ्चनं पूजनं माङ्गलिकत्वेन उत्कर्ष इति भावः येन तथोक्तम् आलेपनेनेव पिष्टोदकेनेव पाण्डुरं शुभ्रं निजकान्तिसुधाधवलितमिति भावः विधुं चन्द्रं किरण-दीपशिखासमन्वितमिति भावः उचितम् अनुरूपं विदर्भजाया दमयन्त्या आननस्य वदनस्य नीराजनं निर्म्मञ्छनं तदर्थं वर्द्ध-मानकं शरावं शरावो वर्द्धमानक इत्यमरः भ्रमयति । अन्यो-ऽपि शरावं गोमययुक्तं पिष्टोदकेनालिप्तञ्च दृष्टिदोषपरि-हारार्थम् उपरि भ्रामयन् उत्तमं जनं नीराजयतीति लोका-चारः । अत्र विधुतलाञ्छनादेर्नीराजनशरावगोमयादित्वेन रूपणात् साङ्गरूपकं तदुक्तं दर्पणे । अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तदिति ॥ २६ ॥

सुषमेति । सुषमा परमा शोभा उत्कृष्टा कान्तिरित्यर्थः सुषमा परमा शोभेत्यमरः । सैव विषयः तस्मिन् परीक्षणे पद्मानामधिका शोभा दमयन्तीमुखस्य वेत्येवंरूपे दिव्यपरी-क्षायामिति भावः निखिलं समस्तं पद्मम् एकं द्वे त्रीणि वा नेति भावः तस्या दमयन्त्या मुखात् अभाजि स्वयमेव भग्नं पराजितमित्यर्थः । कर्त्तरि लुङ् भञ्जेश्च चिणीति वैभाषिको नकारलोपः । अतएव अधुनापि इदानीमपि भङ्गलक्षणं पराजयचिह्नभूतं सलिलात् उन्मज्जनम् उत्थानं न उज्झति न त्यजति स्फुटमुत्प्रेक्षे । स्फुटमित्यत्र क्षणमिति पाठान्तरम् ।

अधुनापि न भङ्गलक्षणं
सलिलोन्मज्जनमुज्झति स्फुटम् ॥२७॥
धनुषी रतिपञ्चबाणयो-
रुदिते विश्वजयाय तद्भ्रुवौ ?।
नलिके न तदुच्चनासिके
त्वयि नालीकविमुक्तिकामयोः ? ॥२८॥

पद्मानां स्वाभाविकमपि जलोन्मज्जनं भङ्गलक्षणत्वेन उत्प्रेक्ष्यते उन्मज्जनक्रिया च तन्निमित्तमिति क्रियानिमित्तोत्प्रेक्षा । जलदिव्ये च निमज्जनसमकालं केनचित् मुक्तं शरमादाय अन्यो वेगवान् नरः तत्रागत्य यदि दिव्यकारिणं जनं जले निमग्नाङ्गं पश्यति तदा तस्य शुद्धिर्भवति यदि जलात् उत्थिताङ्गं पश्यति तदा तस्य पराजयो भवति। तदाह याज्ञवल्क्यः। समकालमिषुं मुक्तमानीयान्यो जवी नरः। गते तस्मिन् निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयादिति ॥ २७ ॥

धनुषी इति। तद्भ्रुवौ तस्या दमयन्त्या भ्रुवौ विश्वजयाय विश्वेषां जगतां जयाय उदिते उत्पन्ने रतिश्च पञ्चबाणश्च तयोः रतिकामयोः धनुषी नूनमिति शेषः। नूनमित्यादि-व्यञ्जकाप्रयोगाद् गम्योत्प्रेक्षा। कथमन्यथा तद्दर्शनेन सर्वे कामपरतन्त्राः भवेयुरिति भावः। किञ्च तस्या दमयन्त्या उच्चनासिके उन्नतनासापुटे त्वयि नालीकस्य "पिस्तल" इत्याख्यस्य भाषया प्रसिद्धस्य अस्त्रविशेषस्य शरविशेषस्य वा विमुक्तौ प्रक्षेपे कामो ययोः तथाभूतयोः रतिकामयोः यद्वा विमुक्तिं कामयेते इति तथोक्तयोः तयोः शीलिकामिभिक्षाचरिभ्योऽण् इति अण्-

सदृशी तव शूर! सा परं
जलदुर्गस्थमृणालजिद्भुजा।
अपि मित्रजुषां सरोरुहां
स्पृहयालुः करलीलया श्रियः॥ २८॥

प्रत्ययः। नालीकं पद्मषण्डेऽस्त्री नालीकः शरशल्ययोरिति विश्वः। नलिके न शराधारनलौ न? अपितु नलिके एवेति काकुः। नलिके इति "पिस्तल" वा "वन्दुक" इति वा अर्थः। शुक्रनीतिसारे नालिकास्त्रं "वन्दुक" इत्याख्यया प्रसिद्धमेव। "नालिकं द्विविधं ज्ञेयं बृहत् क्षुद्रविभेदतः। तिर्य्यगूर्ध्वच्छिद्रमूलं नालं पञ्चवितस्तिकम्। मूलाग्रयोर्लक्ष्यभेदि तिलविन्दुयुतं सदा। यन्त्राघाताग्निकृद् ग्रावचूर्णधृक्कर्णमूलकम्। सुकाष्ठोपाङ्गबुध्नञ्च मध्याङ्गुलबिलान्तरम्। स्वान्तेऽग्निचूर्णसन्धातृ शलाकासंयुतं दृढम्। लघुनालिकमप्येतत् प्रधार्य्यं पत्तिसादिभिः। यथा यथा तु त्वक्सारं यथा स्थूलबिलान्तरम्। यथा दीर्घं बृहद्गोलं दूरभेदि तथा तथा। मूलकीलभ्रमाल्लक्ष्यसमसन्धानभाजि यत्। बृहन्नालिकसंज्ञं तत् काष्ठबुध्नविनिर्मितम्। प्रवाह्यं शकटाद्यैस्तु सुयुक्तं विजयप्रदम्।" त्वयि नालीकेत्यनेन सा तवैव अनुरूपा प्रियेति रतिकामयोरभिलषितमिति ध्वन्यते। नलावेव नलिके इति स्वार्थे णिकप्रत्ययः। क्लीवत्वञ्च स्वार्थिकप्रत्ययान्तानां कविप्रयोगानुसारेण लिङ्गव्यतिक्रमादिति बोध्यम्। असमस्तरूपकमलङ्कारः॥ २८॥

सदृशीति। हे शूर! वीर! सा दमयन्ती जलमेव दुर्गं शत्रुभिरगम्यं स्थानमिति भावः तत्र तिष्ठतीति तथोक्तं यत् मृणालं तत् जयत इति तज्जितौ भुजौ यस्याः तथाभूता, तथा

वयसी शिशुतातदुत्तरे
सुदृशि स्वाभिविधिं विधित्सुनी ।
विधिनापि न रोमरेखया
कृतसीम्नी प्रविभज्य रज्यतः ॥ ३० ॥

मित्रजुषां सूर्य्यसेविनां सूर्य्यप्रणयिनामित्यर्थः सुहृत्सलिलसेविनाञ्च सहायसम्पन्नमपीति ध्वन्यते मित्रं सुहृदि मित्रोऽर्क इति विश्वः । सरोरुहां कमलानां श्रियः शोभाः न लोकेत्यादिना षष्ठीप्रतिषेधः । करलीलया भुजविलासेन बाहुव्यापारेण बलिग्रहणेन च बलिहस्तांशवः करा इति लीलाविलासक्रिययोरिति चामरः । स्पृहयालुः ग्रहिलेत्यर्थः स्पृहिगृहीत्यादिना आलुच्प्रत्ययः । अयामन्तेत्यादिना णेरयादेशः । ग्रहयालुरिति पाठान्तरम् । अतएव तव परम् अत्यन्तं सदृशी अनुरूपा योग्येत्यर्थः शूरस्य शूरैव भार्य्या भवितुमर्हतीति भावः । अत्र समेन कार्य्येण प्रस्तुतायां दमयन्त्यां शूरव्यवहारसमारोपात् समासोक्तिरलङ्कारः तदुक्तं दर्पणे । समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति । सा च जलदुर्गस्थमृणालजिद्भुजेति सरोरुहां श्रियः स्पृहयालुरिवं उपमयानुप्राणितेति सङ्करः तेन च व्यतिरेको व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ २९ ॥

वयसी इति । शिशुता शैशवं तदुत्तरं यौवनं ते वयसी बाल्ययौवने इत्यर्थः सुदृशि सुनयनायां दमयन्त्यां स्वाभिविधिं स्वाभिव्याप्तिं विधित्सुनी विधातुमिच्छन्ती अहमहमिकया स्वयमेव चिरं स्थातुमभिलषन्ती इत्यर्थः अतएव विधिना विधात्रा रोमरेखया रोमावल्या सीमाचिह्नभूतयेति भावः ।

अपि तद्वपुषि प्रसर्पतो:
गमिते कान्तिभरैरगाधताम् ।
स्मरयौवनयोः खलु द्वयो:
प्लवकुम्भौ भवतः कुचावुभौ ॥ ३१ ॥

प्रविभज्य प्रकर्षेण विभागं कृत्वा समं विभज्येति भावः कृता सीमा ययोः तथाभूते अपि रोमराजेरुदयात् प्रागत्र शैशवेन स्थातव्यम् अतःपरं यौवनेनेति कालेन निर्द्धारितमर्य्यादे अपीति भावः विभाषा ङिश्योरित्यकारलोपः । न रज्यतः न सन्तुष्यतः, रम्यवस्तु न केनापि त्यक्तुमिष्यते इति भावः । एतेनास्याः शैशवयौवनयोः सन्धिरुक्तः । केचित् कृतसीम्नि इति कृत्वान्तपाठं कृत्वा कृता सीमा यस्यां तथाभूतायामिति सुदतीत्यस्य विशेषणमाहुः । अत्र प्रस्तुतयोर्वयसोः रम्यवस्तुनि परस्परस्थित्यभिलाससाम्यात् अप्रस्तुतयोस्तथाभूतयोर्व्यवहारसमारोप इति समासोक्तिः पूर्ववत् ॥ ३० ॥

अपीति । कान्तिभरैः लावण्यपूरैः अगाधताम् अवगाहितुम् अशक्यतां गमिते तस्या दमयन्त्या वपुषि शरीरे प्रसर्पतोः सन्तरतोः द्वयोरपि उभयोरपि स्मरयौवनयोः उभौ कुचौ स्तनौ प्लवस्य सन्तरणस्य कलसौ प्रकृतिविकारभावादश्वघासादिवत्तादर्थ्ये षष्ठीसमासः । भवतः खलु उत्प्रेक्षायाम् । अन्योऽपि अनिमज्जनाय कुम्भादिकमवलम्ब्य सन्तरतीति लोकाचारः । कामो यौवनञ्च सममेव दमयन्त्यां प्रसर्पन् विराजतीति भावः । अत्र स्मरयौवनयोः सन्तरणेन कुचयोः प्लवकुम्भत्वारोपेण च पीनत्वमतिशयितं व्यज्यते इत्युत्प्रेक्षारूपकाभ्यामलङ्काराभ्यां वस्तुध्वनिः ॥ ३१ ॥

कलसे निजहेतुदण्डजः
किमु चक्रभ्रमिकारितागुणः।
स तदुच्चकुचौ भवन् प्रभा-
भरचक्रभ्रमिमातनोति यत्॥ ३२॥

कलसे इति। निजस्य स्वस्य हेतुर्निमित्तकारणं दण्डः तस्मात् जात इति तथोक्तः चक्रभ्रमकारितागुणः चक्रस्य कलसनिर्माणोपकरणविशेषस्य कुम्भकारयन्त्रस्य भ्रमिर्भ्रमणं तत्कारिता एव गुणः तज्जनकत्वरूपो धर्मः। रूपादिषु गुणः प्रधाने रूपादावित्यमरः। कलसे घटे किमु अस्तीति शेषः संक्रान्तः किमित्यर्थः। यत् यतः स कलसः तस्या दमयन्त्या उच्चकुचौ उन्नतस्तनौ भवन् तदात्मना परिणमन्नित्यर्थः प्रभाभरेण कान्तिसमूहेन चक्रस्य राष्ट्रस्य लोकस्य वा भ्रमिं भ्रान्तिं मोहमिति यावत् आतनोति जनयति यद्वा प्रभाभरे लावण्यप्रवाहे चक्रभ्रमिं चक्रवाकभ्रान्तिम् आतनोति। चक्रवाकाश्च प्रवाहे चरन्तीति प्रसिद्धिः। चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः। ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपीत्युभयत्रापि विश्वः। अत्र समवायिकारणगुणा रूपादयः कार्य्यमारभन्ते न निमित्तगुणा इति तार्किकाणां नये स्थितेऽपि गुण इति चक्रभ्रम इति चोभयत्रापि वाच्यप्रतीयमानयोरभेदाध्यवसायः। एवं स तदुच्चकुचौ भवन्निति कुचकलसयोरभेदातिशयोक्त्यापिता भरचक्रभ्रमात्मकक्रियानिमित्ता कुचात्मनि कलसे कार्य्ये चक्रभ्रमकारितालक्षणनिमित्तकारणगुणसंक्रमलक्षणेन उत्प्रेक्षेत्यलम्। तार्किकास्तु निमित्तकारणानां कार्य्येषु संक्रमरूपविरोधात् विरोधालङ्कार इत्याहुः तदन्ये न मन्यन्ते॥ ३२॥

भजते खलु षण्मुखं शिखी
चिकुरैर्निर्मितबर्हगर्हणः।
अपि जम्भरिपुं दमस्वसुः
जितकुम्भः कुचशोभयेभराट्॥ ३३॥

उदरं नतमध्यपृष्ठता-
स्फुरदङ्गुष्ठपदेन मुष्टिना।

भजते इति। दमस्वसुः दमयन्त्याः चिकुरैः केशैः चिकुरः कुन्तलो बालः कचः केशः शिरोरुह इत्यमरः। निर्मिता कृता बर्हाणां पिच्छानां पिच्छबर्हे नपुंसके इत्यमरः गर्हणा निन्दा यस्य स शिखी मयूरः शिखी केकी नीलकण्ठो भुजङ्गभुक् इत्यमरः।* षट् मुखानि यस्य सः तं षण्मुखं कार्त्तिकेयं तथा कुचशोभया स्तनश्रिया जितौ न्यक्कृतौ कुम्भौ यस्य तथाभूतः इभराट् ऐरावतोऽपि जम्भरिपुम् इन्द्रं जम्भारातिः शचीपतिः इत्यमरः। भजते खलु सेवते किम्? लोके च परनिर्जिताः आत्मरक्षार्थं प्रबलमाश्रयमाश्रयन्ते इति प्रसिद्धिः। दमयन्ती तथा सुकेशी येन तां दृष्ट्वा न कोऽपि मयूरमिच्छम् आद्रियते। किञ्च तथा पीनोन्नतस्तनी येन तद्दर्शनात् इभकुम्भमपि न कोऽपि गणयतीति भावः। अत्र मयूरैरावतयोः कार्त्तिकेय-देवेन्द्रभजनस्य जितबर्हत्व-जितकुम्भत्वरूपपदार्थहेतुकत्वात् काव्यलिङ्गे तदसम्बन्धे सम्बन्धाभिधानात् अतिशयोक्तिश्चेत्येषा-मङ्गाङ्गिभावः सङ्करः। तेन बर्हेभ्योऽपि चिकुराणामुत्कर्षस्य इभकुम्भादपि स्तनयोरुत्कर्षस्य च प्रतीतेरुपमानादुपमेयस्या-धिक्यरूपव्यतिरेको व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः॥ ३३॥

उदरमिति। नतं निम्नं मध्यं यस्य तत् निम्नमध्यदेशं

चतुरङ्गुलिमध्यनिर्गत-
त्रिवलिभ्राजि कृतं दमस्वसुः ॥ ३४ ॥
उदरं परिमाति मुष्टिना
कुतुकी कोऽपि दमस्वसुः किमु ? ।
धृततच्चतुरङ्गुलीव यद्
वलिभिर्भाति सहेमकाञ्चिभिः ॥ ३५ ॥

पृष्ठं यस्य तत् नतमध्यपृष्ठं तस्य भावः नतमध्यपृष्ठता तया स्फुरत् स्पष्टीभवत् अङ्गुष्ठपदम् अङ्गुष्ठन्यासस्थानं तच्चिह्नं वा. यस्य तथाभूतेन मुष्टिना करणेन दमस्वसुर्दमयन्त्या उदरं चतसृणाम् अङ्गुलीनां समाहारः चतुरङ्गुलि तद्धितेत्यादिना समाहारे द्विगुरेकवचननपुंसकत्वे च। तन्मध्येभ्यः अन्तरालेभ्यः निर्गतं यत् त्रयाणां वलीनां समाहारः त्रिवलि पूर्वसमासादिः। यत्तूक्तं वामनेन त्रिवलिशब्दः संज्ञा चेदिति सूत्रेण समर्थय इत्यादिवत् दिक्संख्ये संज्ञायामिति संज्ञायां द्विगुरिति, तदपि चेत् करणसामर्थ्यात् त्रिवलय इति बहुवचनप्रयोगदर्शने स्थितं गतिमात्रं न सार्वत्रिकमिति प्रदीपः। तेन भ्राजते इति तद्भ्राजि वलित्रयशोभीत्यर्थः कृतं विधिना कौतुकवतेति शेषः। मुष्टिग्रहणात् अङ्गुष्ठनोदनेन पृष्ठमध्ये नम्रता उदरे च चतुरङ्गुलिनोदनात् वलित्रयोदय इत्युत्प्रेक्षा। अपरञ्च कोमलं वस्तु ऊर्द्धीकृताङ्गुष्ठेन मुष्टिना धृतम् अङ्गुष्ठनिवेशनात् नम्रं चतुरङ्गुलिमध्यनिर्गतेन च वलित्रयेण युक्तं भवति। मुष्टिग्राह्यत्रिवलित्रयोपेतमध्येयमिति निष्कर्षः ॥३४॥

उक्तमर्थं प्रकारान्तरेण वर्णयति उदरमिति। कोऽपि कुतुकी कौतुकवान् पुरुषः यद्वा कोऽपि ब्रह्मापि मात्रते वेधश्चि

पृथुवर्त्तुलतन्नितम्बकृत्
मिहिरस्यन्दनशिल्पशिक्षया ।
विधिरेककचक्रचारिणं
किमु निर्म्मित्सति मान्मथं रथम् ? ॥३६॥

त्रम्ने पुंसि कः कं शिरोऽम्बुनोरित्यमरः। कुतुकी कौतुकवान् सन् दमस्वसुर्दमयन्त्या उदरं मध्यदेशं मुष्टिना परिमाति परि-मितं करोति किमु ? परिच्छिनत्ति इवेत्यर्थः उत्प्रेक्षालङ्कारः। यत् यतः सहेमकाञ्चिभिः हेमकाञ्च्या सौवर्णरशनया वर्त्त-मानाभिः बलिभिः चतसृभिर्बलिभिरित्यर्थः छृतं तस्य कुतुकिन इति भावः चतसृणामङ्गुलीनां समाहारः चतुरङ्गुलि अङ्गुलिचतु-ष्टयमित्यर्थः येन तदिव उदरं भाति राजते। उत्प्रेक्षालङ्कारः। अनयोश्च हेतुहेतुमद्भावादङ्गाङ्गिभावेन सङ्करः। पूर्वत्र बलि-त्रयस्य चतुरङ्गुलिमध्यनिर्गतत्वमिह तु तासां हेमकाञ्चीसहित-त्वेन चतुरङ्गुलित्वमुत्प्रेक्षितमिति भेदः। सहेमकाञ्चिभि-रित्यनेन अस्याः हेमवर्णत्वं सूचितमिति बोध्यम् ॥ ३५ ॥

पृथ्विति। विधिर्ब्रह्मा मिहिरस्य सूर्य्यस्य मिहिरारुण-पूषण इत्यमरः। यः स्यन्दनः रथः एकचक्र इति भावः तस्य यत् शिल्पं निर्माणं तस्य शिक्षया अभ्यासेन पृथुः स्थूलः वर्त्तुलः वृत्तश्च तस्या दमयन्त्या नितम्बः कट्याः पश्चाद्भागः पश्चा-न्नितम्बः स्त्रीकट्या इत्यमरः। तं करोतीति तथाभूतः अतएव एककेन असहायेन एकादाकिन् च असहाये इति चकारात् कप्रत्ययः। चक्रेण चरतीति तथाचारिणं मन्मथस्यायं मान्मथः तं रथं कामरथमित्यर्थः निर्मित्सति निर्मातुमिच्छति किमु ? यथा सूर्य्यस्य एकचक्रो रथः अन्यनिरपेक्षतया अव्याहतत्वेन

तरुमूरुयुगेन सुन्दरी
किमु रम्भां परिणाहिना परम् ।
तरुणीमपि जिष्णुरेव तां
धनदापत्यतपःफलस्तनीम् ॥ ३७ ॥
जलजे रविसेवयेव ये
पदमेतत्पदतामवापतुः ।

जगत् पर्य्यटति तथा दमयन्तीनितम्बरूपेण एकचक्रेण रथेन मन्मथः त्रिभुवनं जेतुं पारयतीत्याशयेन तथोत्प्रेक्षते। नो चेत् कथं तथाविधनितम्बनिर्माणमिति भावः मातेः सन्नन्ताल्लट्। सनिमिमेत्यादिना इसादेशः सस्यार्द्धधातुक इति सकारस्य तकारः। अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः। उत्प्रेक्षालङ्कारः॥३६॥

तरुमिति। सुन्दरी भैमी परिणाहो विशालता परिणाहो विशालतेत्यमरः। अस्ति अस्येति परिणाहि विपुलं तेन ऊरुयुगेन रम्भां नाम तरुं वृक्षभेदं परं केवलं न लोकेत्यादिना षष्ठीप्रतिषेधः। जिष्णुः जयिनी किमु ? किन्तु धनदः कुबेरः तस्य अपत्यं पुत्रः नलकूवर इत्यर्थः तस्य यत् तपः कठोरं व्रतं तस्य फले फलभूताविल्यर्थः स्तनौ यस्याः तां नलकुवरेण बहुभिः तपोभिः लब्धकुचमर्दनामिति भावः तां प्रसिद्धां तरुणीं युवतीं रम्भां नाम सुरसुन्दरीमपि जिष्णुरेव विजेत्री एव रम्भा कदल्यप्सरसोरिति विश्वः। रम्भे इव रम्भाया इव च ऊरू यस्याः सा रम्भोरूर्भैमीति बहुव्रीहिसमासो न वाच्यः परं रम्भायाः कदल्याः तदाख्याया अप्सरसश्च उत्कर्षवती उत्कृष्टेति पञ्चमीतत्पुरुष एव वाच्य इति भावः। अतिशयोक्तिः अलङ्कारः ॥३७॥

जलजे इति। ये जलजे द्वे पद्मे जलजं शङ्खपद्मयोरिति

ध्रुवमेत्य रुतःसहंसकी-
कुरुतस्ते विधिपत्वदम्पती ॥ ३८ ॥
श्रितपुण्यसरःसरित्कथं
न समाधिक्षपिताखिलक्षपम्।

कोषः। रवेः सूर्य्यस्य सेवयेव उपासनयेव एतत्पदताम् एतस्या दमयन्त्याः चरणत्वं तद्रूपमित्यर्थः पदं प्रतिष्ठाम् अवापतुः तच्चरणत्वेन परिणतिं प्रापतुरिति यावत्। ते जलजे कर्म्मभूते एत्य आगत्य प्राप्येत्यर्थः विधेः ब्रह्मणः पत्वदम्पती वाहनभूतौ द्वन्द्वचारिणौ हंसौ रुतः कूजनादित्यर्थः रौतेर्भावे क्विप्। हंसकेन पादकटकेन हंसेन च सहिते कुरुत इति सहंसकी-कुरुतः अभूततद्भावे च्विप्रत्ययः। हंसकः पादकटक इत्यमरः। हंसपक्षे वैभाषिकः कप्रत्ययः। ध्रुवमुत्प्रेक्षे। यथा रविसेवया जलजद्वयं दमयन्तीचरणत्वमधिगतं तथा विधिसेवया तद्-वाहनहंसाभ्यां तत्पादकटकत्वं प्राप्तमिति पद्महंसयोश्च सतत-सहवासात् तथोत्प्रेक्ष्यते। महतामाराधनमेव महत्वलाभहेतु-रिति सूच्यते। यद्वा रुतः शब्दं कुरुतः अतएव विधिपत्वदम्पती ते एत्य सहंसकीकुरुत इति ध्रुवं निश्चितमित्यर्थः अन्यथा कथमचे-तनयोश्चरणनूपुरयोः कूजनमिति भावः। उत्प्रेक्षालङ्कारः ॥३८॥

श्रितेति। जलजं पद्मं श्रिताः सेविताः पुण्याः पवित्राः श्रेयस्कारिण्यश्च सरःसरितः [सरांसि सरोवराणि मानसादीनि सरितः] नद्यः मन्दाकिन्याद्याश्च येन तथोक्तं तथा समाधिना ध्यानेन नि-मीलनेन निद्रया वेत्यर्थः रात्रौ पद्मनिमीलनं कविसमयसिद्धम्। समाधिर्नियमे ध्याने निद्रायाञ्च समर्थने इति विश्वः। क्षपिता अतिवाहिता अखिलाः समस्ताः क्षपा रजन्यः येन तथाभूतं

जलजं गतिमेतु मञ्जुलां
दमयन्तीपदनाम्नि जन्मनि ॥ ३९ ॥
सरसीः परिशीलितुं मया
गमिकर्मीकृतनैकनीवृता ।
अतिथित्वमनायि सा दृशोः
सदसत्संशयगोचरोदरी ॥ ४० ॥

त्रियामा क्षणदा क्षपेत्यमरः । अतएव दमयन्त्याः पदमेव चरणमेव नाम यस्मिन् तस्मिन् जन्मनि तद्रूपेणोत्पत्तावित्यर्थः कथं मञ्जुलां मनोज्ञां गतिं दशां गमनञ्च गतिः स्त्रीमार्गदशयोः ज्ञाने यात्राभ्युपाययोरिति मेदिनी । न एतु न प्राप्नोतु ? अपि तु प्राप्तिरुचितैवेत्यर्थः । सम्भावनायां लोट् । अत्र सरःसरितोर्द्वयोरुपादानेन अखिलेति क्षपाविशेषणेन च पद्मस्य बहुजन्मार्जित-तपःफलं दमयन्तीपदत्वलाभ इति तस्याः पदमतीव मनोज्ञमिति किमु वक्तव्यमिति भावः काव्यलिङ्गमलङ्कारः अतिशयोक्तिश्च ॥ ३९ ॥

साम्प्रतं कथं त्वया सा इत्थमवगतेति पृच्छायामाह सरसीरिति । सरसीः सरोवराणि कासारः सरसी सर इत्यमरः । परिशीलितुं परिचेतुं तत्र विहर्त्तुमिति यावत् चुरादिणेरनित्यत्वादण्यन्तप्रयोगः । गमिः गमनं तस्य कर्म्म कर्म्मकारकं तत् गमिकर्म्म अगमिकर्म्म गमिकर्म्म कृताः गमिकर्म्मीकृता अभूततद्भावे च्विप्रत्ययः । नैके अनेके बहवः नञर्थस्य नशब्दस्य सुप्सुपेति समासः । नितरां वर्त्तन्ते जना येषु इति नीवृतः जनपदा येन तथाभूतेन पर्य्यटितनानादेशेनेत्यर्थः न हि वृतीत्यादिना दीर्घः । नीवृज्जनपदो देश इत्यमरः । मया सा च

आवधृत्य दिवोऽपि यौवतैः
नसहाधीतवतीमिमामहम् ।
कतमस्तु विधातुराशये
पतिरस्या वसतीत्यचिन्तयम् ॥ ४१ ॥

असच्च अस्ति नास्ति चेत्यर्थः संशयगोचरं सन्देहास्पदम् उदरं यस्याः तथाभूता अतिकृशोदरीत्यर्थः वासिकोदरेत्यादिना ङीप् । सा दमयन्ती दृशोश्चक्षुषोः अतिथित्वं विषयत्वमिति भावः अनायि नीता प्रापितेत्यर्थः दृष्टेति यावत् नयतेः कर्मणि लुङ् । सदसत्संशयगोचरोदरीत्यस्यानुरूपवर्णनं सन्देहालङ्कार-प्रस्तावे दर्पणकृतोद्धृतं यथा । मध्यं तव कुरङ्गाक्षि ! पयोधर-भरार्दितम् । अस्ति नास्तीति सन्देहः कस्य चित्ते न भासते इति । काव्यलिङ्गमलङ्कारः अतिशयोक्तिश्च ॥ ४० ॥

अवधृत्येति । अहम् इमां दमयन्तीं दिवोऽपि स्वर्गस्यापि युवतीनां समूहाः यौवतानि भिक्षादित्वात् समूहार्थे अण्-प्रत्ययः । तत्रापि अस्य युवतीति स्त्रीप्रत्ययान्तस्यैव प्रकृति-भावेन तद्ग्रहणात् तत्सामर्थ्यादेव भस्याढेत्तद्धित इव पुंवद्-भाव इति वृत्तिकारः । गार्भिणं यौवतं गण इत्यमरः । न सहा-धीतवतीं न सब्रह्मचारिणीमित्यर्थः असदृशीं ततोऽप्यधिकमनो-हारिणीमिति यावत् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः इति वामनः । अवधृत्य निश्चित्य विधातुः प्रजापतेः आशये हृदये अस्याः दमयन्त्याः पतिः कतमः नु ? कतमो वा वसति तिष्ठति इति अचिन्तयं स्वर्गरमणीभ्योऽपि अधिकसुन्दर्य्याः अस्याः कतमो योग्यः पतिर्विधिना अवधारित इति चिन्तित-वानस्मीत्यर्थः । व्यतिरेकालङ्कारः ॥ ४१ ॥

अनुरूपमिमं निरूपयन्
अथ सर्वेष्वपि पूर्वपक्षताम् ।
युवसु व्यपनेतुमक्षमः
त्वयि सिद्धान्तधियं न्यवेशयम् ॥ ४२ ॥

अनया तव रूपसीमया
कृतसंस्कारविबोधनस्य मे ।
चिरमप्यवलोकिताद्य सा
स्मृतिमारूढ़वती शुचिस्मिता ॥ ४३ ॥

अनुरूपमिति। अथेदानीं त्वद्दर्शनावसरे इति भावः रूपस्य सदृशम् अनुरूपं योग्यम् इमं वरं निरूपयन् अयमस्या योग्यः अयं वा इति तस्याः पतित्वेन समालोचयन् सर्वेषु अपि युवसु तरुणेषु पूर्वपक्षतां दूष्यकोटित्वम् अयोग्यरूपामिति भावः व्यपनेतुं निराकर्त्तुम् अक्षमः सन् सर्वे एव पूर्वपक्षतायां स्थिताः न कोऽपि सिद्धान्तकोटिमवलम्बते इति धियेति भावः त्वयि सिद्धान्तधियम् उत्तरपक्षबुद्धिं न्यवेशयं त्वमेवास्याः योग्यः पतिरिति निश्चितवानस्मीत्यर्थः। पर्य्यायोक्तिरलङ्कारः ॥ ४२ ॥

साम्प्रतं तवैव रूपदर्शनेन तामहं स्मृतवानित्याह अनयेति। चिरं बहोः कालात् प्रागित्यर्थः अवलोकितापि दृष्टापि शुचि विशुद्धं शोभनमित्यर्थः स्मितं मन्दहसितं यस्याः तथोक्ता सा दमयन्ती अद्य अनया दृश्यमानयेत्यर्थः तव रूपसीमया सौन्दर्य्यमर्य्यादया सौन्दर्य्योत्कर्षेणेत्यर्थः कृतं जनितं संस्कारस्य प्राक्तनस्य ज्ञानस्य विबोधनम् उद्‌बोधः यस्य तथाभूतस्य मे मम स्मृतिं स्मरणपथम् आरूढ़वती आगतेत्यर्थः। सदृशदर्शनस्य

त्वयि वीर ! विराजते परं
दमयन्तीकिलकिञ्चितं किल ।
तरुणीस्तन एव दीप्यते
मणिहारावलिरामणीयकम् ॥ ४४ ॥

स्मारकत्वात् । अत्र स्मरणालङ्कारः । तथाच दर्पणः । सदृशानुभवाद् वस्तुस्मृतिः स्मरणमुच्यते इति ॥ ४३ ॥

तत् सेयं तवैव योग्येति मे प्रतिभातीत्याह त्वयीति । हे वीर ! दमयन्त्याः किलकिञ्चितं "स्मितशुष्करुदितत्रासक्रोधश्रमादीनाम् । साङ्कर्य्यं किल किञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात्" इत्युक्तलक्षणं कामचेष्टितं त्वयि परं त्वय्येवेत्यर्थः विराजते शोभते खलु निश्चये । तथाहि मणिहारावलेः रत्ननिर्मितहारयष्टेः रामणीयकं रम्यत्वं योपधाद् गुरूपोत्तमाद् वुञ् । तरुण्या युवत्याः स्तने एव न त्वन्यत्रेत्येवकारार्थः दीप्यते राजते । स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति प्रायग्रहणादेकवचनप्रयोगः । अत्र हारकिलकिञ्चितयोरुपमानोपमेयभावेन वाक्यद्वये बिम्बप्रतिबिम्बनात् स्तननृपयोः समानधर्मतोक्तेर्दृष्टान्तालङ्कार इति केचिदाहुस्तन्न समीचीनं धर्मसाम्यस्यैव साधर्म्यत्वात् साम्यन्तु तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वं न त्वैकरूपत्वम् इह तु राजते दीप्यते इत्येतयोरेकार्थतया एकरूपत्वात् तदत्र प्रतिवस्तूपमालङ्कार एव युज्यते तथाचोक्तं दर्पणेन । प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति ॥ ४४ ॥

तव रूपमिदं तया विना
विफलं पुष्पमिवावकेशिनः ।
इयमृद्धधना वृथाऽवनी
स्ववनी सम्प्रवदत्पिकापि का ॥ ४५ ॥

अनयाऽमरकाम्यमानया
सह योगः सुलभस्तु न त्वया ।
घनसंवृतयाऽम्बुदागमे
कुमुदेनेव निशाकरत्विषा ॥ ४६ ॥

तवेति। तवेदं रूपं सौन्दर्य्यं तया दमयन्त्या विना अवकेशिनः वन्ध्यस्य वृक्षस्येति भावः वन्ध्योऽफलोऽवकेशी चेत्यमरः। पुष्पमिव विफलं व्यर्थम्। ऋद्धं प्रवृद्धं धनं यस्याः सा धनपूर्णेत्यर्थः इयम् अवनी पृथिवीराज्यं वृथा विफला, तथा सम्प्रवदन्तः कूजन्तः पिकाः कोकिलाः कोकिलः पिक इत्यपीत्यमरः। यस्यां तादृशी अपि इयं स्ववनी निजोद्यानं ङीप्। का कुत्सिता तुच्छेत्यर्थः। तत्सङ्गे तु सर्वमेवैतत्सफलमिति भावः। किं वितर्के परिप्रश्ने क्षेपे निन्दापराधयोरिति विश्वः। अत्र दमयन्त्या विना सर्वेषां वैफल्येन रम्यतापगमाद् विनोक्तिरलङ्कारः तदुक्तं विनोक्ति यद् विनान्येन नासाध्वन्यदसाधु वेति। तथा च पुष्पमिवेत्युपमायाः संसृष्टिः। सुवनीति पाठे सुवनी शोभनोद्यानमित्यर्थः ॥ ४५ ॥

तवैवं योग्यतायामपि तस्या असौलभ्यमाह अनयेति। अमरैः देवैः इन्द्रादिभिः काम्यमानया अभिलष्यमाणया अनया दमयन्त्या सह योगः सम्मेलनम् अम्बुदानां मेघानाम् आगमे

तदहं विदधे तथा तथा
दमयन्त्याः सविधे तव स्तवम् ।
हृदये निहितस्तया भवान्
अपि नेन्द्रेण यथाऽपनीयते ॥ ४७ ॥
तव सम्मतिमत्र केवलाम्
अधिगन्तुं विगिदं निवेदितम् ।

वर्षाकाले इत्यर्थः निशाकरस्य चन्द्रस्य त्विषा कान्त्या सह योगः कुमुदेन त्वया न सुलभः न सुप्रापः दुर्लभ इत्यर्थः । कुमुदस्य चन्द्रप्रभासङ्गे वर्षासमस्येव तव तया सहयोगे देवानां तदभिलाषस्य प्रतिबन्धकत्वादिति भावः । अत्र तत्सहयोगस्य असौलभ्ये अमरकामनारूपपदार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः । तत्सापेक्षा चेयमुपमेति सङ्कर इति ॥ ४६ ॥

तदत्र क उपाय इत्यताह तदिति । तत्तस्मात् इत्थमस्य कार्य्यस्य सम्प्रतिबन्धत्वादित्यर्थः अहं दमयन्त्याः सविधे समीपे तथा तथा तेन तेन प्रकारेणेत्यर्थः तव स्तवं स्तोत्रं त्वद्गुणकीर्त्तनमिति यावत् स्तवः स्तोत्रं स्तुतिर्नुतिरित्यमरः । विदधे करिष्ये इत्यर्थः भविष्यत् सामीप्ये वर्त्तमानप्रयोगः । यथा येन प्रकारेण तया दमयन्त्या हृदये निहितः दत्तस्थितिरिति भावः भवान् इन्द्रेणापि तत्कामुकेनेति भावः न अपनीयते नापनेतुं शक्यते न निराकर्त्तुं शक्यते इत्यर्थः । इन्द्रादिप्रलोभितापि सा यथा त्वय्येव समासक्ता स्यात् तथा विधास्यामीति पर्य्यवसितोऽर्थः ॥ ४७ ॥

अत्र निवेदनं विफलमपि भवदनुमतिरत्रावश्यकीत्याह

ब्रुवते हि फलेन साधवो
न तु कण्ठेन निजोपयोगिताम् ॥ ४८ ॥
तदिदं विशदं वचोऽमृतं
परिपीयाभ्युदितं द्विजाधिपात् ।
अतितृप्ततया विनिर्ममे
स तदुद्गारमिव स्मितं सितम् ॥ ४९ ॥

तवेति । अत्रास्मिन् कार्य्ये केवलां तव सम्मतिम् आशयम् अनुज्ञां वा अधिगन्तुं लब्धुम् इदं निवेदितं निवेदनं भावे क्तप्रत्ययः । धिक् निन्दामीत्यर्थः धिङ्निर्भर्त्सननिन्दयोरित्यमरः । हि तथाहि साधवः सज्जनाः फलेन फलोत्पादनेनेत्यर्थः निजस्य स्वस्य उपयोगिताम् उपकारितां ब्रुवते कथयन्ति प्रकटयन्तीति यावत् कण्ठेन वागिन्द्रियेणेति यावत् न तु नैव, साधवः प्राक् फलोत्पादनात् वाचा न किमपि प्रकाशयन्ति फलेनैव स्वयोग्यतां दर्शयन्तीति भावः । अत्र परार्द्धवाक्यरूपकारणेन पूर्वार्द्धवाक्यरूपकार्य्यस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः । तदुक्तं दर्पणे । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा च स इति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास इति केचिदुक्तं तन्न समीचीनम् अत्र पूर्वार्द्धपरार्द्धयोः सामान्यविशेषभावाभावादिति सुधीभिर्विभाव्यम् ॥ ४८ ॥

एतदाकर्ण्य नलस्य हर्षातिशयं वर्णयति तदिति । स नलः द्विजाधिपात् पक्षिश्रेष्ठात् चन्द्राच्च दन्तविप्राण्डजा द्विजा इति

परिमृज्य भुजाग्रजन्मना
पतगं कोकनदेन नैषधः ।
मृदु तस्य मुदेऽगिरत् गिरः
प्रियवादामृतकूपकण्ठजाः ॥ ५० ॥

द्विजराजः शशधर इति चामरः अभ्युदितम् अभ्युत्पन्नं विशदं प्रसन्नं निर्मलञ्च तत् पूर्वोक्तम् इदं वच एव अमृतं रूपकसमासः तत् वचोऽमृतं वाक्सुधां परिपीय सादरं श्रुत्वेत्यर्थः आस्वाद्य च अतितृप्ततया अतिशयेन प्रीततया समधिकभोजनेन च तस्य वचोऽमृतस्य उद्गारमिव उद्वमनमिव सितं शुभ्रं स्मितं मन्दहसितं विनिर्ममे कृतवान् माङः कर्त्तरि लिट् । स्मितस्य शैत्यसाम्याद् वागमृतोद्गार उत्प्रेक्ष्यते । अत्र वचो वचनममृतमिवात्याह्लादकत्वादिति उपमितसमास इति केचिदुक्तं तच्चिन्त्यं यत्र सामान्यधर्मो मुख्यतया उपमेये वर्त्तते तत्रैवोपमा यत्र तु उपमाने वर्त्तते तत्र रूपकमिति व्यवस्थितिः अत्र तु परिपीयेति पानार्थस्यैव अमृतरूपोपमाने मुख्यतया वर्त्तनाद् रूपकमेवेति सुधीभिर्विभाव्यम् ॥ ४९ ॥

परिमृज्येति । निषधानां जनपदभेदानां राजा नैषधः नलः जनपदशब्दात् क्षत्रियादञ् । भुजाग्रात् जन्म यस्य तेन भुजाग्रजन्मना कोकनदेन रक्तोत्पलेन पाणिशोणपङ्कजेनेत्यर्थः रक्तोत्पलं कोकनदमित्यमरः । पतगं पक्षिणं हंसं परिमृज्य परामृश्य तस्य पतगस्य मुदे प्रीत्यर्थं प्रियवादाः प्रियवचनानि एव अमृतानि तेषां कूपः जलाधारविशेष एव कण्ठः वागिन्द्रियमित्यर्थः तस्मात् जायन्ते इति तज्जाः तन्निःसृता इत्यर्थः गिरः वाचः मृदु मन्दं यथा तथा अगिरत् उच्चचार वागमृतं

न तुलाविषये तवाकृतिः
न वचो वर्त्मनि ते सुशीलता।
त्वदुदाहरणाऽऽकृतौ गुणा
इति सामुद्रकसारमुद्रणा॥ ५१॥

दृष्टवानित्यर्थः उवाचेति यावत्। अत्र भुजाग्रजन्मना कोकनदेनेति व्यस्तरूपकं प्रियवादामृतकूपकण्ठजा इति समस्तरूपकमिति द्वयोः संसृष्टिः। यच्चात्र कैश्चिदभियुक्ततरैः भुजाग्रजन्मना कोकनदेनेति विषयस्यानिगरणेन विषयिणः कोकनदस्योपनिबन्धनादतिशयोक्तिरित्युक्त्वा विषयस्यानुपादानाद् विषय्युपनिबध्यते यत्र सातिशयोक्तिः स्यात् कविप्रौढोक्तिसम्मतेति प्रमाणमुद्धृतं तन्न सङ्गच्छते विषयस्य भुजाग्रजन्मनेत्यस्यानिगरणादिति स्वयमुक्त्या विषयस्यानुपादानादिति लक्षणांशस्य व्याहतत्वात् विषयस्य निगरणेनेति पाठोऽपि अयुक्तः भुजाग्रजन्मनेत्यनेनैव पाणिरूपविषयस्योपादानात्। वस्तुतस्तु विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः। अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते इत्युक्तेः रूपकातिशयोक्त्योरुभयोरेव विषयस्य निगीर्णत्वमस्ति परं यत्र विषयानुपपत्तिस्तत्रातिशयोक्तिः सर्वसम्मता, यत्र तु विषयस्य उपादानं तत्र विषयिणः सविशेषणत्वे अतिशयोक्तिः यथा राजा अपरः पाकशासन इति, विशेषणाभावे तु रूपकमेव यथा राजा पाकशासन इति व्यवस्थितिः सुधीभिर्विभाव्या॥ ५०॥

नेति। तव आकृतिः आकारः तुला सादृश्यमेव विषयः स्थानं यद्वा तुलाया विषयः स्थानम् उपमेयतेत्यर्थः तत्र न वर्त्तते इति शेषः अनुपमा तवाकृतिरिति भावः। ते तव सुशीलता

न सुवर्णमयी तनुः परं
ननु किं वागपि तावकी तथा ।
न परं पथि पक्षपातिता-
ऽनवलम्बे किमु मादृशेऽपि सा ॥ ५२ ॥

सुचरित्रतेत्यर्थः सुजनतेति यावत् वचोवर्त्मनि वाक्पथे न वर्त्तते इति शेषः वक्तुं न शक्यते इत्यर्थः । आकृतौ गुणाः यत्राकृतिस्तत्र गुणा वसन्तीति भावः इति सामुद्रकाणां शुभाशुभलक्षणप्रतिपादकशास्त्राणां सारः तत्त्वं तस्य मुद्रणा व्यवस्थितिः त्वमेव उदाहरणं यस्या सा त्वय्येव आकृतिसौशील्ययोः एकत्रावस्थितिदर्शनादिति भावः । अत्र पूर्ववाक्ययोः उत्तरवाक्यहेतुकत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदीरितमिति लक्षणात् ॥ ५१ ॥

नेति । तवेयं तावकी युष्मदस्मदोरन्यतरस्यां खञ् चेति चकारादण्प्रत्यये ङीप् । तवकममकावेकवचन इति तवकादेशः । तनुः शरीरं परं केवलं त्वन्मूर्त्तिरेवेत्यर्थः न सुवर्णमयी न काञ्चनमयी अपि तु वागपि वचनमपि तथा सुवर्णमयी शोभनाक्षरेत्यर्थः । मधुरेति यावत् । तथा अनवलम्बे नास्ति अवलम्बः अवलम्बनं यत्र तादृशे निराश्रये इत्यर्थः पथि आकाशे इत्यर्थः परं केवलं पक्षाभ्यां पततीति पक्षपाती तस्य भावः पक्षपातिता पक्षाभ्यामुड्डयनशीलतेत्यर्थः किमु किं चेत्यर्थः निपातनानामनेकार्थत्वात् तावकीत्यनुषङ्गः । न, केवलं आकाशाश्रयणं तव नेत्यर्थः यतः मादृशे मद्विधे अनवलम्बे निराश्रये दमयन्तीलाभं प्रति अनन्योपाये इति यावत् सा पक्षपातिता स्नेहानुवर्त्तित्वं अस्तीति शेषः । अत्र तनुवाचोः प्रस्तुताप्रस्तुतयोः

भृशतापभृता मया भवान्
मरुदासादि तुषारसारवान्।
धनिनामितरः सतां पुनः
गुणवत्सन्निधिरेव सन्निधिः॥ ५३॥
शतशः श्रुतिमागतैव सा
त्रिजगन्मोहमहौषधिर्मम।

सुवर्णमयीति अनवलम्बे पक्षपातितेति च द्वयोः शब्दश्लेषयोः संसृष्ट्या तावकी तनुरिव वाक् सुवर्णमयीति आकाशे पक्षपातितेव मयि पक्षपातितेत्युपमाद्वयं व्यज्यते इति अलङ्कारेणालङ्कारध्वनिः॥ ५२॥

भृशेति। भृशमत्यर्थं तापं दमयन्त्यलाभजनितं सन्तापम् इत्यर्थः तापस्तु विरहज्वर इति दर्पणः बिभर्त्तीति तद्भृता मया भवान् तुषारैः शिशिरैः सारः उत्कर्षः शैत्यमिति यावत् स विद्यते अस्येति तथोक्तः सुशीतल इत्यर्थः मरुत् वायुः सन्तापहरः त्वम् इति भावः आसादि प्राप्त इत्यर्थः आङ्पूर्वात् सदेः कर्म्मणि लुङ्। तथाहि धनिनां धनवतां कुवेरादीनामिति भावः इतरः अन्यः शङ्खपद्मादिरित्यर्थः संश्चासौ निधिश्चेति सन्निधिः उत्कृष्टो निधिः निधिर्ना शेवधिर्भेदाः शङ्खपद्मादयो निधेरित्यमरः। सतां पुनः साधूनान्तु गुणवतां विदुषां सन्निधिः सान्निध्यं सङ्ग इत्यर्थः सन्निधिः महारत्नमित्यर्थः सन्तापहरत्वात् सत्सङ्गमेव सन्तः कामयन्ते इति भावः। सन्तापहरः शीतमरुदिव साधोस्तव सङ्गः मम दुःखहर इति वाक्ययोर्बिम्बप्रतिबिम्बभावात् दृष्टान्तालङ्कारः उक्तञ्च दर्पणे। दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिबिम्बनमिति॥ ५३॥

अधुना तव शंसितेन तु
स्वदृशैवाधिगतामवैमि ताम् ॥ ५४ ॥
अखिलं विदुषामनाविलं
सुहृदा च स्वहृदा च पश्यताम् ।
सविधेऽपि न सूक्ष्मसाक्षिणी
वदनालङ्कृतिमात्रमक्षिणी ॥ ५५ ॥

शतश इति। त्रयाणां जगतां समाहारः त्रिजगत् त्रिलोकीत्यर्थः तस्य मोहे सम्मोहने महती ओषधिः महौषधिः त्रिजगत्सम्मोहनसाधनं महदौषधमिति यावत् सा दमयन्ती शतशः शतं शतं वारान् पुनः पुनरिति भावः मम श्रुतिं श्रवणपथम् आगतैव मया बहुशः श्रुतेत्यर्थः। अधुना तु साम्प्रतं किन्तु तव शंसितेन वचनेन तां दमयन्तीं स्वदृशा निजदृष्ट्यैव अधिगतां प्राप्तां साक्षात्कृतामिति यावत् अवैमि अवगच्छामि मन्ये इत्यर्थः। साधोस्तव वाक्यप्रामाण्यात् तत्र मे सङ्केतग्रहो जातः उक्तञ्च शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च। सान्निध्यतः सिद्धपदस्य वृद्धा वाक्यस्य शेषाद् विवृतेर्वदन्तीति। अत्र त्रिजगन्मोहमहौषधिरिति रूपकालङ्कारेण दमयन्ती जगत्सुन्दरीति वस्तु व्यज्यते इति अलङ्कारेण वस्तु ध्वनिः ॥ ५४ ॥

आप्तवाक्यस्य स्वदृष्टेरपि समधिकं प्रामाण्यमित्याह अखिलमिति। सुहृदा च मित्रेण च आप्तेनेति भावः स्वहृदा निजमनसा च अखिलं समस्तं वस्तु अनाविलं निर्मलमित्यर्थः निःसंशयमिति यावत् पश्यताम् अवलोकयतां शब्देन अनु-

अमितं मधु तत्कथा मम
श्रवणप्राघुणिकीकृता जनैः ।
मदनानलबोधनेऽभवत्
खग ! धाय्या धिगधैर्य्यधारिणः ॥ ५६ ॥

मानेन च निर्णयतामिति यावत् अक्षिणी चक्षुषी सविधेऽपि सन्निधावपि न सूक्ष्माणां परमाण्वादीनां साक्षिणी साक्षात्-द्रष्टृणी न तथाविधक्षुद्रवस्तुग्राहिणी इत्यर्थः दूरे किमुतेत्यपि-शब्दार्थः। सुप्सुपेति समासः। अतएव वदनस्य अलङ्कृति-मात्रम् अलङ्कार एवेत्यर्थः। स्वचक्षुषा दर्शनस्य दूरस्थस्य सूक्ष्मार्थस्य च दर्शनानुपयोगित्वात् आप्तस्य मितस्य वचन-मेवाधिकं प्रमाणमिति भावः। चद्वयमुभयोरपि स्वतः प्राधान्य-सूचकम्। काव्यलिङ्गमलङ्कारः ॥ ५५ ॥

अमितमिति। हे खग ! पक्षिन् ! हंस ! जनैः लोकैः विदर्भादागतैरिति भावः वन्द्यादिभिर्वा श्रवणस्य श्रोत्रेन्द्रियस्य अप्राघुणिकः प्राघुणिकः कृतः प्राघुणिकीकृता अतिथीकृतेत्यर्थः श्रवणविषयीकृतेति यावत् श्राविंतेति भावः आवेशिकः प्राघुणिक आगन्तुरतिथिस्तथेति हलायुधः। अमितम् अपरि-मितं मधु अतिमनोहारिणीत्यर्थः तस्याः दमयन्त्याः कथा वार्त्ता तद्गुणस्तुतिरिति यावत् अधैर्य्यधारिणः तद्विरहाद-त्यन्ताधीरस्य मम मदनानलबोधने कामाग्निसन्दीपने धाय्या सामिधेनी अग्निसमिन्धनमन्त्रभूता ऋगित्यर्थः ऋक्सामि-धेनी धाय्या च या स्यादग्निसमिन्धने इत्यमरः अभवत् अतीव मम कामोद्दीपनी अभूदित्यर्थः। पाय्यधाय्यसान्नाय्येत्यादिना निपातः। धिक् एतादृशीमधीरतां निन्दामीत्यर्थः धिक्-

विषमो मलयाहिमण्डली-
विषफूत्कारमयो मयोहितः।
वत कालकलत्रदिग्भवः
पवनस्तद्विरहानलैधसा ॥ ५७ ॥

निर्भर्त्सननिन्दयोरित्यमरः। अत्र प्रकृतमदनानलोद्दीपने तत्-कथाया उपयोगित्वात् परिणामोऽलङ्कारः। आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इत्यलङ्कारसर्वस्वकारः। दर्पणेनाप्युक्तं विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि। परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधेति। यद्वा अधैर्य्यधारिण इति ममेत्यस्य विशेषणमकृत्वा अधैर्य्यधारिणः जनान् अस्मादृशान् धिगित्यन्वयः ॥ ५६ ॥

विषम इति। तस्या दमयन्त्या यो विरहानलः विच्छेदाग्निः तस्य एधः काष्ठं तेन तद्भूतेनेत्यर्थः तद्दाह्येनेति भावः काष्ठं दार्विन्धनन्त्वेध इत्यमरः मया वत खेदे विषमः प्रतिकूलः दुर्विषह इति यावत् कालस्य यमस्य कलत्रं स्त्री कालकलत्रं या दिक् दक्षिणा दिगित्यर्थः तद्भवः तदुत्पन्न इत्यर्थः पवनः दक्षिणमारुत इत्यर्थः मलयस्य मलयाचलस्य मलये वा या अहिमण्डली आशीविषसंहतिः तस्या विषफूत्कारमयः विषाक्तफूत्कारात्मकः ऊहितः तर्कितः तादृूप्येण सम्भावित इत्यर्थः। फूत्कारेणैव काष्ठान्तर्गतोऽग्निरधिकं दीप्यते इति लोकप्रसिद्धिः तस्य च विशेषतो यमकलत्रभवत्वात् मम मृत्युशङ्केति भावः। अत्र विरहे अनलारोपः मयेत्यत्र तद्दाह्यदारावारोपश्चेति द्वाभ्यां रूपकाभ्यामनुप्राणिता दक्षिणमारुतस्य विषफूत्कारमयत्वोत्प्रेक्षा इत्येषामङ्गाङ्गिभावः सङ्करः ॥ ५७ ॥

प्रतिमासमसौ निशापतिः
खग! सङ्गच्छति यद्दिनाधिपम्।
किमु तीव्रतरैस्ततः करैः
मम दाहाय स धैर्य्यतस्करैः? ॥ ५८ ॥
कुसुमानि यदि स्मरेषवो
न तु वज्रं विषवल्लिजानि तत्।
हृदयं यदमूमुहन्नमूः
मम यच्चातितमामतीतपन् ॥ ५९ ॥

प्रतिमासमिति। हे खग! हंस! असौ निशापतिः चन्द्रः ओषधीशो निशापतिरित्यमरः। मासि मासि प्रतिमासं प्रतिदर्शमिति भावः वीप्सायामव्ययीभावः। दिनाधिपं दिनकरं सूर्य्यमित्यर्थः यत् सङ्गच्छति सम्प्राप्नोति समसूत्रपातन्यायेन उपर्य्यधोभावावस्थानेन एकस्मिन् राशौ तिष्ठतीति भावः ततः सङ्गमनादित्यर्थः स निशापतिः तीव्रतरैः अतितीक्ष्णैः अतएव धैर्य्यतस्करैः धैर्य्यहारिभिरित्यर्थः करैः अंशुभिः बलिहस्तांशवः करा इत्यमरः स्वतः शीतलैरपि सूर्य्यसङ्गेन अग्निसमैरिति भावः मम दाहाय दहनार्थं किमु संङ्गच्छतीत्यनेनान्वयः। किमु शब्द उत्प्रेक्षायाम्। अत्र सङ्गमनस्य दाहार्थत्वेन उत्प्रेक्षणात् फलोत्प्रेक्षेयमिति ॥ ५८ ॥

कुसुमानीति। स्मरेषवः स्मरस्य इषवः शराणि कुसुमानि पुष्पाणि यदि तु वज्रं न, कुलिशं नैवेत्यर्थः सद्यः प्राणहरत्वाभावादिति भावः तत्तथापि विषवल्लिजानि विषलतोत्पन्नानि यद् यस्मात् अमूः स्मरेषवः पत्नी रोप इषुर्द्वयोरिति स्त्रीत्वम्।

तदिहानवधौ निमज्जतः
मम कन्दर्पशराधिनीरधौ ।
भव पोत इवावलम्बनं
विधिनाकस्मिकसृष्टसन्निधिः ॥ ६० ॥
अथ वा भवतः प्रवर्त्तना
न कथं पिष्टमियं पिनष्टि नः ।

मम हृदयम् अमूमुहन् मोहमनयन् यच्च अतितमाम् अतिमात्रम् अतीतपन् सन्तापमनयन् । मुह्यतेस्तपतेश्च णौ चङ् । अतितमामित्यव्ययाच्च तमाम्प्रत्ययः । मोहतापयोर्विषकार्य्यत्वाद् स्मरेषूणां विषवल्लिजत्वमुत्प्रेक्ष्यते इत्युत्प्रेक्षालङ्कारेण दमयन्तीविरहस्य दुर्विषहत्वरूपं वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥५८

इत्थमस्यामनुरागस्यौत्कर्ष्यं प्रकटय्य तत्प्राप्तौ साहायकं प्रस्तौति तदिति । तत्तस्मात् इह अस्मिन् नास्ति अवधिर्यस्य तादृशे अपारे इत्यर्थः कन्दर्पशरैः कामसायकैः य आधिः सन्तापः पुंस्याधिर्मानसी व्यथेत्यमरः । स एव नीरधिः समुद्रः तस्मिन् निमज्जतः अन्तर्गच्छतः निमग्नीभवतः इति यावत् । मम विधिना दैवेन विधिर्विधाने दैवे चेत्यमरः । अकस्माद्भवम् आकस्मिकम् अध्यात्मादित्वात् ठक् । अव्ययानान्तमात्रे टिलोपः । तत् यथा तथा सृष्टः विहितः सन्निधिः सान्निध्यं यस्य तथाभूतः दैवादागत इत्यर्थः त्वं पोत इव [जाहाज् इति भाषा प्रसिद्धः] यानपात्रमिव यानपात्रन्तु पोतः स्यादित्यमरः । अवलम्बनम् आश्रयः सहाय इत्यर्थः भव । अन्यस्यापि यथा समुद्रनिमग्नस्य कदाचित् दैवोपस्थितः पोतादिरवलम्बनं भवतीति भावः । अत्रोपमालङ्कारः ॥ ६० ॥

स्वत एव सतां परार्थता
ग्रहणानां हि यथा यथार्थता ॥ ६१ ॥
तव वर्त्मनि वर्त्ततां शिवं
पुनरस्तु त्वरितं समागमः।

स्वतःपरार्थप्रवृत्तं जनं प्रति वचनं निरर्थकमित्युक्ता समधिकं प्रवर्त्तयति। अथवेति। अथवा पक्षान्तरे नोऽस्माकं सम्बन्धिनी उभयप्राप्तौ कर्म्मणीति नियमात् कर्त्तरि क्रद्योगेऽत्र षष्ठी-निषेधेऽपि शेषे षष्ठी, पर्य्यवसानात् कर्त्तर्थलाभः। भवतः तव उभयप्राप्तौ कर्म्मणि षष्ठी। प्रवर्त्तना इष्टार्थव्यापारे प्रेरणा नियोग इत्यर्थः न्यासश्रन्थो युच्। कथं पिष्टं न पिनष्टि अपितु पिनष्येवेत्यर्थः। पिष्टस्य पेषणमिव भवत्प्रेरणा पुनरुक्तेति भावः। हि यस्मात् ग्रहणानां ज्ञानानां यथार्थता तात्त्विकत्वं यथा, प्रामाण्यमिवेत्यर्थः ग्राह्यतां याता मनीषा स्वतएव प्रमाणमिति मीमांसकाः। सतां सत्पुरुषाणां परार्थता परार्थप्रवृत्तित्वं स्वतएव आत्मन एव न तु परत इत्येवकारार्थः। यद्वा गृह्यन्ते ज्ञायन्ते विषया एभिरिति व्युत्पत्त्या ग्रहणानीन्द्रियाणि करणे ल्युट्। तेषां यथार्थता अर्थाननतिक्रम्य वर्त्तित्वमित्यर्थः स्वस्वविषयग्राहित्वमिति यावत् यथा स्वतएव अन्यनिरपेक्षेणेवेत्यर्थः। एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये इत्यादि नीतिशास्त्रमत्र प्रमाणमिति भावः। अत्र सामान्येन उपमासंसृष्टेन उत्तरार्द्धवाक्येन पूर्वार्द्धवाक्यरूपविशेषसमर्थनादर्थान्तरन्यासः। तल्लक्षणमुक्तं प्राक् ॥ ६१ ॥

साम्प्रतं साशीर्वचनमाह तवेति। हे वयः! पक्षिन्! हंस! वर्त्मनि पथि तव शिवं मङ्गलं वर्त्ततां भवतु। त्वरितं शीघ्रं

अपि साधय साधयेप्सितं
स्मरणीयाः समये वयं वयः ! ॥ ६२ ॥
इति तं स विसृज्य धैर्य्यवान्
नृपतिः सूनृतवाग्बृहस्पतिः ।
अविशद् वनवेश्म विस्मितः
श्रुतिलग्नैः कलहंसशंसितैः ॥ ६३ ॥

पुनः समागमः सम्मेलनं मया सह तवेत्यनुषङ्गः । अपि निश्चये ईप्सितम् इष्टं दमयन्तीलाभरूपं साधय साधय सम्पादय सम्पादय यद्वा साधय गच्छ प्रायेण ण्यन्तकः साधिर्गमे स्थाने प्रयुज्यते इति दर्पणः । यच्च केचिदुक्तं साधय गच्छ साधय निष्पादय इति केचिद् वदन्ति तन्न समीचीनं नाटकादावेव णिजन्तसाधेर्गमनार्थकतया प्रयोगात् तथा च नाट्योक्तिमधिकृत्य प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते इति तच्चिन्त्यं नाटकादावेत्यादिपदोपादानेन काव्येऽपि तत्प्रयोगस्य स्वयमभिहितत्वात् नाट्योक्त्यधिकारे दर्पणकारेणैतदुल्लेखस्य प्रायिकत्वे प्रायेणेत्यनेनैव प्रतिपादितत्वाच्चेति । समये दमयन्तीलाभं प्रति विघ्नोपस्थिताविति भावः वयं स्मरणीया वाच्याः यथाहमन्यमुपायं कर्त्तुं शक्नोमीति भावः । यद्वा समये कार्य्यकाले वयं स्मरणीयाः दमयन्तीसमीपे गत्वा मदिष्टं सम्पादयेत्यर्थः । अनुप्रासालङ्कारः ॥ ६२ ॥

इत्थं हंसं प्रस्थाप्य राज्ञो वनप्रवेशमाह इतीति । धैर्य्यं विद्यतेऽस्येति धैर्य्यवान् दमयन्तीलाभं प्रति उपायसद्भावात् लब्धधैर्य्य इत्यर्थः सूनृतवाक्षु सत्यप्रियेषु वचनेषु बृहस्पतिः महत् प्रगल्भवागित्यर्थः सूनृतञ्च प्रिये सत्ये इत्यमरः स नृपति-

अथ भीमसुतावलोकनैः
सफलं कर्त्तुमहस्तदेव सः ।
क्षितिमण्डलमण्डनायितं
नगरं कुण्डिनमण्डजो ययौ ॥ ६४ ॥

प्रथमं पथि लोचनातिथिं

नलः इति अनेन प्रकारेण तं हंसं विसृज्य प्रस्थाप्य श्रुतिलग्नैः श्रवणेन्द्रियगतैः कलहंसस्य राजहंसस्य तस्येति भावः शंसितैः भाषितैः विस्मितः हंसोऽपि एवं वक्तीति चमत्कृतः सन्नित्यर्थः वनवेश्म उद्यानस्थं विलासभवनमित्यर्थः अविशत् प्रविष्टवान् । सूनृतवाग् वृहस्पतिरिति रूपकेण राजवचसा हंसस्यापि विस्मितत्वमिति सूच्यते । रूपकालङ्कारः ॥ ६३ ॥

अथास्य हंसस्य यात्रामाह अथेति । अथ नलाशीर्वचनानन्तरं सः अण्डजः पक्षी हंसः पक्षिसर्पादयोऽण्डजा इति मनुः । तदेव अहः दिनम् एवकारेणाविलम्बसूचनादस्य परमोपकारित्वं व्यज्यते । भीमसूताया दमयन्त्याः अवलोकनैः बहुवचनेन बहुक्षणदर्शनसुखानुभवः सूचितः पुनः पुनर्दर्शनैरिति यावत् सफलं सार्थकं कर्त्तुं क्षितिमण्डलेषु पृथ्वीतलेषु मण्डनमिव आचरतीति तथोक्तम् अलङ्कारभूतमित्यर्थः सौराज्यात् दमयन्त्यधिष्ठितत्वादतिरमणीयमिति यावत् कुण्डिनं तदाख्यं नगरं ययौ गतवान् । अत्र क्षितिमण्डलमण्डनायितमिति कर्त्तुरुपमानात् क्यङ्विधानात् उपमालङ्कारः । आधारकर्म्मविहिते द्विविधे च क्यचि क्यङि । कर्म्मकर्त्तोर्णमूलि च स्यादेवं पञ्चधा तत इत्युपमाभेदस्य दर्पणकारेणाभिहितत्वात् अनुप्रासालङ्कारश्च ॥ ६४ ॥

पथिकप्रार्थितसिद्धिशंसिनम् ।
कलसं जलसंभृतं पुरः
कलहंसः कलयाम्बभूव सः ॥ ६५ ॥
अवलम्ब्य दिदृक्षयाम्बरे
क्षणमाश्चर्य्यरसालसं गतम् ।
स विलासवनेऽवनीभृतः
फलमैक्षिष्ट रसालसंगतम् ॥ ६६ ॥

अथ त्रिभिः श्लोकैरस्य यात्रायाः शुभलक्षणमाह प्रथममित्यादिभिः । स कलहंसः राजहंसः प्रथममादौ पथि मार्गे पथिकानाम् अध्वगानां प्रार्थितस्य इष्टस्य सिद्धिं साफल्यं शंसति सूचयतीति तथोक्तं जलसम्भृतं जलपूर्णं कलसं कुम्भं पुरः अग्रतः लोचनयोः चक्षुषोरतिथिं दृष्टिगोचरमित्यर्थः कलयाम्बभूव कृतवान् पूर्णकुम्भं दृष्टवानित्यर्थः । अतिथिशब्देनाकस्मात् फलस्य उपस्थितिः तया च फलसिद्धौ सम्यगाश्वासः सूचितः । अनुप्रासालङ्कारः ॥ ६५ ॥

अवलम्ब्येति । स हंसः दिदृक्षया गन्तव्यपथदर्शनेच्छयेत्यर्थः क्षणम् अल्पकालम् आश्चर्य्यरसेन अद्भुतभावेन अलसं मन्थरं दर्शकानामद्भुतरसोद्बोधकमिति भावः गतं गमनम् अवलम्ब्य अवनीभृतः भूपतेः नलस्य विलासवने क्रीड़ोद्याने रसालेन चूततरुणा आम्रश्चूतो रसाल इत्यमरः सङ्गतं सम्बद्धं रसालतरुस्थितं न तु तस्मात् पतितमिति भावः फलम् ऐक्षिष्ट ददर्श यात्रायां फलदर्शनस्य विशेषतश्चूतफलदर्शनस्य सुनिमित्तत्वम् । यमकालङ्कारः ॥ ६६ ॥

नभसः कलभैरुपासितं
जलदैर्भूरितरक्षुपन्नगम् ।
स ददर्श पतङ्गपुङ्गवो
विटपच्छन्नतरक्षुपन्नगम् ॥ ६७ ॥

स ययौ धुतपक्षतिः क्षणं
क्षणमूर्द्धायनदुर्विभावनः ।
विततीकृतनिश्चलच्छदः
क्षणमालोककदत्तकौतुकः ॥ ६८ ॥

नभस इति । पुमान् गौः वृषभः विशेषणसमासः गोरतद्धित लुगिति समासान्तष्टच् । पतङ्गः पुङ्गव इव पतङ्गपुङ्गवः उपमितसमासः पक्षिश्रेष्ठः स हंसः नभसः आकाशस्य कलभैः करिशावकैः कलभः करिशावक इत्यमरः गगनचरकरिपोतकल्पैरिति यावत् जलदैः मेघैः उपासितं सेवितम् आकीर्णमिति यावत् भूरयः बहवः तरक्षवः मृगादनाः व्याघ्रविशेषा इत्यर्थः तरक्षुस्तु मृगादन इत्यमरः पन्नगाः सर्पाः यत्र तं तथा विटपैः शाखाविस्तारैः विस्तारो विटपोऽस्त्रियामित्यमरः। छन्नतराः तिरोहिताः अतिशयेन आकीर्णा इत्यर्थः क्षुपाः ह्रस्वशाखा ह्रस्वशाखाशिफः क्षुप इत्यमरः यत्र तं यद्वा भूरितराः क्षुपा यत्र तं तथा विटपैः शाखाभिः छन्नाः तरक्षवः पन्नगाश्च यत्र तं नगं पर्वतं ददर्श अवलोकितवान् । पर्वतदर्शनञ्च सुनिमित्तमिति निमित्तशास्त्रविदः यमकालङ्कारः रूपकालङ्कारश्च ॥६७॥

स इति । स हंसः क्षणं प्रथममिति भावः धुता कम्पिता पक्षतिः पक्षमूलं स्त्री पक्षतिः पक्षमूलमित्यमरः येन तथोक्तः

तनुदीधितिधारया रयाद्
गतया लोकविलोकनामसौ ।
छदहेम कषन्निवालसत्
कषपाषाणनिभे नभस्थले ॥ ६९ ॥

क्षणं ततःपरमिति भावः ऊर्द्ध्वायमेन ऊर्ध्वगमनेन दुर्विभावनः विभावयितुमशक्य इत्यर्थः दुर्लक्ष्य इति यावत् तथा क्षणं तदनन्तरमित्यर्थः विततीकृतौ विस्तारं नीतावित्यर्थः निश्चलौ निष्पन्दौ छदौ पक्षौ येन गरुत्पक्षच्छदा इत्यमरः तथाभूतः अतएव आलोककेभ्यः दर्शकेभ्यः दत्तं जनितमिति भावः कौतुकं दर्शनोत्सुकत्वमिति यावत् येन तथोक्तः सन् गतवान् । पक्षिणामयमेव स्वभाव इति स्वभावोक्तिरलङ्कारः उक्तञ्च स्वभावोक्तिरसौ चारु यथावद् वस्तुवर्णनमिति ॥ ६८ ॥

तन्विति । असौ हंसः रयात् वेगात् हेतोः रंहस्तरसौतु रयः स्यद इत्यमरः । जातयेति शेषः लोकानां परीक्षकाणाञ्च विलोकनां दर्शनं गतया प्राप्तया कौतुकात् वर्णपरीक्षार्थञ्च दृश्यमानयेत्यर्थः तनोः शरीरस्य दीधितयः मयूखाः तासां धारा रेखा तया यद्वा तनुरल्पा या दीधितिधारा किरणरेखा तया निमित्तेन कषपाषाणनिभे कष्टिप्रस्तरसदृशे श्यामवद् भासमाने इति भावः नभस्थले इत्यत्र नभस्तले इति वा पाठः छदहेम पक्षस्वर्णं कषन्निव उत्कर्षापकर्षपरीक्षणार्थं घर्षन्निव अलसत् रराज लोके च निकषोपले सुवर्णं कषतीति प्रसिद्धिः । अत्र रयवशात् सञ्जाततनुधारायां सुवर्णकषणरेखात्वेनोत्प्रेक्षणात् उत्प्रेक्षालङ्कारः तदुक्तं दर्पणे । भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति ॥ ६९ ॥

विनमद्भिरधःस्थितैः खगैः
झटिति श्येननिपातशङ्किभिः।
निरैक्षि दृशैकयोपरि
सौङ्कारिपतत्रपद्धतिः॥ ७०॥

ददृशे न जनेन यन्नसौ
भुवि तच्छायमवेत्य तत्क्षणात्।
दिवि दिक्षु वितीर्णचक्षुषा
पृथुवेगद्रुतमुक्तदृक्पथः॥ ७१॥

विलसद्भिरिति। स्यदेन वेगेन साङ्कारिणी सामिति शब्दं कुर्वतीत्यर्थः पतत्राणां पक्षाणां पद्धतिः पङ्क्तिः यस्य तथोक्तः सः हंसः झटिति सहसा श्येनस्य हिंस्रपक्षिविशेषस्य निपातं स्वस्योपरि निपतनमित्यर्थः शङ्कन्ते इति तैः अतएव विनमद्भिः विशेषेण अधोगच्छद्भिरित्यर्थः अधःस्थितैः निम्नदेशवर्त्तिभिः खे आकाशे गच्छन्तीति खगाः पक्षिणः तैः एकया सम्यग्दर्शने शङ्कितत्वात् अद्वितीयया दृशा दृष्ट्या चक्षुषा इति यावत्। उपरि ऊर्द्ध्वदेशे निरैक्षि निरीक्षितः दृष्ट इत्यर्थः कर्म्मणि लुङ्। अयञ्च पक्षिणां स्वभाव इति स्वभावोक्तिरलङ्कारः॥ ७०॥

ददृश इति। भुवि भूतले तस्य हंसस्य छाया तच्छायं विभाषेत्यादिना नपुंसकत्वम्। अवेत्य दृष्ट्वा जनेन तत्क्षणात् दिवि आकाशे दिक्षु च वितीर्णे दत्ते चक्षुषी येन तथाभूतेन छाया पतिता कस्येति दर्शनार्थं व्यापारितदृष्टिनेत्यर्थः वितीर्णचक्षुषेति पाठान्तरम्। यन् गच्छन् इणो लटः शत्रादेशः असौ हंसः पृथुना महता वेगेन द्रुतं शीघ्रं मुक्तः त्यक्तः अति-

न वनं पथि शिश्रियेऽमुना
क्वचिदप्युच्चतरद्रुचारुतम् ।
न सगोत्रजमन्ववादि वा
गतिवेगप्रसरद्रुचा रुतम् ॥ ७२ ॥

अथ भीमभुजेन पालिता
नगरी मञ्जुरसौ धराजिता ।
पतगस्य जगाम दृक्पथं
हरशैलोपमसौधराजिता ॥ ७३ ॥

क्रान्त इत्यर्थः दृक्पथः दृष्टिमार्गः येन तथाभूतः अतएव न ददृशे न दृष्टः। अयञ्च पक्षिस्वभाव इति स्वभावोक्तिः ॥ ७१ ॥

नेति। गतिवेगेन गमनजवेन प्रसरन्ती प्रसर्पन्ती रुक् प्रभा यस्य तेन अमुना हंसेन पथि मार्गे क्वचिदपि उच्चतरा महती द्रूणां वृक्षाणां पलाशि द्रुद्रुमागमा इत्यमरः, चारुता रम्यता यस्मिन् यद्वा उच्चतराणां द्रूणां चारुता यस्मिन् तथाभूतं वनं न शिश्रिये न आश्रितं तथा सगोत्रजं स्ववंशीयपक्षिजनितं रुतं रवः कूजितमित्यर्थः न वा अन्ववादि नानूदितञ्चेत्यर्थः। कार्य्ये त्वराधिक्यात् पथि श्रमापनोदनेन बन्धुजनसम्भाषणार्थकृतानुवादेन च विलम्बो न कृत इति भावः यमकालङ्कारः ॥ ७२ ॥

अथ अस्य कुण्डिनपुरदर्शनमाह, अथेति। अथ अनन्तरं धरां पृथिवीं जितवानिति धराजित् तेन भीमस्य राज्ञः भुजः बाहुः भीमभुजः तेन यद्वा भीमौ शत्रुभीषणौ भुजौ यस्य तथाविधेन धराजिता पृथिवीजयिना भीमनरेन्द्रेणेत्यर्थः

दयितं प्रति यत्र सन्तता
रतिहासा इव रेजिरे भुवः ।
स्फटिकोपलविग्रहा गृहाः
शशभृद्भित्तनिरङ्कभित्तयः ॥ ७४ ॥

सत्सुद्विषेत्यादिना क्विपि तुग् । पालिता रचिता हरशैलः कैलासगिरिः तस्येव उपमा सादृश्यं येषां तथाविधैः सौधैः सुधाधवलैः राजभवनैरित्यर्थः सौधोऽस्त्री राजसदनमित्यमरः राजिता शोभिता हिमशैलोपमसौधराजितेति पाठान्तरं सुगमम् । मञ्जुः मनोहारिणी असौ पूर्वोक्ता नगरी कुण्डिनाख्या पुरी पतगस्य हंसस्य दृक्पथं दृष्टिमार्गं जगाम स तां ददर्शेत्यर्थः । भीमो वृकोदरे घोरे शङ्करेऽप्यम्लवेतसे इत्यमरोक्तेर्हरशैलः हिमशैलो वा भीमेन हरेण पालितः सुधाधवलः समुन्नतश्चेति साम्यादुपमालङ्कारः स च धराजिता धराजितेति यमकेन संसृष्ट इति शब्दार्थालङ्कारयोः संसृष्टिः । सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते इति दर्पणः ॥ ७३ ॥

अथ तां द्वात्रिंशत्श्लोकैर्वर्णयति दयितमित्यादिभिः । यत्र नगर्यां स्फटिकोपलः तदाख्यश्वेतप्रस्तरः तन्निर्मितत्वात् तन्मय इत्यर्थः विग्रहः आकारः येषां तथोक्ताः अतएव शशभृतश्चन्द्रस्य भित्तं खण्डमिव भित्तं शकलखण्डे चेत्यमरः निरङ्का निष्कलङ्काः कलङ्काङ्कौ लाञ्छनञ्चेत्यमरः भित्तयः कुड्यानि येषां तथाविधाः भित्तिः स्त्रीकुड्य मेडूकमित्यमरः । भिदेः क्तिप् प्रत्ययः । गृहाः भवनानि गृहाः पुंसि च भूम्नि चेत्यमरः । दयितं प्रियं पतिं भीमं प्रति सन्तताः निरन्तरा विस्तीर्णाः

नृपनीलमणीगृहत्विषाम्
उपधेर्यत्र भयेन भास्वतः ।
शरणाप्तमुवास वासरे-
ऽप्यसदावृत्त्युदयत्तमं तमः ॥ ७५ ॥

इति यावत् । भुवः पृथिव्याः नायिकायाः रतिहासा इव सुरतकालीना हासा इव रेजिरे शुशुभिरे । अन्यापि नायिका सुरते स्वामिनं प्रति यथा हसति तथा यत्र पृथिवी तत्तद्स्फटिकोपलव्याजेन स्वामिनं भीमं प्रति हसति स्मेति पर्य्यवसितोऽर्थः । उत्प्रेक्षालङ्कारः ॥ ७४ ॥

नृपेति । यत्र नगर्य्यां तमोऽन्धकारः अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तम इत्यमरः । भास्वतः सूर्य्यात् भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मय इत्यमरः भयेन त्रासेन नृपस्य राज्ञः भीमस्य ये नीलमणीगृहाः नीलकान्तरत्ननिर्मितानि भवनानि तेषां त्विषः प्रभाः तासाम् उपधेः छलात् रत्नं मणिर्द्वयोरित्यमरः कृदिकारादक्तिन इति वा ङीप् वक्तव्यः । शरणाप्तं शरणं गृहं रक्षितारञ्च आप्तं प्राप्तं शरणं गृहरक्षित्रोरित्यमरः । वासरे दिवसेऽपि समौ दिवसवासरावित्यमरः असती अविद्यमाना आवृत्तिः पुनःपुनरुदयः यस्य तथाभूतं नित्यस्थितीत्यर्थः ;तमसः सूर्य्यालोकाद्दिवसे तिरोभावः रात्रौ तूदय इति सिद्धम् अत्र तु न तथा । उदयत्तमम् सत् अतिशयेन उदयमानमित्यर्थः सततं परिष्करणादिति भावः । उत्पूर्वादिगताविल्यस्माद् भौवादिकात् शतृप्रत्ययान्तात् अतिशयार्थे तमप्रत्ययः । उवास तिष्ठति स्म । अत्र प्रकृतनीलकान्तकान्तिप्रतिषेधेन अप्रकृततमसः स्थापनादपह्नुतिरलङ्कारः, तदुक्तं दर्पण-

सितदीप्रमणिप्रकल्पिते
यदगारे हसदङ्करोदसि।
निखिलान्निशि पूर्णिमा तिथीन्
उपतस्थेऽतिथिरेकिका तिथिः ॥ ७६ ॥

कारेण। प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति असदावृत्ति इत्यत्र विरोधाभासालङ्कारस्य ॥ ७५ ॥

सितेति। सितैः शुभ्रैः दीप्रैश्च उज्ज्वलैश्च मणिभिः रत्नैः प्रकर्षेण कल्पिते निर्मिते अतएव हसन्ती उद्भासमाने अङ्करोदसी उत्सङ्गवर्त्तिनी रोदसी द्यावापृथिव्यौ यस्य तादृशे रोदश्च रोदसी च दिवि भूमौ पृथक् च स्यादिति मेदिनी। यदगारे यस्या नगर्य्या अगारे गृहेष्वित्यर्थः जातावेकवचनं निशि रजन्याम् एकिका एकाकिनी एकमात्रेत्यर्थः एकादाकिन् चासहाये इति चकारात् कप्रत्ययः। प्रत्ययस्थात् कात् पूर्वस्येतीकारः। पूर्णिमा पौर्णमासी तिथिः अतिथिः सती निखिलान् तिथीन् प्रतिपदादीन् तदाद्यास्तिथयोरित्यमरोक्त्या पुंलिङ्गता। उपतस्थे सङ्गतेत्यर्थः। उपाद्देवपूजेत्यादिना सङ्गतिकरणे आत्मनेपदम्। स्फटिकभवनकान्तीनां नित्यसम्बन्धात् सर्वा अपि रजन्यः कौमुदीपूर्णराका इव यदगारेषु अराजन्निति भेदेऽप्यभेदोक्तेः प्रतिरात्रं पूर्णिमासम्बन्धाभावेऽपि तत्सम्बन्धोक्तेश्च द्विविधैवातिशयोक्तिः सङ्गच्छते पूर्णिमायास्तिथित्वेऽपि अतिथित्वकथनात् तिथेश्चन्द्रकला क्रियारूपत्वात् क्रियागतविरोधश्चेत्यनयोः संसृष्टिः। तदुक्तं दर्पणकारेण। सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते। भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ। पौर्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा

सुदतीजनमज्जनार्पितैः
घुसृणैर्यत्र कषायिताशया ।
न निशाखिलयापि वापिका
प्रससाद ग्रहिलेव मानिनी ॥ ७७ ॥

तत इति । जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः । क्रिया क्रियाद्रव्याभ्यां यद्द्रव्यं द्रव्येण वा मिथः । विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिरिति च ॥ ७६ ॥

सुदतीति । यत्र नगर्य्यां शोभना दन्ता यासां ताः सुदत्यः सुन्दर्य्य इत्यर्थः अत्रापि विधानाभावात् दत्रादेशश्चिन्त्य इति केचित् । अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्चेति चकारात् सिद्धिरित्यन्ये । सुदत्यादयः स्त्रीषु योगरूढ़ाः स्त्रियां संज्ञायामिति दत्रादेशात् साधव इत्यपरे । तदेतत् सर्वमभिसन्धायाह वामनः सुदत्यादयः प्रतिविधेया इति । ता एव जनाः लोकाः तेषां कामिनीजनानामित्यर्थः मज्जनादवगाहनात् अर्पितैः संक्रामितैरिति यावत् घुसृणैः कुङ्कुमैः सूर्य्यरक्तसंज्ञन्तु कुङ्कुमं जागुड़ं दीपनं घस्रं सौरभं घुसृणञ्च तदिति त्रिकाण्डशेषः । कषायितः रक्तीकृतः सुरभीकृतो वा आशयः अभ्यन्तरं यस्याः सा तथोक्ता आशयः स्यादभिप्राये मलिनेऽभ्यन्तरे ह्रदीति विश्वः । वापिका क्रीड़ादीर्घिका ग्रहः निर्बन्धः अस्या अस्तीति ग्रहिला निर्बन्धवती इति यावत् ग्रहोऽनुग्रहनिर्बन्धाविति विश्वः । पिच्छादित्वादिलच्प्रत्ययः । मानिनी स्त्रीणामीर्ष्याकृतः कोपो मानः तदुक्तं दर्पणे । मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भव इति तद्वती नायिकेव अखिलयापि समग्रयापि निशा रजन्या सर्वरात्रव्यपगमेनापि दीर्घकालापगमेनापीति भावः सर्वरात्रमनु-

क्षणनीरवया यया निशि
श्रितवप्रावलियोगपट्टया।
मणिवेश्ममयं स्म निर्म्मलं
किमपि ज्योतिरवाह्यमीक्ष्यते॥ ७८॥

नयेनापि च न प्रससाद न स्वच्छसलिला बभूव न प्रसन्ना च बभूवेत्यर्थः। सुदतीजनः अपराङ्गनाजनः तस्य मज्जनेन अवगाहनेन सुरतव्यापारे अत्यन्तावेशेनेति भावः अर्पितैः प्रियवक्षसि गाढ़ालिङ्गनेन निहितैरिति घुसृणैः कलुषिताशया अप्रसन्नचित्तेति मानिनीविशेषणं युज्यते। उपमालङ्कारः। साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमाद्वयोरिति तल्लक्षणात्॥७७

क्षणेति। निशि रात्रौ निशीथे इति भावः यया नगर्य्या क्षणं नास्ति रवः यस्याः तया नीरवया निःशब्दया सुप्तजनत्वात् समाधिनिष्ठत्वाच्च यद्वा क्षणेन सुरतादिमहोत्सवेन तज्जनितश्रमेणेति भावः ब्रह्मसाक्षात्कारजनितानन्देन च नीरवया निस्तब्धया क्षण उद्धव उत्सव इत्यमरः तथा श्रितः अवलम्बितः वप्रावलिः प्राकारचय एव वप्रः। वप्रः पितरि केदारे वप्रः प्राकाररोधसोरिति धरणिः। योगपट्टः समाध्युपकरणभूतोपवीतविशेषः यया तथाभूतया सत्या, मणिवेश्ममयं रत्नागाररूपं निर्मलं स्वच्छं तमोगुणातीतञ्च अवाह्यं स्वान्तर्गतं वाह्येन्द्रियागोचरञ्च किमपि अनिर्वचनीयं ज्योतिः तेजः कान्तिरित्यर्थः ब्रह्मज्योतिश्च ईक्ष्यते स्म दृश्यते स्म साक्षात्क्रियते स्म च। या निशा सर्वभूतानां तस्यां जागर्त्ति संयमीति योगिनो निशास्वपि योगविधानम् अर्जुनं प्रति भगवतोक्तम्। अत्र प्रस्तुताया नगर्य्या विशेषणसाम्यादप्रस्तुताया योगिन्या व्यवहारप्रतीतेः

विललास जलाशयोदरे
क्वचन द्यौरनुबिम्बितेव या ।
परिखाकपटस्फुटस्फुरत्-
प्रतिबिम्बानवलम्बिताम्बुनि ॥ ७९ ॥

व्रजते दिवि यद्गृहावली-
चलचेलाञ्चलदण्डताड़नाः ।
व्यतरन्नरुणाय विश्रमं
सृजते हेलिहयालिकालनाम् ॥ ८० ॥

समासोक्तिरलङ्कारः । समासोक्तिः समैः यत्र कार्य्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति दर्पणकारकृतलक्षणात् ॥ ७८ ॥

विललासेति । या नगरी परिखा नगरीवेष्टनार्थं खात जलाशयः खेयन्तु परिखेत्यमरः । तस्याः कपटेन व्याजेन स्फुटं परितः स्पष्टम् अतएव स्फुरता भासमानेन प्रतिबिम्बेन अनवलम्बितम् अगृहीतम् अम्बु जलं यस्मिन् तथाभूते क्वचन कुत्रचित् जलाशयोदरे जलाशयमध्ये अनुबिम्बिता प्रतिबिम्बिता द्यौरिव अमरावतीवं विललास अशोभतेत्युत्प्रेक्षा । स्वर्गोपमेयं नगरीति भावः ॥ ७९ ॥

व्रजत इति । यद्गृहावलीषु यस्या नगर्य्या गृहावलीषु प्रासादपङ्क्तिषु ये चलाश्चञ्चलाः चेलाञ्चलाः पताकाप्रान्तदेशाः ते एव दण्डाः तैः ताड़नाः कशाप्रहारा इति भावः कर्त्तारः दिवि आकाशे व्रजते गच्छते हेलिः सूर्य्यः हेलिरालिङ्गने रवाविति वैजयन्ती तस्य हया अश्वाः तेषाम् आलिः श्रेणी

क्षितिगर्भधराम्बरालयैः
तलमध्योपरिपूरिणां पृथक् ।
जगतां खलु याखिलाद्भुता-
ऽजनि सारैर्निजचिह्नधारिभिः ॥ ८१ ॥

तस्याः समाप्तत्वादिति भावः कालना चालना तां सृजते कुर्वते अरुणाय सूर्यसारथये सूरसूतोऽरुणोऽनूरुरित्यमरः । विश्रमं विश्रान्तिं स्वयं तत्कार्य्यकरणादिति भावः नोदत्तोपदेशेत्यादिना घञ् । वृत्तिप्रतिषेधः । व्यतरन् दत्तवत्यः । अत्र हेलिहयालेखेलाचलदण्डताड़नासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदः तत्सङ्कीर्णश्चोदात्तालङ्कारः तदुक्तं दर्पणे लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते इति तेन गृहाणामतीवौन्नत्यरूपं वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८० ॥

क्षितीति । या नगरी तलं पातालं मध्यं मर्त्यलोकः उपरि ऊर्द्ध्वदेशः स्वर्गमित्यर्थः तत्पूरिणां तद्व्यापिनामित्यर्थः पातालभूमिस्वर्गरूपाणामिति यावत् जगतां भुवनानां पृथक् भिन्नतयेत्यर्थः निजचिह्नधारिभिः पातालचिह्नं निध्यादि, क्षितिचिह्नमन्नपानानि स्वर्गचिह्नम् उत्कृष्टस्रक्चन्दनवनितादि तद्धारिभिः सारैः उत्कृष्टैरिति यावत् क्षितिगर्भे भूम्यन्तरे धरायां पृथिवीपृष्ठे अम्बरे आकाशे ये आलया गृहाणि तैः भूम्यन्तर्वहिःशिरोगृहैरिति यावत् अखिला समग्रा अद्भुता चमत्कारिणी अखिलाभ्यः समस्ताभ्यः नगरीभ्यः अद्भुतेति वार्थः । अजनि जाता । दीपजनेत्यादिना जनेः कर्त्तरि लुङ् च्लेश्चिणादेशः । अजनि उत्पादिता निर्मितेत्यर्थः णिजन्तप्रयोग इति वा । अत्र क्षितिगर्भादीनां तलमध्योपरिपूरिणां

दधदम्बुदनीलकण्ठतां
वहदत्यच्छसुधोज्ज्वलं वपुः ।
कथमृच्छतु यत्र नाम न
क्षितिभृन्मन्दिरमिन्दुमौलिताम् ॥८२॥
बहुरूपकशालभञ्जिका-
मुखचन्द्रेषु कलङ्करङ्कवः ।

जगतां तच्चिह्नानाञ्च यथाक्रमं सम्बन्धात् यथासङ्ख्यमलङ्कारः यथासङ्ख्यमनूद्देश उद्दिष्टानां क्रमेण यदिति तल्लक्षणात् उत्प्रेक्षा पूर्ववत् तेन त्रैलोक्यवैभवरूपं वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८१ ॥

दधदिति। यत्र नगर्य्यां क्षितिभृतो राज्ञः मन्दिरं भवनम् अम्बुदैः मेघैः अम्बुद इव च नीलः श्यामः कण्ठः शिखरोपकण्ठः गलश्च यस्य तस्य भावः तत्ता तां दधत् बिभ्राणं कण्ठो गले सन्निधाने इति विश्वः। अत्यच्छया अतिस्वच्छया सुधया लेपनद्रव्येण चूर्णेनेति भावः अत्यच्छसुधावत् अतिविशदामृतवच्चेत्यर्थः शुभ्रमिति भावः सुधालेपोऽमृतं सुधेत्यमरः उज्ज्वलं दीप्तिमत् वपुः शरीरं वहत् दधानम् अतएव कथं नाम इन्दुः चन्द्रः मौलौ शिखरे शिरसि च यस्य तस्य भावः तत्ता तां चन्द्रमण्डलपर्य्यन्तशिखरत्वं चन्द्रशेखरत्वञ्च शिवत्वञ्च इति यावत् न ऋच्छतु ? न प्राप्नोतु ? अपितु ऋच्छत्वेवेत्यर्थः सम्भावनायां लोट्। अत्र विशेषणानामनेकार्थप्रतीतेरपि अभिधायाः प्रकृतार्थमात्रनियन्त्रणात् न श्लेषः श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते इति तल्लक्षणात् तदयमप्रकृतेश्वरप्रतीत्या राजमन्दिरस्य अत्यौन्नत्यरूपं महत्त्वरूपञ्च वस्तु व्यज्यते ॥ ८२ ॥

यदनेकसौधकन्धरा-
हरिभिः कुक्षिगतीकृता इव ॥ ८३ ॥
बलिसद्म दिवं स तथ्यवाक्
उपरि स्माह दिवोऽपि नारदः ।
अधराथ कृता ययेव सा
विपरीताजनि भूमिभूषया ॥ ८४ ॥

बह्विति। बहु रूपं सौन्दर्य्यं यासां ताः शेषिकः कप्रत्ययः। शालभञ्जिकाः कृत्रिमपुत्तिकाः शालभञ्जिका स्त्रियां वेश्यायां काष्ठादिपुत्तलामिति शब्दाब्धिः। तासां मुखान्येव चन्द्राः तेषु रूपकसमासः। कलङ्करङ्कवः कलङ्करूपा मृगाः यस्यां नगर्य्याम् अनेकेषां बहूनां सौधानां प्रासादानां कन्धरासु कण्ठदेशेषु शिखराधोभागेष्वित्यर्थः ये हरयः सिंहाः तैः। सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केशरी हरिरित्यमरः। अकुक्षिगताः कुक्षि-गता कृताः कुक्षिगतीकृताः इव उदरगतीकृता इव खादिता इवेत्यर्थः। सिंहैः मृगाः खाद्यन्ते इति प्रसिद्धिः तथा अत्रापि कलङ्कमृगाः सौधस्थकृत्रिमसिंहैः खादिता इति भावः। अन्यथा कथं तासां मुखचन्द्रस्य कलङ्कराहित्यसम्भव इत्युत्प्रेक्षालङ्कारः तेन च निष्कलङ्कचन्द्रसदृशानि तासां मुखानीति भावः ॥८३॥

बलिसद्मेति। सः प्रसिद्धः तथ्या अवितथा सत्येत्यर्थः वाक् वचनं यस्य तथाभूतः नारदः बलिसद्म पातालम् अधोभुवन पातालं बलिसद्म रसातलमित्यमरः दिवं स्वर्गं पातालरूपं स्वर्ग-मित्यर्थः दिवोऽपि मेरुस्थितायाः अपि स्वर्गस्य उपरि उत्कृष्टाम् ऊर्द्ध्ववर्त्तिनीञ्च आहस्म कथयामास। अथेदानीं यया नगर्य्या भूमिभूषया भूतलालङ्कारभूतया अधरा न्यूना अधोवर्त्तिनी च

प्रतिहट्टपथे घरट्टजात्
पथिकाह्वानदशक्तुसौरभैः ।
कलहान्न घनान् यदुत्थितात्
अधुनाप्युज्झति घर्घरस्वरः ॥ ८५ ॥

छतेव सा बलिसद्म द्यौः विपरीता नारदोक्तविलक्षणेत्यर्थः अजनि जाता या सर्वोपरि स्थिता तस्या अधोवर्त्तित्वं वैपरीत्यमेवेत्यर्थः। स्वर्गात् पातालाच्च समीचीनेयं नगरीति वस्तु उत्प्रेक्षया व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८४ ॥

प्रतिहट्टपथे इति। प्रतिहट्टपथे प्रत्यापणमार्गे अव्ययं विभक्तीत्यादिना वीप्सायामव्ययीभावः तृतीयासप्तम्योर्बहुलमिति सप्तम्या अमभावः। सर्वेषु क्रयविक्रयस्थानेष्वित्यर्थः पन्थानं गच्छन्तीति पथिकाः पान्थाः अथ विरहिणश्च तेषाम् आह्वानम् आकारणं। हूतिराकारणाह्वानमित्यमरः ददातीति तथोक्तानि यानि शक्तूनां सौरभाणि शोभना गन्धाः तैः। अभिनवमेघोदयेऽपि अभिनवमेघात् पतितेन वृष्टिजलेन धूलीनां शक्तुगन्धवत् सौरभमुदेति इति कलहबीजमिति भावः। पथिकाह्वानदशक्तुसौरभे इति पाठे पथिकानाम् आह्वानदम् आह्वायकम् आकर्षकमित्यर्थः शक्तूनां सौरभं यस्मिन् तादृशे इति प्रतिहट्टपथे इत्यस्य विशेषणम्। घरट्टा गोधूमचूर्णकारका ग्रावाणः ["जाँता" इति भाषा] तस्मात् तदुत्पन्नादित्यर्थः यस्या नगर्य्या उत्थितात् उदितात् कलहात् मेघघरट्टानामन्योन्यविवादादित्यर्थः एष न घरट्टाशब्दः किन्तु मेघशब्द एव इति कलहबीजमिति भावः। अधुनापि घर्घरस्वरः अतिवादजनितस्वरभङ्गादिति भावः घनान् मेघान् न उज्झति न जहाति।

वरणः कनकस्य मानिनीं
दिवमङ्कादमराद्रिरागताम्।
घनरत्नकवाटपक्षतिः
परिरभ्यानुनयन्नुवास याम्॥ ८६॥

सर्वदा सर्वहट्टेषु घरट्टा मेघध्वानं ध्वनन्ति इति भावः। अथवा पान्था भक्तसौरभाघ्राणेन तद्भोजनलालसया नगरीं परित्यक्तुं न पारयन्ति मेघाश्च उद्दीपकतया तान् स्वगृहं नेतुं त्वरयन्तीति मेघघरट्टानामन्योन्यविवादवीजम्। यस्तु अतीवोच्चैःस्वरेण कलहं करोति तस्य भग्नगलत्वात् घर्घरस्वरत्वं चिरं तिष्ठतीत्यधुनापदेन सूच्यते। तदत्र नगर्यां बहूनां लोकानामवस्थानाद् बहुगोधूमचूर्णव्यवहाररूपं वस्तु घनानां घरट्टकलहासम्बन्धेऽपि तत्सम्बन्धोक्तिरूपातिशयोक्त्यलङ्कारेण व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः। घर्घरस्वरस्य च तथाविधातिशयोक्तिहेतुकत्वमिति उत्प्रेक्षा च व्यञ्जकप्रयोगाभावाद् गम्यते इति केचित्॥ ८५॥

वरण इति। कनकस्य स्वर्णस्य सम्बन्धी तद्विकार इत्यर्थः वरणः प्राकारः प्राकारो वरणः साल इत्यमरः। स एव अमराद्रिः सुमेरुः यां नगरीमेव मानिनीं प्रणयकोपवतीं कान्तामिति शेषः अङ्कात् स्वोत्सङ्गात् आगतां भुवम् आगताम् इति शेषः। दिवम् अमरावतीं घने निविड़े रत्नकवाटे मणिमयकपाटे एव पक्षती पक्षमूले स्त्री पक्षतिः पक्षमूलमित्यमरः। यस्य तथाविधः सन् पर्वतानां पक्षवत्त्वस्य प्रसिद्धत्वात्। परिरभ्य आश्लिष्य अनुनयन् प्रसादयन् उवास वसति स्म तदनुरोधादिति भावः। कामिनः प्रणयकुपितां कान्तामनुनयन्तस्तदनुरोधेन

अनलैः परिवेशमेत्य या
ज्वलदर्कोपलवप्रजन्मभिः।
उदयं लयमन्तरा रवेः
अवहत् बाणपुरीपरार्द्धताम् ॥ ८७ ॥
बहुकम्बुमणिर्वराटिका-
गणनाटल्करकर्कटोत्करः।

तदीप्सितं देशमधितिष्ठन्तीति भावः। अत्र रूपकालङ्कारः रूपितस्य चामरादेर्भूलोके वासासम्भवात् गम्योत्प्रेक्षा इवादि-व्यञ्जकप्रयोगाभावात्। तदनयोः सङ्करः ॥ ८६ ॥

अनलैरिति। या नगरी रवेः सूर्य्यस्य उदयं लयम् अस्तमयञ्च अन्तरा मध्ये उदयास्तयोर्मध्ये काले इत्यर्थः यावद्दिवसमिति यावत्। अन्तरान्तरेण युक्ते इति द्वितीया। ज्वलन्तः ये अर्कोपलाः सूर्य्यकान्तमणयः तेषां वप्रात् तन्निर्मितात् प्राकारादित्यर्थः जन्म उत्पत्तिर्येषां तैः सूर्य्यकान्तप्राकारोत्थितैरित्यर्थः अनलैः अग्निभिः परिवेशं परिवेष्टनम् एत्य प्राप्य बाणस्य तदाख्यस्य बलिनन्दनस्य पूर्य्याः शोणितपुरस्येत्यर्थः परार्द्धतां श्रेष्ठताम् उत्कर्षमित्यर्थः सादृश्यमिति यावत्। अवहत् प्राप। बाणो नामासुरः शिवप्रसादात् स्वां पुरीं सर्वतो वह्निसन्दीप्ततया शत्रुदुर्गमामकरोदिति पुराणमत्रानुसन्धेयम्। अत्रान्यस्य धर्मं कथमन्यो वहत्विति तत्सम्बन्धप्रतिपादनार्थं सादृश्याक्षेपान्निदर्शनालङ्कारः तदुक्तं दर्पणकारेण। सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति। उदात्तालङ्कारश्च पूर्ववत् तदनयोः संसृष्टिः ॥८७॥

बह्विति। बहवः अनेकसङ्ख्याकाः कम्बवः शङ्खाः शङ्खः

हिमवालुकयाच्छवालुकः
पटु दध्वान यदापणार्णवः ॥ ८८ ॥

यदगारघटाट्टकुट्टिम-
स्रवदिन्दूपलतुन्दिलापया।
मुमुचे न पतिव्रतौचिती
प्रतिचन्द्रोदयमभ्रगङ्गया ॥ ८९ ॥

स्यात् कम्बुरस्त्रियामित्यमरः मणयः रत्नानि च यत्र सः। वराटिकानां कपर्दानां कपर्दो वराटिकेति हलायुधः गणनाय संख्यानाय अटन्तः तिर्य्यक् प्रसरन्तः करा हस्ता लोकाना-मिति भावः एव कर्कटोत्कराः कुलीरसङ्घा यस्मिन् सः। स्यात् कुलीरः कर्कटक इत्यमरः तथा हिमवालुकया कर्पूरेण धान्येन धनवानिति वत् अभेदे तृतीया अच्छा वालुकाः यस्मिन् सः कर्पूररूपस्वच्छसैकत इत्यर्थः कर्पूरमस्त्रियां घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुकेत्यमरः। यस्या नगर्य्या आपण एव अर्णवः विपणिसागरः पटु घोरं दध्वान ननाद जनसम्मर्दातिशया-दिति भावः। रूपकालङ्कारः ॥ ८८ ॥

यदिति। यस्याः नगर्य्यां अगारघटानां गृहनिवहानां ये अट्टाः उपरिगृहाणि तेषां कुट्टिमेषु निबद्धभूमिषु कुट्टिमोऽस्त्री निबद्धा भूरित्यमरः। स्रवन्तः चन्द्रोदयात् प्रचरन्तः ये इन्दूपलाः चन्द्रकान्ताः तैः तुन्दिलाः प्रवृद्धा आपः जलानि यस्याः तया तुन्दादिभ्य इलच्। ऋक्पूरित्यादिना समासान्तः। अभ्रगङ्गया आकाशगङ्गया मन्दाकिन्येत्यर्थः मन्दाकिनी वियद्-गङ्गेत्यमरः। चन्द्रोदये चन्द्रोदये प्रतिचन्द्रोदयं वीप्साया-मव्ययीभावः। पतिव्रतायाः आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते

रुचयोऽस्तमितस्य भास्वतः
स्खलिता यत्र निरालयाः खलु ।
अभिसायमभुर्विलेपना-
पणकश्मीरजपण्यवीथयः ॥ ९० ॥

मलिना कृशा । मृते हि म्रियते या स्त्री सा स्त्री ज्ञेया पतिव्रतेति स्मृत्युक्तलक्षणायाः औचिती औचित्यं ब्राह्मणादित्वाद् गुणवचनेत्यादिनाष्यङ् प्रत्ययः । षिद्गौरादिभ्यश्चेति ङीष् । स च मातरि षिच्चेति षित्त्वादेव सिद्धे मातामहशब्दस्य गौरादिपाठेनानित्यत्वज्ञापनाद् वैकल्पिकः । अतएव वामनः ष्यञ् । षित् क्वाप्यबहुलमिति स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् क्वचिच्च ऊञ् । औचित्यमौचिती मैत्रं मैत्री ऊञ् प्रागुदाहृतमित्यमरश्च । न मुमुचे न त्यक्ता भर्त्तुः समुद्रस्य च चन्द्रोदये वृद्धिदर्शनात् पत्न्या अपि तस्यास्तथा वृद्धेर्युक्तत्वात् । एतेन मन्दाकिन्या अपि एतदगारकुट्टिमानामधोवर्त्तित्वं नगर्य्याश्च अट्टकुट्टिमानां चन्द्रकान्तनिर्मितानामत्युन्नतत्वं सूचितम् । अत्राभ्रगङ्गाया यदगारेत्यादिविशेषणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः तया च यदगाराणामभ्रगङ्गाया अपि उपरिवर्त्तित्वस्य गम्यमानत्वात् तदुत्थापितेयमस्याः पातिव्रत्यधर्मापरित्यागोत्प्रेक्षा, सा च व्यञ्जकाप्रयोगाद् गम्येत्यनयोरङ्गाङ्गिभावसङ्करः ॥ ८९ ॥

रुचय इति । यत्र नगर्य्याम् अभिसायं प्रतिसायम् अनुसायमिति पाठान्तरम् । वीप्सायामव्ययीभावः । विलेपनापणेषु सुगन्धद्रव्यविक्रयस्थानेषु कश्मीरजानि कुङ्कुमानि एव पण्यानि विक्रेयद्रव्याणि तेषां वीथयः श्रेणयः अस्तमितस्य

वितत वणिजापणेऽखिलं
पणितुं यत्र जनेन वीच्यते ।
मुनिनेव मृकण्डुसूनुना
जगतां वस्तु पुरोदरे हरेः ॥ ८१ ॥
सममेणमदैर्यदापणे
तुलयन् सौरभलोभनिश्चलम् ।

अस्ताचलं गतस्य भास्वतः सूर्य्यस्य सम्बन्धिन्यः स्खलिताः अस्ताचलगमनक्षोभात् प्रच्युताः अतएव निरालयाः निराश्रयाः रुचयः प्रभाः खलु प्रभा इव खलूत्प्रेक्षायाम् अभुः भान्ति स्म विरेजुरित्यर्थः। भातेर्लुङि झर्जसादेशः। कुङ्कुमादीनां तत्सावर्ण्यादियमुत्प्रेक्षा। वीथ्यालिः आवलिः पङ्क्तिः श्रेणीलेखास्तु राजय इत्यमरः ॥ ८० ॥

विततमिति। यत्र नगर्य्यां वणिजा वणिग्जनेन विक्रेतृजनेनेत्यर्थः पणितुं व्यवहर्त्तुं विक्रेतुमित्यर्थः आपणे पण्यवीथिकायां हट्टे इत्यर्थः आपणस्तु निषद्यायां विपणिः पण्यवीथिकेत्यमरः। विततं विस्तृतम् अखिलं समस्तं जगतां वस्तु द्रव्यजातं जनेन लोकेन पुरा पूर्वं मृकण्डोः सूनुः मृकण्डुसूनुः मार्कण्डेयः तेन मुनिना चिरजीविनेति भावः हरेः महाप्रलये वटपत्राधिरूढस्य बालकाकृतेर्नारायणस्य उदरे इव कुक्षाविव वीच्यते दृश्यते। नारायणोदरमिव सर्ववस्तूनामाकर इयं नगरीति भावः। पुरा प्रलये एकार्णवजले वटपत्रशायिनो हरेरुदरं प्रविश्य मार्कण्डेयः सर्वं जगत् तत्रावलोकितवानिति पुराणवार्त्तात्रानुसन्धेया। वणिजेति आपणे इति चैकवचनेन एकस्यापि वणिजः एकस्मिन्नपि आपणे च सर्ववस्तुदर्शनस्योक्त-

पणिता न जनारवैरवैत्
अपि कूजन्तमलिं मलीमसम् ॥ ९२ ॥

बहूनामेवंरूपाणां वणिजाम् आपणानाञ्च नगर्य्यामस्यां सम्भवेन महासमृद्धिसम्पन्नेयं पुरीति सूच्यते। उपमालङ्कारः॥९१

सममिति। यस्या नगर्य्याः आपणे निषद्यायाम् हट्टे इत्यर्थः पणिता विक्रेता जनः सौरभस्य लोभेन निश्चलं निष्पन्दं मलीमसं मलिनं सर्वाङ्गनीलमित्यर्थः मलीमसन्तु मलिनं कच्चरं मलदूषितमित्यमरः। न तु पीतमध्यं तस्य पीतिम्नैव व्यवच्छेदादिति भावः अतो गुणतोऽपि दुर्ग्रहमिति भावः ज्योत्स्नातमिस्रेत्यादिना निपातः। अलिं भ्रमरम् एणमदैः मृगमदैः कस्तूरीभिरित्यर्थः समं सह तुलयन् समीकुर्वन् मापयन्नित्यर्थः कूजन्तमपि गुञ्जन्तमपि जनानामारवैः कलरवैः न अवैत् न ज्ञातवान् शब्दतोऽपि भ्रमरोऽयं न एणमद इति न बुबुधे इत्यर्थः। निश्चलत्वात् मृगमदसाम्याच्च दुर्बोधोऽपि गुञ्जनेन ज्ञातुं शक्यत एव किन्तु तदपि जनकलकलेन तिरोहितमिति भावः। अत्र निश्चलस्य भृङ्गस्य गुञ्जनमसम्भवमपि कविप्रौढ़ोक्त्याभिहितमिति बोध्यम्। अत्रालेः स्वतो नैल्यात् एणमदेन तुलनाद् भ्रान्तिमानलङ्कारः तदुक्तं दर्पणे, साम्यादतस्मिन् तद्‌बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति। एणमदेन तादात्म्यप्रतिपादनात् सामान्यालङ्कार इति केचित्। उत्कृष्टगुणेन एणमदेन अलेर्नीलिम्नस्तिरोधानात् मीलितालङ्कार इत्यन्ये। तदुक्तं दर्पणे। सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैरिति मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्ष्मणेति च। उभयोरेतयोः प्रायेणैकरूपत्वेऽपि मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरो-

रविकान्तमयेन सेतुना
सकलाहर्ज्वलनाहितोष्मणा ।
शिशिरे निशि गच्छतां पुरा
चरणौ यत्र दुनोति नो हिमम् ॥ ८३ ॥

धानम् इह तु (सामान्ये तु) उभयोस्तुल्यगुणतयेति भेदाग्रह इति दर्पणकारः। तदत्र अलेर्नीलिमापेक्षया एणमदनीलिम्न उत्कर्षात् मीलितालङ्कार एव समीचीनतया प्रतिभाति अलमति विस्तरेण। नागराणामत्र मृगमदव्यवहारस्योक्त्या भोगविलासित्वं सूचितम् ॥ ८२ ॥

रविकान्तेति। यत्र नगर्य्यां हिमं कर्त्तृ सकलम् अहः सर्वं दिनं राजाहः सखिभ्यष्टच्। रात्राह्नाहाः पुंसीति पुंलिङ्गता अत्यन्तसंयोगे द्वितीया योगविभागात् समासः। ज्वलनेन तपनतापादिति भावः आहितः जनितः ऊष्मा उष्णत्वं यस्य तेन रविकान्तमयेन सूर्य्यकान्तमणिनिर्मितेन सेतुना सेतुसदृशेनाध्वनेति भावः गच्छतां सञ्चरतां जनानां चरणौ चरणानित्यर्थः स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणेति जातौ द्विवचनम्। शिशिरे शिशिरर्त्तावित्यर्थः तत्रापि निशि रजन्यां पुरा नो दुनोति न पीड़यामास यावत् पुरा निपातयोर्लट्। सेतोः सूर्य्यकान्तमयत्वोक्त्या नगर्य्याः समृद्धिरतिमहतीति व्यज्यते। अत्र सेतोरुष्मासम्बन्धेऽपि तत् सम्बन्धोक्तेरतिशयोक्तिः। सकलाहर्ज्वलनाहितोष्मणेति पाठं ज्ञात्वा सकलाहः कृत्स्नं दिनमिति व्याख्यानं केनचित् कृतं चिन्त्यं सकलाहरिति पदस्योक्तरीत्या व्याकरणविरुद्धत्वादिति ॥ ८३ ॥

विधुदीधितिजेन यत्पथं
पयसा नैषधशीलशीतलम् ।
शशिकान्तमयं तपागमे
कलितीव्रस्तपति स्म नातपः ॥ ९४ ॥
परिखावलयच्छलेन या
न परेषां ग्रहणस्य गोचरा ।

विध्विति। कलितीव्रः कलिकाल इव तीव्रः प्रचण्ड इत्यर्थः आतपः सौरालोकः तपस्य ग्रीष्मस्य ग्रीष्म उष्णागमस्तप इत्यमरः आगमः उदयः तस्मिन् शशिकान्तमयं चन्द्रकान्तमणिनिबद्धमित्यर्थः अतएव विधुदीधितिजेन रात्रौ चन्द्रकिरणसम्पर्कजातेन पयसा जलेन। नैषधस्य नलस्य शीलं सद्वृत्तं स्वभावो वा शीलं स्वभावे सद्वृत्ते इत्यमरः तदिव शीतलं यस्या नगर्य्याः पन्थाः तं न तपति स्म न पीड़यति स्म। चन्द्रोदये तत्करसम्पर्कात् चन्द्रकान्तमणिनिर्मितस्य पथस्तथा पयःस्रावः यथा ग्रीष्मेऽपि सर्वं दिनं तस्य उष्मविरह इति भावः। नैषधचरितकीर्त्तनेन शीतलं जनानां चित्तं कलिरपि न तापयितुं शक्नोति कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ऋतुपर्णस्य राजर्षेः चरितं कलिनाशनमिति तत्कथायाः कलिनाशकत्वादिति व्यज्यते। अत्र नगरपथस्य चन्द्रकान्तपयोऽसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः तत्सापेक्षञ्च नैषधशीलशीतलमिति कलितीव्र इत्युपमा द्वयमिति सङ्करः ॥ ९४ ॥

परिखेति। या नगरी परिखा वलयं चतुर्दिगवस्थितजलराशिरूपवेष्टनं तस्य छलेन कपटेन कुण्डलनां मण्डलाकाररेखाविशेषम् अवापिता प्रापिता पराजितशत्रुभिरिति

फणिभाषितभाष्यफक्किका
विषमा कुण्डलनामवापिता ॥ ९५ ॥

मुखपाणिपदाक्षिपङ्कजैः
रचिताङ्गेष्वपरेषु चम्पकैः ।
स्वयमादित यत्र भीमजा
स्मरपूजाकुसुमस्रजः श्रियम् ॥ ९६ ॥

शेषः कुण्डलनान्तर्गतायाः लिपिपङ्क्तेरिव तेषां तस्याः परिहार्य्यत्वादिति भावः। अतएव परेषां शत्रूणां ग्रहणस्य आक्रमणस्य ज्ञानस्य च न गोचरा अविषयेत्यर्थः अतएव विषमा दुर्बोधा फणिभाषितस्य पतञ्जलिप्रणीतस्य महाभाष्यस्य फक्किका पूर्वपक्षः कुण्डलिग्रन्थ इत्यर्थः। फणिभाषितभाष्यं यथा विषमतया न केनापि बुध्यते तथा पुरीयं शत्रुभिर्न प्रविश्यते इति भावः। अत्र नगर्य्याः कुण्डलिग्रन्थत्वेनोत्प्रेक्षा गम्या इवादिव्यञ्जकाप्रयोगात्। सा च परिखा वलयच्छलेनेति अपह्नुत्या अनुप्राणितेत्युभयोरङ्गाङ्गिभावेन सङ्करः ॥ ९५ ॥

मुखेति। यत्र नगर्य्यां भीमजा भीमनरेन्द्रपुत्री दमयन्ती मुखञ्च पाणी च पदे च अक्षिणी च तस्मिन् प्राण्यङ्गत्वाद् द्वन्द्वैकवद्भावः। पङ्कजैः पद्मैः, अपरेषु मुखादिव्यतिरिक्तेषु अङ्गेषु चम्पकैः रचिता निर्म्मिता विधिनेति शेषः सर्व्वत्र सादृश्याद् व्यपदेशः। स्वतएव स्वयं स्मरस्य कामस्य पूजायां या कुसुमस्रक् पुष्पमाला तस्याः श्रियं शोभाम् आदित गृहीतवती। ददातेर्लुङि, स्थाघ्वोरिच्चेतीत्वं ह्रस्वादङ्गादिति सलोपः। अत्रान्यस्याः श्रियोऽन्यत्रासम्भवात् श्रियमिव श्रियमिति सादृश्याक्षेपान्निदर्शनाभेदः, तदङ्गानां पङ्कजादिभेदे-

जघनस्तनभारगौरवात्
वियदालम्ब्य विहर्त्तुमक्षमा:।
ध्रुवमप्सरसोऽवतीर्य्य यां
शतमध्यासत तत्सखीजन:॥ ९७॥
स्थितिशालिसमस्तवर्णतां
न कथं चित्रमयी बिभर्त्तु या।

ऽप्यभेदोक्तिरूपयातिशयोक्त्या अनुप्राणित इत्यनयोरङ्गाङ्गि-भाव:। मुखपाणिपदाक्षिपङ्कजैरित्येकमेव पदं कृत्वा मुख-पाणिपदाक्षिपङ्कजैर्वदन-करचरणनयन-रूप-गौररक्तनीलोत्पलै-रिति कैश्चिद् व्याख्यातं तन्न समीचीनम् अङ्गेषु अपरेषु चम्पकैरिति प्रक्रमभङ्गदोषापत्तेरिति॥ ९६॥

जघनेति। जघनानि कटिपुरोभागाश्च स्त्रीकट्या जघनं पुर इत्यमर: स्तनौ च जघनस्तनं प्राण्यङ्गत्वाद् द्वन्द्वैकवद्भाव: तदेव भार: तस्य गौरवात् गुरुत्वात् वियत् आकाशमवलम्ब्य आश्रित्य वियद् विष्णुपदं वापि पुंस्याकाशविहायसी इत्य-मर:। विहर्त्तुं क्रीड़ितुमक्षमा: असमर्था: शतं शतसंख्यका: विंशत्याद्या: सदैकत्वे सर्वा: संख्येयसंख्ययोरित्यमर:। अप्सरस: सुराङ्गना: अवतीर्य्य स्वर्गादागत्य तस्या: दमयन्त्या: सखीजन: सख्य इत्यर्थ: जातावेकवचनं सत्य: यां पुरीम् अध्यासत अधि-ष्ठितवत्य इत्यर्थ:। अधिशीङ् स्थासां कर्मेति कर्मत्वम्। शतश: अप्सर:कल्पा: सख्य: एनामुपासते इति वस्तु ध्रुवमित्युत्प्रेक्षया व्यज्यते इति अलङ्कारेण वस्तुध्वनि:॥ ९७॥

स्थितीति। या नगरी स्थित्या मर्य्यादया स्थायित्वेन च

स्वरभेदमुपैतु या कथं
कलितानल्पमुखारवा न वा ॥ ६८ ॥

स्थितिः स्त्रियामवस्थाने मर्य्यादायाञ्च सीमनीति मेदिनी। शालन्ते शोभन्ते इति तथोक्ताः समस्ताः वर्णाः ब्राह्मणादयः शुक्लादयश्च वर्णो द्विजादौ शुक्लादावित्यमरः। यस्यां यस्याः वा सा स्थितिशालिसमस्तवर्णा तस्या भावः तां कथं न बिभर्त्तु न धारयतु ? बिभर्त्त्वेवेत्यर्थः। यतः चित्रमयी अद्भुतरूपा लोकविलक्षणेति यावत् आलेख्यबहुला च आलेख्याश्चर्य्ययोश्चित्रमित्यमरः। अत्र ब्राह्मणादयः स्वां स्वां मर्य्यादां नातिक्रामन्ति सौराज्यात् अन्यत्र तु न तथेति लोकवैलक्षण्यमिति भावः किञ्च या कलितः धृतः अनल्पानां बहूनां बहुजनानामिति यावत् नरकरितुरगाणां वा मुखानाम् आरवः शब्दः अनल्पमुखस्य चतुर्मुखस्य ब्रह्मण इति यावत् मुखारवः मुखोच्चरितवेदः यस्यां तथाभूता अतएव स्वरस्य ध्वनेः भेदं नानात्वम् उदात्तादिस्वरभेदञ्च स्वर्गादभेदञ्च कथं न उपैतु ? न प्राप्नोतु ? अपितु उपैत्वेवेत्यर्थः। उभयत्रापि कारणसद्भावात् कार्य्योत्पत्तिरवश्यम्भाविनीति भावः। केचित्तु एकवृन्तगतफलद्वयवत् एकस्मिन्नेव शब्दे अर्थद्वयप्रतीतेरर्थश्लेषः प्रथमार्द्धे, द्वितीये तु जतुकाष्ठवद् एकवद्भूतशब्दद्वयप्रतीतेः शब्दश्लेष इत्याचक्षते। वस्तुतस्तु स्थितिशालिसमस्तवर्णतामिति कलितानल्पमुखारवेत्येतयोः शब्दयोः स्वभावादेकार्थत्वाभावान्नार्थश्लेषः शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनमिति तल्लक्षणात्। अत्र तु अर्थयोरर्थानां वा भिन्नत्वात् शब्दश्लेष एव दोषगुणालङ्काराणां शब्दार्थगतत्वव्यवस्थितौ तदन्वयव्यतिरेकावेव

स्वरुचारुणया पताकया
दिनमर्केण समीयुषोत्तृषः ।
लिलिहुर्बहुधा सुधाकरं
निशि माणिक्यमया यदालयाः ॥ ९९ ॥
लिलिहे स्वरुचा पताकया
निशि जिह्वानिभया सुधाकरम् ।

नियामकत्वात् श्लिष्टशब्दपरिवृत्तिसहत्वासहत्वाभ्यामनयोरर्थश्लेषशब्दश्लेषयोर्यथाक्रमं व्यवस्थानाच्चेति ॥ ९८ ॥

स्वरुचेति । माणिक्यमयाः माणिक्याख्यरत्ननिर्मिता इत्यर्थः यदालयाः यस्या नगर्य्या यस्यां वा नगर्य्याम् आलया राजभवनानीति यावत् दिनं दिवसं व्याप्य अत्यन्तसंयोगे द्वितीया। समीयुषा सङ्गतिं गतेन अर्केण सूर्य्येण हेतुना उद्गता तृट् तृष्णा येषां तथोक्ताः तपनतापात् तृषाकुला इत्यर्थः सन्तः निशि रजन्यां स्वरुचा निजकान्त्या अरुणया रक्तया आरुण्यं प्राप्तयेति यावत् । अतएव रसनायमानयेति भावः पताकया सुधाकरं चन्द्रं बहुधा पुनः पुनः लिलिहुः पपुरित्यर्थः । दिवसे सन्तप्ता रात्रौ शैत्यं सेवन्ते इति प्रसिद्धिः । तत्र गृहाणां चन्द्रमण्डलपर्य्यन्तस्पर्शित्वमिति भावः । अत्रारुणयेति तद्गुणालङ्कारः तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रह इति तल्लक्षणात् । तेन गृहाणां सन्तापनिमित्तकः सुधाकरलेहनरूपः शीतोपचार उत्प्रेक्ष्यते इति व्यञ्जकाप्रयोगाद् गम्योत्प्रेक्षानुप्राणितेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ९९ ॥

इयमेवार्थं प्रकारान्तरेणाह लिलिहे इति। अमलपद्मरागजं निर्मलपद्मरागमणिनिर्मितं यस्या यस्यां वा नृपसद्म

श्रितमर्ककरैः पिपासु यत्
नृपसद्मामलपद्मरागजम् ॥ १०० ॥
अमृतद्युतिलक्ष्म पीतया
मिलितं यद्वडभीपताकया।
वलयायितशेषशायिनः
सखितामादित पीतवाससः ॥ १०१ ॥

राजमन्दिरम् अर्कस्य सूर्य्यस्य विकर्त्तनार्कमार्त्तण्डमिहिरारुण-पूषण इत्यमरः करैः किरणैः बलिहस्तांशवः करा इत्यमरः। श्रितं सङ्गतम् अत्युन्नतत्वेनातिसान्निध्यादिति भावः श्रयतेः कर्मणि क्तप्रत्ययः। श्रिणातेः पक्षार्थोदिति केचित्। तदा ह्रस्वचिन्त्यः प्रकृत्यन्तरं मृग्यम् इत्यास्तां तत्। अतएव पिपासु पातुमिच्छु तृषार्त्तमित्यर्थः पिबतेः सन्नन्तादुप्रत्ययः। स्वा स्वकीया स्वस्यैव वा रुक् रुचिः कान्तिरित्यर्थः यस्यां यस्या वा तया अतएव जिह्वानिभयाः रसनातुल्यया पताकया निशि रात्रौ सुधाकरं चन्द्रं लिलिहे आस्वादयामास लिहेः कर्त्तरि लिट्। स्वरितत्वादात्मनेपदम्। पूर्वोक्त एवालङ्कारो विशे-षणोपमयानुप्राणितः। श्रितमित्यत्र स्थितमिति पाठे अर्क-करैः हेतुभिरित्यर्थः पिपासु स्थितमित्यन्वयः ॥ १०० ॥

अमृतेति। पीतया पीतवर्णया तस्या नगर्य्या वड़भी कूटागारं शिरोगृहमित्यर्थः कूटागारन्तु वड़भिरित्यमरः। तत्र या पताका वैजयन्ती वैजयन्ती पताका स्यादित्यमरः तया मिलितं गृहस्य अतीवोच्चतया सान्निध्यादिति भावः मिलितं सङ्गतम् अमृतद्युतेश्चन्द्रस्य लक्ष्म लाञ्छनं कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणमित्यमरः कर्त्तृ वलयायितः मण्डलितः

अश्रान्तश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवा-
जिह्मब्रह्ममुखौघविघ्नितनवस्वर्गक्रियाकेलिना ।
पूर्वं गाधिसुतेन सामिघटिता मुक्ता नु मन्दाकिनी
यत्प्रासाददुकूलवल्लिरनिलान्दोलैरखेलद्दिवि ॥१०२

यः शेषः अनन्तनागः तस्मिन् शेते इति तथोक्तस्य पीतं वासो वसनं यस्य तस्य पीताम्बरस्य कृष्णस्येत्यर्थः पीताम्बरोऽच्युतः शार्ङ्गीत्यमरः सखितां साम्यम् आदित अग्रहीत्। कलङ्कं परितो वर्त्तमानस्य चन्द्रावयवस्य शेषसर्पेण तन्मध्यस्थस्य कलङ्कस्य कृष्णेन पीतपताकायाश्च कृष्णसम्बन्धिपीतवसनेन सादृश्यात् इयमुपमा ॥ १०१ ॥

अश्रान्तेति। यस्याः नगर्याः प्रासादो राजभवनं देवमन्दिरं वा प्रासादो देवभूभुजामित्यमरः। तस्मिन् तस्य वा या दुकूलं वल्लिरिव आयतत्वात् लतेव श्वेतक्षौममयी पताकेत्यर्थः अश्रान्तेन सन्ततेन श्रुतिपाठेन वेदपाठेन पूताः विशुद्धाः याः रसना जिह्वाः ताभ्यः आविर्भूतेषु निर्गतेषु भूरिषु बहुषु स्तवेषु स्तोत्रेषु स्तवः स्तोत्रं स्तुतिर्नुतिरित्यमरः। अजिह्मः अनलसः अकुण्ठ इत्यर्थः यः ब्रह्मणः विधातुः मुखानाम् ओघः वदनचतुष्टयमित्यर्थः तेन विघ्निता व्याहता निवारितेति यावत् नवस्वर्गक्रियाकेलिः नूतनसृष्टिविधानलीला यस्य तथाभूतेन गाधिसुतेन विश्वामित्रेण पूर्वं ब्रह्मकृतस्तुतेः प्रागित्यर्थः सामिघटिता अर्द्धसृष्टा सामित्वर्द्धे जुगुप्सने इत्यमरः। मुक्ता पश्चात् परित्यक्ता मन्दाकिनी अभ्रगङ्गा नु किम् ? अनिलस्य वायोः आन्दोलैः चालनैः दिवि आकाशे अखेलत् विजहारेत्युत्प्रेक्षा। नु वितर्के इति केचित्। पुरा विश्वामित्रेण राजानं त्रिशङ्कुं

यदतिविमलनीलवेश्मरश्मि-
भ्रमरितभाः शुचिसौधवस्त्रवल्लिः।
अलभत शमनस्वसुः शिशुत्वं
दिवसकराङ्कतले चला लुठन्ती॥१०३॥

तपोबलेन स्वर्गमधिरोपितं देवराजस्ताड़यामास। तेन प्रकुपितो विश्वामित्रः नूतनां सृष्टिं कर्त्तुं प्रारभत। तदवलोक्य विधाता तं स्तवेन सान्त्वयन् सृष्टिव्यापारात् निवारयामासेति त्रिशङ्कूपाख्यानकथात्रानुसन्धेया। शार्दूलविक्रीड़ितं वृत्तं सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितमिति तल्लक्षणात्॥ १०२॥

यदिति। यस्याः नगर्य्याः अतिविमलानि निर्मलतराणि यानि नीलवेश्मानि नीलकान्तमणिनिर्मितगृहाणि तेषां रश्मिभिः प्रभाभिः भ्रमरिता भ्रमरीकृता भ्रमरशब्दात् तत्करोतीति ण्यन्तात् कर्मणि क्तप्रत्ययः। भा दीप्तिः यस्याः तथाभूता श्यामीकृतेति यावत् भाश्छविद्युतिदीप्तय इत्यमरः। शुचिः शुभ्रा सौधस्य हर्म्यस्य वस्त्रवल्लिः लतारूपवसनमित्यर्थः पताकेति यावत् चला वायुसञ्चारात् चञ्चला दिवसकरस्य सूर्य्यस्य अङ्कतले क्रोड़देशे सौधस्यातीवौन्नत्यात् सूर्य्यमण्डलसन्निकृष्टत्वादिति भावः लुठन्ती क्रीड़न्ती सती शमनस्वसुः यमभगिन्याः यमुनायाः शिशुत्वं शैशवम् अलभत बालिका यमुनेव अशोभतेतेत्यर्थः। बालिकाश्च पितुरङ्के स्थिताः क्रीड़न्तीति प्रसिद्धिः। अत्र एकस्याः शैशवेन अन्यस्य सम्बन्धासम्भवेन सादृश्याक्षेपान्निदर्शनालङ्कारः सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति

स्वप्राणेश्वरनर्म्महर्म्यकटकातिथ्यग्रहायोत्सुकं
पाथोदं निजकेलिसौधशिखरादारुह्य यत्कामिनी।
साक्षादप्सरसो विमानकलितव्योमान एवाभवत्
यन्न प्राप निमेषमभ्रतरसा यान्ती रसादध्वनि १०४

तल्लक्षणात् सा च भ्रमरितभा इति तद्गुणेन शुचिसौधवस्त्रवह्निरिति रूपकेण चानुप्राणितेत्येषामङ्गाङ्गिभावेन सङ्करः। तद्गुणलक्षणञ्चोक्तं दर्पणेन। तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रह इति। पुष्पिताग्रावृत्तम् अयुजि न युगरेफतो यकारो युजितु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात् ॥१०३॥

स्वप्राणेति। यस्या नगर्य्याः कामिनी रमणीजनः विमानेन व्योमयानेन व्योमयानं विमानोऽस्त्रीत्यमरः। कलितं गतं व्योम आकाशं याभिः ताः विमानेन आकाशसञ्चारिण्य इत्यर्थः साक्षात् प्रत्यक्षवर्त्तिन्यः साक्षात्प्रत्यक्षतुल्ययोरित्यमरः अप्सरस एव देवाङ्गनेव अभवत् स्त्रियां बहुष्वप्सरस इत्यमराभिधानादेकत्वेऽपि बहुवचनप्रयोगः कृतः। यत् यतः निजकेलिसौधशिखरात् स्वीयक्रीड़ागृहोपरिभागात् अपादानभूतादिति यावत् स्वप्राणेश्वरः निजप्रियतमः तस्य नर्महर्म्यं क्रीड़ागृहं तस्य कटकात् नितम्बात् कटकोऽस्त्री नितम्बोऽद्रेरित्यमरः। एतेन सौधस्य तादृगौन्नत्यं यथा मेघानामपि तन्मेखलासञ्चारित्वं न तु उपरिभागे गतिरिति भावः। आतिथ्यग्रहाय अतिथिसत्कारलाभाय तत्र विश्रामार्थमिति भावः उत्सुकम् उद्यतं तदभिमुखं गन्तुं प्रवृत्तमित्यर्थः पाथोदं मेघम् आरुह्य रसात् प्रियानुरागात् यान्ती गच्छन्ती अध्वनि पथि अभ्रतरसा मेघवेगेन हेतुना निमेषं तदुपलक्षितविलम्बं नेत्रनिमी-

वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भैः
ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधृतावाङ्मुखत्वैः
कस्या नोत्तानगाया दिवि सुरसुरभेरास्यदेशागताग्रैः
यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म १०५

लनञ्च भूमार्गेणाभिसारे पथिकजनानां दर्शनेन लज्जासञ्चारादिति भावः न प्राप न प्राप्ता। स्वाभाविकसौन्दर्य्यविमानसट्टश्मेघारोहणाकाशगमनर्निर्निमेषत्ववशात् नगरकामिन्या अप्सरस्त्वारोप इति रूपकालङ्कार इति केचित् वस्तुतस्तु साक्षादिति विशेषणयोगात् नगरामराङ्गनयोर्भेदेऽपि अभेदाध्यवसायरूपा अतिशयोक्तिरेव विशेषणायोगे तु रूपकमेवेति प्रागुक्तम्। शार्दूलविक्रीड़ितं वृत्तम्॥ १०४॥

वैदर्भीति। वैदर्भ्याः दमयन्त्याः केलिशैले क्रीड़ापर्वते विविधरत्ननिर्मिते इति भावः मरकतशिखरात् हरिन्मणिमयशृङ्गात् कूटोऽस्त्रीशिखरं शृङ्गमित्यमरः। उत्थितैः उद्गतैः पश्चात् ब्रह्माण्डे ऊर्ध्वकटाहे इति भावः य आघातः अंशुदर्भाणामभिघात इत्यर्थः तेन भग्नः विहतः स्यदजः वेगजनितः मदः गर्वो येषां तेषां भावः तत्ता तया हेतुना ह्रिया अस्माभिर्ब्रह्माण्डं विदार्य्य न गतमिति लज्जयेत्यर्थः धृतं गृहीतम् अवाङ्मुखत्वम् अधोमुखत्वं यैः तैः अतएव दिवि स्वर्गे उत्तानं गच्छतीति तथाभूतायाः ऊर्ध्वमुखेन गच्छन्त्या इत्यर्थः उत्ताना वै देवगवो भवन्तीति श्रुतेः। आस्यदेशं मुखदेशं गतानि प्राप्तानि अग्राणि येषां तैः अंशवः किरणा एव दर्भाः तृणाङ्कुराः तैः यस्याः नगर्य्याः सम्बन्धि गोग्रासप्रदानमेव व्रतं तेन सुकृतं पुण्यम् अविश्रान्तम् अविरतम् उज्जृम्भते स्म वर्द्धते स्म।

विधुकरपरिरम्भादात्मनिष्यन्दपूर्णैः
शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् ।
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि स हृतचित्तस्तत्र भैमीवनेन ॥ १०६ ॥

अत्रांशुदर्भाणामिति रूपकं तेषाञ्च ब्रह्माण्डाघाताद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्चेत्युभयोरङ्गाङ्गिभावेन सङ्करः । स्रग्धरावृत्तं म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥ १०५ ॥

साम्प्रतं हंसस्य तत्र दमयन्तीवनदर्शनात् हर्षमाह । विध्विति । तत्र नगर्य्यां स हंसः शशिदृषद्भिः चन्द्रकान्तमणिभिः उपक्लृप्तैः रचितैः निबद्धैरित्यर्थः अतएव विधोश्चन्द्रस्य करपरिरम्भात् किरणसङ्गाद्धेतोः आत्मनः स्वस्य निष्यन्देन प्रस्रवणेन पूर्णैः आकीर्णैः आत्तनिष्यन्दपूर्णैरिति पाठे आत्तः गृहीतः प्रारब्ध इत्यर्थः यः निष्यन्दः तेन पूर्णैरित्यर्थः तरूणां वृक्षाणाम् आलवालैः तलदेशेषु जलरक्षणार्थं विरचितैः वलयाकारजलाधारैरित्यर्थः विफलितं व्यर्थीकृतं जलसेकस्य प्रक्रियायां व्यापारे गौरवं प्रयासो यस्मिन् येन वा तथाभूतेन भैम्या दमयन्त्या वनेन क्रीड़ोपवनेन हृतम् आकृष्टं चित्तं यस्य तथाभूतः व्यरचि विरचितः कृत इत्यर्थः कर्मणि लुङ् । वृक्षाणामालवालपूरणं चन्द्रकान्तनिष्यन्देनेति महाविभवदर्शनादिति भावः । अत्रालवालानां चन्द्रकान्तनिष्यन्दासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदः । इतः प्रभृति श्लोकचतुष्टयं मालिनीवृत्तं ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ १०६ ॥

अथ कनकपतत्रस्तत्र तां राजपुत्रीं
सदसि सदृशभासां विस्फुरन्तीं सखीनाम् ।
उडुपरिषदि मध्यस्थायिशीतांशुरेखा-
नुकरणपटुलक्ष्मीमक्षिलक्षीचकार ॥ १०७ ॥
भ्रमणरयविकीर्णस्वर्णभासा खगेन
क्वचन पतनयोग्यं देशमन्विष्यताधः ।
मुखविधुमदसीयं सेवितुं लम्बमानः
शशिपरिधिरिवोर्ध्वं मण्डलस्तेन तेने ॥ १०८ ॥

अथास्य दमयन्तीदर्शनमाह अथेति । अथ भैमीवनप्रवेशानन्तरं कनकपतत्रः स्वर्णपक्षः हंसः तत्र वने सदृशी भाः कान्तिर्यासां तासां समानरूपाणामित्यर्थः सखीनां सदसि सभायां गोष्ठ्यामित्यर्थः विस्फुरन्तीं विशेषेण दीप्यमानां स्फुरति स्खलत्योः परिनिविभ्यश्चेति षत्वम् । उडूनां ताराणां नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियामित्यमरः परिषदि समाजे मण्डले इत्यर्थः मध्ये तिष्ठतीति मध्यस्थायिनी या शीतांशुरेखा चन्द्रकला तस्याः अनुकरणे साम्यविधाने पटुः समर्था लक्ष्मीः श्रीः यस्याः तथाभूतां तां राजपुत्रीं भैमीम् अक्ष्णोर्नयनयोः लक्षीचकार दृष्टवानित्यर्थः । उपमालङ्कारः । नक्षत्रमध्ये चन्द्रमूर्त्तिरिव सखीनां मध्ये दमयन्ती वराज इति भावः ॥ १०७ ॥

तत्रास्य पतनप्रकारमाह भ्रमणेति । भ्रमणरयेण मण्डलाकारगतिर्भ्रमणं तस्य रयः वेगः तेन विकीर्णा प्रसारिता स्वर्णभासः हेमकान्तयः येन तादृशेन तथा क्वचन कुत्रचित् अधः

अनुभवति शचीत्थं सा घृताचीमुखाभिः
न सह सहचरीभिर्नन्दनानन्दमुच्चैः ।
इति मतिरुदयासीत्पक्षिणः प्रेक्ष्य भैमीम्
विपिनभुवि सखीभिः सार्द्धमावद्धखेलाम् ॥१०६॥

प्रदेशे पतनयोग्यम् अवतरणोचितं देशं स्थानम् अन्विष्यता अनुसन्दधता तेन खगेन पक्षिणा हंसेन अदसीयम् अमुष्याः सम्बन्धिनं मुखविधुं वदनचन्द्रं सेवितुं परिवेष्टितुमित्यर्थः लम्बमानः भूतलमागत इत्यर्थः शशिनः चन्द्रस्य परिधिरिव परिवेश इव ऊर्ध्वम् उपरिदेशे मण्डलः मण्डलाकारभ्रमणं तेने कृतः तनोतेः कर्मणि लिट् । चन्द्रपरित्यागेन तत्परिवेरेतन्मुखचन्द्रसेवनं चन्द्रादपि अस्या मुखस्य उत्कर्षं सूचयतीति व्यतिरेकालङ्कारः उत्प्रेक्षासङ्कीर्णया स्वभावोक्त्यलङ्कारेण व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ १०८ ॥

अथ हंसः तस्यां शच्या अप्युत्कर्षमनुभवति। अनुभवतीति। विपिनभुवि उपवनसीमायां सखीभिः सङ्गिनीभिः सख्यशिश्वीति भाषायामिति निपातनात् ङीप् । सार्द्धं सह साकं सार्द्धं समं सहेत्यमरः आवद्धा प्रारब्धा खेला यया तां क्रीड़न्तीमित्यर्थः क्रीड़ा खेला च कूर्दनमित्यमरः। भैमीं भीमनन्दिनीं दमयन्तीमित्यर्थः प्रेक्ष्य दृष्ट्वा पक्षिणः हंसस्य प्रेक्ष्येति क्त्वाप्रत्ययान्तस्य अनन्तरक्रियया सहैककर्त्तृत्वनियमात् स्थितस्येति पक्षिण इत्यस्य विशेषणमध्याहार्य्यम्। सा प्रसिद्धा शची इन्द्राणी घृताचीमुखाभिः घृताची नाम काचित् सुराङ्गना तत्प्रभृतिभिः सहचरीभिः सह इत्थम् एवम्प्रकारं दमयन्ती यथेति भावः उच्चैः उत्कृष्टं नन्दनानन्दं नन्दनवनविहार-

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
द्वैतीयीकतया मितोऽयमगमत्तस्य प्रबन्धे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ११०

जनितसुखमित्यर्थः न अनुभवति न भुङ्क्ते इत्यर्थः इति मतिः बुद्धिः उदयासीत् उदपद्यत। अत्र प्रेक्ष्य मतिरिति मनन-क्रियापेक्षया समानकर्त्तृकत्वात् पूर्वकालत्वाच्च क्त्वानिर्देशोपपत्तिरस्ति तावन्मात्रस्यैव तत्प्रत्ययोत्पत्तौ प्रयोजकत्वात् प्राधान्यन्तूत्तरक्रियाया अप्रयोजकमिति न कश्चिद् विरोध इति केचिदाहुस्तन्न समीचीनम् उत्तरक्रियाया प्राधान्यस्य सर्वत्रैव दर्शनादिति। अत्रोपमानादुपमेयस्याधिक्यवर्णनाद् व्यतिरेकः तथाचोक्तम्। भेदप्रधानसाधर्म्यमुपमानोपमेययोः। आधिक्यादल्पकथनाद् व्यतिरेकः स उच्यते इति॥ १०९॥

श्रीहर्षमिति। द्वितीय एव द्वैतीयिकः द्वितीयादौ कक् स्वार्थे वा वक्तव्य इति कक्प्रत्ययः। तस्य भावः द्वैतीयिकता तया मितो गणितः द्वितीय इत्यर्थः निसर्गेण स्वभावेन उज्ज्वलः चमत्कारीत्यर्थः अयम् अगमत् समाप्तिं गत इत्यर्थः अन्यत् प्राग् व्याख्यातम्॥ ११०॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
नैषधचरितस्य द्वितीयसर्गव्याख्या समाप्ता।

# तृतीयः सर्गः ।

—०—

आकुञ्चिताभ्यामथ पक्षतिभ्यां
नभोविभागात्तरसावतीर्य्य ।
निवेशदेशाततधूतपक्षः
पपात भूमावुपभैमि हंसः ॥ १ ॥
आकस्मिकः पक्षपुटाहतायाः
क्षितेस्तदा यः स्वन उच्चचार ।

अथास्य भैमीसमीपे पतनमाह आकुञ्चिताभ्यामिति । अथ दमयन्त्याः सखीभिर्वनविहारस्य इन्द्राण्या अप्सरोभिः सह नन्दनविहारादपि उत्कर्षबोधानन्तरं हंसः आकुञ्चिताभ्यां सङ्कुचिताभ्यां पक्षतिभ्यां पक्षमूलाभ्यां स्त्रीपक्षतिः पक्षमूलमित्यमरः नभोविभागात् आकाशदेशात् तरसा वेगेन रंहस्तरसी तु रयः स्यद इत्यमरः अवतीर्य्य अवरुह्य निवेशदेशे उपवेशनस्थाने आततौ विस्तारितौ धूतौ कम्पितौ पक्षौ येन तथाभूतः सन् पक्षिस्वभावोक्तिरलङ्कारः । उपभैमि भैम्या दमयन्त्याः समीपे सामीप्येऽव्ययीभावः नपुंसके ह्रस्वत्वं भूमौ भूतले पपात अवततार । अस्मिन् सर्गे इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तं स्यादिन्द्रवज्रा यदितौ जगौ ग इति उपेन्द्रवज्रा प्रथमे लघौ सेति अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति च तल्लक्षणात् ॥ १ ॥

तद्दर्शनेन दमयन्त्याः सम्भ्रममाह आकस्मिक इति । तदा

द्रागन्यविन्यस्तदृशः स तस्याः
सम्भ्रान्तमन्तःकरणं चकार ॥ २ ॥
नेत्राणि वैदर्भसुतासखीनां
विमुक्ततत्तद्विषयग्रहाणि
प्रापुस्तमेकं निरुपाख्यरूपं
ब्रह्मेव चेतांसि यतव्रतानाम् ॥ ३ ॥

तस्मिन् काले तत्पतनसमये इत्यर्थः पक्षपुटेन पक्षद्वयेन आहतायाः आहतिं नीतायाः क्षितेः भूमेः सकाशात् अकस्माद् भव आकस्मिकः सहसोत्थित इत्यर्थः यः स्वनः शब्दः उच्चचार उदतिष्ठत् स स्वनः अन्यस्मिन् विषयान्तरे इत्यर्थः विन्यस्ते निहिते दृशौ यया तस्याः अन्यत्र निविष्टदृष्टेरित्यर्थः तस्याः दमयन्त्याः अन्तःकरणं हृदयं सम्भ्रान्तं चकितं चकार स्वभावोक्तिरलङ्कारः ॥ २ ॥

नेत्राणीति। विदर्भाणां राजा वैदर्भः भीमः जनपदवाचकात् क्षत्रियादञ् प्रत्ययः। तस्य सुता दमयन्ती तस्याः सख्यः तासां नेत्राणि दृष्टयः, विमुक्ताः त्यक्ताः तेषु तेषु विषयेषु उपवनीयद्रष्टव्यवस्तुषु ग्रहः ग्रहणम् अवबोध इति यावत् अन्यत्र तत्तद्विषयेषु स्रक्चन्दनवनितादिभोग्यवस्तुषु ग्रहः आसङ्गः यैः तानि सन्ति एकम् एकाचयम् अद्वितीयञ्च नास्ति उपाख्या यस्य तत् निरुपाख्यम् अनिर्वर्ण्यमित्यर्थः रूपम् आकृतिः स्वरूपञ्च यस्य तं पुरोवर्त्तिनं हंसं यतव्रतानां योगिनां चेतांसि उक्तरूपाणीति भावः ब्रह्मेव परमात्मानमिव उक्तरूपमिति भावः प्रापुः सादरं ददृशुरिति भावः। उपमालङ्कारः।

हंसं तनौ सन्निहितं चरन्तं
मुनेर्मनोवृत्तिरिव स्विकायाम् ।
ग्रहीतुकामा दरिणा शयेन
यत्नादसौ निश्चलतां जगाहे ॥ ४ ॥

ब्रह्मपक्षे नास्ति रूपम् आकारः आख्या अभिधानं सङ्केतग्राहकमिति भावः यस्य तादृशं रूपं स्वरूपं यस्य तत् । आख्याह्वे चाभिधानञ्चेत्यमरः । इति केचित् ॥ ३ ॥

अथ तस्या हंसग्रहणचेष्टामाह हंसमिति । असौ दमयन्ती मुनेर्योगिनः मनोवृत्तिरिव स्विकायां स्वीयायां प्रत्ययस्थात् कात्पूर्वस्येतीकारः । तनौ शरीरे शरीरसमीपे सामीप्याधारे सप्तमी सामीप्याश्लेषविषयैर्व्याप्त्याधारश्चतुर्विध इति वोपदेवः । यद्वा तनौ गङ्गायां घोष इतिवत् लक्षणया तनुसमीपे इत्यर्थः लक्षणाप्रयोजनञ्च तनोरतिसन्निकर्षः । अन्यत्र देहाभ्यन्तरे सन्निहितं चरन्तं सन्निधाय सञ्चरन्तं यद्वा सता नलेन निहितं प्रेषितं चरन्तं किमपि खादन्तम् अन्तर्यामित्वेन विहरन्तञ्च हंसं पक्षिणं मरालं परमात्मानञ्च हंसो विहङ्गभेदे च परमात्मनि मत्सरे इति विश्वः । दरिणा सभयेन यदि दशेदिति धियेति भावः दरोऽस्त्रियां भये श्वभ्रे इत्यमरः । अदरिणा निर्भीकेण बाल्यचापल्यादिति केचित् । आदरिणा इति पाठे आ सम्यक् दरो भयं तद्वता । शयेन पाणिना पञ्चशाखः शयः पाणिरित्यमरः अन्यत्र आदरिणा आदरवता सनिर्बन्धेनेत्यर्थः आशयेन भावेन भावोऽभिप्राय आशय इत्यमरः उभयत्र समानमेतत् ग्रहीतुं धर्तुं साक्षात्कर्तुञ्च कामो यस्याः तथाभूता सती यत्नात् निश्चलतां निश्चलाङ्गताम् अन्यत्र स्थिरतामेकाग्र-

तामिङ्गितैरप्यनुमाय मायाम्
अयं न भैम्या वियदुत्पपात।
तत्पाणिमात्मोपरिपातुकन्तु
मोघं वितेने प्लुतिलाघवेन ॥ ५ ॥
व्यर्थीकृतं पत्त्ररथेन तेन
तथावसाय व्यवसायमस्याः।

तामित्यर्थः जगाहे प्राप गाहतेर्लिट्। अत्र श्लेषेणानुप्राणिता उपमालङ्कारः ॥ ४ ॥

तदवलोकनेन हंसस्यापि चेष्टाविशेषमाह तामिति। अयं हंसः ताम् अङ्गनिश्चलतारूपां भैम्याः मायां स्वधारणार्थं कूटव्यवहारमित्यर्थः इङ्गितैः चेष्टितैः स्वहृदयगतैः भावैर्वा इङ्गितं हृद्गतो भाव इत्यमरः अनुमाय निश्चित्यापि वियत् आकाशं वियद् विष्णुपदं वापि पुंस्याकाशविहायसी इत्यमरः। न उत्पपात नोड्डयते स्म आकाशं प्रति नोदतिष्ठदित्यर्थः। तु किन्तु आत्मनः स्वस्य उपरि पातुकं पतयालु पतनोद्यतमित्यर्थः लषपतेत्यादिना उकञ्प्रत्ययः। तस्याः भैम्याः पाणिं करं प्लुतिः गतिविशेषः तस्याः लाघवं शीघ्रता तेन मोघं विफलं निष्फलप्रयासमित्यर्थः वितेने कृतवान्। मयि आकाशमुत्पतिते मद्धारणप्रयत्नं विफलमिति मत्वा इयं गृहं गच्छेद् यदि तदा मम दौत्यार्थमागमनप्रयासो विफलः स्यादिति धिया तथा कौशलेन अस्याः स्वधारणाशां जनयति स्म न तु पाणौ लगति स्म चेति भावः ॥ ५ ॥

तदवलोकनेन सखीनां हासमाह व्यर्थीकृतमिति। आलीभिः सखीभिः आलीः सखी वयस्या चेत्यमरः। तेन पत्त्र-

परस्परामर्पितहस्ततालं
तत्कालमालीभिरहस्यताऽलम् ॥ ६ ॥
उच्चाटनीयः करतालिकानां
दानादिदानीं भवतीभिरेषः ।
याऽन्वेति मां द्रुह्यति मह्यमेव
साऽत्रेत्युपालम्भि तयालिवर्गः ॥ ७ ॥

रथेन पक्षिणा हंसेनेत्यर्थः पतत् पत्ररथाण्डजा इत्यमरः । अस्या भैम्याः तथा तादृशं व्यवसायं हंसधारणे चेष्टितं तथा तेन प्रकारेण तथेत्युभयत्रान्वेति । व्यर्थीकृतं विफलीकृतम् अवसाय निश्चित्य तत्कालं तस्मिन् काले अत्यन्तसंयोगे द्वितीया । यद्वा स एव कालो यस्येति बहुव्रीहौ क्रियाविशेषणम् । परस्पराम् अन्योन्यस्यां कर्मव्यतीहारे सर्वनाम्नो द्विर्भावः समासवच्च बहुलमिति बहुलग्रहणादसमाससद्भावे पूर्वपदस्य प्रथमैकवचनं कस्कादित्वाद् विसर्जनीयस्य सत्वम् उत्तरपदस्य यथायोगं द्वितीयाद्येकवचनं स्त्रीपुंसयोरुत्तरपदस्थायाः विभक्तेराम्भावो वक्तव्य इति विकल्पादामादेशः । अर्पितो दत्तः हस्तेषु तालः, ताड़नं तालिका वा यस्मिन् तत् यथा तथा अलम् अत्यर्थम् अहस्यत हसितं भावे लङ् ॥ ६ ॥

तदवलोक्य दमयन्त्याः सखीः प्रति उपालम्भमाह उच्चाटनीय इति । हला सख्य इति सम्बोधनपदमध्याहार्य्यं भवतीभिः एष हंसः करतालिकानां दानात् परस्परहस्तताड़नात् उच्चाटनीयः निष्कासनीयः ? इति काकुः । मया एतस्य ग्रहणाय यत्नः क्रियते युष्माभिस्तु यथायमितः पलायते तथा क्रियते एतद्युक्तं किमिति भावः । इदानीम् अत्रास्मिन्

धृताल्पकोपा हसिते सखीनां
छायेव भास्वन्तमभिप्रयातुः।
श्यामाथ हंसस्य करानवाप्तेः
मन्दाचलच्या लगतिस्म पश्चात्॥ ८॥

व्यापारे हंसग्रहणे इत्यर्थः या माम् अन्वेति अनुगच्छति मत्साहायकं करोतीति भावः यस्या मत्सहायतां कर्त्तुं युक्तमिति भावः। सा मह्यमेव द्रुह्यति मदनिष्टमेव करोतीत्यर्थः तस्या ममानिष्टकरणं किमुचितमिति भावः क्रुधद्रुहेत्यादिना सम्प्रदानत्वात् चतुर्थी। इत्येवम्प्रकारेण तया दमयन्त्या आलिवर्गः सखीगणः आलीः सखी वयस्या चेत्यमरः। उपालम्भि तिरस्कृतः। यद्वा या अत्र युष्मासु युष्माकं मध्ये इत्यर्थः माम् अन्वेति अनुगच्छति, सा मह्यमेव द्रुह्यति ममैवानिष्टं विधास्यतीत्यर्थः भूतसामीप्ये लट्। मदनुगमने एष भयातिशय्यात् उत्पतेत् अतो नानुगन्तव्यं कयापि, यद्यनुगच्छेत् तदा तया मम मस्तकं भोक्तव्यमिति भावः इतीत्थम् उपालम्भि अभिशप्त इत्यर्थः॥ ७॥

इत्थं सखीर्निवार्य्य भैम्या एकाकिन्या एव हंसानुसरणमाह धृतेति। अथ सखीनिवारणानन्तरं सखीनां हसिते हासक्रियायां धृतः कृतः अल्पः कोपः क्रोधः यया सा ईषत्कोपिनीत्यर्थः श्यामा यौवनमध्यस्था श्यामा यौवनमध्यस्थेत्युत्पलमालायाम्। शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला। तप्तकाञ्चनवर्णाभा सा श्यामा परिकीर्त्तितेत्युक्तलक्षणा वा कामिनी दमयन्ती अन्यत्र श्यामवर्णा भास्वन्तं सूर्य्यम् अभिप्रयातुः सूर्य्यमाभिमुख्येन गच्छत इत्यर्थः छायेव अनातपरेखेव

शस्ता न हंसाभिमुखी पुनस्ते
यात्रेति ताभिश्छलहास्यमाना ।
साहस्म नैवाशकुनीभवेन्मे
भाविप्रियावेदक एष हंसः ॥ ६ ॥

छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातप इत्यर्थः हंसस्य पक्षिणः कर्मणि षष्ठी अन्यत्र हंसस्य सूर्य्यस्य हंसो विहङ्गभेदे स्यादर्के विष्णौ हयान्तरे । इति विश्वः । करेण हस्तेन अनवाप्तिः अग्रहणम् अन्यत्र कराणां किरणानामनवाप्तिरप्राप्तिः तस्या हेतोः बलिहस्तांशवः करा इत्यमरः । मन्दाक्षेण लज्जया मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जेत्यमरः । लक्ष्या दृश्या सलज्जेव दृश्यमानेत्यर्थः अन्यत्र मन्दाक्षैरपटुदृष्टिभिरपि लक्ष्या ग्राह्या आतपस्पर्शाभावादिति भावः सती पश्चात् लगति स्म हंसस्य पृष्ठानुगामिनी अभूत् प्राप्त्याशयेति भावः ॥ ८ ॥

अथ सखीनां दमयन्त्याश्च छलेन उक्तिप्रत्युक्ती वर्णयति शस्तेति । हे सखि ! ते तव हंसस्य श्वेतच्छदस्य पक्षिणः सूर्य्यस्य च अभिमुखी यात्रा आभिमुख्येन गमनं न शस्ता न प्रशस्ता नानुकूलेत्यर्थः न श्रेयस्करीति भावः प्रतिसूर्य्यं प्रतिबुधं प्रत्यङ्गारकमेव च । अपि शक्रसमो राजा हतसैन्यो निवर्त्तते इति शास्त्रविरोधात् श्रमसन्तापरूपदृष्टदोषाच्चेति भावः इतीत्थं ताभिः सखीभिः छलेन व्याजोक्त्या हास्यमाना हासेन उच्यमानेत्यर्थः हस्यमानेति पाठे हसधातोरकर्म्मकत्वात् कर्म्मप्रत्ययश्चिन्त्यः । सती सा दमयन्ती एष हंसः मे मम नैव अशकुनीभवेत् अशकुनः अमङ्गलसूचकः न भवतु इत्यर्थः विध्यादिसूत्रेण प्रार्थनायां लिङ् । अपक्षी न भवेदिति च व्यज्यते ।

हंसोऽप्यसौ हंसगतेः सुदत्याः
पुरः पुरश्चारु चलन् बभासे ।
वैलक्ष्यहेतोर्गतिमेतदीयाम्
अग्रेऽनुकृत्योपहसन्निवोच्चैः ॥ १० ॥

शकुनस्तु पुमान् पक्षिमात्र पक्षिविशेषयोः । शुभशंसि निमित्ते च शकुनं स्यान्नपुंसकमिति मेदिनी । अभूततद्भावे च्विप्रत्ययः । अपितु भाविनः आगामिनः प्रियस्य शुभस्य आवेदकः सूचकः यद्दर्शने अन्तरात्मा प्रसीदति सोऽवश्यमेव शुभकर इति भावः भाविनः प्रियस्य नलस्य आवेदक इति च गम्यते। इति आहस्म अब्रवीत् ब्रुवः पञ्चानामाहादेशः । अत्र सखीभिरशकुनत्वेनोक्तस्य हंसस्य दमयन्त्या शकुनत्वेन योजनात् वक्रोक्तिरलङ्कारः स च श्लेषमूल इति शब्दालङ्कारयोरङ्गाङ्गिभावः सङ्करः । तदुक्तं दर्पणे । अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद् यदि । अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्तथा द्विधेति ॥ ८ ॥

अथ हंसस्य चेष्टितमाह हंस इति । असौ हंसोऽपि न केवलं सख्यस्तामुपहसन्ति इत्यपिशब्दार्थः । हंसस्य गतिर्गमनमिव गतिर्यस्याः तस्या हंसगामिन्या इत्यर्थः सुदत्याः सुष्ठु मनोज्ञा इत्यर्थः दन्ता यस्याः तथाभूताया दमयन्त्याः पुरः पुरः अग्रे अग्रे वीप्सायां द्विर्भावः चारु मनोज्ञं यथा तथा अव्याकुलत्वादिति भावः चलन् गच्छन् वैलक्ष्यं लज्जावत्त्वम् एव हेतुः तस्मात् यद्वा वैलक्ष्यं विस्मय एव हेतुः तस्य दमयन्त्या लज्जोत्पादनार्थम् अहो पक्षी अपि अयं मद्गतिमनुकरोतीति विस्मयजननार्थं वा विलक्षो विस्मयान्वित इत्यमरः । षष्ठी हेतुप्रयोगे इति षष्ठी । अग्रे सम्मुखतः एतस्या इयम् एतदीया

पदे पदे भाविनि भाविनी तं
यथा करप्राप्यमवैति नूनम्।
तथा सखेलं चलता लतासु
प्रतार्य्य तेनाचकृषे कृशाङ्गी ॥ ११ ॥
रुषा निषिद्धालिजनां यदैनां
छायाद्वितीयां कलयाञ्चकार।

ताम् एतत्सम्बन्धिनीमित्यर्थः दमयन्तीसम्बन्धिनीमिति यावत् गतिं गमनम् अनुकृत्य अभिनीय उच्चैः उपहसन्निवेत्युत्प्रेक्षा बभासे भाति स्म। लोके च परिहासकास्तत्तच्चेष्टितानुकरणेन परान् विलक्षयन्तीति प्रसिद्धिः। अत्र हंसगतेरिति एतदीयां गतिमनुकृत्येति च उपमालङ्कारः। तदनयोरुपमोत्प्रेक्षयो-रङ्गाङ्गिभावेन सङ्करः ॥ १० ॥

पदे पदे इति। निर्विकारात्मके चित्ते भावः प्रथमविक्रियेति दर्पणोक्तलक्षणो भावः विद्यते यस्याः सा भाविनी यद्वा भावयतीति भाविनी हंसग्रहणमेव भावयन्तीत्यर्थः कृशम् अङ्गम् उदरं यस्याः सा कृशाङ्गी कृशोदरीत्यर्थः क्वचित् सामान्यशब्दस्य विशेषपरत्वादङ्गशब्देनात्र उदररूपमङ्गं प्रतीयते। भैमी भाविनि भविष्यति अनन्तरविक्षेपे इति यावत् भविष्यति गम्यादय इति साधु। पदे पदे प्रतिपदं प्रतिपद-विक्षेपे इत्यर्थः तं हंसं यथा करप्राप्यं हस्तग्राह्यं नूनम् एतस्मिन् पदविक्षेपे एनं धरामीति निश्चितम् अवैति बुध्यते प्रत्येतीत्यर्थः तथा सखेलं सलीलं चलता गच्छता तेन हंसेन प्रतार्य्य वञ्चयित्वा लतासु लतागहनान्तरे इत्यर्थः आचकृषे आकृष्य नीतेत्यर्थः। आङ् पूर्वात् कृषेर्लिट् ॥ ११ ॥

तदा श्रमाम्भःकणभूषिताङ्गीं
स कीरवन्मानुषवागवादीत् ॥ १२ ॥
अये! कियद्यावदुपैषि दूरं?
व्यर्थं परिश्राम्यसि वा किमर्थम्?।

अथ तथैकान्तमानीतां तां प्रति हंसस्य वचनमाह रुषेति। स हंसः रुषा क्रोधेन निषिद्धः नागन्तव्य मया सह युष्माभिरिति निवारितः आलिजनः सखीजनः यया तथोक्ताम् एनां छाया स्वप्रतिविम्बमेव द्वितीया यस्याः ताम् एकाकिनीमित्यर्थः यद्वा छाया कान्त्या अद्वितीया निरुपमेत्यर्थः तां तथा श्रमाम्भसां स्वेदजलानां कणैः विन्दुभिः भूषितानि अलङ्कृतानि किमिव हि मधुराणां मण्डनं नाकृतीनामिति भावः अङ्गानि यस्याः तथाभूताम् एनां भैमीं कलयाञ्चकार विवेद एकाकिनीयमतोऽधिकगमने समधिकश्रमभिया न गमिष्यति चेत्तदा मम प्रयासो विफलः स्यात्तदत्रैव स्थित्वा एनां मदभिप्रायं निवेदयामीति पर्य्यालोचयामासेति भावः तदा कीरवत् शुक इव कीरशुकौ समावित्यमरः मानुषी मानुषस्येव वा वाग् यस्य तथाभूतः सन् अवादीत् उवाच ॥ १२ ॥

किमित्याह अये इति। अये बाले! बालिके! अल्पबुद्धे इति भावः व्यर्थं निरर्थकं विः पक्षी तस्मै इदं व्यर्थं पक्षिग्रहणार्थमिति वार्थः। कियद्दूरं यावत् उपैषि उपगच्छसि उपैष्यसीत्यर्थः यावत् पुरा निपातयोर्भाविनि लट्। किमर्थं कस्मै इदं किमर्थं किम्प्रयोजनसाधनार्थमित्यर्थः परिश्राम्यसि परिश्रान्ता भवसि वा। घनाः सान्द्राः गहना इत्यर्थः वनालीः वनश्रेणीः विलोकयन्त्याः पश्यन्त्याः ते तव भीरपि भयमपि

उदेति ते भीरपि किन्नु ? बाले !
विलोकयन्त्या न घना वनालीः ॥ १३ ॥
वृथार्पयन्तीमपथे पदं त्वां
मरुल्ललत्पल्लवपाणिकम्पैः ।
आलीव पश्य प्रतिषेधतीयं
कपोतहुङ्कारगिरा वनालिः ॥ १४ ॥

भीतिर्भीः साध्वसं भयमित्यमरः किन्नु किमहो न उदेति नोत्पद्यते एतद्दर्शनात् भवादृश्या अवश्यमेव भेतव्यमिति भावः । अत्र भयहेतौ सत्यपि भयाभाव इति विशेषोक्तिः निर्भयत्व-हेतुं विना निर्भयतेति च विभावना तदनयोः सन्देहसङ्करः । तदुक्तं दर्पणे । सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति । विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते इति अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनरिति च ॥ १३ ॥

वृथेति । इयं वनालिः काननश्रेणी आलीव सखीव वृथा निरर्थकमेव न पन्था इत्यपथम् ऋक्पूरित्यादिना समासान्तः । नपुंसकम् । तस्मिन् अपथे कुमार्गे अकार्य्ये च मदग्रहणादिरूपे इति भावः पदं चरणं व्यवसायम् उद्यममित्यर्थः अर्पयन्तीं निदधतीं कुर्वतीञ्च पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्य-मरः । मरुता वायुना ललन् चलन् लसन्निति पाठेऽपि स एवार्थः पल्लव एव पाणिः करः तस्य कम्पैः कपोतानां पारा-वतानां हुङ्कारगिरा हुमिति शब्देन च प्रतिषेधति मात्र त्वया आगन्तव्यमिति निवारयति पश्य अवलोकय वाक्यार्थः कर्म्म ।

धार्य्यः कथङ्कारमहं भवत्या
वियद्विहारी वसुधैकगत्या।
अहो! शिशुत्वं तव खण्डितं न
स्मरस्य सख्या वयसाप्यनेन?॥ १५॥

असमार्गप्रवृत्तं जनमेवं लोके स्वजना यथा निवारयन्ति तद्वदिति भावः। अतएवात्र पल्लव एव पाणिरिति उपमानधर्म्मस्य प्राधान्यात् रूपकमेव तेन च आलीवेत्युपमालङ्कारः सङ्कीर्य्यते इत्युभयोरङ्गाङ्गिभावेन सङ्करः॥ १४॥

त्वद्वारणार्थं मया श्रम्यते तद् व्यर्थमिति कथमित्याह धार्य्य इति। वसुधायां पृथिव्याम् एका केवला न तु आकाशेऽपीति एकशब्दार्थः गतिर्यस्याः तथाभूताया भूतलमात्रचारिण्येत्यर्थः। शिवभागवत् समासः। भवत्या त्वया वियति आकाशे विहरति सञ्चरति क्रीड़तीति वा वियद्विहारी आकाशचरः अहं कथङ्कारं कथमित्यर्थः कथं शब्दोपपदात् करोतेर्णमुल्। धार्य्यः धर्त्तुं शक्यः शकि लिङ् चेति चकारात् शक्यार्थे कृत्यप्रत्ययः। अहो आश्चर्य्यम् अनेन प्रत्यक्षदृश्यमानेन स्मरस्य कामस्य सख्या सहायेन तदुद्दीपकेनेति भावः वयसा यौवनेन सखिशब्दस्य भाषितपुंस्कत्वात् पुंवद्भावः। तव शिशुत्वं बाल्यं तत्कार्य्यं चापल्यमिति भावः न खण्डितं नापनीतम्? अन्यथा स्वस्य भूतलसञ्चारित्वं मम च आकाशसञ्चारित्वं विदित्वा कथमित्थं मद्ग्रहणप्रयास इति भावः। स्मरस्य सख्या सहायेन विवाहसम्पादनेन कामव्यापारप्रवर्त्तकेनेति भावः अनेनेति आत्मनिर्देशः वयसा पक्षिणा मयेति भावः तव शिशुत्वं कौमार्य्यं न खण्डितम्? अपितु नलेन सह विवाहसम्पा-

सहस्रपत्रासनपत्रहंस-
वंशस्य पत्राणि पतत्रिणः स्मः।
अस्मादृशां चाटुरसामृतानि
स्वर्लोकलोकेतरदुर्लभानि ॥ १६ ॥
स्वर्गापगाहेममृणालिनीनां

दनेन खण्डितमेवेति सूच्यते भविष्यत् सामीप्ये भूतार्थप्रत्ययः। अत्राधार्य्यत्वताया वसुधागति-वियद्विहाररूपपदार्थहेतुकत्वात् पदार्थद्वयहेतुकं काव्यलिङ्गं शैशवखण्डनहेतौ सत्यपि तद-खण्डनात् विशेषोक्तिश्चेत्यनयोः संसृष्टिः ॥ १५ ॥

साम्प्रतं प्रकृतोपयोगित्वात् स्वान्वयं निवेदयति सहस्रेति। सहस्रपत्रं कमलं सहस्रपत्रं कमलं शतपत्रं कुशेशयमित्यमरः। आसनं यस्य स सहस्रपत्रासनः ब्रह्मा तस्य पत्राणि वाहनानि ये हंसाः तेषां वंशस्य कुलस्य वेणोश्च पत्राणि वाहनानि पत्र-भूतानि तदुत्पन्नानीति भावः पर्णानि च वंशो वेणौ कुले वर्गे पत्रं स्याद् वाहने पर्णे इति च विश्वः पतत्रिणः पक्षिणः स्मः। ब्रह्मवाहनहंसानांवंशोत्पन्नाः तद्वाहनानि वा वयमित्यर्थः वयमिव दृश्यन्ते इत्यस्मादृशः तेषामस्मद्विधानामित्यर्थः त्यदा-दिष्वित्यादिना दृशेः कर्म्मणि क्विप्। चाटुषु प्रियोक्तिषु रसाः शृङ्गारादयः। शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः। वीभत्स-रौद्रौ च रसा इत्यमरः स्वर्लोकस्य स्वर्गस्य लोकाः जनाः तेभ्यः इतरे अन्ये मानवादय इत्यर्थः तैः दुर्लभानि लब्धुमशक्यानि। त्वं हि मानुषी तत् कथं त्वया सह मम सुधासमप्रियवचना-लापः सम्भवति कथञ्च देवलोकपक्षी अहं त्वया धार्य्य इति भावः ॥ १६ ॥

नालामृणालाग्रभुजो भजामः ।
अन्नानुरूपां तनुरूपऋद्धिं
कार्य्यं निदानाद्धि गुणानधीते ॥ १७ ॥

अथ स्वशरीरस्य स्वर्णमयत्वे हेतुमाह स्वर्गापगेति। स्वर्गापगा सुरनदी मन्दाकिनीत्यर्थः तस्यां तस्या वा या हेममृणालिन्यः स्वर्णपद्मिन्यः तासां नालाः काण्डा दण्डा इत्यर्थः पद्माधारयष्टय इत्यर्थः मृणालानि विसानि अत्र नालामृणालशब्दस्य शब्दानुशासनं केषां शब्दानामितिवत् समासे गुणीभूतेन सम्बन्धः सोढव्यः। नालानालमथास्त्रियामित्यमरवचनान्नालेति स्त्रीलिङ्गनिर्देशः। न च तत्रापि सन्देहः तद्व्याख्यानेषु देशान्तरकोशेषु च स्त्रीलिङ्गपाठस्यैव दर्शनात् दशमे सर्गे च मृदुत्वमप्रौढ़मृणालनालयेति प्रयोक्ष्यते। नाला स्याद् विसकन्द इति विश्वश्च तेषामग्राणि अग्रभागान् न तु मूलानि तेषां काठिन्यादिति भावः माद्दशानां शरीरस्यातिकोमलत्वं तेन च माद्दशानामनिष्ठुरत्वं ध्वन्यते। भुञ्जते इति तथाभूताः सन्तः वयम् अन्नानुरूपाम् आहारसदृशीं तनोः शरीरस्य रूपऋद्धिं वर्णसम्पदम् ऋत्यकिति प्रकृतिभावः। भजामः प्राप्नुमः। हि तथाहि कार्य्यं जन्यद्रव्यं निदानात् उपादानकारणात् गुणान् रूपादीन् अधीते प्राप्नोति अधिपूर्वादीमतावित्यस्मात् लट्। कारणगुणाः कार्य्यगुणमारभन्ते इति न्यायात् प्रायेण आहारपरिणतिविशेषसमुदिताः प्राणिनां शरीरकान्तयो भवन्तीति भावः। नालाः नलस्य इमे इति नालाः तत्सम्बन्धिनो वयमित्यस्य विशेषणमित्यपि ध्वन्यते। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ १७ ॥

धातुर्नियोगादिह नैषधीयं
लीलासरः सेवितुमागतेषु ।
हैमेषु हंसेष्वहमेक एव
भ्रमामि भूलोकविलोकनोत्कः ॥ १८ ॥
विधेः कदाचित् भ्रमणीविलासे
श्रमातुरेभ्यः स्वमहत्तरेभ्यः ।
स्कन्धस्य विश्रान्तिमदां तदादि
श्राम्यामि नाविश्रमविश्वगोऽपि ॥१९॥

अथ स्वस्य भूलोकागमनहेतुमाह धातुरिति। धातुः ब्रह्मणः नियोगात् सुष्ठु वाहिता वयं युष्माभिस्तत्परितोषेण युष्माकं विश्रामावकाशो दीयते यथेच्छं विहरथेत्यादेशादित्यर्थः। इह भूलोके नैषधस्य नलस्य इदं नैषधीयं लीलासरः क्रीड़ासरोवरं सेवितुं तत्र विहर्त्तुमित्यर्थः आगतेषु हैमेषु हेम्नः विकाराः हैमाः तेषु हेममयेष्वित्यर्थः विकारार्थे अण्प्रत्ययः। नस्तद्धित इति टिलोपः। हंसेषु मध्ये अहमेक एव नान्य इत्येवकारार्थः। भूलोकस्य मर्त्यलोकस्य विलोकने दर्शने उत्कः उत्सुकः सन् प्रमना विमना अन्तर्मनाः स्यादुत्क उन्मना इत्यमरः। उच्छब्दात् कन्प्रत्ययान्तो निपातः। भ्रमामि पर्य्यटामि तत्प्रसङ्गेनात्रागतोऽस्मीति भावः॥ १८ ॥

नन्वनवरतभ्रमणेऽपि न मम श्रान्तिरित्याह विधेरिति। कदाचित् कुत्रचित् समये विधेः ब्रह्मणः विश्वसृग्विधिरित्यमरः। सम्बन्धिनि भ्रमणीविलासे भुवनभ्रमणविनोदे श्रमेण अनवरतपर्य्यटनेन आतुराः क्लान्ताः तेभ्यः स्वस्मात् आत्मनः

बन्धाय दिव्ये न तिरश्चि कश्चित्
पाशादिरासादितपौरुषः स्यात्।
एकं विना मादृशि तन्नरस्य
स्वर्भोगभाग्यं विरलोदयस्य ॥ २० ॥

महत्तराः प्रवृद्धाः कुलवृद्धा इति यावत् तेभ्यः स्कन्धस्य भुजशिरसः स्कन्धो भुजशिरोऽंसोऽस्त्रीत्यमरः। विश्रान्तिं विश्रामम् अदाम् दत्तवान् भवन्तोऽतीवश्रान्ताः तदिदानीं वहनकार्य्यं परित्यज्य विश्राम्यन्त्वित्युक्त्वा स्वमहत्तरानपसार्य्य स्वयं ब्रह्माणं वोढ़वानस्मीत्यर्थः ददातेर्लुङि गतिस्थेत्यादिना सिचो लुक्। तदादि ततः प्रभृति नास्ति विश्रमो यस्मिन् तद् यथा तथा नोदात्तोपदेशेत्यादिना अमेर्घञि वृद्धिप्रतिषेधः। विश्वं गच्छतीति विश्वगः सर्वभुवनगामी अपि अन्यत्रापि दृश्यते इति गमेर्डप्रत्ययः। न श्राम्यामि न अवसीदामि ब्रह्मणः प्रसादादिति भावः ॥ १९ ॥

सर्वत्र गमनेऽपि मम पाशादिबन्धनक्लेशो नास्तीत्याह बन्धायेति। दिवि भवः दिव्यः तस्मिन् दिव्ये स्वर्गीये मादृशि मद्विधे तिरश्चि पक्षिविषये विरलः दुर्लभः कादाचित्क इत्यर्थः उदयः उत्पत्तिर्यस्य तादृशस्य नरस्य प्रायेण तथाविधो न समुत्पद्यते इति भावः अथच विगतो रो रेफः यत्र तद् यथा तथा लस्य लकारस्य उदयः आविर्भावः रकारस्थाने लकारागम इत्यर्थः यस्य तस्य नलस्येति ध्वन्यते। तत् प्रसिद्धम् एकं स्वर्भोगभाग्यं स्वर्गभोगप्रापकमदृष्टमित्यर्थः विना कश्चित् कोऽपि पाशादिः पशुबन्धनसामग्रीत्यर्थः बन्धाय आसादितं प्राप्तं पौरुषं सामर्थ्यं येन सः न स्यात्। दिव्यं पक्षिणं मादृशं बन्धुं

इष्टेन पूर्त्तेन नलस्य वश्याः
स्वर्भोगमत्रापि सृजन्त्यमर्त्त्याः ।
महीरुहा दोहदसेकशक्तेः
आकालिकं कोरकमुद्गिरन्ति ॥ २१ ॥

न कोऽपि मानवः समर्थः, केवलं यः क्षितिस्थोऽपि स्वर्गसुख-भोगं करोति तस्यैव वयं वश्याः । केवलं नल एव तथाविधो-ऽस्ति तद् यदि त्वं नलप्रिया स्यास्तदा वयं त्वया धार्य्या भवेयं नान्यथेति ध्वन्यते काव्यलिङ्गमलङ्कारः ॥ २० ॥

तादृशं भाग्यं नलस्यैव नान्यस्येत्याह इष्टेनेति । अमर्त्त्याः देवाः अमर्त्त्या विबुधाः सुरा इत्यमरः । इष्टेन यज्ञकर्म्मणा पूर्त्तेन खातादिकर्म्मणा च त्रिष्वथ क्रतुकर्मेष्टं पूर्त्तं खातादि-कर्मणीत्यमरः । वश्याः वशंवदतामापन्नाः प्राग्दीव्यतीयो यत्प्रत्ययः । नलस्य अत्रापि भूलोके स्वर्भोगं स्वर्गसुखभोगं सृजन्ति सम्पादयन्ति । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुप-तिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति स्मरणात् यागादिपरितुष्टा देवाः सुवृष्टिविधानेन राज्ये सुशस्योत्पाद-नात् सुखिताः प्रजाः प्रजापतिं नलं सर्वथा सुखयन्तीत्यस्य स्वर्गसुखभाक्त्वमिति भावः । ननु दिव्यशरीरभोग्यं स्वर्गसुखं कथं मर्त्त्यशरीरस्य नलस्येति दृष्टान्तेन परिहरति महीरुहा इति । महीरुहा अचेतना वृक्षाः अपि वृक्षो महीरुहः शाखी-त्यमरः । दोहदम् अकालप्रसवोत्पादनद्रव्यविशेषः तरुगुल्मलता-दीनामकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रियेति शब्दार्णवः । सेकः जलसेचनं तयोः शक्तेः सामर्थ्यात् आकालिकम् अकालभवं कोरकं कलिकां कलिका कोरकः

सुवर्णशैलादवतीर्य्य तूर्णं
स्वर्वाहिनीवारिकणावकीर्णैः ।
तं वीजयामः स्मरकेलिकाले
पचैर्नृपं चामरबद्धसख्यैः ॥ २२ ॥
क्रियेत चेत्साधु विभक्तिचिन्ता
व्यक्तिस्तदा सा प्रथमाभिधेया ।

पुमानित्यमरः उद्गिरन्ति प्रकटयन्ति उत्पादयन्तीत्यर्थः। दोहद-सेकवशात् तरव इव देवा अपि उत्कृष्टपुण्यवशात् इहलोके-ऽपि मानवाय उत्कृष्टं फलं प्रयच्छन्तीति भावः। अत्र स्वर्ग-सुखभोगदानस्य आकालिककोरकप्रसवस्य च साधर्म्येण प्रति-बिम्बनाद् दृष्टान्तालङ्कारः। उक्तञ्च दर्पणे। दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति ॥ २१ ॥

वयमपि स्वर्गीयजनमिव तं परिचराम इत्याह सुवर्णेति। वयं सुवर्णशैलात् सुमेरोः तूर्णं शीघ्रम् अवतीर्य्य भूतलमागत्य स्वर्वाहिनी मन्दाकिनी तस्या वारीणां कणाः विन्दवः तैः अवकीर्णाः सम्पृक्ताः तैः चामरेषु बद्धं सख्यं साहृश्यं यैः तथाभूतैः चामरकल्पैरित्यर्थः पचैः छदैः धारणैः स्मरकेलिकाले सुरत-व्यापारसमये तं नृपं नलं वीजयामः सुरतश्रमापनोदनार्थ-मिति भावः। यद्यपीदं सर्वं वक्ष्यमाणञ्चेवंविधस्तोत्रं वितथं तथापि नात्र दोषः। न नर्म्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले। प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥ इति महाभारतीयवचनादिति बोध्यम् ॥ २२॥

साम्प्रतं नलस्य साधुत्वातिशयं वर्णयति क्रियेतेति। साधु-

या स्वौजसां साधयितुं विलासैः
तावत् चमा नामपदं बहु स्यात् ॥२३॥

विभक्तिचिन्ता के केऽत्र साधव इति विभागस्य विभेदस्य साधुविभक्तेः पदसाधिकायाः विभक्तेः सुवादिरूपाया इति भावः चिन्ता विचारः क्रियेत चेत्, तदा सा नलाभिधाना व्यज्यते स्वरूपं प्रकृत्यर्थौ वा अनया इति व्यक्तिः मूर्त्तिः सु औजसिति रूपञ्च प्रथमा प्रथमं परिगणनीया प्रथमेति संज्ञया वाच्या चेत्यर्थः। कथमित्याह या व्यक्तिः पूर्वोक्तोभयरूपेति यावत् स्वौजसां निजतेजसां सु औजस् इत्येतेषां प्रत्ययानाञ्च विलासैः विचेष्टितैः/ प्रक्रियाभिश्च तावत् बहु तथा प्रभूतम् अनामपदं नास्ति नामो नतिर्येषां ते अनामाः अप्रणताः तेषां शत्रूणामित्यर्थः पदं राज्यमिति वा। यद्वा नास्ति नामो नतिर्यस्य तत् चिरसमृद्धमित्यर्थः पदं परराष्ट्रं यद्वा नाम्ना सह पदं नामपदं महावीर इत्याख्यं पदं परराज्यञ्चेत्यर्थः अन्यत्र नाम प्रातिपदिकं पदं स्वयोगात् प्रयोगायोग्यमिति भावः नापदं शास्त्रे प्रयुञ्जीतेति नियमात्। साधयितुम् उपार्जयितुं वशमानेतुमित्यर्थः अन्यत्र सम्पादयितुं चमा शक्ता स्यात्। नामेति पृथक्पदत्वे बहुपदं साधयितुं चमा नाम सम्भावनायां चमेति सम्भावयामीत्यर्थः। बहुरिति सविसर्गपाठे या स्वौजसां विलासैः चमा नाम पृथिवीसंज्ञकं पदं साधयितुं बहुः प्रभाववतीत्यर्थः स्यादित्यर्थः। अन्यासामपि विभक्तीनामर्थानुसारेण पदसाधकत्वं प्रथमायास्तु तदन्यथापीति बहुपदसाधने सामर्थ्य दर्शनात् श्रेष्ठत्वमिति भावः उक्तञ्च लिङ्गसंख्याविनिर्मुक्तात् सुः पदत्वार्थमव्ययादिति। अत्राभिधायाः प्रकृतार्थमात्र-

राजा स यज्वा विबुधव्रजत्रा
कृत्वाध्वराज्योपमयैव राज्यम् ।
भुङ्क्ते श्रितश्रोत्रियसात्कृतश्रीः
पूर्वं त्वहो शेषमशेषमन्त्यम् ॥ २४ ॥
दारिद्र्यदारिद्रविणौघवर्षैः
अमोघमेघव्रतमर्थिसार्थे ।

नियन्त्रितत्वाल्लक्षणायाश्च मुख्यार्थबाधमन्तरेणासम्भवात् अप्रकृतार्थप्रतीतिध्वनिरेव न श्लेषः । श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते इत्यभिधाया एव तत् प्रयोजकत्वात् ॥ २३ ॥

अस्य याज्ञिकत्वं साम्राज्यञ्चाह राजेति । यज्वा यथाविधि कृतयज्ञः यज्वा तु विधिनेष्टवानित्यमरः । सुयजोर्ङ्वनिप् । श्रिता आश्रिताः ये श्रोत्रियाः छान्दसाः कृतवेदाध्ययना इत्यर्थः श्रोत्रियच्छान्दसौ समावित्यमरः । श्रोत्रियञ्छन्दोऽधीते इति निपातः । तेभ्यः देयीकृताः तत्सात्कृताः दानेन तदधीनीकृता इत्यर्थः श्रियः सम्पदः येन स राजा नलः अध्वरेषु यत् आज्यं हवनीयं वस्तु तदुपमया तत्सादृश्येनैव राज्यं विबुधाः पण्डिता देवाश्च तेषां व्रजः समूहः तदधीनं दानेन कृत्वा विबुधव्रजत्रा कृत्वा देयेत्रा चेति चकारादितरत्र सातिप्रत्ययस्य तद्धितश्चासर्वविभक्तिरित्यव्ययत्वम् । पूर्वं पूर्वोक्तमध्वराज्यं शेषं हुतादिति शेषः अन्त्यं चरमं राज्यन्त्वित्यर्थः अशेषं समग्रं भुङ्क्ते अहो पूर्वभुक्तस्य अशेषत्वं पश्चाद्भुक्तस्य च शेषत्वं सर्वसम्मतमस्य तद्विपरीतमित्याश्चर्य्यमित्यर्थः अतएवात्रविरोधाभासालङ्कारः । अखण्डत्वेन तत्परिहारश्च ॥२४

अस्य दानशीलतामाह दारिद्र्येति । दरिद्रस्य भावः

सन्तुष्टमिष्टानि तमिष्टदेवं
नाथन्ति के नाम न लोकनाथम् ? ॥२५॥
अस्मत् किल श्रोत्रसुधां विधाय
रम्भा चिरम्भामतुलां नलस्य ।

दारिद्र्यं निर्धनत्वं तत् दारयति खण्डयति निवारयतीत्यर्थः इति दारिद्र्यदारी यो द्रविणानां धनानाम् ओघः समूहः तस्य वर्षैः वितरणैः अर्थिनां याचकानां सार्थः समूहः तस्मिन् विषये अमोघम् अव्यर्थं मेघस्येव व्रतं नियमः वर्षणशीलतेति यावत् यस्य तम् अनवरतधनव्ययशीलमिति सन्तुष्टं दानहृष्टं न तु कदाचिद् विरक्तमिति भावः इष्टाः यत्नेन आराधिता देवा येन॰तं यद्वा इष्टः अभीप्सितः देवः येन तं देवप्रियमित्यर्थः तं लोकनाथं नरेश्वरं नलं के नाम जनाः इष्टानि अभिलषितानि वस्तूनि न नाथन्ति ? न याचन्ते ? अपितु सर्व एव नाथन्तीत्यर्थः अमोघमेघव्रतमित्यनेन तस्य दानशौण्डतया पात्रापात्रविचारो नास्तीति ध्वन्यते । नाथते याञ्चार्थस्य दुहादित्वाद् द्विकर्मकत्वम् । अत्र दारिद्र्यदारिद्रेति मोघमेघेति अर्थिसार्थेति सन्तुष्टमिष्टानि तमिष्टेति नाथन्ति नाथमित्येषां व्यञ्जनानां साम्याद् वृत्त्यनुप्रासालङ्कारः तदुक्तं दर्पणे । अनेकस्यैकधा साम्यमसकृद्व्याप्यनेकधा । एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते । इति ॥ २५ ॥

अस्य सौन्दर्य्यातिशयमाह अस्मदिति । सा प्रसिद्धा रम्भा तदाख्या सुरसुन्दरी रम्भा त्रिदशभामिन्यां कदल्याञ्चेति हेमचन्द्रः । नलस्य अतुलां निरुपमां भां दीप्तिं कान्तिमित्यर्थः अस्मत् अस्माकं सकाशादित्यर्थः बहुवचनेन केवलं न मत्-

तत्रानुरक्ता तमनाप्य भेजे
तन्नामगन्धान्नलकूवरं सा ॥ २६ ॥
स्वर्लोकमस्माभिरितः प्रयातैः
केलीषु तद्गानगुणान्निपीय।
हाहेति गायन् यदशोचि तेन
नाम्नैव हाहा हरिगायनोऽभूत् ॥ २७ ॥

सकाशात् अपितु मद्विधेभ्यः सर्वेभ्यः स्वर्गवासिभ्य इति सूच्यते। श्रोत्रसुधां कर्णामृतं विधाय रसातिशयात् सादरमाकर्ण्येति भावः तत्र तस्मिन् नले अनुरक्ता अनुरागिणी लालसायुक्ता इति यावत् सती तं नलम् अनाप्य अप्राप्य आङ्पूर्वादाप्नोतेः क्त्वोल्यबादेशः नञ्समासः अन्यथात्वसमासे ल्यबादेशो न स्यात्। देवाङ्गनानामपि दुर्लभः स इति भावः तस्य नाम नलेत्याख्या तस्य गन्धः सम्बन्धः तस्मात् नलनामस्पर्शादिति यावत् गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोरिति विश्वः। नलकूवरं तदाख्यं कुवेरपुत्रं भेजे सिषेवे किलेत्युत्प्रेक्षायां निश्चये वा। नारीषु रम्भा पुरुषेषु विष्णुरिति वचनात् सर्वयोषिदुत्तमापि रम्भा तं प्रति अनुरागिणी का कथान्यासामिति सौन्दर्य्यातिशयोक्तिः ॥ २६ ॥

तस्य सङ्गीतगुणातिशयमाह स्वर्लोकमिति। केलीषु विनोदनेषु तस्य नलस्य कर्त्तुः गाने सङ्गीतव्यापारे गुणान् माधुर्य्यादीन् निपीय सादरं श्रुत्वेत्यर्थः इतो मर्त्त्यलोकात् स्वर्लोकं स्वर्गं प्रयातैः गतैः अस्माभिः कर्त्तृभिः गायन् गानं कुर्वन् हरिगायन इन्द्रस्य सङ्गीतविधौ नियुक्त इत्यर्थः गन्धर्वविशेषः ण्युट् चेति गायतेः शिल्पिनि ण्युट्प्रत्ययः। हा हेति हा कष्टं गानमयं न जानातीति यत् यतः अशोचि आक्षेपि तेनैव

शृण्वन् सदारस्तदुदारभावं
हृष्यन्मुहुर्लोम पुलोमजायाः ।
पुण्येन नालोकत लोकपालः
प्रमोदवाष्पावृतनेत्रमालः ॥ २८ ॥

हेतुना नाम्ना एव नाम्नापीत्यर्थः असौ हा हा अभूत् शोचनास्वरानुसारादिति भावः । हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसामित्यमरः । हा हा खेदे हुहु हर्षे गन्धर्वेऽप्यनव्यये इति विश्वः । अत्र शोकनिमित्तासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः तया च गन्धर्वादपि समधिकमुत्कृष्टं गानं नलस्येति वस्तु व्यज्यते इति अलङ्कारेण वस्तुध्वनिः ॥ २७ ॥

अतःपरं श्लोकचतुष्टयेन देवीनामपि तद्गुणश्रवणाद् मनसो विकृतिर्जातेत्याह शृण्वन्नित्यादिना । लोकपाल इन्द्रः नाकपाल इति पाठे स्वर्गाधिप इत्यर्थः दारैः सह वर्त्तमानः सदारः सस्त्रीकः शच्या सहेत्यर्थः तस्य नलस्य उदारभावम् औदार्य्यं दाक्षिण्यं दानशीलत्वं वा शत्रुषु मित्रेषु च समवर्त्तित्वमिति केचित् औदार्य्यं शत्रुमित्रयोः सममेति साहित्यदर्पणे तल्लक्षणस्योक्तत्वात् उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवदिति मेदिनी । अतएव प्रमोदवाष्पैरानन्दाश्रुभिः आवृता आकीर्णा नेत्राणां माला समूहः यस्य तथाभूतः आनन्दाश्रुनिमीलितदृष्टिनिचयः सन्नित्यर्थः पुलोमजायाः पुलोमा दैत्यविशेषः तज्जातायास्तत्सुतायाः शच्या इत्यर्थः मुहुः पुनः पुनः हृष्यत् उल्लसत् तद्गुणश्रवणेन तस्मिन् जातानुरागत्वादिति भावः रोमलोमाञ्चमित्यर्थः सत्त्वोदयजनितमिति भावः तदुक्तं दर्पणे । स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु-

सापीश्वरे शृण्वति तद्गुणौघान्
प्रसह्य चेतोहरतोऽर्द्धशम्भुः ।
अभूदपर्णाङ्गुलिरुद्धकर्णा
कदा न कण्डूयनकैतवेन ॥ २९ ॥

प्रलय इत्यष्टौ सात्त्विकाः स्मृता इति। पुण्येन भाग्येन श्च्या इत्युभयत्रान्वेति। न आलोकत न दृष्टवान् दर्शने तु मानस-व्यभिचारोन्मादकस्य अवश्यम्भाव्यत्वमिति भावः। अत्र चतुर्थ-पादपदार्थस्य अदर्शनहेतुकत्वात् काव्यलिङ्गमलङ्कारः ॥ २८ ॥

सापीति। ईश्वरे शम्भौ प्रसह्य बलात् चेतोहरतः चित्त-हारिणः तस्य नलस्य गुणौघान् शोभाविलासौ माधुर्यं गाम्भीर्य्यं धैर्य्यतेजसौ ललितौदार्य्यमित्यष्टौ सात्त्विकाः पौरुषा गुणा इत्युक्तविधान् गुणनिवहान् शृण्वति आकर्णयति सति अर्द्धं शरीरस्येति शेषः शम्भुर्यस्याः सा हरार्द्धाङ्गहारिणीत्यर्थः एते-नास्याः तद्गुणश्रवणेन मानसव्यभिचाराशङ्कया स्थानान्तर-गमनाक्षमत्वं सूच्यते। सा प्रसिद्धा पतिव्रतानाम् अग्रगण्येति भावः अपर्णा पार्वती यया हरानुरागित्वात् तपस्यया तत्-प्राप्त्यर्थं गलितपत्राहारोऽपि परित्यक्त इति भावः कण्डूयनस्य कण्डूविनोदनस्य कैतवेन छलेन अङ्गुल्या रुद्धौ पिहितौ कर्णौ यया तथाभूता कदा नाभूत्? यदैव तद्गुणश्रवणं तदैव अभूदित्यर्थः चित्तचापल्येन पातिव्रत्यभङ्गभयादिति भावः वक्ष्यते च मृणालतन्तुच्छिदुरा सतीस्थितिर्लवादपि त्रुट्यति चापलात् किलेति। कर्णकण्डूतिरूपं मोट्टायितमकार्षीदिति च ध्वन्यते तदुक्तं दर्पणे। तद्भावभाविते चित्ते वल्लभस्य कथा-दिषु। मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकमिति। अत्र

अलं सजन् धर्म्मविधौ विधाता
रुणद्धि मौनस्य मिषेण वाणीम्।
तत्कण्ठमालिङ्ग्य रसस्य तृप्तां
न वेद तां वेदजड़ः स वक्राम्॥ ३०॥

प्रकृतम् अश्रवणार्थमङ्गुलिनिरोधमपह्नुत्य कैतवस्थापनात् अपह्नुतिरलङ्कारः तदुक्तं दर्पणे। प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति॥ २८॥

अलमिति। विधाता ब्रह्मा धर्म्मविधौ समाध्यादिधर्म्मव्यापारे अलमतिमात्रं सजन् समासक्तः सन्नित्यर्थः मौनस्य तूष्णीम्भावस्य वाक्संयमनरूपव्रतस्येति भावः मिषेण व्याजेन वाणीं वाग्देवीं स्वभार्य्यामिति भावः पञ्चाग्रदर्णमयीञ्च रुणद्धि आवृणोति परपुरुषगुणश्रवणेनास्यास्तदनुरागिता माभूदिति धियेति भावः किन्तु वेदजड़ः सततवेदपाठे तु समासक्तः जड़ः विषयज्ञानविमुख इत्यर्थः सः विधाता तस्य नलस्य कण्ठम् आश्लिष्य आलिङ्ग्य रसस्य शृङ्गारादेः सुरतव्यापारस्य तृप्तां रसेन सन्तुष्टामित्यर्थः तृप्त्यर्थानां वेति करणे षष्ठीप्रयोगः। सम्बन्धसामान्ये षष्ठी, पूरणगुणेत्यादिना षष्ठीनिषेधादेव ज्ञापकादिति केचित्। अतएव वक्रां प्रतीपचारिणीं वक्रोक्त्यलङ्कारान्विताञ्च तदुक्तं दर्पणे। अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद् यदि। अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्तथा द्विधेति। न वेद न जानातीत्यर्थः विदो लटो वेति णलादेशः उक्तञ्च स्त्रियाश्चरित्रं पुरुषस्य भाग्यं देवा न जानन्ति कुतो मनुष्या इति। अत्र प्रस्तुतवाग्देवीरूपार्थस्याभिधया नियन्त्रितत्वात् अप्रस्तुतायाश्च वर्णात्मिकायाः प्रतीतौ मुख्यार्थ-

श्रियस्तदालिङ्गनभूर्न भूता
व्रतक्षतिः कापि पतिव्रतायाः ।
समस्तभूतात्मतया न भूतं
तद्भर्तुरीर्ष्याकलुषाणुनापि ॥ ३१ ॥

बाधमन्तरेण लक्षणायास्त्वासम्भवात् तत्प्रतीतिरूपा ध्वनिरेवेति। यच्च केनचित् नले उपनायकस्य विधातरि स्वनायकस्य वाण्याश्च परगामिन्या व्यवहारारोपात् समासोक्तिरियमित्युक्तं तन्न सङ्गच्छते प्रस्तुतेऽप्रस्तुतव्यवहारस्यैव तत्स्वरूपत्वात् तथाच समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति । अत्र तु नल एव प्रकृतः न तु विधाता वाग्देवी च । नलस्य प्रकृतस्य उपनायकरूपाप्रस्तुतव्यवहार इति चेत् तदपि न समीचीनं नलस्य स्वतस्तद्व्यवहारायोगात् प्रत्युत वाण्या एव परगामित्वरूपव्यवहारस्य समुल्लेखादिति सुधीभिर्विभाव्यम् ॥ ३० ॥

श्रिय इति । पतिव्रतायाः पतिमात्रपरायणायाः आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रतेत्युक्तलक्षणाया वा श्रियः लक्ष्म्याः कान्त्याश्च तस्या भर्त्तुः विष्णोः समस्तानि भूतानि स्थावरजङ्गमरूपाणि आत्मा यस्य तस्य भावः तत्ता तया सर्वं विष्णुमयं जगदित्युक्तेः सर्वभूतमयत्वेन नलस्यापि तदन्तर्गतत्वेनेति भावः तस्य नलस्य आलिङ्गनेन आश्लेषेण आश्रयणेन च भवतीति तद्भूता कापि व्रतक्षतिः पातिव्रत्यनियमभङ्गः न भूता नाभवत् । तस्या भर्त्तुः विष्णोरपि ईर्ष्यया परपुरुषासङ्गजनितया अक्षमया यत् कलुषं मालिन्यं मनस्तापं इति भावः दुःखादित्वेनास्य

धिक् तं विधेः पाणिमजातलज्जं
निर्माति यः पर्वणि पूर्णमिन्दुम् ।
मन्ये स विज्ञः स्मृततन्मुखश्रीः
कृतार्द्धमौज्झद्भवमूर्ध्नि यस्तम् ॥ ३२ ॥

धर्मंधर्मिवचनत्वादतएव चीरस्वामी। अस्त्वाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि चेत्यत्रादिशब्दात् श्रेयः कलुषशिवभद्रादय इत्युभयवचनेषु संजग्राह। तस्य अणुना लेशेनापि न भूतं नपुंसके भावे क्तप्रत्ययः। अत्र तृतीयपादस्थपदार्थस्य समस्तभूतात्मकतयेत्यस्य वाक्यार्थद्वयहेतुत्वात् काव्यलिङ्गमलङ्कारः तदुक्तं दर्पणे। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति। अत्र शच्यादीनां देवमातृणाम् ईदृशचित्तचापल्यवर्णनस्यानौचित्यदोषो न गण्यः नलसौन्दर्य्य एव तात्पर्य्यम् ॥ ३१ ॥

अथास्य श्लोकसौन्दर्य्यं वर्णयति धिगिति। नास्ति लज्जा यस्य तम् अजातलज्जं निर्लज्जमित्यर्थः तं विधेः ब्रह्मणः पाणिं करं धिक् निन्दामीत्यर्थः धिङ्निर्भर्त्सननिन्दयोरित्यमरः। निन्दामाह य इति। यः पाणिः पर्वणि पौर्णमास्यां जातावेकवचनं सर्वासु पौर्णमासीष्वित्यर्थः सकृन्निर्माणे अनवधानतया न तथा दोषः पुनः पुनर्निर्माणे तु महान् दोष एवेति भावः पूर्णं कलाभिः षोड़शभिरिति शेषः इन्दुं चन्द्रं निर्माति सृजति। स पाणिः विजानातीति विज्ञः विशेषज्ञ इत्यर्थः इति मन्ये सम्भावयामि यतः सः स्मृता तस्य नलस्य मुखश्रीः मुखकान्तिः इन्दोरप्यतिशायिनीति भावः येन तथाभूतः सन् तम् इन्दुं कृतः अर्द्धः एकदेशः कलारूप इति भावः। पुंस्यर्द्धोऽर्द्धं समेऽंशके इत्यमरोक्तेरसमांशे अर्द्धशब्दस्य पुंलिङ्गता। यस्य

निलीयते ह्रीविधुरः स्वजैत्रं
श्रुत्वा विधुस्तस्य मुखं मुखात् नः।
सूरे समुद्रस्य कदापि पूरे
कदाचिदभ्रभ्रमदभ्रगर्भे ॥ ३३ ॥

तथाभूतमेव कलामात्रनिर्मितमेवेत्यर्थः भवस्य हरस्य मूर्ध्नि शिरसि प्रौज्झत् त्यक्तवान्। अत्र द्वितीयपादवाक्यस्य प्रथमपादवाक्यस्य हेतुत्वात् तृतीयपादपदार्थस्य विभ्रमरूपस्य पराईवाक्यहेतुत्वाच्च काव्यलिङ्गद्वयमिति सजातीयसंसृष्टिः। तेन चातिसुन्दरं नलस्य मुखमिति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ३२ ॥

निलीयते इति। विधुश्चन्द्रः तस्य नलस्य मुखं स्वस्य आत्मनः जेतृ एव जैत्रं तृन्नन्तात् स्वार्थेऽण्प्रत्ययः। आत्मपरिभावुकमित्यर्थः नोऽस्माकं मुखात् श्रुत्वा ह्रिया लज्जया विधुरः व्याकुलः सन् सूरे सूर्य्ये सूरसूर्य्यार्य्यमादित्येषु इत्यमरः। सूर्य्ये अग्नावोषधीषु च तेजो निधाय चन्द्रोऽस्तं यातीति श्रुतेः। दर्शेष्विति प्राञ्चः। कदापि समुद्रस्य पूरे स्रोतसि पूरो जलसमूहे स्याद् व्रणसंशुद्धि खाद्ययोरिति मेदिनी। केनचित् पराभूताः शिशवो यथा पितुरुत्सङ्गमेत्य दुःखशान्तिं कुर्वन्ति तथायं स्वजनकं समुद्रमेत्य दुःखशान्तिं करोतीति भावः। कदाचित् अभ्रे आकाशे भ्रमत् सञ्चरत् अभ्रं मेघः तस्य गर्भे उदरे अभ्यन्तरे। अभ्रं मेघे च गगने धातुभेदे च काञ्चने इति मेदिनी। कदाप्यदभ्रभ्रमदभ्रगर्भे इति पाठे अदभ्राणि बहुलानि अदभ्रं बहुलं बह्वित्यमरः। भ्रमन्ति अभ्राणि मेघास्तेषां गर्भे इत्यर्थः। निलीयते अन्तर्धाय तिष्ठतीत्यर्थः। परपरिभूताः परेषां समीपे

संज्ञाप्य नः स्वध्वजभृत्यवर्गान्
दैत्यारिरत्यब्जनलास्यनुत्यै।
तत्सङ्कुचन्नाभिसरोजपीतात्
धातुर्विलज्जं रमते रमायाम्॥ ३४॥

मुखं दर्शयितुं न शक्नुवन्तीति भावः अत्र विधोः स्वाभाविकस्यापि सूर्य्यादिप्रवेशस्य परपरिभवनिमित्तलज्जानिलीनत्वेनोत्प्रेक्षणात् उत्प्रेक्षालङ्कारः स च व्यञ्जकाप्रयोगाद् गम्यस्तेन चास्य मुखस्य चन्द्रादप्यधिकसौन्दर्य्यवत्त्वरूपं वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ ३३॥

संज्ञाप्येति। दैत्यारिः दितिजनिसूदनः विष्णुरित्यर्थः दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुड़ध्वज इत्यमरः। स्वस्य आत्मनः ध्वजः वाहन इत्यर्थः गरुड़ इति यावत् तस्य भृत्यवर्गान् पक्षिराजत्वात् तद्दासभूतान् नोऽस्मान् अब्जमतिक्रान्तमत्यब्जं कमलविजयीत्यर्थः यद्वा अब्जश्चन्द्रः तम् अतिक्रान्तं तद्विजयीत्यर्थः अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः। यत् नलस्य आस्यं वदनं तस्य नुतिः स्तोत्रं स्तवः स्तोत्रं स्तुतिर्नुतिरित्यमरः तस्यै संज्ञाप्य, संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचनेत्युक्तहस्तादिसङ्केतेन बोधयित्वा यूयं नलास्यं स्तुतेत्यादिश्य वा तत्सङ्कुचता तया नुत्या सङ्कुचता सङ्कोचमितया निमीलता परपरिभवजनितलज्जयेति भावः नाभिसरोजेन नाभिपद्मेन पीतात् तिरोहितात् धातुः ब्रह्मणः नाभिपद्मभवादिति भावः विगता लज्जा यस्मिन् तत् विलज्जं निर्लज्जं यथा तथा रमायां लक्ष्म्यां रमते क्रीड़ति। केचित्तु अत्यब्जनलास्यनुत्यै अब्जम् अप्सु भवं चन्द्रमित्यर्थः तस्य जलराशेः समु-

रेखाभिरास्ये गणनादिवास्य
द्वात्रिंशता दन्तमयीभिरन्तः।
चतुर्दशाष्टादश चात्र विद्या
द्वेधापि सन्तीति शशंस वेधाः॥ ३५॥

द्वादुत्पन्नत्वात् अब्जोजैवात्मकः सोम इत्यर्थः अतिक्रान्तम् अत्यब्जं चन्द्रसदृशमिति भावः यत् नलास्यं तस्य नुत्यै स्तुत्यै इत्यर्थः तत्सङ्कुचता तया चन्द्रसदृशनलास्यनुत्या सङ्कुचता चन्द्रोदये यथा पद्मसङ्कोचस्तथा तत्सदृशनलास्यचन्द्रगुणस्तवनेऽपि निमीलता नाभिसरोजेनेति योजयन्ति तन्न समीचीनं चन्द्रोदय एव तस्य सङ्कोचस्य कीर्त्तनात् न तु तत्सदृशगुणकीर्त्तने इति सुधीभिर्भाव्यम्। ब्रह्मा नाभिसरोजे सर्वदैव वसतीति विष्णोः सुरतव्यापारस्य तत्समीपे लज्जाकरत्वात् सङ्केतेन अस्मान् तद्दाहनभृत्यान् नलास्यकीर्त्तने समादिश्य तत् स्तवनेन स्वलज्जावशात् सङ्कुचिते नाभिपद्मे ब्रह्मा निलीयते। ततश्च तस्य दर्शनाभावात् निर्लज्जतया उत्सङ्गवर्त्तिन्या लक्ष्म्या सह सुरतक्रीड़ा वर्त्तते इति किं वक्तव्यं नलास्यसौन्दर्य्यमिति भावः। अत्र तृतीयपादपदार्थस्य चतुर्थपादवाक्यहेतुत्वात् काव्यलिङ्गमलङ्कारः॥ ३४॥

रेखाभिरिति। वेधाः विधाता अत्र नले चतुर्दश च अष्टादश च, अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्म्मशास्त्रञ्च विद्या ह्येताश्चतुर्दशेति। आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात्। अर्थशास्त्रं परं तस्माद् विद्या ह्यष्टादश स्मृता इत्युक्ता द्वेधा द्विप्रकारा अपि विद्या सन्ति सम्भवन्ति इति अस्य नलस्य आस्ये मुखे अन्तः मुखमध्ये इत्यर्थः दन्त-

श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य
स्मरामरेन्द्रावपि न स्मरामः ।
वासेन सम्यक् क्षमयोश्च तस्मिन्
बुद्धौ न दध्मः खलु शेषबुद्धौ ॥ ३६ ॥
विना पतत्रं विनतातनूजैः

मयीभिः दशनरूपाभिः द्वात्रिंशता रेखाभिः गणनात् सङ्ख्यानादिव शशंसेत्युत्प्रेक्षा । दन्तानां रेखात्वकीर्त्तनं सूक्ष्मत्वद्योतनार्थं तच्च सामुद्रिकशास्त्रानुसारेण शुभशंसीति भावः । विद्यानामष्टादशत्वकीर्त्तनेनैव चतुर्दशत्वलाभेऽपि पुनर्द्वैविध्यं मतभेदादुक्तमिति बोध्यम् ॥ ३५ ॥

श्रियाविति । तस्य नरेन्द्रस्य नरपतेर्नलस्य श्रियौ सौन्दर्यं सम्पदश्चेत्यर्थः शोभासम्पत्तिपद्मासु श्रीरिति शाश्वतः । निरीक्ष्य अवलोक्य स्मरामरेन्द्रावपि मदनदेवेन्द्रावपि का कथान्येषामित्यपि शब्दार्थः । न स्मरामः न गणत्वेन चिन्तयाम इत्यर्थः किञ्चेति चार्थः तस्मिन् नरेन्द्रे क्षमा च क्षमा च क्षमे तयोः पृथिवीक्षान्त्योः क्षिति क्षान्त्री क्षमे इत्यमरः । सम्यग् वासेन निर्बाधावस्थानेन शेषस्य बुद्धस्य तौ नागराज-बुद्धदेवौ चित्ते मनसि न दध्मः न धारयामः खलु निश्चये । स्मरे केवलं सौन्दर्यम् अमरेन्द्रे च केवलं सम्पद् शेषे केवलं क्षितिः बुद्धे च केवलं क्षमा नले तु सौन्दर्यं सम्पद् पृथिवी क्षमा च सर्वमेतदविरोधेनास्ति तस्मादेतेभ्योऽस्य सौन्दर्यादिकमधिकमिति व्यतिरेकालङ्कारो व्यङ्ग्यः । अत्र श्रियाविति क्षमयोरिति चोभयोरप्यर्थयोः प्रकृतत्वादभिधेयत्वाच्च श्लेषः । तदुक्तं दर्पणे । श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते इति ॥ ३६ ॥

समीरणैरीक्षणलक्षणीयैः।
मनोभिरासीदनणुप्रमाणैः
न निर्जिता दिक्कतमा तदश्वैः? ॥ ३७ ॥
संग्राममभूमीषु भवत्यरीणाम्
अस्त्रैर्नदीमातृकतां गतासु।

संग्रामयात्रासु घोटकप्रकारमाह। विनेति। पतत्रं पक्षं पक्षः पतत्रं सहायोऽस्त्रीत्यमरः विना विनतातनूजैः वैनतेयैः गरुड़ैः गरुत्मान् गरुड़स्तार्क्ष्यो वैनतेयः खगेश्वर इत्यमरः। पक्षशून्यैर्गरुड़भूतैरित्यर्थः ईक्षणलक्षणीयैः प्रत्यक्षतां गतैरिति यावत् समीरणैः वायुभिः स्पर्शेन्द्रियग्राह्यतां विहाय दर्शनेन्द्रियग्राह्यतां गतैः पवनैरित्यर्थः तथा अणुप्रमाणं मन इति तार्किकसम्प्रदायः तद्विपरीतैः महाप्रमाणैरिति भावः मनोभिः तत्तत्तुल्यवेगैरिति भावः तस्य नलस्य अश्वैः घोटकैः कतमा दिक् न निर्जिता न लङ्घिता अपि तु सर्वैव दिक् लङ्घितेत्यर्थः अस्य सर्वदिग्विजयित्वादिति भावः निर्जितेत्यत्र लङ्घितेति पाठान्तरम्। आसीत्। अत्राश्वानां पतत्रशून्यत्वादिविशेषणविशिष्टवैनतेयादित्वेन रूपणादधिकारूढ़वैशिष्ट्यं नाम रूपकमलङ्कारः। उक्तञ्च दर्पणे, अधिकारूढ़वैशिष्ट्यं रूपकं यत्तदेव तदिति ॥ ३७ ॥

अस्य संग्रामव्यापारमाह, संग्रामेति। अरीणां शत्रूणाम् अस्त्रैः शोणितैः नद्येव माता यासां ता नदीमातृकाः तासां भावः तत्ता ताम्। नदीजलसेचनसम्भूतशस्यपालितेत्यर्थः। देशो नद्यम्बु वृष्ट्यम्बुसम्पन्नव्रीहिपालितः। स्यान्नदीमातृको देवमातृकश्च यथाक्रममित्यमरः। नद्यृतश्चेति कप्। त्वतलोर्गुण-

तद्वाणधारापवनाशनानां
राजव्रजीयैरसुभिः सुभिक्षम् ॥ ३८ ॥
यशो यदस्याजनि संयुगेषु
कण्डूलभावं भजता भुजेन ।
हेतोर्गुणादेव दिगापगाली-
कूलङ्कषत्वं व्यसनं तदीयम् ॥ ३९ ॥

वचनस्येति पुंवद्भावः । शत्रुशोणिताभिषिक्तासु इति भावः । रुधिरसेकेन भूमेरुत्पादिकाशक्तिः प्रवृद्धा भवति इति प्रसिद्धिश्च । संग्रामभूमिषु युद्धक्षेत्रेषु तस्य नलस्य या बाणधाराः शरवृष्टिधारा इत्यर्थः एव पवनाशनाः वायुभोजिनः तेषां राजव्रजीयैः राजसमूहसम्बन्धिभिः वृद्धाच्छः । असुभिः प्राणैस्तदाख्यान्तर्वायुभिरित्यर्थः भक्षितैरिति शेषः । सुभिक्षं भिक्षाणां समृद्धिः भवति इति शेषः । समृद्धावव्ययीभावः । नदीमातृकदेशे सुभिक्षस्यैव सम्भवात् । पवनाशनानां प्राणवायुरूपशस्यबाहुल्येन शस्यसमृद्धियुक्ता इति भावः । संग्रामे अनेन बहवः तथा शत्रवो निपातिता यथा तेषां शोणितधाराभिस्तद्देशेषु महती शस्यसमृद्धिर्जातेति व्यज्यते । अत्रापि रूपकालङ्कारः । प्रबलवात्यया शस्यहानिर्भवति, वायुभक्षकैः सर्पैः वायुचये गिलिते शस्यानां वायुजन्या क्षतिर्न भवति, अतो नलराज्ये सदैव शस्यसमृद्धिरस्ति इति भावः ॥ ३८ ॥

यश इति । संयुगेषु संग्रामेषु कण्डूलभावं रणकण्डूलत्वं सिध्मादिभ्यश्चेति मत्वर्थीयो लच्प्रत्ययः । भजता गच्छता प्राप्नुवतेत्यर्थः अस्य नलस्य भुजेन बाहुना यत् यशः संग्रामविजयित्वख्यातिरित्यर्थः अजनि जनितम् उत्पादितमित्यर्थः ।

यदि त्रिलोकी गणनापरा स्यात्
तस्याः समाप्तिर्यदि नायुषः स्यात्।
पारेपरार्द्धं गणितं यदि स्यात्
गणेयनिःशेषगुणोऽपि स स्यात्॥ ४०॥

जनेर्ण्यन्तात् कर्म्मणि लुङ्। तदीयं तस्य यशसः सम्बन्धि दिश एव अङ्गिर्गच्छन्तीत्यापगाः नद्यः तासां आली श्रेणी तस्याः कूलं कषतीति कूलङ्कषं शिवभागवतवत् समासः सर्वकूले-त्यादिना खचि मुमागमः तस्य भावस्तत्त्वं तदेव व्यसनम् आसक्तिः हेतोः कारणस्य गुणादेव स्वभावादेव कण्डूलत्वादेवे-त्यर्थः जातमिति शेषः। कारणगुणाः कार्य्यगुणमारभन्ते इति न्यायादिति भावः। अत्र यशसो दिक्कूलकषणानुमितायाः कण्डूलतायाः कारणभूतकण्डूलभुजगुणत्वमुत्प्रेक्ष्यते॥ ३९॥

तद्गुणवर्णने निजासामर्थ्यं द्योतयन्नाह यदीति। त्रयाणां लोकानां समाहारः त्रिलोकी तद्धितार्थेत्यादिना समाहारे द्विगुः। अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते द्विगोरिति ङीप्। गणनापरा संख्याने तत्परा स्याद् यदि, तस्यास्त्रि-लोक्याः आयुषः जीवनकालस्य समाप्तिः शेषः न स्याद् यदि, अमरत्वं यदि स्यादिति भावः, गणितं परार्द्धस्य चरमसंख्यायाः पारे पारेपरार्द्धं पारे मध्ये षष्ठ्या वेति अव्ययीभावः। परार्द्धा-धिकमपीत्यर्थः स्याद् यदि, तदा सः नलः गणेयाः गणितुं शक्या औणादिक एयप्रत्ययः। निःशेषाः समग्रा गुणा यस्य तथाभूतः स्यात् सर्वगुणाकरोऽयमिति भावः। अत्र गुणानां गणेयत्वसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिः॥ ४०॥

स्वस्य अधिकविश्वास्यतां दर्शयन् तदन्तःपुरपरिचयमाह।

अवारितद्वारतया तिरश्चाम्
अन्तःपुरे तस्य निविश्य राज्ञः।
गतेषु रम्येष्वधिकं विशेषम्
अध्यापयामः परमाणुमध्याः॥ ४१ ॥
पीयूषधारानधराभिरन्तः
तासां रसोदन्वति मज्जयामः।
रम्भादिसौभाग्यरहःकथाभिः
काव्येन काव्यं सृजताद्दृताभिः॥ ४२ ॥

अवारितेति। वयं तिरश्चां पक्षिणाम् अवारितं द्वारं यस्य तस्य भावः तत्ता तया अनिषिद्धप्रवेशतयेत्यर्थः अन्येषान्तु वारितद्वारत्वमिति सूच्यते। तस्य राज्ञः नलस्य अन्तःपुरे निविश्य अवस्थाय परमाणु अतिसूक्ष्मं मध्यं यासां ताः अतिकृशोदरीरित्यर्थः तत्कामिनीरिति शेषः रम्येषु मनोहारिषु गतेषु पादविक्षेपेषु अधिकम् अलौकिकमित्यर्थः विशेषम् उत्कर्षम् अध्यापयामः शिक्षयामः अभ्यासयामः इति पाठान्तरम्॥ ४१॥

तत्र स्वकर्त्तव्यं वर्णयति। पीयूषेति। पीयूषधाराभ्यः अमृतधाराभ्यः अनधराभिः अन्यूनाभिः तत्समानाभिरित्यर्थः काव्यं रसात्मकप्रबन्धविशेषं काव्यं रसात्मकं वाक्यमिति दर्पणः सृजता रचयता कवेरपत्यं पुमान् कविरेव वा काव्यः शुक्रः कुर्व्यादिभ्यो ण्य इति ण्यप्रत्ययः शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविरित्यमरः। तेन आद्दृताभिः सगौरवं गृहीताभिरिति यावत् रम्भादीनाम् अप्सरसां यत् सौभाग्यं प्रियवाल्लभ्यं स्वाधीनपतित्वमिति यावत् तथा रहः सुरतं गोप्यवृत्तं वा रहः-

काभिर्न तत्राभिनवस्मराज्ञा-
विश्वासनिक्षेपवणिक्क्रियेऽहम् ? ।
जिह्रेति यन्नैव कुतोऽपि तिर्य्यक्
कश्चित्तिरश्चस्त्रपते न तेन ॥ ४३ ॥

सुरतगोप्ययोरिति धरणिः । तत्कथाभिः तत्सम्बद्धैरालापैरित्यर्थः तासां नलान्तःपुरिकाणाम् अन्तः अन्तःकरणं रसोदन्वति शृङ्गाररससागरे उदन्वानुदधिः सिन्धुरित्यमरः । मज्जयामः अवगाहयामः निमग्नं कुर्म्म इत्यर्थः । अत्र पीयूषधारानधराभिरित्युपमा रसोदन्वतीति रूपकमित्यनयोः संसृष्टिः ॥ ४२ ॥

काभिरिति । यत् यतः तिर्य्यक् पक्षी कुतोऽपि कस्मादपि जनात् न जिह्रेति न लज्जते ह्रीलज्जायामिति धातोर्लट् श्लाविति द्विर्भावः । कश्चित् जनश्च तिरश्चः पक्षिणः न त्रपते न लज्जते यथा पक्षी कमपि प्राणिनं दृष्ट्वा स्वात् स्वात् रहस्यव्यापारात् लज्जया न निवर्त्तते तथा अन्योऽपि तत्समीपे न किमपि गोपायतीति भावः । तेन हेतुना तत्र नलान्तःपुरे काभिः रमणीभिः अहम् अभिनवा अपूर्वा या स्मराज्ञा कामकेलिवृत्तान्तः सा एव विश्वासनिक्षेपः विश्वासेन निधापनीयवस्तु इत्यर्थः तस्य वणिक् व्यवसायी तद्गोप्तेति यावत् न क्रिये ? न कृतोऽस्मि ? अपितु सर्वाभिरेव मत्समीपे विश्वासेन रहस्यवस्तु सुरतादिवार्त्ता च निक्षिप्यते इति भावः । एतेनाहमतीव विश्वास्यः यदि ते किमपि गोप्यं वक्तव्यं विद्यते तत् मयि निःशङ्कतया वाच्यमित्याशयः । यथा कश्चित् किमपि गोप्यं वस्तु विश्वासिनि वणिजि निक्षिपति तद्वदिति भावः । क्रिये इति कर्म्मणि लट् । निक्षेपवणिगिति रूपकमलङ्कारः ॥ ४३ ॥

वार्त्ता च सा सत्यपि नान्यमेति
योगादरन्ध्रे हृदि यां निरुन्धे।
विरिञ्चिनानाननवादधौत-
समाधिशास्त्रश्रुतिपूर्णकर्णः॥ ४४॥
नलाश्रयेण त्रिदिवोपभोगं
तवानवाप्यं लभते वतान्या।

वार्त्तेति। विरिञ्चेर्विधातुः नाना अहानि चत्वारीत्यर्थः यानि आननानि मुखानि तैः वादेन उच्चारणेन व्याख्यानेन वा धौतं विशुद्धं यत् समाधिशास्त्रं योगशास्त्रं संयमविद्येत्यर्थः तस्य श्रुत्या श्रवणेन पूर्णौ कर्णौ यस्य स तथोक्तः संयमनविद्यायां कृताभ्यास इत्यर्थः अहं योगात् समाधेः उपायविशेषाच्च योगः सन्नहनोपायध्यानसङ्गतियुक्तिष्वित्यमरः। अरन्ध्रे निरवकाशे हृदि हृदये यां वार्त्तां निरुन्धे आवृणोमि सा वार्त्ता लोकवृत्तान्तः असती अपि अलीकापि परिहासविजल्पितापीति भावः सतीति किं वक्तव्यमिति भावः। अन्यं जनं न एति न प्राप्नोति। यथा असती दुश्चारिणी नारी कुत्रचित् गोत्रभ्रूतया निर्गमोपायरहिते स्थाने निरुद्धा पुरुषान्तरं न गच्छति तद्वदिति भावः अहमासां रहस्यवार्त्तां न कस्मिंश्चित् प्रकाशयामीत्यतीव विश्वसनीयोऽस्मीति तात्पर्य्यम्। अत्र वार्त्तानिरोधस्य परार्द्धपदार्थहेतुकतया काव्यलिङ्गमलङ्कारः॥४४

साम्प्रतमस्या नलानुरागं सप्तभिः श्लोकैः वर्द्धयति। नलाश्रयेणेत्यादिभिः। इन्दोश्चन्द्रस्य परिग्रहेण आश्रयेण अम्बुजिन्याः पद्मिन्याः दुर्लभं लब्धुमशक्यं ज्योत्स्नोत्सवं चन्द्रिकासम्भोगसुखं कुमुदान्यस्यां सन्तीति कुमुद्वती कुमुदिनीव कुमुदनडवेत-

कुमुद्वतीवेन्दुपरिग्रहेण
ज्योत्स्नोत्सवं दुर्लभमम्बुजिन्याः ॥४५॥
तन्नैषधानूढ़तया दुरापं
शर्म्म त्वयास्मत्कृतचाटुजन्म ।
रसालवल्ल्या मधुपानुविद्धं
सौभाग्यमप्राप्तवसन्तयेव ॥ ४६ ॥

सेध्यो ङमनुप् मादुपधायाश्चेत्यादिना मकारस्य वकारः । अन्या अनर्हेति भावः कामिनी नलाश्रयेण नलस्वीकारेण तव अनवाप्यं त्वया दुष्प्रापमित्यर्थः कृत्यानां कर्त्तरि वेति षष्ठी तृतीया। द्यौस्त्रिदिवः स्वर्गः पृषोदरादित्वात् साधुः। तस्य उपभुज्यते इति उपभोगः भोग्यं वस्त्वित्यर्थः लभते प्राप्नोति बत इति खेदे, नलपरिग्रहाभावात् त्वमीदृग्भोगवञ्चिता अन्या तु अनर्हापि तदाश्रयेण तत्तत्स्वर्गसुखभोगिनीति अस्माकं खेदः तस्मात् नलपरिग्रहार्थमेव यतस्वेति तात्पर्य्यार्थः । उपमालङ्कारः ॥ ४५ ॥

तदिति । अप्राप्तः अनधिगतः वसन्तः यया तथाभूतया रसालवल्ल्या चूतलतिकया मधुपैः भ्रमरैः अनुविद्धं तद्गुञ्जनादिभिः सङ्गतमिति यावत् सौभाग्यमिव रम्यत्वमिव त्वया नैषधेन नलेन अनूढ़तया अपरिणीतत्वेन अस्माभिः कृतेभ्यः चाटुभ्यः सुभाषितेभ्यः जन्म यस्य तथोक्तं तत् प्रसिद्धं शर्म्म सुखं स्वर्गभोगसुखमिति शर्म्मशातसुखानि चेत्यमरः दुरापं दुर्लभं कृत्यानां कर्त्तरि वेति विकल्पेन तृतीया। रसालवल्ली-वसन्तयोर्योग इव नैषधेन सह तव योगो योग्य इति वस्तु उपमालङ्कारेण व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ४६ ॥

तस्यैव वा यास्यसि किन्न हस्तं ?
दृष्टं मनः केन विधेः प्रविश्य ? ।
अजातपाणिग्रहणासि तावत्
रूपस्वरूपातिशयाश्रयश्च ॥ ४७ ॥

निशा शशाङ्कं शिवया गिरीशं
श्रिया हरिं योजयतः प्रतीतः ।
विधेरपि स्वारसिकः प्रयासः
परस्परं योग्यसमागमाय ॥ ४८ ॥

तस्येति । वा पक्षान्तरे अथ चेत्यर्थः तस्यैव नलस्यैव हस्तं किं कथं न यास्यसि ? न गमिष्यसि ? अपितु यास्यस्येवेत्यर्थः केन जनेन विधेः प्रजापतेः मनः प्रविश्य दृष्टं यत् दमयन्ती नलं न प्राप्स्यतीति विधेर्मनसि स्थितं केन जनेनावलोकितम् ? न केनापीत्यर्थः तावत् अद्यापीत्यर्थः न जातं पाणिग्रहणं विवाहः यस्याः तथोक्ता अपरिणीतेत्यर्थः रूपं सौन्दर्य्यं स्वरूपं स्वभावः सौशील्यमित्यर्थः यद्वा रूपञ्च स्वरूपं सुक्षत्रियकुलजत्वादिधर्म्मश्च तयोरतिशयः उत्कर्षः तस्य आश्रयश्च स्थानञ्च असि वर्त्तसे तस्मात् नलहस्तगमने न तव कश्चित् प्रतिबन्धः प्रत्युत योग्यतैवास्तीति भावः ॥ ४७ ॥

निशेति । निशा रजन्या निशा निशीथिनी रात्रिरित्यमरः पद्दन्नित्यादिना निशादेशः । शशाङ्कं चन्द्रं, शिवया पार्वत्या गिरीशं हरं श्रिया लक्ष्म्या हरिं विष्णुं योजयतः सङ्गमयतः विधेः प्रजापतेरपि प्रयासः प्रयत्नः परस्परं योग्यसमागमाय योग्यसङ्घटनाय स्वरसः स्वाभिलाषः तेन सिद्धः स्वारसिकः

वेलातिगस्त्रैणगुणाब्धिवेणी
न योगयोग्यासि नलेतरेण।
संदर्भ्यते दर्भगुणेन मल्ली-
माला न मृद्वी भृशकर्कशेन॥ ४९॥
विधिं वधूसृष्टिमपृच्छमेव
तद्यानयुग्यो नलकेलियोग्याम्।

स्वेच्छाधीनः स्वाभाविकः इत्यर्थः। किं वा अभिमतसंयोजनेन साधूनां हृदयचमत्कारी इत्यर्थः। प्रतीतः ज्ञातः योग्यं योग्येन युज्यते विधात्रा इति प्रसिद्धिः इत्यर्थः। तस्मादवश्यमेव तथाविधा त्वं तादृशेन नलेन समेष्यसीति निशाशशाङ्कादि-दृष्टान्तेन प्रतीयते इति भावः॥ ४८॥

वेलातिगेति। वेलां सीमामतिगच्छन्तीति वेलातिगाः निःसीमान इत्यर्थः स्त्रीणामिमे स्त्रैणाः स्त्रीसम्बन्धिनः ये गुणाः रूपशीलादय इत्यर्थः स्त्रीपुंसाभ्यां नञ् स्नञाविति वचनात् नञ्प्रत्ययः। ते एव अब्धिः सागरः तस्य वेणी प्रवाहभूता वेलाब्धिजलबन्धने काले सीम्नि च वेणी तु केशबन्धे जलस्रुता-विति वैजयन्ती। त्वं नलादितरः नलेतरः नलभिन्न इत्यर्थः तेन योगयोग्या योगार्हा नासि न भवसि। तथाहि मृद्वी कोमला मल्लीमाला मल्लिकापुष्पस्रक् भृशकर्कशेन अतिकठो-रेण दर्भगुणेन कुशनिर्मितया रज्ज्वा न सन्दर्भ्यते न ग्रथ्यते दृभग्रन्थ इति धातोः कर्म्मणि लट्। नलभिन्नपुरुषेण तव सम्मेलनं मल्लिकामालायाः दर्भगुणेन गुम्फनमिवेति बिम्बानु-बिम्बप्रत्यायनाद् व्यतिरेकेण दृष्टान्तालङ्कारः। तदुक्तं दर्पणे। दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिबिम्बनमिति॥ ४९॥

त्वन्नामवर्णा इव कर्णपाता
मयास्य संक्रीड़ति चक्रचक्रे ॥ ५० ॥

अन्येन पत्या त्वयि योजितायां
विज्ञत्वकीर्त्त्या गतजन्मनो वै।
जनापवादार्णवमुत्तरीतुं
विधा विधातुः कतमा तरी स्यात्? ॥५१॥

विधिमिति। अहं तस्य विधेः यानस्य युगं वहतीति यानयुग्यः रथवाहकः सन् एकदेशेति शेषः तद्वहतीति रथयुगप्रासङ्गमिति यत्प्रत्ययः। विधिं प्रजापतिं नलस्य केलियोग्यां क्रीड़ार्हां वधूसृष्टिं स्त्रीनिर्म्माणम् अपृच्छम्, भगवन्! का नारी नलमहिषी भवितुं योग्यतया सृष्टेति पृष्टवान् इत्यर्थः। दुहादित्वाद् द्विकर्मकत्वम्। मया अस्य यानस्य चक्रचक्रे रथाङ्गसङ्घे संक्रीड़ति अव्यक्तं ध्वनति सतीत्यर्थः समोऽकूजने इति वक्तव्येऽतिकूजतेर्नात्मनेपदम्। तव नामवर्णा इव दमयन्तीति नामाक्षराणीव कर्णेन पीताः गृहीताः इवशब्देन श्रवणस्य अस्पष्टता प्रतीयते। केचित्तु चक्रचक्रे हंससमूहे भीमो भीमसेनवत् हंसवाचकस्य चक्राङ्गशब्दस्य एकदेशेनापि चक्रशब्देन हंसोऽभिधीयते इति व्याचख्युः॥ ५० ॥

अन्येनेति। अन्येन नलादितरेण पत्या भर्त्रा त्वयि योजितायां सङ्घटितायां सत्यां विशेषेण जानातीति विज्ञः तस्य भावः विज्ञत्वं तस्य कीर्त्तिः ख्यातिः तया सुविवेचको विधातेति यशसेत्यर्थः गतम् अतिक्रान्तं जन्म यस्य तस्य विधातुः प्रजापतेः वै निश्चये जनानां जनेषु वा अपवादः अयोग्ययोजकोऽयमिति निन्दा स एव अर्णवः समुद्रः अतिबाहुल्यादप-

आस्तां तदप्रस्तुतचिन्तयालं
मयासि तन्वि! श्रमितातिवेलम्।
सोऽहं तदागः परिमार्ष्टुकामः
तवेप्सितं किं विदधेऽभिधेहि?॥ ५२॥

वादस्येति तथा रूपकम्। तम् उत्तरीतुं निस्तर्त्तुं द्रुतो वेति दीर्घः कतमा विधा कीदृक्प्रकारा तरी नौका स्यात्? न कतमापीत्यर्थः। स्त्रियां नौस्तरणिस्तरिरित्यमरः। समुद्र-पतितो जन इव तरण्या, न केनापि प्रकारेण विधिरीदृश-मयोग्ययोजनजनितमपवादमुत्तरीतुं समर्थः स्यादित्यर्थः। अतोऽयमर्थो दैवनिन्दाहेतुगत्यापि सिद्ध एव। जननिन्दा-शङ्किना विधिना त्वमवश्यमेव नलेन योजिता भविष्यसि इति भावः॥ ५१॥

इत्थमस्या नलप्राप्तिं प्रायेण सिद्धवद्विदित्वा भैम्याश्चित्त-वृत्तिज्ञानार्थमाह, आस्तामिति। तत् पूर्वोक्तं नलविषयवर्णन-रूपम् अप्रस्तुतम् आस्तां तिष्ठतु निवर्त्ततामित्यर्थः कुत इत्याह अप्रस्तुतस्य अप्रकृतस्य चिन्तया पर्य्यालोचनेन अलं तया साध्यं किमपि नास्तीत्यर्थः निष्प्रयोजनमप्रस्तुतकीर्त्तनमि-त्यर्थः। गम्यमानसाधनक्रियापेक्षया करणत्वात्तृतीया। अत-एवाह न केवलं श्रूयमाणक्रियापेक्षया कारकोत्पत्तिः, किन्तु गम्यमानक्रियापेक्षयापीति न्यासकारः। हे तन्वि! कृशाङ्गि! एतेन परिश्रमासहिष्णुत्वं ध्वन्यते। मया अतिवेलम् अतिमात्रं श्रमितासि परिश्रमं नीतासि अतिदूराकर्षणादिनेति भावः अभिव्यंन्तात् कर्म्मणि क्तः। सोऽहम् अतिमात्रक्लेशप्रदोऽहं तत् आगः अपराधं तादृशक्लेशप्रदानजनितमिति भावः परि-

इतीरयित्वा विरराम पत्नी
स राजपुत्त्रीहृदयं बुभुत्सुः ।
ह्रदे गभीरे हृदि चावगाढ़े
शंसन्ति कार्य्यावतरं हि सन्तः ॥ ५३ ॥
किञ्चित्तिरश्चीनविलोलमौलिः
विचिन्त्य वाच्यं मनसा मुहूर्त्तम् ।

माष्टुं कामो यस्य तथोक्तः तुम् काममनसोरपीति मकार-लोपः परिजिहीर्षुरित्यर्थः, अस्मीति शेषः तत् तव किमी-प्सितम् अभिलषितं विदधे सम्पादयामि भविष्यत्सामीप्ये लट् । अभिधेहि वद । आगोऽपराधो मन्तुश्चेत्यमरः ॥ ५२ ॥

इतीति । स पत्नी पक्षी हंसः इतीत्थम् ईरयित्वा कथ-यित्वा राजपुत्र्या दमयन्त्या हृदयम् अन्तरिन्द्रियं बुभुत्सुः जिज्ञासुः सन् विरराम तूष्णीमास । व्याङ्परिभ्यो रम इति परस्मैपदम् । तथाहि सन्तः साधवः कार्य्याकार्य्यविद इत्यर्थः गभीरे दुर्विगाहे इत्यर्थः हृदि ह्रदे च जलाशयविशेषे च अव-गाढ़े प्रविष्टे प्रविश्य दृष्टे इत्यर्थः सति कार्य्यावतरं कार्य्यस्य स्नानादेः रहस्योक्तेश्च अवतरं तीर्थं प्रस्तावञ्च शंसन्ति प्रक-टयन्ति । तदज्ञाने अनर्थपातः स्यादिति सर्वथा अनधिकार-चर्चा न कर्त्तव्येति भावः । सामान्येन विशेषसमर्थनरूपो-ऽर्थान्तरन्यासः । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते । साधर्म्येणेतरेणार्था-न्तरन्यासोऽष्टधा तत इति लक्षणात् ॥ ५३ ॥

अथास्या हंसं प्रति वचनमाह, किञ्चिदिति । सा पृथि-वीन्द्रपुत्री राजसुता दमयन्ती किञ्चिदीषत् तिरश्चीनः साची-

पतत्त्रिणं सा पृथिवीन्द्रपुत्री
जगाद वक्त्रेण तृणीकृतेन्दुः ॥ ५४ ॥
धिक् चापले वत्सिमवत्सलत्वं
यत्प्रेरणादुत्तरलीभवन्त्या।
समीरसङ्गादिव नीरभङ्ग्या
मया तटस्थस्त्वमुपद्रुतोऽसि ॥ ५५ ॥

न्नतः वक्रीकृत इत्यर्थः हंसवचनविचारणार्थमिति भावः विलोलः विकम्पितः मौलिः धम्मिल्लः संयतकेशचय इत्यर्थः मौलिः किरीटधम्मिल्लाविति धम्मिल्लाः संयताः कचा इति चामरः। यस्याः तथाभूता मुहूर्त्तम् अल्पकालं मनसा चित्तेन वाच्यं वक्तव्यं विचिन्त्य पर्य्यालोच्य वक्त्रेण वदनेन स्वाभीष्टप्रस्तावजनितहर्षात् प्रसन्नेनेति भावः तृणीकृतः न्यक्कृत इति यावत् इन्दुश्चन्द्रो यया तादृशी सती पतत्त्रिणं पक्षिणं हंसं जगाद उवाच। वक्त्रेण तृणीकृतेन्दुरिति व्यतिरेकालङ्कारः। तदुक्तं दर्पणे। आधिक्यमुपमेयस्योपमानान्न्यूनताथवा। व्यतिरेक इति ॥ ५४ ॥

धिगिति। चपलस्य भावः कर्म्म वा चापलं तस्मिन् चापले चपलतायां चापल्यकर्मणि वा युवादित्वादण्प्रत्ययः वत्सस्य भावः वत्सिमा वत्सत्वं शैशवमित्यर्थः पृथ्वादित्वादिमणिच्। तेन हेतुना वत्सलत्वं प्रियत्वं बालचापलमिति यावत् धिक् निन्दामीत्यर्थः धिङ्निर्भर्त्सननिन्दयोरित्यमरः। यस्य बालचापलस्य प्रेरणात् प्रभावादिति भावः उत्तरलीभवन्त्या अधीरायमाणयेत्यर्थः मया समीरसङ्गात् वाताहत्याः उत्तरलीभवन्त्या

आदर्शतां स्वच्छतया प्रयासि
सतां स तावत् खलु दर्शनीयः ।
आगः पुरस्कुर्वति सागसं मां
यस्यात्मनीदं प्रतिबिम्बितं ते ॥ ५६ ॥

नीरभङ्ग्या सलिलतरङ्गेणेव तटस्थः उदासीनः अपरिचित इति यावत् कूलस्थितश्च त्वम् उपद्रुतः धारणार्थं पश्चाद्धावनात् उत्यक्तीकृतः असि। मया यदेतं त्वद्ग्रहणार्थं चापल्यं कृतं तत् बालचापलमिति कृत्वा चन्तव्यमिति भावः। उपमालङ्कारः ॥ ५५ ॥

आदर्शतामिति। स्वच्छतया अतिनिर्मलतया आदृश्यते सम्मुखीनं वस्तु अत्रेति आदर्शः दर्पणः अधिकरणे घञ्प्रत्ययः। दर्पणे मुकुरादर्शावित्यमरः। तस्य भावः तत्ता तां प्रयासि गच्छसि आदर्श इव भासीत्यर्थः। स तावत् स एव अतिस्वच्छ इति भावः आदर्शः सतां साधूनां दर्शनीयः खलु द्रष्टव्य एव उक्तञ्च। रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम्। गुरुमग्निं तथा सूर्यं प्रातः पश्येत् सदा बुधः। इति आदर्शत्वमेव व्यञ्जयति आग इति सागसं सापराधम् आगोऽपराधो मन्तुश्चेत्यमरः इत्थं पश्चाद्धावनेन विरक्तीकरणात् कृतापराधमित्यर्थः मां पुरस्कुर्वति अग्रे कुर्वति पूजयति च यस्य ते तव आत्मनि बुद्धौ स्वरूपे वा पुरस्कृतः पूजिते स्यादभियुक्तेऽग्रतः कृते इति। आत्मा यत्ने धृतौ बुद्धौ स्वभावे परमात्मनीति चामरः। इदं मदीयम् आगः अपराधः प्रतिबिम्बितं प्रतिफलितम्। पुरोवर्त्तिद्रव्याणाम् आत्मनि संक्रमणात् आदर्शोऽसि इत्यर्थः, साधुजनानाम् अयमेव स्वभावः यत् परकृतमपराधम् अगणयित्वा अपराध-

अनार्य्यमप्याचरितं कुमार्य्या
भवान्मम क्षाम्यतु सौम्य! तावत्।
हंसोऽपि देवांशतयाभिवन्द्यः
श्रीवत्सलक्ष्मेव हि मत्स्यमूर्त्तिः॥ ५७॥
मत्प्रीतिमाधित्ससि कां त्वदीक्षा-
मुदं मदक्ष्णोरपि यातिशेतां।

कारिणमपि आत्मीयत्वेन मन्यते। मत्कृतापराधस्त्वया विशे-षेण विज्ञात इति भावः॥ ५६॥

अनार्य्यमिति। हे सौम्य! शुभदर्शन! भवान् कुमार्य्या बालायाः अपक्वबुद्धिकायाः मम अनार्य्यमपि अभद्रमपि आच-रितं व्यवहृतं दुराचारमित्यर्थः तावत् सम्यक् साकल्येनेत्यर्थः यावत्तावच्च साकल्ये इत्यमरः क्षाम्यतु सहताम्। ननु तिरश्चो मम क्षान्तावक्षान्तौ वा किमित्यत आह हंसोऽपीति। हंसो-ऽपि तिर्य्यग्जातिरपि त्वमिति शेषः देवांशतया देवावतार-तया मत्स्यमूर्त्तिः मत्स्यरूपेणावतीर्णः श्रीवत्सलक्ष्मा विष्णुरिव अभिवन्द्यः हीत्यवधारणे अतिपूज्य एवासीत्यर्थः। तथाच मम पूज्यपूजाव्यतिक्रमकरणात् प्रत्युत उपद्रवणात् महान-धर्मः सञ्जातः स तावत् क्षन्तव्यः इष्टलाभार्थं यत्नः साम्प्रतं दूरे आस्तामिति भावः। उपमालङ्कारः॥ ५७॥

यदुक्तं तवेप्सितं किं विदधेऽभिधेहीत्यत्राह मत्प्रीतिमिति। कां मम प्रीतिम् आनन्दं मम प्रीतिप्रदं कर्म वा आधित्ससि आधातुमिच्छसि कर्त्तुमिच्छसीत्यर्थः दधातेः सन्नन्ताल्लट्। या प्रीतिः मदक्ष्णोः मम चक्षुषोः त्वदीक्षामुदं तव दर्शन-जनितानन्दम् अतिशेताम् अतिशय्य वर्त्ततां त्वद्दर्शनसुखा-

निजामृतैर्लोचनसेचनाद्वा
पृथक्किमिन्दुः सृजति प्रजानाम्? ॥ ५८ ॥
मनस्तु यं नोज्झति जातु यातु
मनोरथः कण्ठपथं कथं सः? ।
का नाम बाला द्विजराजपाणि-
ग्रहाभिलाषं कथयेदभिज्ञा? ॥ ५९ ॥

दधिकं सुखम् ईप्सितञ्च न वर्त्तते इति भावः। तथाहि इन्दुः चन्द्रः निजामृतैः स्वकीयसुधाभिः प्रजानां जनानां प्रजा स्यात् सन्ततौ जने इत्यमरः। लोचनसेचनात् नयनतृप्तिविधानात् अन्यत् अपरं पृथग् विनेत्यादिना पञ्चमी। किं वा सृजति? करोति?०न किमपीत्यर्थः। त्वन्तु अमृतोपमनलगुणकीर्त्तनेन मम नयनानन्दं जनयसि तदतःपरं मदीप्सितं किं? यत्त्वं विधित्ससीति तात्पर्य्यम्। त्वद्दर्शनं चन्द्रदर्शनमिव प्रीतिकरमिति विम्बानुविम्बप्रतीतेर्दृष्टान्तालङ्कारः। ५८ ॥

मनोरथोक्तनस्य वस्तुनः कथनमशक्यमित्यभिप्रायेणाह, मन इति। तु एवार्थः मनश्चित्तं मदीयमिति शेषः यं मनोरथं मनोरथविषयम् ईप्सितं वस्त्विति भावः जातु कदाचित् एव न उज्झति न त्यजति यः सर्व्वदैव मनसि वर्त्तते इति भावः स मनोरथः कण्ठपथं वाग्विषयमिति यावत् कथं यातु गच्छतु न कथमपि गन्तुं शक्नोतीत्यर्थः एकेन प्रतिबद्धस्य वस्तुनः अन्यत्र गमनासम्भवादिति भावः सम्भावनायां लोट्। ननु मनस एव वा कथमित्थं प्रतिबन्धित्वं येनासौ वाग्विषयीकर्त्तुं न शक्यते तत्र लज्जैव कारणमित्याह, केति। अभिजानातीत्यभिज्ञा बुद्धिमतीत्यर्थः का नाम सम्भावनायां बाला

वाचं तदीयां परिपीय मृद्वीं
मृद्वीकया तुल्यरसां स हंसः।
तत्याज तोषं परपुष्टघुष्टे
घृणाञ्च वीणाक्वणिते वितेने॥ ६०॥

कुमारी द्विजराजस्य चन्द्रस्य द्विजराजः शशधरो नक्षत्रेशः क्षपाकर इत्यमरः। पाणिना करेण यः ग्रहः ग्रहणं तत्र अभिलाषः तं कथयेत् हस्तेन चन्द्रमहं ग्रहीतुमिच्छामीति वदेदित्यर्थः? किञ्च द्विजेषु द्विजातिषु क्षत्रियेषु राजते इति द्विजराजः राजश्रेष्ठः नल इत्यर्थः तेन यः पाणिग्रहः विवाहः तत्राभिलाषः तं यद्वा, हे द्विज! पक्षिन्! राज्ञा नलेन पाणिग्रहाभिलाषं का नाम कथयेत् न कापीत्यर्थः तथाच तादृशदुर्लभजनप्रार्थना करेण चन्द्रग्रहणप्रार्थनेव परिहासजनिकेति कथं वक्तुं शक्यते इति भावः। अभिप्रेत्यव अलज्जेति पाठे का नाम बाला अलज्जा निर्लज्जा सतीत्यर्थः अन्यत् सर्वं समम्। केचित्तु का आमबाला अपक्कयौवना बालिका अलज्जा सती द्विजराजपाणिग्रहाभिलाषं न कथयेत् अपितु सर्वैव कथयेत् अपक्कयौवनायास्तु किं वक्तव्यमिति भाव इति व्याचक्षते॥ ५९॥

तदाकर्ण्य हंसस्य चमत्कारितामाह। वाचमिति। स हंसः मृद्वीं कोमलां मधुरामिति यावत् अतएव मृद्वीकया द्राक्षया मृद्वीका गोस्तनी द्राक्षेत्यमरः तुल्यः समानः रसः स्वादः यस्याः तां तदीयां भैमीसम्बन्धिनीं वाचं वाणीं परिपीय सादरमाकर्ण्य परपुष्टानां कोकिलानां घुष्टं कूजितं तस्मिन् तोषं प्रीतिं तत्याज त्यक्तवान् वीणायाः क्वणिते नादे घृणां जुगुप्सां घृणा जुगुप्सा कृपयोरिति विश्वः वितेने विस्तृतवान् ज्ञातवा-

मन्दाक्षमन्दाक्षरमुद्रमुक्त्वा
तस्यां समाकुञ्चितवाचि हंसः ।
तच्छंसिते किञ्चन संशयालुः
गिरा मुखाम्भोजमयं युयोज ॥ ६१ ॥

करेण वाञ्छेव विधुं विधर्त्तुं
यमित्थमात्थादरिणी तमर्थम् ।

नित्यर्थः कोकिलकूजितात् वीणाक्वणिताच्च माधुर्य्यमस्या वचनस्येति वस्तु मृद्वीकया तुल्यरसामित्युपमालङ्कारेण व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ६० ॥

अथ हंसस्य वचनमुपक्रमते मन्दाक्षेति । मन्दाक्षेण लज्जया मन्दाक्षं ह्रीस्त्रपा व्रीड़ा लज्जेत्यमरः । मन्दा मिता स्वल्पेत्यर्थः सन्दिग्धार्था वा अक्षराणां वर्णानां मुद्रा सन्निवेशः यस्मिन् तद् यथा तथा उक्त्वा तस्यां दमयन्त्यां समाकुञ्चिता उपसंहृता वाग् यया तथाभूतायां तूष्णीभूतायामित्यर्थः सत्याम् अयं हंसः तस्याः भैम्याः शंसिते भाषिते किञ्चन किमपि संशयालुः किमियं द्विजराजपाणिग्रहाभिलाषमित्यनेन चन्द्रग्रहणाभिलाषमिव नलाभिलाषं वा राजान्तराभिलाषं ब्रवीतीति सन्दिहानः सन् । स्पृहिगृहीत्यादिना आलुच्प्रत्ययः । मुखाम्भोजं वदनकमलं गिरा वाचा युयोज मुखेन वक्तुं प्राक्रमतेत्यर्थः । मुखाम्भोजमित्युपमा रूपकं वालङ्कारः साधकबाधकयोरन्यतरस्याभावात् । तेन च उभयोः सन्देहसङ्करः । साधर्म्यञ्चोभयोः शुभदर्शनमाह्लादकत्वञ्चेति बोध्यम् ॥ ६१ ॥

करेणेति । त्वम् आदरिणी आदरवती सती करेण हस्तेन विधुं चन्द्रं विधर्त्तुं ग्रहीतुं वाञ्छेव स्पृहेव यमर्थं मनोरथीभूतं

पातुं श्रुतिभ्यामपि नाधिकुर्वे
वर्णं श्रुतेर्वर्ण इवान्तिमः किम्? ॥ ६२ ॥

अर्थाप्यते वा किमियद्भवत्या?
चित्तैकपद्यामपि विद्यते यः।
यत्रान्धकारः खलु चेतसोऽपि
जिह्मेतरैर्ब्रह्म तदप्यवाप्यम् ॥ ६३ ॥

यस्त्विति यावत् इत्थम् अनेन प्रकारेण द्विजराजपाणिग्रहाभिलाषमित्युक्तप्रकारेणेत्यर्थः आत्थ ब्रवीषि ब्रुवः पञ्चानामिति ब्रुवो लटि सिपि थलादेशः। ब्रुवश्चाहादेशः। आहस्थ इति हकारस्य थकारः। अन्ते भवः अन्तिमः चरमः वर्णः शूद्र इत्यर्थः अन्ताच्चेति वक्तव्यमिति इमच्। श्रुतेः वेदस्य वर्णम् अक्षरमिव तमर्थं मनोरथविषयभूतमिति भावः श्रुतिभ्यां कर्णाभ्यां पातुमपि श्रोतुमपीत्यर्थः न अधिकुर्वे किम्? नाधिकारी अस्मि किम्? अपितु अधिकुर्वे एवेत्यर्थः। निकृष्टजातीयः शूद्रो यथा वेदाक्षरग्रहणे नाधिकरोति अहं तथा न, अतो भवन्मनोरथविषयं श्रोतुं अर्हामीति तन्ममाग्रे तदावेदनीयमिति तात्पर्य्यम्। उपमालङ्कारः ॥ ६२ ॥

ननु तदर्थस्य वचने अतीव लज्जे तत्कथं ब्रवीमि इत्यत्राह अर्थाप्यते इति। यः अर्थः, एकः पादो यस्यामित्येकपदी एकपदसञ्चरणयोग्यः मार्ग इत्यर्थः वर्त्मन्येकपदीति चेत्यमरः कुम्भपदीषु चेति निपातनात् साधुः। चित्तमेव एकपदी चित्तैकपदी तस्यामपि मनोमार्गेऽपीत्यर्थः चक्षुरादीनामविषयत्वेऽपीत्यर्थः विद्यते वर्त्तते, भवत्या सः अर्थः किमियद् वा कथमेवं वा अर्थो मौल्यं धनं क्रियते इत्यर्थाप्यते गोपनीयधनवत्

ईशाणिमैश्वर्य्यविवर्त्तमध्ये।
लोकेशलोकेशयलोकमध्ये।
तिर्य्यञ्चमप्यञ्च मृषानभिज्ञ-
रसज्ञतोपज्ञसमज्ञमज्ञम् ॥ ६४ ॥

नाख्यायते इत्यर्थः यत्र वस्तुनि चेतसोऽपि मनसोऽपि अन्ध-
कारः अग्राह्यत्वमिति भावः यतो वाचो निवर्त्तन्ते अप्राप्य
मनसा सहेति श्रुतेः। तदपि अवाङ्मनसगोचरमपीत्यर्थः
अन्न जिह्मेतरैः अकुटिलैः कुशलमतिभिरिति भावः अवाप्यं
प्रापणीयम् अदुर्लभमिति यावत् सुलभमिति पर्य्यवसितम्।
सूक्ष्ममतिभिः यत्नात् अमनोगोचरोऽपि ब्रह्मपदार्थो लभ्यते
अयन्तु तव मनोगतोऽर्थः किमु वक्तव्यः इत्यर्थापत्तिरलङ्कारः।
तदुक्तम्, दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते इति।
तस्मात् मत्समीपे तवेदं गोपनमकिञ्चित्करं मया चतुरेणावश्य-
मेव तवाभिलषितवस्तु विज्ञायते तत् स्पष्टतः प्रकाशनीयस्तव
मनोरथ इति भावः ॥ ६३ ॥

मयि मृषावादित्वशङ्कया वक्तुं नेष्यते चेत्तत्राह ईशेत्यादि।
ईशस्य ईश्वरस्य शिवस्य यत् अणिमैश्वर्य्यम् अणिमा लघिमा
व्याप्तिः प्राकाम्यं महिमा तथा। ईशित्वञ्च वशित्वञ्च तथा
कामावसायितेत्युक्तेषु अष्टविधेषु ऐश्वर्य्येषु प्रथममैश्वर्य्यमित्यर्थः
तस्य वैपरीत्येन वर्त्तते इति विवर्त्तः प्रतिपक्ष इत्यर्थः यद्वा
विवर्त्तः अवस्थान्तरं मध्यः मध्यदेशः कटिदेश इत्यर्थः यस्याः
तत्सम्बुद्धौ हे कृशोदरीत्यर्थः लोकानां भुवनानाम् ईशः
लोकेशः ब्रह्मा तस्य लोकः भुवनं तस्मिन् शेते वसतीति
लोकेशलोकेशयया अधिकरणे शेतेरित्यच्प्रत्ययः। अयमाशयः

मध्ये श्रुतीनां प्रतिवेशिनीनां
सरस्वती वासवती मुखे नः ।
ह्रियेव ताभ्यस्खलतीयमद्धा-
पथान्न संसर्गगुणेन बद्धा ॥ ६५ ॥

वासिषु चकालादित्यलुक् । ये लोकाः ब्रह्मलोकवासिनो जना इत्यर्थः लोकस्तु भुवने जने इत्यमरः । तेषां मध्ये श्रयं मूढं तिर्य्यञ्चमपि पक्षिणमपि मृषा अनृतं तस्य अनभिज्ञा रसज्ञा रसना जिह्वेत्यर्थः यस्य सः यद्वा मृषानभिज्ञश्चासौ रसज्ञः रसिकः सामाजिकश्चेति मृषानभिज्ञरसज्ञः तस्य भावः तत्ता सत्यवादिता सामाजिकता चेति वार्थः तया या उपज्ञायते इत्युपज्ञा तथात्वेन यत् प्रथमकथनमित्यर्थः के के ऽत्र जगति सत्यवादिनः यद्वा सत्यवादिनः सामाजिकाश्च सन्तीति प्रस्तावे प्रथमकथनीयत्वेन निर्देश इति यावत् । उपज्ञा ज्ञानमाद्यं स्यादित्यमरः । आतश्चोपसर्गे इत्यङ्प्रत्ययः । बहुलग्रहणात् कर्मार्थत्वं तया ज्ञातमुपज्ञम् उपज्ञोपक्रमं तदाद्याचिख्यासायामिति नपुंसकत्वं तथात्वेन समं साधारणं सर्वैर्ज्ञायते इति समज्ञा कीर्त्तिर्यस्य तं पूर्ववदङ्प्रत्ययः । यद्वा तदुपज्ञं ताद्रूप्येणादौ ज्ञातेत्यर्थः समज्ञा कीर्त्तिः येन तथाभूतं माम् अवजानीहि सत्यवादित्वेन विश्वसिहीत्यर्थः । अवतेर्गत्यर्थत्वाद् ज्ञानार्थत्वं सर्वे गत्यर्था ज्ञानार्थाः प्राप्त्यर्थाश्चेति नियमात् । यशः कीर्त्तिः समज्ञा चेत्यमरः ॥ ६४ ॥

मध्ये इति । इयं सरस्वती वाणी प्रतिवेशिनीनाम् एकपल्लीवासिनीनां ब्रह्ममुखोच्चरितत्वेन सततसन्निहितानामिति यावत् श्रुतीनां वेदानां मध्ये नः अस्माकं मुखे वासवती अधिष्ठिता

पर्य्यङ्कतापन्नसरस्वदङ्कां
लङ्कापुरीमप्यभिलाषि चित्तम् ।
कुत्रापि चेद्वस्तुनि ते प्रयाति
तदप्यवेहि त्वशये शयालु ॥ ६६ ॥

सती ताभ्यः श्रुतिभ्यः क्रियेव यदि मिथ्यामार्गे रता स्याम् तदा ता महामान्याः श्रुतयः किं वक्ष्यन्ति प्रत्युत घृणामेव करिष्यन्तीति लज्जयेव संसर्गः साधुसङ्ग इति यावत् स एव गुणः धर्म्मः रज्जुर्वा तेन बद्धा संयमिता नद्धेति पाठे स एवार्थः। सती सदापथात् सत्यमार्गात् सत्येत्वद्धाञ्जसा द्वयमित्यमरः न स्खलति भ्रश्यति । संसर्गजा दोषगुणा भवन्ति इति न्यायादिति भावः । अहं ब्रह्मलोकवासी तत्रापि श्रुतीनां सततसंसर्गः ईदृगवस्थायां मम वाक्ये मृषात्वशङ्का नैव कार्य्या तस्मात् स्वमनोरथं मयि निवेदयतु भवती इति तात्पर्य्यम् ॥ ६५ ॥

भवतोऽमृषावादित्वे किं फलं ममेत्यत आह, पर्य्यङ्कतेति । कुत्रापि कस्मिंश्चिदपि वस्तुनि साभिलाषं सस्पृहं ते तव चित्तम् अन्तःकरणं कर्त्तृ पर्य्यङ्कतां खट्वात्वम् आपन्नः प्राप्तः सरस्वतः सागरस्य अङ्कः क्रोड़देशः यस्याः तां समुद्रवेष्टितामिति यावत् । सरस्वान् सागरोऽर्णव इत्यमरः। अतिदुर्गमामिति भावः लङ्कापुरीं राक्षसनगरीं प्रयाति गच्छति चेत् दुष्टवस्तुलाभार्थमिति भावः तदपि तवत्प्रमप्रीत्यर्थः इष्टं वस्तु मम अयः पाणिः तव शयालु स्थितं स्वकरतलवर्त्तीत्यर्थः अवेहि अवगच्छ जानीहीत्यर्थः त्वदर्थं दुष्करमपि कर्म्म करिष्यामीति सत्यं ब्रवीमि, मनोगतं कथयेति भावः ॥ ६६ ॥

इतीरिता पत्त्ररथेन तेन
ह्रीणा च हृष्टा च बभाण भैमी ।
चेतो नलं कामयते मदीयं
नान्यत्र कुत्रापि च साभिलाषम् ॥ ६७ ॥

विचिन्त्य बालाजनशीलशैलं
लज्जानदीमज्जदनङ्गनागम् ।
आचष्ट विस्पष्टमभाषमाणाम्
एनां स चक्राङ्गपतङ्गशक्रः ॥ ६८ ॥

अथ भैमी हंसं प्रति स्वाभिप्रायं निवेदयति, इतीति । तेन पत्त्ररथेन पक्षिणा हंसेन पतत् पत्त्ररथाण्डजा इत्यमरः इतीत्थम् ईरिता अभिहिता भैमी दमयन्ती ह्रीणा लज्जिता स्वाभिप्रेतनलाभिलाषकथनप्रसङ्गादिति भावः नुदविदेत्यादिना विकल्पान्निष्ठानत्वम् । हृष्टा आनन्दिता च हंसरूपोपायलाभादिति भावः सती मदीयं चेतः चित्तं लङ्कां न अयते न प्रयाति, केवलं नलं कामयते अभिलषति, अन्यत्र कुत्रापि वस्तुनि राजनि वा न साभिलाषं नाभिलाषीत्यर्थः इति बभाण उक्तवती श्लेषभङ्ग्येति भावः । अत्र श्लेषालङ्कारः । तदुक्तं श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते इति ॥ ६७ ॥

तद्वाक्यार्थमवगच्छन्नपि तस्याभिप्रायस्य दृढीकरणार्थं पुनर्हंस आह, विचिन्त्येति । सः चक्राङ्गेषु हंसेषु पतङ्गेषु पक्षिषु चक्राङ्गा मानसौकस इति पतङ्गौ पक्षिसूर्यौ चेति चामरः । शक्र इन्द्रः राजहंसश्रेष्ठ इत्यर्थः लज्जा एव नदी तत्र मज्जन् मध्यगच्छन् अनङ्गः काम एव नागः हस्ती यस्य तथाभूतं

नृपेण पाणिग्रहणस्पृहेति
नलं मनः कामयते ममेति ।
अश्लेषि न श्लेषकवेर्भवत्याः
श्लोकद्वयार्थः सुधिया मया किं ? ॥ ६९ ॥
त्वच्चेतसः स्थैर्य्यविपर्य्ययन्तु
सम्भाव्य भाव्यस्मि तदज्ञ एव ।

बालाजनस्य मुग्धाङ्गनाजनस्य शीलं स्वभाव एव शैलः पर्वतः तं विचिन्त्य विविच्य विस्पष्टं स्फुटम् । अभाषमाणां मनोमतमकथयन्तीत्यर्थः श्लेषोक्तिभङ्ग्या सन्दिग्धमेव भाषमाणाम् इति भावः एनां भैमीम् आचष्ट बालाजनहृदयं महत्या लज्जया पूर्णं तत्र महानपि कामो निलीयते एव सुतरां मुखस्पष्टाख्यानासम्भवं विचारयन् पुनस्तथापेति तात्पर्य्यम् ॥ ६८ ॥

नृपेणेति । श्लेषकवेः श्लेषेण कवयति स्वाभिप्रायं वर्णयतीति श्लेषकविः तस्याः कवि वर्णने इति धातोरौणादिक इकारप्रत्ययः । भवत्यास्तव नृपेण कर्त्रा पाणिग्रहणं विवाहः उभयप्राप्तौ कर्म्मणीति विहितायाः षष्ठ्याः कर्म्मणि चेति समासनिषेधेऽपि शेषे षष्ठीसमासः । तस्य स्पृहा अभिलाषः इति मम मनः नलं कामयते इति च श्लोकद्वयार्थः का नाम बाला द्विजराजपाणिग्रहाभिलाषमिति चेतो नलं कामयते मदीयमित्युक्तयोः श्लोकयोर्द्वयं तस्य अर्थः अभिधेयः सुधिया विदुषा मया किं न अश्लेषि किं नाबोधि ? अपितु बुद्ध एवेत्यर्थः । भवत्या मनोरथो ज्ञात एवेति तात्पर्य्यम् ॥ ६९ ॥

ततः किमर्थमज्ञवत् पुनः पृच्छसीत्यत्राह, त्वच्चेतस इति । तु किन्तु तव चेतसः चित्तस्य स्थैर्य्यं स्थिरता निश्चलतेत्यर्थः

लक्ष्ये हि बालाहृदि लोलशीले
दरापराद्धेषुरपि स्मरः स्यात्॥ ७० ॥
महीमहेन्द्रः खलु नैषधेन्दुः
तद् बोधनीयः कथमित्थमेव।

तस्य विपर्य्ययः वैपरीत्यम् अस्थिरत्वमिति यावत् तस्याश्य आशयश्च भावः आशयः अभिप्राय इति यावत् भावोऽभिप्राय आशय इत्यमरः सः अस्यास्तीति भावी भावग्राहीत्यर्थः अपिरत्र अध्याहार्य्यः भावग्राही अपि अहं तस्य श्लोकद्वयार्थस्य अज्ञः अविज्ञ एव अनधिगतश्लोकद्वयार्थ एवेति यावत् अस्मि भवामि। भवच्चित्तस्थैर्य्यनिर्णयपर्य्यन्तमिति भावः कुत इत्याह लक्ष्ये इति। हि तथाहि लोलं चञ्चलं शीलं स्वभावो यस्य तस्मिन् लोलशीले स्वभावचञ्चले इत्यर्थः अनुरागदार्ढ्याभावात् अस्थिरे इति भावः बालायाः मुग्धाया हृदि हृदये लक्ष्ये शरव्ये स्मरोऽपि कामोऽपि किं वक्तव्यमन्येषामित्यपिशब्दार्थः। दरेण भयेन आशङ्कयेति यावत् सिद्धं नः समीहितं भवेदसिद्धं वेति संशयेनेति भावः अपराद्धः च्युतः इषुः सायको यस्य तथाभूतः अपराद्धपृषत्कोऽसौ लक्ष्याद् यश्च्युतसायक इत्यर्थः। स्यात् भवेत् धनुर्वेदकुशलोऽपि कामः कदाचित् मुग्धाङ्गनाजने च्युतसायकतया विफलप्रयासो भवति तत्तव चित्तनिर्णयार्थम् अभिज्ञोऽप्यनभिज्ञ एवास्मीति पर्य्यवसितोऽर्थः। अत्रोत्तरार्द्ध-वाक्यार्थरूपकारणेन पूर्ववाक्यार्थरूपकार्य्यस्य समर्थनाद् कारणकार्य्यसमर्थनरूपोऽर्थान्तरन्यासः। तल्लक्षणन्तूक्तं प्राक्॥ ७०॥

अहन्तु जनेषु संशयितार्थो निवेदयितुं न युज्यते इत्याह, महीति। निषधानां राजा नैषधः स इन्दुरिव नैषधेन्दुः

प्रयोजनं संशयकाम्यमीदृक्
पृथग्जनेनेव स मद्विधेन ॥ ७१ ॥

पितुर्नियोगेन निजेच्छया वा
युवानमन्यं यदि वा वृणीषे ।
त्वदर्थमर्थित्वकृति-प्रतीतिः
कीदृङ्मयि स्यान्निषधेश्वरस्य ? ॥ ७२ ॥

नैषधचन्द्र इत्यर्थः नैषधेन्द्र इति पाठे नैषधेषु जनपदेषु इन्द्र इव नैषधेन्द्र नलः इत्यर्थः महीमहेन्द्रः खलु पृथिवीन्द्र एवेत्यर्थः तत् तस्मात् स नलः पृथग्जनेनेव प्राकृतजनेन नीचजनेनेवेत्यर्थः मद्विधेन मादृशेन विप्रेनेति भावः ईदृक् एवंरूपं संशयेन काम्यते इति संशयकाम्यं सन्देहास्थिरमित्यर्थः प्रयोजनम् अभिप्रायम् इत्थम् एवंरूपेण अनिश्चितभावेनेति यावत् कथं बोधनीयः ? विज्ञापनीयः ? अयुक्तमेतत् विज्ञापनमिति भावः । गतिबुद्धीत्यादिना अणिकर्तुर्नलस्य कर्मत्वं ण्यन्ते कर्तुश्च कर्मेच इत्यभिधानात् । संशयकाम्यमीदृगित्यत्र सांशयिकं प्रतीदृक् इति पाठे सांशयिकं सन्देहास्थिरमित्यर्थः ईदृक् एवंरूपं प्रयोजनं प्रति प्रयोजनमुद्दिश्येत्यर्थः ॥ ७१ ॥

अनिर्णीतार्थविज्ञापनं दोषायेत्यत्राह, पितुरिति । पितुर्जनकस्य नियोगेन आज्ञया निजेच्छया स्वेच्छया वा अन्यं नलादितरं युवानं यदि वा यद्यपि वृणीषे वरिष्यसे भविष्यत्सामीप्ये लट् । तदा निषधेश्वरस्य नलस्य मयि विषये तुभ्यमिदं त्वदर्थं चतुर्थी तदर्थेत्यादिना चतुर्थीसमासः अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या । तव लाभार्थमित्यर्थः अर्थित्वकृतिः प्रार्थनाकरणं तव सकामी इति भावः तव

त्वयापि किं शङ्कितविक्रियेऽस्मिन्
अधिक्रिये वा विषये विधातुम्?।
इतः पृथक् प्रार्थयसे तु यद्यत्
कुर्वे तदुर्वीपतिपुत्त्रि! सर्वम्॥ ७३॥

श्रवःप्रविष्टा इव तद्गिरस्ता
विधूय वैमत्यधुतेन मूर्द्ध्ना।

प्रतीतिः प्रत्ययः कीदृक् किम्प्रकारो स्यात् भवेत्? मयि नितरामविश्वासो जनिष्यते इत्यर्थः तस्माद् असन्दिग्धं स्वमनोगतं कथयेति भावः। अर्थित्वकृतीति मयीत्यस्य विशेषणमिति केचित् तत्र अर्थित्वकृति अर्थित्वं कृतवानिति अर्थित्वकृत् कर्त्तरि क्विप्। तस्मिन् अर्थित्वकृति प्रार्थनाकारिणीत्यर्थः दमयन्ती त्वया परिणेयेत्यभ्यर्थयतीत्यर्थः॥ ७२॥

त्वया वा पराधीनतया कथं निर्णेतुं शक्यते तदेतदास्तां मया तु यथा प्रतिज्ञं तवान्यत् किमपि प्रियं विधातुमिच्छामीत्याह, त्वयेति। हे उर्वीपतिपुत्रि! राजपुत्रि! त्वयापि वा शङ्किता सम्भाविता विक्रिया विपर्य्ययः यस्य तादृशे अस्मिन् व्यापारे नलपरिणयनप्रसङ्गे किं विधातुं किं कर्त्तुम् अहम् अधिक्रिये? विनियुज्ये? ममात्र व्यापारे तव विनियोगो न युक्त इति भावः अधिपूर्वात् करोतेः कर्मणि लट्। अतः इतः अस्मात् व्यापारात् पृथक् अन्यत् यत् यत् यदेव प्रार्थयसे अभिलषसे, तत् सर्वं कुर्वे करोमीत्यर्थः॥ ७३॥

अथ लज्जापरिहारेण स्वाभिप्रेतं सा प्राहेति, श्रव इति। धरित्री पृथिवी तस्याः पुरुहूत इन्द्रः तस्य पुत्री राजसुतेत्यर्थः भैमी ताः श्रवसि श्रोत्रे प्रविष्टा इव असम्यक् श्रुता इवेत्यर्थः

ऊचे ह्रियोऽपि श्लथितानुरोधा
पुनर्धरित्रीपुरुहूतपुत्री ॥ ७४ ॥

मदन्यदानं प्रति कल्पनाया
वेदस्त्वदीये हृदि तावदेषा ।
निशोऽपि सोमेतरकान्तशङ्काम्
ओङ्कारमग्रेसरमस्य कुर्य्याः ॥ ७५ ॥

तस्य हंसस्य गिरः वाचः वैमल्यं विरुद्धा मतिरित्यर्थः तेन धुतेन कम्पितेन मूर्ध्ना शिरसा विधूय निराकृत्य प्रतिषिध्येत्यर्थः ह्रियोऽपि लज्जाया अपि श्लथितः शिथिलीकृतः अनुरोधः अधीनत्वं यया तथोक्ता शिथिलितलज्जावरोधेत्यर्थः सापेक्षत्वेऽपि गमकत्वात् समासः ह्रिया विश्लथितानुरोधेत्यपपाठः ह्रियां विश्लथितानुरोधेति पाठः समीचीनः। लज्जां परिहृत्येत्यर्थः पुनः ऊचे अब्रवीत् ॥ ७४ ॥

किमित्याह, मदिति। मम अन्यदानम् अन्यस्मै नलभिन्नाय यूने इति भावः दानं प्रति या कल्पना पितुर्नियोगीनेत्यर्थदिस्त्रोकीयः तर्कः, एषा कल्पना त्वदीये हृदि मनसि वेदस्तावत् वेदवत् सत्य एवेत्यर्थः किन्तु निशोऽपि रजन्या अपि पश्यदित्यादिना निशायाः निशादेशः। सोमात् चन्द्रात् इतरः अन्यः कान्तः पतिः तस्य शङ्काम् अस्य वेदस्य वेदरूपेण सत्यतया अवधारितस्य तर्कस्येति भावः अग्रेसरम् आद्यं प्रणवम् ओङ्कारं कुर्य्याः कुरु। वेदस्य प्रणवपूर्वकम् उच्चारणं प्रसिद्धम् उक्तञ्च कुमारसम्भवे कालिदासेन ब्रह्मस्तोत्रप्रस्तावे। उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्। कर्म यज्ञः फलं

सरोजिनीमानसरागवृत्तेः
अनर्कसम्पर्कमतर्कयित्वा ।
मदन्यपाणिग्रहशङ्कितेयम्
अहो ! महीयस्तव साहसिक्यम् ॥ ७६ ॥

साधु त्वया तर्कि तदेकमेव
स्वेनानलं यत्किल संश्रयिष्ये ।
विनामुना स्वात्मनि तु प्रहर्तुं
मृषागिरं त्वां नृपतौ न कर्तुम् ॥ ७७ ॥

अर्थस्तासां त्वं प्रभवो गिरामिति। निशाया निशाकरेतरकान्त-शङ्कावत् ममापि नलेतरकान्तशङ्का त्वया कृतेति भावः ॥७५॥

सरोजिनीति। सरोजिन्याः पद्मिन्याः मानसरागः चित्तानुरागः आन्तररागश्च तस्य वृत्तिः प्रसरः तस्याः अर्केण सूर्य्येण सम्पर्कः सम्बन्धः स न भवतीति अनर्कसम्पर्कः तं सूर्य्येतरसम्पर्कमित्यर्थः अतर्कयित्वा अनूहित्वा तव इयं मम अन्यस्य नलेतरस्य पाणिग्रहः परिणयः तं शङ्कते इति तच्छङ्की तस्य भावः तत्ता महीयः, अतिमहत् सहसा करोतीति साहसिकः अविमृष्यकारीत्यर्थः तस्य भावः कर्म्म वा साहसिक्यं साहसिकत्वं तत्कर्म्म वेत्यर्थः अहो ! यदि सरोजिन्याः सूर्य्या-दन्यः कान्तः सम्भाव्यते तदा ममापि नलेतरकान्तसम्भावना स्यात् तव तु एतदविमृष्य कथनं त्वादृशजनानुचितमित्याश्चर्य्यमित्यर्थः ॥ ७६ ॥

पितुर्नियोगेन निजेच्छया वा युवानमन्यत् यदि वा वृणीषे इत्यस्योत्तरमाह, साध्विति। स्वेन स्वेच्छया अनलं नलभिन्नं

मद्विप्रलभ्यं पुनराह यस्त्वां
तर्कः स किं तत्फलवाचि मूकः।
अशक्यशङ्कव्यभिचारहेतुः
वाणी न वेदा यदि सन्तु के तु? ॥ ७८ ॥

युवानं संश्रयिष्ये ग्रहीष्यामि किलेत्यलीके इति यत् त्वया अतर्कि तर्कितं सम्भावितमित्यर्थः तदेकमेव तन्मात्रमेव तदेतदिति पाठान्तरम्। साधु सम्यक् समीचीनमिति भावः। तु किन्तु अमुना नलेन विना नलालाभे इत्यर्थः स्वात्मनि निजशरीरे प्रहर्त्तुं हिंसितुं नाशयितुमित्यर्थः कर्म्मणोऽधिकरणत्वविवक्षया सप्तमी। अनेकशक्तियुक्तस्य विश्वस्यानेककर्म्मणः। सर्वदा सर्वतो भावाद् क्वचित् किञ्चिद् विवक्ष्यते इति वचनात्। अनलम् अग्निं संश्रयिष्ये इत्यर्थः। नृपतौ राजनि नले विषये त्वां मृषागिरं मिथ्यावादिनं कर्त्तुं नलभिन्नं पुरुषं न संश्रयिष्ये इत्यर्थः। यदि नलं न प्राप्स्यामि तदा अग्नौ शरीरं पातयिष्यामीति फलितार्थः॥ ७७ ॥

मयोक्तं सत्यमेतत् न तु त्वं विप्रलभ्यसे इत्याह, मदिति। यः पुनस्तर्कः नलं वृणोमि न वेति वितर्कः त्वां मया विप्रलभ्यं प्रतार्थम् आह ब्रवीति बोधयतीत्यर्थः स तर्कः तस्य तर्कस्य फलवाचि प्रयोजनकथने मूकः वर्णानुच्चारको मूक इति हारभागः निर्वाक् किम्? त्वं हि तर्कं करोषि किन्तु तर्कप्रयोजनं किं तन्न जानासि उक्तञ्च न्यायविद्भिः। न हि प्रयोजनमनुद्दिश्य मन्दोऽपि कस्मिंश्चित् प्रवर्त्तते इति। न शक्या न सम्भाव्या शङ्का संशयः यत्र तादृशः व्यभिचारहेतुः विप्रलम्भकारणं यस्याः यस्या वा सा वाणी वेदाः श्रुतयः न यदि, श्रुतय

अनैषधायैव जुहोति तातः
किं मां कृशानौ न शरीरशेषाम् ? ।
ईष्टे तनूजन्मतनोः स नूनं
मत्प्राणनाथस्तु नलस्तथापि ॥ ७९ ॥
तदेकदासीत्वपदादुदग्रे
मदीप्सिते साधु विधित्सुता ते ।

एव प्रमाणानि न स्युर्यदि, तदा के तु ते वेदाः सन्तु भवन्तु नैव वेदाः प्रमाणानि स्युरित्यर्थः तस्मात् यदि वेदस्य अप्रामाण्यं स्यात्, तदा ममापि वचनस्य अप्रामाण्यं भवेत् तदत्र मद्वचसि विप्रलम्भशङ्का नैव कार्य्येति पर्य्यवसितम् ॥ ७८ ॥

ननु पित्रादेशस्य बलवत्त्वात् विपर्य्ययशङ्केति तत्राह, अनैषधायेति। तातः पिता तातस्तु जनकः पितेत्यमरः। मां अनैषधाय नैषधो नलः तद्व्यतिरिक्ताय वरायेति शेषः एव जुहोति प्रक्षिपति इति काकुः ददाति किमित्यर्थः शरीरशेषां गतप्राणां मां कृशानौ अग्नौ न किम् ? नलालाभे कृशानावेव जुहोतीत्यर्थः। स जनकः तन्वा शरीरात् जन्म यस्य तस्य अपत्यस्येत्यर्थः तनोः शरीरस्य ईष्टे नूनं प्रभवति एवेत्यर्थः अधी-गर्थदयेशां कर्म्मणीति कर्म्मणि षष्ठी उक्तञ्च वशिष्ठसंहितायां शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकस्तस्य प्रदान-विक्रयपरित्यागेषु मातापितरौ प्रभवत इति। तथापि शरीरस्य तत्स्वामिकत्वेऽपि नलः मम प्राणानां नाथस्तु नाथ एव प्राणानां स्वतो अन्यत्वादिति भावः। अतो मद्वचसि त्वया-ऽरपि विप्रलम्भधीर्न कार्य्येति भावः ॥ ७९ ॥

इतः पृथक् प्रार्थयसे इति यदुक्तं तदविगणय्याह, तदे-

अहेलिना किं नलिनी विधत्ते
सुधाकरेणापि सुधाकरेण? ॥ ८० ॥
तदेकलुब्धे हृदि मेऽस्ति लब्धुं
चिन्ता न चिन्तामणिमप्यनर्घ्यम्।

वेति। तस्य नलस्य एकं केवलं यत् दासीत्वं तदेव पदं महानधिकार इत्यर्थः तस्मात् उदग्रे अधिके मदीप्सिते तत्पत्नीत्वरूपे इत्यर्थः दास्यापेक्षया पत्नीत्वस्य सर्वथा श्रेष्ठत्वादिति भावः मम मनोरथविषये तव विधित्सुता विधानेच्छा सम्पादनाभिलाषः साधु सुष्ठुतया आद्रियते इति भावः। नान्यदभीप्सितं त्वया क्रियमाणमिच्छामीति भावः अत्र साध्विति सामान्योपक्रमात् नपुंसकत्वं शक्यं स्वमांसेनापि क्षुन्निवर्त्तयितुमिति भाष्यकारप्रयोगात्। ननु गुणवत्तरो युवा चेत् लभ्यते तदेतदभिनिवेशः कथमित्यत्राह, अहेलिनेति। नलिनी पद्मिनी अहेलिना सूर्य्यादितरेण सुधाकरेणापि अमृतपूर्णेनापीत्यर्थः सुधाकरेण चन्द्रेण किं विधत्ते किं करोति? न किमपीत्यर्थः यथा सूर्य्यानुरागिण्यै कमलिन्यै सुधाकरत्वेन तदुत्तमोऽपि सुधाकरो न रोचते तथा नलादन्यो महानपि पुरुषो न मह्यमिति यथा नलं प्राप्नुयाम्मि तथा यत्नः क्रियतामिति भावः। अथच नलोऽस्याः अस्तीति नलिनी नलसम्बन्धिनी नलानुरागिणीति भावः अहं हेलात्यन्तसमालक्ष्यविकारः स्यात् स एव चेत्युक्तलक्षणः कामविकारविशेषः सोऽस्यास्तीति हेली स न भवतीत्यहेली अकामीत्यर्थः तेन पुरुषान्तरेण किं विधत्ते किं करोति? नलस्तु मत्कामीति तमेवाभिलषामीति ध्वन्यते ॥८०॥

तदिति। तस्मिन् नले एव एकं केवलं लुब्धं लालसं तदेक-

वित्ते ममैकः सकलत्रिलोकी-
सारो निधिः पद्ममुखः स एव ॥ ८१ ॥
श्रुतश्च दृष्टश्च हरित्सु मोहात्
ध्यातः स नीरन्ध्रितबुद्धिधारम्।

लुब्धं तस्मिन् नलमात्रलोलुपे इत्यर्थः मे मम हृदि मनसि अनर्घ्यम् अमूल्यं चिन्तामणिमपि तदाख्यं रत्नविशेषमपि चिन्तामात्रेण अभिमतवस्तुदायकं रत्नविशेषम् इति यावत्। लब्धुं प्राप्तुं चिन्ता विचारः अभिलाष इति यावत् न अस्तीति शेषः तथा वित्ते धने विषये सकलायाः समग्रायाः त्रयाणां लोकानां समाहारः त्रिलोकी तस्याः सारः श्रेष्ठवस्त्वित्यर्थः पद्ममुखः कमलाननः एकः केवलः स एव नल एव निधिः महारत्नविशेषः, एको नल एव मे मम पद्मादयोऽष्टौ निधय इति भावः। पद्मो मुखम् आदिः यस्य स पद्ममुखः। यस्याः पद्मादयः अष्टौ निधय वर्त्तन्ते तस्याः केवलेन चिन्तामणिरत्नेन किं प्रयोजनम् इति भावः। पद्मस्तथा महापद्मः शङ्खो मकर-कच्छपौ मुकुन्दकुन्दौ नीलश्च निधयोऽष्टौ प्रकीर्त्तिताः। निधि-र्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेरित्यमरः। नलादन्यस्मिन् वस्तुनि कस्मिंश्चिदपि न मम स्पृहा अस्तीति भावः सकल-त्रिलोकीत्यत्र स नलस्त्रिलोकीति पाठान्तरम् ॥ ८१ ॥

फलितार्थमाह, श्रुत इति। स नलः श्रुतः दूतद्विज-वन्द्यादिमुखादिति शेषः तदुक्तं दर्पणे। श्रवणन्तु भवेत्तत्र दूतवन्दिसखीमुखादिति। मोहात् भ्रान्तिवशात् हरित्सु दिक्षु दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता इत्यमरः दृष्टः अवलोकितः, इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम्

समाप्ति तत्प्राप्तिरसुव्ययो वा
हस्ते तवास्ते द्वयमेव शेषः ॥ ८२ ॥
सञ्जीयतामाश्रितपालनोत्थं
मत्प्राणविश्राणनजञ्च पुण्यम् ।
निवार्य्यतामार्य्ये ! वृथा विशङ्का
भद्रेऽपि मुद्रेयमये ! भृशं का ? ॥ ८३ ॥

मिति दर्पणः। तथा नीरन्ध्रिता निरन्तरीकृता बुद्धिधारा बुद्धिप्रवाहा यस्मिन् तद् यथा तथा ध्यातस्य निरन्तरं बुद्ध्या चिन्तितस्येत्यर्थः। अद्य मम तस्य नलस्य प्राप्तिः लाभः असुव्ययः प्राणत्यागो वा द्वयमेव द्वयोरन्यतर एवेत्यर्थः शेषः कार्य्यशेषः तव हस्ते आस्ते त्वदधीन एव तिष्ठतीत्यर्थः। द्वयमेव शेष इत्यत्र द्वयमेकशेष इति पाठे एकश्चासौ शेषश्चेति कर्म्मधारयः तथाच एक एव शेषः कार्य्यस्येति शेष इत्यर्थः। एतेन अभिलाषश्चिन्ता स्मृति गुणकथनोद्वेगसंप्रलापाश्च। उन्मादोऽथ व्याधिर्जड़ता मृतिरिति दशात्र कामदशा इत्युक्ता विरहिणां दशा मया प्रायेणानुभूताः साम्प्रतं तदलाभे मरणमवश्यंभावीति सूच्यते। किञ्च श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एतद्दर्शनलक्षणमिति वचनात् ब्रह्मवस्तुनः श्रवणादिना विषयीकृतस्य कथञ्चिल्लाभः पुण्यवतां भवति अन्यस्य दुष्कृतपरिपाकेन तदलाभान्मृत्युरिति ध्वन्यते ॥ ८२ ॥

सञ्जीयतामिति। आश्रितस्य शरणागतस्य पालनात् रक्षणात् उत्तिष्ठतीति तदुत्थं तज्जनितमित्यर्थः आश्रुतपालनोत्थम् इति पाठे आश्रुतस्य प्रतिज्ञातार्थस्य पालनात् उत्थम् इति

अलं विलङ्घ्य प्रियविज्ञ ! याज्ञां
कृत्वापि वाक्यं विविधं विधेये ।
यशःपथादाश्रवतापदोत्थात्
खलु स्खलित्वाऽस्तखलोक्तिखेलात् ॥ ८४ ॥

वार्थः । मम प्राणानां विश्राणनात् दानात् विश्राणनं वितरण-मित्यमरः । जायते इति तथोक्तञ्च पुण्यं सुकृतं सञ्चीयतां लभ्यताम्, अये आर्य्य ! साधो ! वृथा अलीका विप्रलब्धा पितुर्नियोगेनेत्यादिसंशयः निवार्य्यतां त्यज्यताम् । भद्रे श्रेय-स्करे विषये अग्रम् अत्यर्थं केयं मुद्रा निश्चेष्टता ? श्रेयस्करे कर्म्मणि यत्नः कर्त्तव्य एवेत्यर्थः नात्र निश्चेष्टभावेन स्थातव्य-मित्यर्थः ॥ ८३ ॥

अलमिति । हे प्रिय ! प्रियङ्कर ! विज्ञ ! अभिज्ञ ! यद्वा प्रियं मत्प्राणनाथं नलं विशेषेण जानातीति प्रियविज्ञः तत्-सम्बुद्धौ । उभयत्र इगुपधेत्यादिना कप्रत्ययः । याज्ञां याज्ञा इति बहुवचनान्तपाठो वा । विलङ्घ्य अलं याज्ञाभङ्गो न विधेय इत्यर्थः । विधेये विनीतजने अधीनजने इत्यर्थः विधेयो विनयग्राही वचने स्थित आश्रव इत्यमरः । विविधं वाक्यम् अलीकं वाक्प्रपञ्चमित्यर्थः कृत्वापि अलमित्यनुषङ्गः । वृथा वाक्यावलिं न प्रपञ्चयेति भावः । आश्रवो यथोक्तकारी वचने स्थित इत्यर्थः तस्य भावः आश्रवता सैव पदं तस्मादुत्तिष्ठतीति तस्मात् अस्ता निरस्ता खलानां दुर्जनानाम् उक्तिखेला वचना-वज्ञा मिथ्यावादविनोदः यत्र तस्मात् यशः पथात् यशोमार्गात् स्खलित्वा प्रभ्रश्य अलं खलु न स्खलितव्यमित्यर्थः । निषेध-वाक्यालङ्कारजिज्ञासानुनये खल्वित्यमरः । अलं खल्वोः प्रति-

स्वजीवमप्यर्थिमुदे ददद्भ्यः
तव त्रपा नेदृग्भवद्धमुष्टेः ।

षिधयोः प्राचामिति क्त्वेति उभयत्रापि क्त्वाप्रत्ययः। इह न पादादौ खल्वादय इति निषेधस्योऽइजकत्वाभिप्रायत्वान्नअर्थस्य खलुशब्दस्यानुद्देजकत्वान्नञ् एवपादादौ प्रयोगो न दृश्यते इति । वाक्यमित्यत्र वाम्यमिति पाठे वाम्यं प्रातिकूल्यमित्यर्थः । प्रतिकूलता न कार्य्येत्यर्थः । सर्वथास्मिन् व्यापारे मम सहायकं कुर्विति तात्पर्य्यम् ॥ ८४ ॥

स्वजीवमिति । ईदृग्भः एवंरूपः बद्धमुष्टिः क्रपण इत्यर्थः तस्य तव बद्धमुष्टिर्दृढमुष्टौ क्रपाणे क्रपणेऽपि चेति विश्वः । अर्थिनां याचकानां मुदे सुखाय आर्त्तमुदे इति पाठे आर्त्तानां दीनानां मुदे आनन्दाय स्वजीवमपि निजप्राणानपि ददद्भ्यः अर्पयद्भ्यः दधीचि-विरोचन-जीमूतवाहनादिभ्यः सकाशात् त्रपायाः मनःप्रत्यावृत्तिरूपाया तदपेक्षया तेषामपादानत्वात् पञ्चमी। त्रपा लज्जा न ? अपितु त्रपा भवत्येवेत्यर्थः। यत् यतः मदीयान् मत्सम्बन्धिनः असून् प्राणान् नलरूपान् इति भावः मह्यम् अदित्सोः दातुमनिच्छोः तव कौर्य्या धौतः क्षालितः विशुद्ध इत्यर्थः धर्मः करात् हस्तात् भ्रश्यति च्यवति । एतदयुक्तं तवेति भावः । पुरा वृत्रासुरपराजितानां देवाना-मधिपतिरिन्द्रः दधीचिमुपगम्य भगवन्! अतु हस्तपतितानस्मान् परित्राहीति मरणं ययाचे । स तु मुनिः यस्मात्तः सकाशात् इष्टमभिकाङ्क्षसि तदेवाहं तुभ्यं दीयते इत्यब्रवीत् । देवैस्तस्तं सविनयमवदत्, ऋषे ! यदि भवतः कलेवरास्थि लभ्यते तदा तेन वज्रं निर्माय वृत्रं हन्तुं शक्नोमि नान्यः कश्चिदुपायोऽस्तीति ।

मह्यं मदीयान् यदसूनदित्सोः
धर्म्मः कराद् भ्रश्यति कीर्त्तिधौतः॥ ८५॥

स तु महर्षिस्तथास्त्विति प्राणान् विहाय स्वं कलेवरास्थि देवेन्द्राय ददौ। स च तेन वज्रं निर्माय तदस्त्रेण वृत्रं हतवानिति। विरोचनश्च प्रह्लादसुतः महता वीर्य्येण देवादीन् निर्जित्य त्रिलोकीं प्रतापयन्नधितस्थौ। एकदा देवराजो ब्राह्मणवेशेन तं विप्रलभ्य प्राणान् ययाचे। स तु सत्यप्रतिज्ञ स्तथेति शत्रोरपि प्रार्थनां पूरयन् प्राणान् जहाविति। जीमूतवाहनश्च जीमूतकेतोर्गन्धर्वराजस्य सुतः समुद्रतीरे एकदा श्यालकेन सह विचरन् अस्थिस्तूपमपश्यत्। तदवलोक्य किमिदमित्यनुयुक्तस्तेन स श्यालकः पन्नगानां गरुड़भक्षितानां कङ्कालराशिरयमिति प्रत्यहञ्च अद्यापि गरुड़ः समागत्य पर्य्यायेण समागतमेकैकं पन्नगं भक्षयतीति चाब्रवीत् ततश्च सोऽतीव दयार्द्रचित्तः श्यालकं गृहाय प्रस्थाप्य तस्मिन्नेव दिने मध्याह्ने कमपि नागं बध्यवेशधरमागतं तदनु रोरुद्यमानामागच्छन्तीं तन्मातरञ्च पश्यन् भृशमार्त्तः तं नागमब्रवीत्, भद्र! कथमत्र भवान् एवंरूपेण आगच्छसि इयञ्च रुदती का?। सोऽब्रवीत्, महाभाग! अहं शङ्खचूड़ो नाम नागः वासुकिनाद्य गरुड़स्य भक्षणार्थं पर्य्यायधर्म्मेण प्रहितः, इदानीमेव पन्नगारिर्गरुत्मान् आगत्य मां भक्षयिष्यति। मदेकपुत्रा चेयं वराकी मम जननी मम भाविमरणशोकात् रोदितीति। तदाकर्ण्य जीमूतवाहनस्तं तन्मातरञ्च समाश्वास्य अहमद्य गरुड़स्य भक्षणीयो भविष्यामि, यूयमस्मात् स्थानाद् गच्छतेति प्रस्थाप्य बध्यभूमाववतस्थे। गरुड़श्च तत्क्षणमागत्य तं समाक्रम्य गगनमुत्पत्य

दत्त्वात्मजीवं त्वयि जीवदेऽपि
शुद्ध्यामि जीवाधिकदे तु केन ?।
विधेहि तन्मां त्वदृणैष्वशोढुम्
अमुद्रदारिद्र्यसमुद्रमग्नाम् ॥ ८६ ॥
क्रीणीष्व मज्जीवितमेव पण्यम्
अन्यन्न चेदस्ति तदस्तु पुण्यम्।

भक्षयन् किञ्चिदपनीतक्षुधस्तं नागाकृतिमनवलोक्य किमेत-
दिति चिन्तयन् तं परितत्याज अमृतवर्षणेन जीवयामास च
ततःप्रभृति तत्प्रीत्या गरुडेन पन्नगेभ्य अभयं दत्तमिति च
पुराणवृत्तमत्रानुसन्धेयम् ॥ ८५ ॥

दत्त्वेति। जीवं जीवनं ददातीति जीवदः तस्मिन् जीवदे प्राण-
प्रदे अपि त्वयि विषये आत्मनः स्वस्य जीवं प्राणान् स्वजीवमिति
पाठान्तरं दत्त्वा शुद्ध्यामि शुद्धिं गच्छामि ऋणमुक्ता भवामीत्यर्थः
जीवयोरुभयोः साम्यादिति भावः तु किन्तु जीवात् अधिकं
नलमित्यर्थः ददातीति तथोक्ते त्वयि केन दानेनेति शेषः
शुद्ध्यामीत्यनुषङ्गः तादृशवस्तुनोऽभावादिति भावः। तत्तस्मात्
मां त्वदृणेषु तव ऋणेषु विषयेषु अशोढुं शुद्धिमप्राप्तुम् ऋण-
ग्रस्तां भवितुमिति यावत्। नास्ति मुद्रा मोचनं मुक्तिरित्यर्थः
यस्मात् अथवा नास्ति मुद्रा सीमा यस्य तथोक्तः यः दारिद्र्यमेव
समुद्रः तस्मिन् मग्नां तादृशवस्त्वन्तरस्यैकान्तासम्भवात्तन्मोचने
असमर्थामित्यर्थः विधेहि नलप्रदानेन चिरम् ऋणग्रस्तां
कुर्वित्यर्थः ॥ ८६ ॥

क्रीणीष्वेति। हे जीवेशदातः! प्राणनाथप्रद! मम जीवित-

जीवेशदात! यदि ते न दातुं
यशोऽपि तावत् प्रभवामि गातुम् ॥ ८७ ॥
वराटिकोपक्रिययापि लभ्यान्
नेभ्याः कृतज्ञानथवाद्रियन्ते ।
प्राणैः पणैः स्वं निपुणं भणन्तः
क्रीणन्ति तानेव तु हन्त सन्तः ॥ ८८ ॥

मेव पण्यं विक्रेयं वस्तु क्रीणीष्व जीवेशनलरूपमूल्यदानेनेति भावः। अन्यत् अपरम् एतन्मूल्यानुरूपं वस्तु नास्ति तत् किं तव जीवितेनेति चेत्, तत् तदा पुण्यं सुकृतम् एतत्प्राणदान-जनितमिति भावः अस्तु भवतु। ननु पुण्यं परत्र फलदं नाहं तदर्थये इत्याशङ्क्याह,यदीति। यदि ते तुभ्यं दातुं त्वद्दानानुरूपं वस्त्विति शेषः न प्रभवामि न समर्था भवामि, किन्तु अपि तथापि ते तव यशो गातुं कीर्त्तयितुं तावत् प्रभवामि प्रभवा-म्येवेत्यर्थः। ख्यातिसुकृतोभयलाभप्रत्याशया एषा उपकृतिः कर्त्तव्येति भावः॥ ८७ ॥

यद्वा साधवः स्वभावादेव परार्थं प्रवर्त्तन्ते इत्याह, वराटि-केति। अथवा पक्षान्तरे इभ्या धनिनः इभ्य आढ्यो धनी स्वामीत्यमरः वराटिकायाः कपर्दिकाया उपक्रिययापि दान-रूपोपकारकरणेनापीत्यर्थः लभ्यान् प्राप्यान् कृतज्ञान् तादृश-मुपकारमेव बहुमन्यमानान् उपकारस्वीकारिण इत्यर्थः न आद्रियन्ते नोपकुर्वन्तीत्यर्थः तुल्यरूपोपकारप्रत्याशाभावा-दिति भावः। हन्त हर्षे सन्तः साधवस्तु स्वमात्मानं निपुणं कुशलं भणन्तः एते वयं त्वदर्थसाधने नैपुण्यात् प्रशस्ता इति

स भूभृदष्टावपि लोकपालाः
तैर्मे तदेकाग्रधियः प्रसेदे ।
न हीतरस्माद्घटते यदेत्य
स्वयं तदाप्तिप्रतिभूर्ममाभूः ॥ ८९ ॥
अकाण्डमेवात्मभुवार्जितस्य
भूत्वापि मूलं मयि वीरणस्य ।

कथयन्त इत्यर्थः सन्तः प्राणैः पणैः मूल्यैः तानेव उपकारार्थिनो जनानेवेति यावत् क्रीणन्ति । त्वयापि साधुना तथा ममोपकर्त्तव्यमिति भावः ॥ ८८ ॥

स इति । स भूभृत् भूपतिः नलः अष्टावपि लोकपाला इन्द्रादयः "लोकपालाष्टकमय इत्यर्थः अष्टानां लोकपालाना वपुर्धारयते नृप इति वचनात् । तैः लोकपालैः देवैः तस्मिन् नले एव एकाग्रा एकताना धीर्मतिर्यस्याः तथाभूताया मे प्रसेदे प्रसन्नं भावे लिट् । देवताः सततध्यानेन प्रसीदन्तीति भावः । तथाहि त्वं स्वयमेत्य मम तस्य नलस्य आप्तौ लाभे प्रतिभूः लग्नकः अभूः भूतोऽसीति यत् एतत् इतरस्मात् अन्यस्मात् कारणात् तत्तद्देवताप्रसादादृते इत्यर्थः न हि घटते नैव सम्भवतीत्यर्थः । देवताः प्रसादेन मह्यं नलरूपरत्नं दातुं प्रस्तुताः सत्यः त्वां प्रतिभुवं मत्समीपं प्रेरितवत्यः यथायं रत्नरूपीऽस्माभिर्दत्तो नलो न कथमपि क्षीयत इति, त्वमपि तथैवागत्य मां तद्गुणवर्णनेन तथा प्रलोभितवानसि तदयमर्थस्त्वया लग्नकेन सुसाधयितव्य इति भावः ॥ ८९ ॥

अकाण्डमेवेति । अकाण्डमनवसर एव असमये एवेत्यर्थः कौमारावस्थायामेवेति भावः विः पक्षी वि विष्किरपत्त्रिण

भवान्न मे किं नलदत्वमेत्य
कर्त्ता रहश्चन्दनलेपकृत्यम्? ॥ ९० ॥
अलं विलम्ब्य त्वरितुं हि वेला
कार्य्ये किल स्थैर्य्यसहे विचारः।
गुरूपदेशं प्रतिभेव तीक्ष्णा
प्रतीक्षते जातु न कालमार्त्तिः ॥ ९१ ॥

इत्यमरः। रोरीति रेफलोपे ढ्रलोपे पूर्वस्य दीर्घश्च। भवान् मयि विषये आत्मभुवा कामेन अर्जितस्य जनितस्य रणस्य स्मरशरेण सम्प्रहारस्य मूलं निदानं भूत्वापि हंसानामुद्दीपकत्वादिति भावः। यद्वा अकाण्डं स्कन्धरहितमित्यर्थः काण्डोऽस्त्रीदण्डवाणार्ववर्गावसरवारिष्वित्यमरः यथा तथा आत्मभुवा स्वयम्भुवा ब्रह्मणेत्यर्थः अर्जितस्य सृष्टस्य वीरणस्य तृणविशेषस्य स्याद्वीरणं वीरतरमूलस्योशीरमस्त्रियाम्। अभयं नलदं सेव्यमिति चामरः। मूलं भूत्वापि मूलावयवः भूत्वापि नलदत्वं नैषधदातृत्वम् उशीरत्वञ्च एत्य प्राप्य रहसि विजने चन्दनलेपस्य कृत्यं शैत्योत्पादनमित्यर्थः किं न कर्त्ता? न करिष्यसि किम्? अपितु करिष्यस्येवेत्यर्थः। करोतेर्लुट्। अत्र वीरणस्येति आत्मभुवेति अकाण्डमिति नलदत्वमित्येषां शब्दश्लेषेण हंसे नलदत्वारोपस्य प्रकृतोपयोगित्वात् वैयधिकरण्येन परिणामालङ्कारः तदुक्तं दर्पणे। विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि। परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधेति। तदनयोरङ्गाङ्गिभावेन सङ्करः ॥ ९० ॥

अथास्मिन् व्यापारे त्वरां दर्शयति, अलमिति। हे हंस! विलम्ब्य अलं विलम्बो न कार्य्य इत्यर्थः। अलं खल्वोरित्या-

अभ्यर्थनीयः स गतेन राजा
त्वया न शुद्धान्तगतो मदर्थम्।
प्रियास्यदाक्षिण्यबलात्कृतो हि
तदोदयेदन्यवधूनिषेधः ॥ ९२ ॥

दिना क्ताप्रत्यये ल्यबादेशः। त्वरितुं त्वरां कर्त्तुं वेला हि समय एव लग्नकालोऽयं खल्वित्यर्थः। कालसमयवेलासु तुमुन्। कथमित्याह स्थैर्य्यसहे विलम्बसहे व्यापारे इति शेषः विचारः समयासमयपर्य्यालोचनमित्यर्थः। किलेति प्रसिद्धौ, अन्यथा कार्य्यहानिः सम्भवेदिति भावः। तथाहि तीक्ष्णा तीव्रा द्रुतग्राहिणी प्रतिभा प्रज्ञा गुरूपदेशमिव आर्त्तिः मानसी व्यथा जातु कदाचित् कालं न प्रतीक्षते न सहते। कालविलम्बासहोऽयमर्थोऽतीव मां बाधते तत् सत्वरं प्रवर्त्तताम् अस्मिन् व्यापारे भवानिति तात्पर्य्यम्। उपमासंसृष्टः कारणकार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ९१ ॥

इत्थं कार्य्यस्यातीव त्वरणीयतामुक्त्वा अनन्तरकृत्ये सतर्कयति पञ्चभिः श्लोकैरभ्यर्थनीय इत्यादिभिः। गतेन इतः प्रस्थितेन त्वया शुद्धान्तगतः अन्तःपुरस्थः, स राजा नलः मदर्थं मत्प्रयोजनं न अभ्यर्थनीयः न प्रार्थनीयः न निवेदनीय इति यावत् दुहादित्वात् अभ्यर्थयतेर्द्विकर्मकत्वम् अप्रधाने दुहादीनामिति राज्ञः अभिहितकर्म्मत्वम्। कथमित्याह, प्रियेति। प्रियाणां तत्रस्थानाम् आस्यदाक्षिण्येन वदनौदार्य्येण वदनसौन्दर्य्यगौरवेणेति भावः बलात्कृतः हठप्रवर्त्तितः अन्या वधूः अन्यवधूः तस्याः निषेधः तत्कर्मकनिवारणमित्यर्थः अपरा वधूर्न मम प्रीतिकरी आस्यसौन्दर्य्येण [illegible]

शुद्धान्तसम्भोगनितान्ततुष्टे
न नैषधे कार्य्यमिदं निगाद्यम्।
अपां हि तृप्ताय न वारिधारा
स्वादुः सुगन्धिः स्वदते तुषारा॥ ८३॥
विज्ञापनीया न गिरो मदर्थाः
क्रुधा कदुष्णो हृदि नैषधस्य।

ऽस्थास्यः समधिकेति धियेति भावः उदयेत् उत्पद्येत। तस्मात् शुद्धान्तस्त्रीसङ्गमनिर्वृतो नलो मदर्थं न वाच्य इति भावः। कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ८२॥

शुद्धान्तेति। शुद्धान्तसम्भोगेन अन्तःपुरवर्त्तिनीनां नारीणां सम्भोगेन नितान्तं निरतिशयं तुष्टः तृप्तः तस्मिन् नैषधे नले विषये नलं प्रतीत्यर्थः इदं कार्य्यं मत्परिणयरूपं न निगाद्यं न वाच्यम् ऋहलोर्ण्यत् गदमदेत्यादिना सोपसर्गाद् यतो निषेधात् तथाहि स्वादुः सुस्वादा सुगन्धिः कर्पूरादिवासेन शोभनगन्धा अत्र कवीनां निरङ्कुशत्वाद् गन्धस्येत्वैकान्तनियमानादरः। तुषारा शीतला वारिधारा जलधारा अपां तृप्ताय अद्भिस्तृप्तायेत्यर्थः सामान्यजलपानेन विगततृष्णायेति भावः पूरणगुणेत्यादिना षष्ठीसमासप्रतिषेधादेव ज्ञापकात् षष्ठी। तृप्तायेति रुच्यर्थानां प्रीयमाण इति सम्प्रदानत्वात् चतुर्थी। न स्वदते हि न रोचते एवेत्यर्थः। अत्र शुद्धान्तसम्भोगतुष्टिः सामान्यजलपानतृप्तिरिव तथा मदर्थप्रार्थनं स्वादुसुगन्धिजलपानप्रार्थनमिवेति बिम्बानुबिम्बप्रतीतेर्दृष्टान्तालङ्कारः तदुक्तं दर्पणे। दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति॥ ८३॥

विज्ञापनीया इति। हे हंसकुलावतंस! हंसकुलके

पित्तेन दूने रसने सितापि
तिक्तायते हंसकुलावतंस ! ॥ ९४ ॥
धरातुरासाहि मदर्थयाञ्चा
कार्य्या न कार्य्यान्तरचुम्बिचित्ते ।
तदर्थितस्यानवबोधनिद्रा
बिभर्त्त्यवज्ञाचरणस्य मुद्राम् ॥ ९५ ॥

क्रुधा कोपेन ईषदुष्णं कदुष्णं तस्मिन् चकारात् कोः कदादेशः। नैषधस्य नलस्य हृदि हृदये मह्यमिमाः मदर्थाः अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या। मत्सम्बन्धिन्य इत्यर्थः गिरः वाचः गीर्वाग् वाणी सरस्वतीत्यमरः। न विज्ञापनीया न निवेदनीयाः। तथाहि पित्तेन पित्तातिरेकदोषेण दूने परितप्ते विकृते इति भावः रस्यते आस्वाद्यते अनेनेति रसनं जिह्वेत्यर्थः तस्मिन् रसनं ध्वनिते स्वादे रसज्ञा राजयोरपीति हेमचन्द्रः। सितापि शर्करापि तिक्तायते तिक्तीभवति लोहितादित्वात् क्यपे वाक्यष इत्यात्मनेपदम्। अत्र कदुष्णहृदयं पित्तदुष्टरसनमिव मत्प्रयोजनं सिता इव बिम्बानुबिम्बप्रत्यायनाद् दृष्टान्तालङ्कारः पूर्ववत् ॥ ९४ ॥

धरेति। तुरं त्वरितं सहयति शत्रूनभिभवतीति तुराषाडिन्द्रः सहतेश्चौरादिकात् क्विप्। न हि वृतीत्यादिना पूर्वपदस्य दीर्घः प्रकृतिग्रहणेन तस्यापि ग्रहणात्। मुग्धभोजस्तु तुराभव्द टाबन्तमाह। धरायाः पृथिव्याः धरायां वा तुराषाट् तस्मिन् भूदेवेन्द्रे नले अजादिषु असारूपत्वात् सहेः सातः स इति षत्वं नास्ति। कार्य्यान्तरं विषयान्तरं चुम्बतीति तच्चुम्बि चित्तं यस्य तथाभूते विषयान्तरव्यासक्तचित्ते इति यावत्

विज्ञेन विज्ञाप्यमिदं नरेन्द्रे
तस्मात्त्वयास्मिन् समयं समीक्ष्य।
आत्यन्तिकासिद्धिविलम्बिसिद्ध्योः
कार्य्यस्य काऽर्य्यस्य शुभा विभाति? ॥९६॥
इत्युक्तवत्या यदलोपि लज्जा
सानौचिती चेतसि नश्चकास्तु।

मदर्थयाच्ञा मदीयप्रयोजनप्रार्थना न कार्य्या न विधेयेत्यर्थः। तथाहि तदा कार्य्यान्तरव्यासङ्गकाले इत्यर्थः अर्थितस्य प्रार्थितस्य विषयस्येति शेषः अनवबोधः असम्यग् ज्ञानं स एव निद्रा अवज्ञाचरणस्य अनादरप्रदर्शनस्य मुद्राम् आवेशं चिह्नमिति यावत् बिभर्त्ति जनयतीत्यर्थः। तादृगवस्थायां कार्य्यविशेषानवबोधादनादर एव भवेदिति भावः। अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ९५॥

विज्ञेनेति। तस्मात् पूर्वोक्तात् कारणात् विज्ञेन विवेकशालिना त्वया समयं समीक्ष्य प्रतीक्ष्य कालमपेक्ष्य अस्मिन् नरेन्द्रे नले इदं मत्प्रयोजनं विज्ञाप्यं निवेदनीयम्। ननु तर्हि विलम्बः स्यात्तत्राह, आत्यन्तिकेति। कार्य्यस्य प्रयोजनस्य आत्यन्तिकी असिद्धिः विलम्बिनी कालान्तरभाविनी सिद्धिः तयोर्मध्ये आर्य्यस्य सुधियस्ते का कतरा शुभा श्रेयस्करी विभाति? अवभासते? अवश्यमेव कार्य्यहानिमपेक्ष्य विलम्बेन कार्य्यसिद्धिर्वरमिति भवानवगच्छतीति भावः। अत्रापि कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ९६॥

इतीति। इति उक्तप्रकारम् उक्तवत्या तया भैम्या लज्जा अलोपि परित्यक्तेति यत् सा विधेयप्राधान्यात् स्त्रीत्वम् अनौ-

स्मरस्तु साक्षी तददोषतायाम्
उन्माद्य यस्तत्तदवीवदत्ताम् ॥ ९७ ॥
उन्मत्तमासाद्य हरः स्मरश्च
द्वावप्यसीमां मुदमुद्वहेते ।
पूर्वः स्मरस्पर्द्धितया प्रसूनं
नूनं द्वितीयो विरहाधिदूनम् ॥ ९८ ॥

चिती अनौचित्यं नः अस्माकं शृण्वतां पाठकानाञ्च चेतसि चित्ते चकास्तु प्रतिभातु । तु किन्तु स्मरः कामः तस्याः भैम्या अदोषतायाः निर्दोषतायाः साक्षी प्रमाणं यः स्मरः तां भैमीम् उन्माद्य उन्मादावस्थां नीत्वा तत्तत् अनुचितम् अकुमारीजनोचितं निर्लज्जताप्रयोजकं वाक्यम् अवीवदत् वादयामास वदतेर्णौ चङि गतिबुद्धीत्यादिना वदेरणिकर्त्तुः कर्मत्वम् । सहजावस्थायामेव तत्तद्दोषो गण्यते न तु विकृतावस्थायामिति भावः ॥ ९७ ॥

ननु कामो वा कथमेवं करोतीत्याशङ्क्य तस्य स्वभाव एवायमित्याह, उन्मत्तमिति । हरः शिवः स्मरः कामश्च द्वावपि एतौ उन्मत्तं वस्त्विति शेषः शिवपक्षे उन्मत्तं धुस्तूरकुसुमं कामपक्षे उन्मत्तं प्रेमावेशेन उन्मादग्रस्तं जनम् इति भावः । आसाद्य प्राप्य असीमाम् अशेषां निरतिशयामित्यर्थः मुदं हर्षम् उद्वहेते धारयतः एकस्तं प्राप्य आनन्दमनुभवति अन्यस्तु तं विशेषेण क्लेशयन् सुखीभवतीति भावः वहेः स्वरितेत्वादात्मनेपदं किन्तु पूर्वः प्रथमो हरः स्मरस्य कामस्य स्पर्द्धितया प्रतिपक्षतया प्रसूनं पुष्पम् उन्मत्तं धुस्तूरपुष्पमित्यर्थः द्वितीयः कामः विरहेण य आधिः मानसी व्यथा पुंस्त्वाधिर्मानसी

तथाभिधात्रीमथ राजपुत्रीं
निर्णीय तां नैषधबद्धरागाम्।
अमोचि चञ्चूपुटमौनमुद्रा
विहायसा तेन विहस्य भूयः॥ ९९॥

इदं यदि क्ष्मापतिपुत्त्रि! तत्त्वं
पश्यामि तन्न स्वविधेयमस्मिन्।

व्ययेत्यमरः तेन दून: सन्तप्त: तं जनं प्राप्य नूनं निश्चयेन नुदमुद्दहतीत्यनुषङ्गः। उन्मत्त उन्मादवति धुस्तूरमुचुकुन्दयोरिति विश्वः। कन्दर्पो यथा उन्मत्तं विरहिजनं दृष्ट्वा हृष्यति तथा शिवोऽपि उन्मत्ताख्यं धुस्तूरपुष्पं प्राप्य हृष्टो भवति इति भावः। अत्र उन्मत्तमिति शब्दश्लेषेण हरकामयो-रौपम्यं गम्यते इत्यलङ्कारेण वस्तुध्वनिः। लोके च परस्पर-विद्वेषिणोरयमेव स्वभावः यदेकेन किञ्चित् वस्तु यदि लभ्यते अन्येनापि तदेव वस्तु लब्धुमिष्यते तद्वदिति भावः॥ ९८॥

इत्थं नैषधं प्रति सम्यगनुरागिणीं तां प्रति हंसस्य पुन-र्वचनमाह, तथेति। अथानन्तरं तेन विहायसा विहङ्गेन। खगे विहङ्ग-विहग-विहङ्गम-विहायसा इत्यमरः। हंसेन तथा तेन प्रकारेण निर्लज्जतारूपेणेति भावः अभिधात्रीं वादिनीं तां दमयन्तीं नैषधे नले बद्धः रागः अनुरागो यया तथाभूतां निर्णीय निर्धार्य्य विहस्य भूयः पुनरपि चञ्चूपुटस्य मौनं निर्वचनत्वं तस्य मुद्रा आवेशः अमोचि परित्यक्ता मुच्यतेः कर्मणि लुङ्। पुनरुच्यते स्मेत्यर्थः॥ ९९॥

इदमिति। हे क्ष्मापतिपुत्रि! राजपुत्रि! इदं त्वदुक्तं तत्त्वम् अवितथं सत्यमित्यर्थः यदि, तत्तदा अस्मिन् व्यापारे

त्वामुच्चकैस्तापयता नृपञ्च
पञ्चेषुणैवाजनि योजनेयम् ॥ १०० ॥
त्वद्बद्धबुद्धेर्बहिरिन्द्रियाणां
तस्योपवासव्रतिनां तपोभिः।
त्वामद्य लब्ध्वामृततृप्तिभाजां
स्वदेवभूयं चरितार्थमस्तु ॥ १०१ ॥

विषये स्वस्य आत्मनः विधेयं कर्त्तव्यं किमपीति शेषः न पश्यामि नावलोकयामि, यतः त्वां नृपं नलञ्च उच्चकैः अतिशयेन तापयता अन्योन्यविरहेण व्यथयतेत्यर्थः पञ्च इषवः सायकाः यस्य तेन पञ्चेषुणैव कामिनैव इयं योजना युवयोरन्योन्यसम्मेलनम् अजनि उत्पादिता जनेः कर्मणि णिचो लुक्। लौहयोः उत्तप्तयोरिव सन्धिः भवति इति भावः। दैवनिबन्ध एव युवयोर्योजनहेतुरिति भावः। काव्यलिङ्गमलङ्कारः ॥१००॥

ननु कथं मामिव तमपि तापयति स्मर इत्युच्यते तत्राह, त्वदिति। त्वयि बद्धा बुद्धिर्यस्य तस्य त्वदेकायत्तचित्तस्येति यावत् त्वामेव सततं चिन्तयत इत्यर्थः अतएव तस्य नलस्य उपवासे व्रतं नियमः येषां तथोक्तानां त्वदासङ्गवशात् विषयान्तरविनिवृत्तानामित्यर्थः तपोभिः चान्द्रायणादिभिस्तद्रूपैरुपवासव्रतैरित्यर्थः अद्य इदानीं त्वां लब्ध्वा त्वल्लाभप्रत्याशां प्राप्येत्यर्थः अमृतेन सुधापानेन या तृप्तिः तद्भाजां तव लाभवार्त्तामृतपानेन तृप्तिं गच्छतामित्यर्थः बहिरिन्द्रियाणां चक्षुरादीनां स्वदेवभूयं निजदेवतात्वम् इन्द्रियत्वञ्च देवः सुरे राज्ञि देवमाख्यातमिन्द्रियमिति विश्वः चरितार्थं कृतार्थं सफलमित्यर्थः अस्तु भवतु। अमृतपायिनो देवा इति प्रसिद्धिः, तव परिणयवार्त्ता-

तुल्यावयोर्मूर्त्तिरभून्मदीया
दग्धा परं सास्य न ताप्यतेऽपि ?।
इत्यभ्यसूयन्निव देहतापं
तस्यातनुस्त्वद्विरहाद्विधत्ते ॥ १०२ ॥
लिपिं दृशा भित्तिविभूषणं त्वां
रूपः पिबन्नादरनिर्निमेषम्।

रूपामृतपानेनापि नलस्य श्रोत्रादिबाह्येन्द्रियाणां देवत्वसिद्धिः भविष्यति। अथ च इन्द्रियसाफल्यं भविष्यति इति भावः। लोके च उपवासादिव्रतपरायणाः देवताप्रसादात् देवत्वं प्राप्य अमृतपानेन तृप्ता भवन्ति तद्वदिति भावः। अत्र देवभूयमिति श्लिष्टत्वेऽपि द्वितीयार्थस्याप्रकृतत्वात् न श्लेषः श्लेषे हि उभयोरप्यर्थयोरभिधेयत्वेन प्रकृतत्वं तथाचोक्तं श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते इति। तदत्र द्वितीयार्थप्रतीतिर्ध्वनिरेवेति ॥१०१॥

साम्प्रतं कामेन नलस्य तापने हेतुमाह, तुल्येति। आवयोः नलस्य मम चेत्यर्थः त्यदादीनि सर्वैर्नित्यमिति सर्वग्रहणाद्युष्मदादिना नलेन सह त्यदाद्येकशेषः। मूर्त्तिः आकृतिः तुल्या समरूपा अभूत् किन्तु मम इयं मदीया मत्सम्बन्धिनी सा मूर्त्तिः परं सम्यक् निरवशेषमिति यावत् दग्धा भस्मीकृता हरेणेति शेषः। अस्य नलस्य मूर्त्तिः न ताप्यते अपि ? न तापमपि प्राप्यते ? ताप्यतेऽतीति पाठे न अति अत्यन्तं ताप्यते अपिरत्राध्याहार्य्यः। इति हेतोः अभ्यसूयन्निव गुणेषु दोषारोपणमसूया तां कुर्वन्निवेत्युत्प्रेक्षा अतनुः अनङ्गः कामः तस्य नलस्य तव विरहात् विरहमेव छिद्रं प्राप्येत्यर्थः ल्यब्लोपे पञ्चमी देहतापं शरीरसन्तापं विधत्ते करोति। तदुभयोरपि

चक्षुर्भरैरर्पितमात्मचक्षू-
रागं स धत्ते रचितं त्वया नु ॥ १०३ ॥
पातुर्दृशालेख्यमयीं नृपस्य
त्वामादरादस्तनिमीलयास्ति ।
ममेदमित्यश्रुणि नेत्रवृत्तेः
प्रीतेर्निमेषच्छिदया विवादः ॥ १०४ ॥

समानानुरागतया सङ्घटनमचिराद् भावीति भावः । अत्रातनी-स्तनुकार्थ्यस्य तापकारित्वस्यासम्भवाद् विरोधालङ्कारः मदनो भूत्वा च तत्परिहार इति बोध्यम् ॥ १०२ ॥

अथ नलस्य पूर्वरागजनितदशावस्थाः क्रमेण वर्णयति, लिपिमित्यादि । स नृपः भित्तेः कुड्यस्य विभूषणं विशिष्ट-भूषणभूतां लिपिं चित्रमयीं त्वाम् आदरेण तृष्णातिशयेन नास्ति निमिषो नेत्रनिमीलनं यस्मिन् तद् यथा तथा पिबन् अतिशयेन पश्यन्नित्यर्थः आदरनिर्निमेष इति पाठे नृपविशे-षणम् । चक्षुर्भरैः नयनजलप्रवाहैरित्यर्थः अनिमेषदर्शनजनितै-रिति भावः प्रवाहो निर्झरो झर इत्यमरः । अर्पितं जनितं त्वया नु त्वया वा रचितं कृतम् आत्मनश्चक्षूरागं चक्षुषो-रारुण्यम् अनुरागञ्च धत्ते दधाति । एतेन नयनप्रीतिः प्रथम-मुक्ता दशा वर्णिता । अत्रोभयकारणादुभयोरपि रागयोः प्रकृत-त्वात् शब्दश्लेषः ॥ १०३ ॥

अमुमेवार्थं प्रकारान्तरेणाह, पातुरिति । आलेख्यमयीं चित्रमयीं त्वाम् आदरात् तृष्णातिशयात् अस्तः विगतः नि-मीलः यस्याः तया निर्निमेषयेत्यर्थः दृशा चक्षुषा पातुरवलोक-यितुः पिबतेस्तृण्प्रत्ययः । अतएव न लोकेत्यादिना षष्ठी-

त्वं हृद्गता भैमि ! वहिर्गतापि
प्राणायिता नासि कयास्य गत्या ?।
न चित्तमाक्रामति तव चित्रम्
एतन्मनो यद्भवदेकवृत्ति ॥ १०५ ॥

प्रतिषेधात् त्वामिति द्वितीया। नृपस्य नलस्य नेत्रवृत्तेः नयनव्यापारस्य प्रीतेः नयनानुरागस्येत्यर्थः निमेषच्छिदया निमेषस्य छेदेन सह भिदादित्वादङ्प्रत्ययः। अश्रुणि नयनजले विषये ममेदं मत्कृतमिदमिति विवादः कलहः अस्ति भवति। नयनप्रीतिर्ममेदमश्रु इति वक्ति, निर्निमेषता च तवैवेति परस्परविरोधो वर्त्तते इत्यर्थः ॥ १०४ ॥

अथ सङ्कल्पदशामाह, त्वमिति। हे भैमि ! दमयन्ति ! त्वं वहिर्गतापि वहिःस्थितापि हृद्गता हृदयस्था, अपिर्विरोधे तेन विरोधालङ्कारः विरहित्वात्तु तत्परिहारः। कया गत्या केन प्रकारेण अस्य नलस्य प्राणायिता प्राणवदाचरिता प्राणसमेति यावत् उपमानादाचारः क्यङ्प्रत्ययः न असि न भवसि अपितु भवस्येवेत्यर्थः। प्राणा अपि आस्यगत्या मुखव्यापारेण नासिकया निश्वासप्रश्वासरूपेण वहिर्गच्छन्ति अन्तर्गच्छन्ति चेति शब्दश्लेषः। तेन चोत्यापि प्राणायितेत्युपमा सा च पूर्वोक्तविरोधेन सङ्कीर्य्यते। तत्र प्राणायितत्वे चित्रम् आश्चर्य्यरसः चमत्कारितेति यावत् चित्तं मनः न आक्रामति मनसि आश्चर्य्यबुद्धिर्न जायते इत्यर्थः यत् यस्मात् एतस्य नलस्य मनः चित्तं भवती एव एका अद्वितीया वृत्तिर्जीवनोपायः यस्य तथाभूतं भवच्छब्दस्य सर्वनामत्वात् वृत्तिमात्रे पुंवद्भावः। प्राणानामिव मनसो जीवनाधायकत्वम् असत्सु प्राणेषु मनसोऽप्यसत्त्वादिति

अजस्रमारोहसि दूरदीर्घां
सङ्कल्पसोपानततिं तदीयाम्।
श्वासान् स वर्षत्यधिकं पुनर्यत्
ध्यानात्तव त्वन्मयतां तदाप्य॥ १०६ ॥
हृत्तस्य यां मन्त्रयते रहस्त्वां
तां व्यक्तमामन्त्रयते मुखं यत्।

यदा तदीयं चित्तं त्वदेकावलम्बनं ततस्तवास्य प्राणायितत्वं नासम्भवमित्यत्र किं चित्रमिति भावः। न चित्रमिति पाठे तत्र प्राणायितत्वेऽपि भवदेकवृत्ति त्वदेकावलम्बनम् एतस्य मनः चित्रम् आलेख्यम् आलेख्यगतां त्वामित्यर्थः आक्रामति पश्यतीत्यर्थः न चित्रं नाश्चर्यं श्वसता वहिर्गतेति च विरोधस्य पूर्वमुक्तत्वादिति भावः॥ १०५ ॥

अजस्रमिति। दूरदीर्घाम् अत्यायतां तस्य इयं तदीया तां तत्सम्बन्धिनीमित्यर्थः सङ्कल्पाः मनोरथा एव सोपानानि तेषां ततिं श्रेणिम् अजस्रम् अनवरतम् आरोहसि, स पुनः नलस्तु श्वासान् अधिकं यथा तथा वर्षति त्यजति इति यत् तत् श्वासवर्षणं तव ध्यानात् अनवरतचिन्तनात् त्वन्मयतां त्वत्स्वरूपत्वम् आप्य प्राप्य वर्षतीत्यनुषङ्गः कथमन्यथा अपरायासेन अन्यस्य श्वाससम्भव इति भावः आङ्पूर्वादाप्नोतेः क्त्वो ल्यबादेशः। तत्र श्वाससोपानारोहणयोः कार्य्यकारणयोर्भिन्नाधिकरणत्वोक्तेरसङ्गतिलङ्कारः। तदुक्तं दर्पणे। कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिरिति॥ १०६ ॥

हृदिति। तस्य नलस्य हृत् हृदयं त्वाम् उद्दिश्य इति शेषः। यां मन्त्रणां रहः विजने रहश्चोपांशु चालिङ्ग इत्यमरः।

तद्वैरिपुष्पायुधमित्रचन्द्र-
सख्यौचिती सा खलु तन्मुखस्य ॥ १०७॥
स्थितस्य रात्रावधिशय्य शय्यां
मोहे मनस्तस्य निमज्जयन्ती।
आलिङ्ग्य या चुम्बति लोचने सा
निद्राधुना न त्वहतेऽङ्गना वा ॥ १०८॥

मन्त्रयते सम्भाषते त्वामुद्दिश्य यत्किञ्चित् रहस्यमालपतीत्यर्थः तां मन्त्रणां मुखं तदीयमित्यर्थः कर्त्तृ व्यक्तं स्फुटम् आमन्त्रयते, त्वया सह नलहृदयजातमन्त्रणां नलमुखं सर्वसमक्षे प्रकाशयति इति भावः प्रिये! क्व यासि? मामनुगच्छन्तं सम्भाषस्वेति सम्भाषते इति यत् सा तद्रहस्यप्रकाशनं विधेयप्राधान्यात् स्त्रीलिङ्गता। तन्मुखस्य नलमुखस्य तस्य वैरिणः प्रतिपक्षस्य पुष्पायुधस्य कामस्य मित्रं सुहृद् यश्चन्द्रः तेन यत् सख्यं मैत्री साम्यञ्च तस्य औचिती औचित्यं खलु। अरिमित्रस्या-प्यरित्वात् उचितमेवैतद्रहस्यभेदनमिति भावः। अत्र मुख-कर्त्तृकं रहस्यभेदनमुक्तवैरनिमित्तम् इति उत्प्रेक्षालङ्कारः खलु शब्देन व्यज्यते ॥ १०७॥

अथास्य जागरावस्थां वर्णयति, स्थितस्येति। रात्रौ रजन्यां शय्यामधिशय्य स्थितस्य अधिशीङ् स्थासामिति अधिकरणस्य कर्म्मत्वम्। तस्य नलस्य मनः चित्तं मोहे वैचित्त्ये मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः घूर्णना गात्रपतनभ्रमणा-दर्शनादिकृदिति दर्पणः। निमज्जयन्ती निमग्नं कुर्वती सती या आलिङ्ग्य लोचने नयने चुम्बति, सा निद्रा त्वहते त्वां विना अन्यारादितरर्त्ते इत्यादिना पञ्चमी। तव विरहादित्यर्थः अङ्गन।

**स्मरेण निस्तक्ष्य वृथैव बाणैः**
**लावण्यशेषां कृशतामनायि ।**
**अनङ्गतामप्ययमाप्यमानः**
**स्पर्द्धान्न साई विजहाति तेन ॥ १०९ ॥**

वा त्वत्तोऽन्या कामिनी च अधुना न अस्तीति शेषः। तव विरहे तस्य निद्रा नास्ति अन्या च कान्ता तं न सुखयतीति भावः। एतेनास्य जागरावस्था अन्याङ्गनानिवृत्त्या च अरुचिरुक्ता। अत्रार्थश्लेषः शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनमिति तल्लक्षणात्। निद्राङ्गनयोः प्रकृताप्रकृतयोरेवालिङ्गनादिरूपसाधर्म्यात् केवलप्रकृतविषयिणी तुल्ययोगिता च प्रस्तुताप्रस्तुतानाञ्च केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगितेति तल्लक्षणात् तदनयोरङ्गाङ्गिभावेन सङ्करः ॥१०८॥

साम्प्रतं कार्श्यदशामाह, लावण्येति। अयं नलः स्मरेण कामेन बाणैः शरैः निस्तक्ष्य तनूकृत्य शरप्रहारेण कृशीकृत्येत्यर्थः तक्ष तनूकरणे इत्यस्मात् क्त्वो यप्। लावण्यमेव मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यत इति भूपालोक्तं लक्षणं कान्तिविशेष इत्यर्थः शिष्यते अवशिष्यते इति शेषो यस्याः तां कृशतां कृशीभावं वृथैव निरर्थकमेव अनायि नीतः प्रापितः नयते र्द्विकर्मकत्वात् प्रधाने कर्मणि लुङ्। प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति वचनात् यतः अनङ्गतां नास्ति अङ्गं यस्य पक्षे ईषदङ्गं यस्येति अनुदरीतिवत् ईषदर्थे नञ्समासः। स अनङ्गः अशरीरः अङ्गाभाववानित्यर्थः, पक्षे कृशाङ्गः तस्य भावः तां तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च, नञर्थाः षट् प्रकी-

त्वत्प्रापकात्त्रस्यति नैनसोऽपि
त्वय्येव दास्येऽपि न लज्जते यत् ।
स्मरेण वाणैरतितत्त्य तीक्ष्णैः
लूनः स्वभावोऽपि कियान् किमस्य ? ॥११०॥

त्तिता इति वचनात् नञ्शब्दस्यात्राभावात्यतोभयरूपार्थत्वादिति भावः । आप्यमानः आनीयमानः प्राप्यमानोऽपि अत्रापि पूर्ववत् प्रधाने कर्मणि शानच् । तेन स्मरेण सार्द्धं स्पर्द्धां प्रतिपन्नतां न विजहाति न त्यजति तं सौन्दर्य्यविशेषेण जयतीति भावः । अङ्गकार्श्येऽपि स्पर्द्धाया हेतुभूतस्य लावण्यस्य कार्य्याभावात् अङ्गनिस्तत्त्वं निरर्थकमेति भावः । अतएवात्र विशेषोक्तिरलङ्कारः सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति तल्लक्षणात् । विभावना च पूर्वमङ्गमनङ्गः अयं साङ्ग इति स्पर्द्धारूपकार्य्यस्य कारणभूतसाङ्गत्वाभावेऽपि तत्कार्य्योत्पत्तेः तथाच दर्पणः । विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते इति दर्पणः । तदनयोः संसृष्टिः ॥ १०८ ॥

अपानाशमप्यस्याह, त्वदिति । स्मरेण कामेन तीक्ष्णैः निशितैः वाणैः शरैः अतितत्त्य अतिशयेन तनूकृत्य निर्भिद्येति यावत् अस्य नलस्य स्वभावोऽपि पापभीरुता नीचतावैमुख्यरूप इति भावः कियान् अल्पपरिमाणोऽपि लूनः छिन्नः क्षयीकृत इति यावत् किमित्युत्प्रेक्षा । यत् यतः त्वां प्रापयतीति त्वत्प्रापकं तस्मात् एनसोऽपि पापकर्मणोऽपि गुरुहरणादिरूपादिति भावः कलुषं वृजिनैनोऽघमंहो दुरित दुष्कृतमित्यमरः । न त्रस्यति न बिभेति भीत्रार्थानां भयहेतुरित्यपादानात् पञ्चमी । तथा तव एकं केवलं दास्यं कैङ्कर्य्यं तस्मिन्नपि

स्मारं ज्वरं घोरमपत्रपिष्णोः
सिद्धागदङ्कारचये चिकित्सौ।
निदानमौनादविशद्विशाला
सांक्रामिकी तस्य रुजेव लज्जा ॥ १११ ॥

न लज्जते न लज्जिता भवति। यद्यपि क्षत्रियो युद्धहरणादिति वचनात् हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते इति मनुस्मरणाच्च क्षत्रियाणां राक्षसविधिना कन्याहरणस्य वैधत्वेऽपि तत्त्याप-मित्यवश्यं वाच्यमिति सुधीभिर्विभाव्यम्। एतेन लज्जात्यागो-ऽभिहितः ॥ ११० ॥

प्रकारान्तरेण लज्जात्यागं पुनराह, स्मारमिति। घोरं दारुणं स्मरस्य अयं स्मारः तं स्मारं स्मरसम्बन्धिनं ज्वरं प्रबल-कामसन्तापमित्यर्थः चिकित्सौ प्रतिकर्त्तरि प्रतिकर्त्तुमुद्यते इत्यर्थः कित निवासे रोगापनयने संशये चेति धातोः गुप्ति-जिकिद्भ्यः सन्निति निन्दाक्षमा व्याधिप्रतीकारेषु इष्यते इति रोगप्रतीकारे सन्प्रत्ययः सनाशंसभिक्ष इत्युप्रत्ययः। न लोके-त्यादिना षष्ठीप्रतिषेधः। सिद्धानां सुविख्यातानामित्यर्थः अ-गदङ्काराणां वैद्यानां चयः सङ्घः तस्मिन्, रोगहार्य्यगदङ्कारो भिषग् वैद्यश्चिकित्सक इत्यमरः। कर्म्मण्यधिकारे सत्यगद-स्येति मुमागमः निदानमौनात् कोऽयं रोगः तस्य निदानं किमित्यत्र मौनात् तूष्णीम्भावात् रोगनिर्णयाभिधानेऽक्षमत्वा-द्धेतोरिति भावः अपत्रपिष्णोः लज्जाशीलस्य तस्य नलस्य अलङ्कृञित्यादिना इष्णुच्। विशाला महती लज्जा संक्रमात् संसर्गादागता सांक्रामिकी रुजेव रोग इव, अक्षिरोगो यथा-

बिभेति रुष्टासि किलेत्यकस्मात्
स त्वां किलोपेत्य हसत्यकाण्डे।
यान्तीमिव त्वामनुयात्यहेतोः
उक्तस्त्वयेव प्रतिवक्ति मोघम्॥ ११२॥

स्मारः क्षयकुष्ठविसूचिकाः। दर्शनात् स्पर्शनाद्दानात् संक्रामन्ति नरान्नरम्। इत्युक्तानामन्यतर इव भिदादित्वादङ् प्रत्ययः। अविशत् प्रविवेश। राजशरीरस्था लज्जा चिकित्सकचये संक्रान्तेवेत्यर्थः उत्प्रेक्षालङ्कारः। लज्जारूपकार्य्यस्य कामसन्तापजन्यत्वात् कार्य्यकारणयोः समानाधिकरण्यौचित्येऽपि राजनि कामसन्तापः चिकित्सके च लज्जेति वैयधिकरण्योक्तेरसङ्गतिरलङ्कारः तदुक्तं दर्पणे। कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिरिति। तदनयोः संसृष्टिः॥ १११॥

इदानीमुन्माददशामाह, बिभेतीति। स नलः अकस्मात् सहसा रुष्टासि, हे प्रिये! कुपितासि इति उक्तेति शेषः बिभेति त्रस्यति। अकाण्डे अनवसरे त्वाम् उपेत्य किल प्राप्येव हसति, उपेत्येत्यत्र उपैतीति पाठे उपैति किल प्राप्नोतीवेत्यर्थः। अहेतोः विना कारणं यान्तीमिव गच्छन्तीमिव त्वाम् अनुयाति अनुगच्छति, तथा त्वया भवत्या उक्त इव सम्भाषित इव मोघम् अलीकं प्रतिवक्ति प्रतिसम्भाषते। उन्मादश्चित्तविभ्रम इति लक्षणादयमेव उन्माद इति बोध्यम्। केचित्तु अलक्ष्यवाक् प्रलापः स्यादित्युक्तेरियं प्रलापावस्थेत्याचक्षते। अत्रानेकासु क्रियासु एकमात्रस्य कारकस्योक्तेः दीपकालङ्कारः तदुक्तं दर्पणे। अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते। अथ कारकमेकं स्यादनेकासु क्रियासु चेदिति॥ ११२॥

भवद्वियोगाच्छिदुरार्त्तिधारा-
यमस्वसुर्मज्जति निःशरण्यः।
मूर्च्छामयद्वीपमहान्ध्यपङ्के
हाहा महीभृद्भटकुञ्जरोऽयम्॥ ११३॥

सव्यापसव्यव्यसनाद्‌ द्विरुक्तैः
पञ्चेषुबाणैः पृथगर्जितासु।
दशासु शेषा खलु तद्दशा या
तया नभःपुष्पतु कोरकेण॥ ११४॥

अथ मूर्च्छारूपां दशामाह, भवदिति। भवत्यास्तव वियोगः विरहः तेन् तस्मिन् वा सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। अच्छिदुरा अविच्छिन्ना विदिभिदिच्छिदेः कुरच्। या आर्त्तिधारा सन्तापपरम्परा सा एव यमस्वसा यमुना आर्त्तेस्तमोरूपत्वात् यमुनाया रूपसाम्यमिति भावः तस्या मूर्च्छामयं मोहमयं यत् द्वीपम् अन्तस्तटं तत्र यत् महत् उत्कटम् आन्ध्यम् अन्धङ्करणो मोह इत्यर्थः तदेव पङ्कं कर्दमः तस्मिन् अयं महीभृदेव राजैव भटकुञ्जरः वीरहस्ती हाहेति खेदसूचकत्वात् द्विरुक्तिः निःशरण्यः निराश्रयः सन् मज्जति अन्तर्लीयते। एतेन त्वदृते शरणान्तरं नास्तीति सूचितम्। अत्र साङ्गरूपकं अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तदिति तल्लक्षणात्॥ ११३॥

अथास्य दशमी दशा कथमपि न भूयादित्याशंसनमुखेन तामाह, सव्येति। सव्यापसव्याभ्यां वामदक्षिणाभ्यां द्वाभ्यामपि कराभ्यामिति भावः व्यसनात् विक्षेपणात् द्विरुक्तैः द्वैगुण्यं नीतैरित्यर्थः दशभिरिति भावः पञ्चेषोः पञ्चबाणस्य कामस्य

त्वयि स्मराधेः सततास्मितेन
प्रस्थापितो भूमिभृतास्मि तेन।
आगत्य भूतः सफलो भवत्या
भावप्रतीत्या गुणलोभवत्याः॥ ११५॥

बाणैः शरैः पृथक् पार्थक्येनेति यावत् अर्जितासु जनितासु दशासु तत्तच्चक्षुःप्रीत्यादिषु अवस्थासु एकैकस्यापि बाणस्य अन्यनिरपेक्षेण दशानामप्युक्तदशानां हेतुत्वमिति भावः मध्ये शेषा अवशिष्टा या तस्य नलस्य शेषा अवशेषं गता दशेति शेषः मरणमिति भावः तया दशया कोरकेण कलिकया सता कलिका कोरकः पुमानित्यमरः व्यस्तरूपकं नभः आकाशं पुष्पतु खलु सञ्जातपुष्पम् अस्तु भवत्वेवेत्यर्थः। सा दशा खपुष्पवत् अलीका अस्तु न कदाचित् तं स्पृशतु खपुष्पस्यालीकत्वप्रसिद्धेरिति भावः। त्वत्प्राप्तिलालसया तादृगवस्थोऽपि अद्यापि जीवति नातोऽस्मिन् व्यापारे विलम्बितव्यमिति परमार्थः मरणस्यामङ्गलरूपत्वात् खशब्देन निर्देशमकृत्वा यच्छब्देन निर्देशः कृतः सव्यापसव्यव्यसनादित्यत्र सव्यापसव्यत्यजनादिति पाठान्तरेऽप्ययमेवार्थः। दशम्या दशाया अवर्णनीयत्वमुक्तं दर्पणे। रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते। जातप्रायन्तु तद्वाच्यं चेतसाकाङ्क्षितं तथा। वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरत इति। अत्र तु जातप्रायत्वं सूचितम्। दशाश्च दशैव चोक्ताः यथा नयनप्रीतिः चिन्तासङ्गस्ततोऽथ सङ्कल्पः। निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः। उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युरिति॥ ११४॥

त्वयीति। स्मराधेः कामसन्तापात् पुंस्याधिर्मानसी व्यथेत्य-

धन्यासि वैदर्भि ! गुणैरुदारैः
यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया
यदब्धिमप्युत्तरलीकरोति ? ॥ ११६ ॥

मरः सततं निरन्तरं नास्ति स्मितं हासो यस्य तेन हास्य-वर्जितेनेत्यर्थः निरन्तरोद्विग्नेनेति भावः तेन भूमिभृता राज्ञा नलेन त्वयि त्वत्समीपे सामीप्याधारे सप्तमी सामीप्याश्लेष-विषयैर्व्याप्त्याधारश्चतुर्विध इति वोपदेवः। प्रस्थापितः प्रेषितः अहम् आगत्य गुणलोभवत्या गुणानुरागिण्या भवत्याः तव भावप्रतीत्या आशयज्ञानेन भावोऽभिप्राय आशय इत्यमरः सफलः कृतकार्य्यः अस्मि। मम दौत्यकार्य्यं सुनिष्पन्नमिति भावः॥ ११५ ॥

धन्येति। हे वैदर्भि ! विदर्भाधिपनन्दिनि ! तदाख्यरीति-रपि गम्यते। त्वम् उदारैः महद्भिः गुणैः शीलसौन्दर्य्यादिभिः माधुर्य्यादिभिश्च पाशैरिति च गम्यते धन्या धनं लब्धवतीति धन्या धनगणं लब्धेति यत्प्रत्ययः प्रशंसनीयासीत्यर्थः यया त्वया नैषधोऽपि नलोऽपि अतिधीरोऽपीति भावः सहृदयोऽपि च समाकृष्यत समाकृष्टः वशीकृत इत्यर्थः चन्द्रिकाया इतः स्तुतिः प्रशंसा का खलु? कैव? न कापीत्यर्थः यत् अब्धिमपि समुद्रमपि उत्तरलीकरोति, चञ्चलीकरोति चन्द्रिकाया अब्धेरुत्तरलीकरण-मिव भैम्या नैषधसमाकर्षणमिति बिम्बानुबिम्बप्रतीतेः समा-कर्षणस्य उत्तरलीकरणस्य च एकपर्य्यायस्य पृथङ्‌निर्देशात् प्रति-वस्तूपमालङ्कारः। वैदर्भीरीतिस्तोक्ता दर्पणेन, माधुर्य्यव्यञ्जकैर्वर्णैः रचना [illegible]का। अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते

नलेन भायाः शशिना निशेव
त्वया स भायान्निशया शशीव ।
पुनःपुनस्तद्युगयुग्विधाता
स्वभ्यासमास्ते नु युवां युयुक्षुः ? ॥ ११७ ॥

इति । यदत्र केनचित् दृष्टान्तालङ्कार इत्युक्तं तन्न समीचीनं दृष्टान्ते हि धर्मस्य साम्यमिह तु एकरूपत्वमेव पर्य्यायभेदादेव पृथगुच्यते तथाच दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनमिति प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति सुधीभिर्विभाव्यम् ॥ ११६ ॥

नलेनेति । त्वं शशिना चन्द्रेण निशेव रजनीव नलेन भायाः दीप्तिं याया इत्यर्थः । स नलः निशया रजन्या शशीव चन्द्र इव त्वया भायात् दीप्तिं यायात् उभयत्र भातेराशिषि लिङ् । पुनः पुनः भूयोभूयः तयोर्निशाशशिनोर्युगं द्वन्द्वं युनक्ति सम्मेलयतीति तद्युगयुक् विधाता युवां नलं त्वाञ्चेत्यर्थः त्यदादीनि सर्वैर्नित्यमित्येकशेषः । योक्तुमिच्छुः सङ्घटयितुमिच्छुः युयुक्षुः युजेः सनन्तादुप्रत्ययः सन् स्वभ्यासम् अभ्यासस्य समृद्धौ स्वभ्यासं निरन्तराभ्यासे इत्यर्थः समृद्धर्थेऽव्ययीभावः । ततः परस्याः सप्तम्या वैकल्पिकत्वादम्भावः । आस्ते नु ? तिष्ठति किम् ? युवयोर्योगार्थं निशाशशिनोर्योगे कौशलं प्रत्यहमभ्यस्यतीवेत्यर्थः । अत्रोभयोरन्योन्यशोभाजननस्याभिधानादन्योन्यालङ्कारः परस्परक्रियाजननमन्योन्यमिति तल्लक्षणात् स च उपमाद्वयेन समुत्थापितः तन्मूला च इयं विधातुः पुनः पुनः निशाशशिनोर्योजनायां दमयन्तीनलयोर्योजनाभ्याससंलोक्षेति सङ्करः ॥ ११७ ॥

स्तनद्वये तन्वि ! परं तवैव
पृथौ यदि प्राप्स्यति नैषधस्य ।
अनल्पवैदग्ध्यविवर्द्धिनीनां
पत्रावलीनां रचना समाप्तिम् ॥ ११८ ॥

एकः सुधांशुर्न कथञ्चन स्यात्
तृप्तिक्षमस्त्वन्नयनद्वयस्य ।
त्वल्लोचनासेचनकं तदस्तु
नलास्यशीतद्युतिसद्वितीयः ॥ ११९ ॥

स्तनेति । हे तन्वि ! कृशाङ्गि ! तवैव नान्यस्या अतद्‌योग्याया इत्येवकारार्थः । पृथौ स्थूले स्तनद्वये नैषधस्यैव नलस्यैव नान्यस्येत्येवकारार्थः अनल्पं बहुलं यत् वैदग्ध्यं तस्य विवर्द्धिनीनां सूचिकानामित्यर्थः पत्रावलीनां चित्रपङ्क्तीनां रचना विन्यासः समाप्तिं सम्पूर्णतां यदि प्राप्स्यति तदैव परं परमोत्कर्षः स्यादिति भावः । नलशिल्पनैपुण्यं तवैव स्तनद्वये शोभते नान्यस्या इति भावः ॥ ११८ ॥

एक इति । एकः एकमात्रः सुधांशुः चन्द्रः तव नयनद्वयस्य खञ्जनद्वयस्येति ध्वनिः कथञ्चन कथमपि न तृप्तिक्षमः न प्रीणनसमर्थः स्यात् तत्तस्मात् नलस्य आस्यं मुखमेव शीतद्युतिः चन्द्रः तेन सद्वितीयः ससहाय इत्यर्थः सन् तव लोचनयोः नयनयोः आसिच्यते अनेनेत्यासेचनं करणे ल्युट् ततः स्वार्थे कप्रत्ययः । आसेचनकं प्रीतिकर इत्यर्थः तदासेचनं तृप्तेर्नास्त्यन्तो यस्य दर्शने इत्यमरः अस्तु भवतु । नलास्यशीतद्युतीत्युपमालङ्कारः ॥ ११९ ॥

अहो तपःकल्पतरुर्नलीयः
त्वत्पाणिजाग्रस्फुरदङ्कुरश्रीः।
त्वद्भ्रूयुगं यस्य खलु द्विपत्री
तवाधरो रज्यति यत्कलम्बः॥ १२०॥

यस्ते नवः पल्लवितः कराभ्यां
स्मितेन यः कोरकितस्तवास्ते
अङ्गम्रदिम्ना तव पुष्पितो यः
स्तनश्रिया यः फलितस्तवैव॥ १२१॥

साम्प्रतं द्वाभ्यां नलस्य तपः साफल्यमाह, अहो इत्यादिश्लोकाभ्याम्। नलस्यायं नलीयः नलसम्बन्धीत्यर्थः, वा नामधेयस्येति वृद्धसंज्ञायां वृद्धाच्छः। तप एव कल्पतरुः कल्पवृक्षः अहो आश्चर्यम् अन्यवैलक्षण्येनाभिनवत्वादिति भावः अत्र यच्छब्दोऽध्याहार्य्यः यः कल्पतरुः तव पाणिजानां करजानाम् अग्रैः स्फुरन्ती राजन्ती अङ्कुरशोभा यस्य तथोक्तः तव करजाग्ररूपाङ्कुरवानित्यर्थः। तव भ्रूयुगं यस्य कल्पतरोः द्वयोः पत्रयोः समाहारः द्विपत्री खलु प्रथमोत्पन्नं पत्रद्वयमेवेत्यर्थः तव अधरः यस्य कल्पतरोः पत्रयोः कलम्बः नालमित्यर्थः कलम्बः सायके नीपे नाले शाके कलम्बरपीति विश्वः। सन् रज्यति स्वयमेव रक्तोभवतीत्यर्थः कुषिरजोः प्राचां श्यन् परस्मैपदञ्चेति कर्मकर्त्तरि लट्॥ १२०॥

य इति। यः कल्पतरुः ते तव कराभ्यां नवः पल्लवितः सञ्जातपल्लवः सञ्जातनवपल्लव इत्यर्थः। यः कल्पतरुः तव स्मितेन मृदुहासेन कोरकितः सञ्जाताङ्कुर इत्यर्थः यः तव

कांसीकृतासीत् खलु मण्डलीन्दोः
संसक्तरश्मिप्रकरा स्मरेण।
तुला च नाराचलता निजैव
मिथोऽनुरागस्य समीकृतौ वाम्॥ १२२॥

भङ्गस्य म्रदिम्ना मार्दवेन पुष्पितः सञ्जातपुष्पः, यश्च कल्पतरुः तव स्तनयोः श्रिया कान्त्या फलितः सञ्जातफलः स्तनद्वयरूप-फलवानित्यर्थः। आस्ते तिष्ठति राजते इत्यर्थः। सर्वत्र तार-कादित्वात् इतच्प्रत्ययः। अत्र श्लोकद्वये नलतपसि दमयन्ती-नखादिभिः कल्पतरोः अवयवत्वरूपणात् साङ्गरूपकं कल्पतरोः अवयवानां नखाङ्कुरादीनाञ्च मिथः कार्य्यकारणयोर्भिन्नदेशत्वा-दसङ्गतिस्तथा चोक्तं कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिरिति तदनयोरङ्गाङ्गिभावेन सङ्करः॥ १२१॥

कांसीकृतेति। स्मरेण कामेन वां युवयोः मिथोऽनुरागस्य परस्परप्रणयस्य समीकृतौ तुलनेन साम्यकरणे साम्यकरणार्थ-मित्यर्थः संसक्तः रश्मीनां किरणानां सूत्राणाञ्च किरणप्रग्रहौ रश्मी इत्यमरः। प्रकरः सङ्घः यस्यां तथाभूता इन्दोश्चन्द्रस्य मण्डली चन्द्रबिम्बमित्यर्थः अकांसः कांसः कृतः कांसीकृता लोह-पात्रीकृता अभूततद्भावे च्विप्रत्ययः। कांसोऽस्त्री लोहभाजन-मिति शाब्दिकः। तव निजा स्वीया नाराचलता शरवल्ली एव तुला तोलनदण्डश्च कृतेति शेषः आसीत् खलु आसीत् किमित्युत्प्रेक्षा। कांसीकृतेति पाठे कंस एव कांसः स्वार्थे अण्प्रत्ययः। ततोऽभूततद्भावे च्विप्रत्ययः। संसक्तरश्मिप्रकरेण चन्द्रमण्डलेन स्वबाणपरम्परासंयोजनेन उभयोरपि युवयोरनु-रागस्य समसुद्दीपितत्वात् तथाविधचन्द्रमण्डलस्य तोलनपात्रत्वं

सत्त्वस्रुतस्वेदमधूत्थसान्द्रे
तत्पाणिपद्मे मदनोत्सवेषु ।
लग्नोत्थितास्त्वत्कुचपत्रलेखाः
तन्निर्गतास्तत् प्रविशन्तु भूयः ॥ १२३ ॥

बन्धाढ्यनानारतमल्लयुद्ध-
प्रमोदितैः केलिवने मरुद्भिः ।

बाणपरम्परायाश्च तोलनदण्डत्वमुत्प्रेक्ष्यते इति तात्पर्य्यम् ॥ १२२ ॥

सत्त्वेति । मदनोत्सवेषु कामकेलिषु सत्त्वेन मदनविकार-जनितानन्दजभावविशेषेण स्रुतः क्षरितः यः स्वेदः घर्म्मजलं स एव मधूत्थं सिक्थकं मधूत्थं सिक्थकं सममिति बलः । तेन सान्द्रं निरन्तरं व्याप्तमित्यर्थः तस्मिन् तस्य नलस्य पाणिरेव पद्मं तस्मिन् लग्नाः संक्रान्ताः अतएव उत्थिताः तव कुचतटाद् विश्लिष्टा इति यावत् स्नातानुलिप्तवत् पूर्व्वकालसमासः । अत-एव तस्मात् पाणिपद्मात् नलकरकमलात् निर्गताः तत्पाणि-पद्मरचिता इति भावः तव कुचयोः स्तनयोः पत्रलेखाः पत्रा-वल्यः भूयः पुनः तत् नलपाणिपद्ममित्यर्थः प्रविशन्तु तत्रैवान्त-र्भवन्तु इत्यर्थः यत एवोत्पत्तिस्तत्रैव लयं प्राप्नुवन्तु इति यावत् । तेन तव कुचयोः पत्रावली रचयिष्यते, सा च त्वत्कुचमर्द्दनेन सत्त्वोदयजनितस्वेदजलपूर्णे तदीये एव पाणिपद्मे लयं गमिष्य-तीति पर्य्यवसितम् युवयोस्तादृक् सङ्गमोऽस्तु इति भावः ॥१२३॥

बन्धेति । हे भैमि ! दमयन्ति ! युवा च युवतिश्च युवानौ पुमान् स्त्रियेत्येकशेषः युवां स च त्वञ्चेत्यर्थः बन्धैः काम-

प्रसूनवृष्टिं पुनरुक्तमुक्तां
प्रतीच्छतं भैमि ! युवां युवानौ ॥ १२४ ॥

अन्योऽन्यसङ्गमवशादधुना विभातां
तस्यापि तेऽपि मनसी विकसद्विलासे ।
स्रष्टुं पुनर्मनसिजस्य तनुं प्रवृत्तम्
आदाविव द्व्यणुककृत्परमाणुयुग्मम् ॥१२५॥

तन्त्रीणैः कामोत्सवीयबन्धनविशेषैः उत्तानीकरणादिभिरित्यर्थः आढ्यं समन्वितं नाना विविधं यत् रतं सुरतमित्यर्थः तदेव मल्लयुद्धं मल्लयोः वीरयोः यूनोरिति भावः युद्धं स्तनमर्दन-दन्तक्षतादि तेन तद्दर्शनेनेति भावः प्रमोदितैः सन्तोषितैः केलिवने•क्रीड़ोद्याने मरुद्भिः वायुभिः देवैश्च मरुतौ पवनामरावित्यमरः । पुनरुक्तं पुनः पुनरिति यावत् मुक्तां प्रक्षिप्तां प्रसूनवृष्टिं पुष्पवृष्टिं प्रतीच्छतं गृह्णीतं स्वीकुरुतमिति यावत् । सन्तुष्टाश्च देवाः पुष्पवृष्ट्या युद्धविजयिनं सम्भावयन्तीति भावः । युवयोर्विपिनविहारसुखं भवतु इति भावः ॥ १२४ ॥

अन्योन्येति । अधुना इदानीं तस्यापि नलस्यापि तेऽपि तवापि अन्योन्यसङ्गमवशात् परस्परसंयोगवशात् विकसन् प्रस्फुरन् विलासः प्रसरः ययोः तथाभूते मनसी उभे चित्ते मनसिजस्य कामस्य तनुं शरीरं पुनः स्रष्टुं निर्मातुम् आदौ प्रथमतः प्रवृत्तं प्रारब्धं द्वाभ्यामणुभ्यामारभ्यते इति द्व्यणुकं तत्करोतीति द्व्यणुककृत् तदारम्भकं करोतेः क्विप् । परमाणुयुग्ममिव परमाणुद्वयमिव नैयायिकमते मनसोऽणुत्वस्य सिद्धत्वादिति भावः विभातां विशेषेण राजेतामित्यर्थः । भातेर्लोटि तसस्तामादेशः । उत्प्रेक्षालङ्कारः । प्रथमं

काम: कौसुमचापदुर्जयममुं जेतुं नृपं त्वां धनु-
र्वल्लीमव्रणवंशजामधिगुणामासाद्य माद्यत्यसौ।
ग्रीवालङ्कृतिपट्टसूत्रलतया पृष्ठे कियल्लम्बया
भ्राजिष्णुं कषलेखयेव विलसत्सिन्दूरसौन्दर्य्यया १२६

तावत् परमाणुद्वयसंयोगः तदेव द्व्यणुकमुच्यते तेनैव सृष्टिरिति नियमात् युवयोश्चित्तयुगलरूपद्व्यणुकयोगात् पुनरनङ्गाङ्गसृष्टिर्भवत्विति तात्पर्य्यम्। वसन्ततिलकं वृत्तं ज्ञेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात्॥ १२५॥

काम इति। असौ कामः कौसुमचापेन कुसुमनिर्मितधनुषा दुर्जयं जेतुमशक्यं जितेन्द्रियत्वादिति भावः अमुं नृपं नलं जेतुम् अव्रणः व्रणरहितः अक्षत इत्यर्थः यो वंशः कुलं निष्कलङ्कवंश इत्यर्थः दृढ़वेणुश्च तस्मात् जायते इति तज्जां तदुद्भवामित्यर्थः द्वौ वंशौ कुलमस्करावित्यमरः। अधिगुणाम् अधिकगुणशालिनीम् अधिज्याञ्च विलसत् प्रस्फुरत् सिन्दूरस्य सौन्दर्य्यं शोभा यस्यां तथाभूतया कषलेखयेव कालात्यये सिन्दूरसंक्रान्तिपरीक्षार्थं कृतघर्षणरेखयेवेत्युत्प्रेक्षा। पृष्ठे पश्चाद्भागे कियत् किञ्चित् लम्बते इति लम्बा तया ग्रीवालङ्कृतिग्रीवालङ्कारभूता या पट्टसूत्रलता तया भ्राजिष्णुं दीप्यमानां ताच्छील्ये भुवश्चेति चकारादिष्णुच् त्वामेव धनुर्वल्लीं चापलताम् आसाद्य प्राप्य माद्यति प्रमोदते। नलवशीकरणे नान्यमुपायं पश्यन् अद्य त्वयैव तं वशीकरिष्यन् नन्दतीति भावः। अत्र श्लेषेणोत्प्रेक्षया च समनुप्राणितस्त्वां धनुर्वल्लीमिति व्यस्तरूपकालङ्कारः। शार्दूलविक्रीड़ितं वृत्तं सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितमिति तल्लक्षणात्॥ १२६॥

त्वद्गुच्छावलिमौक्तिकानि गुलिकास्तं राजहंसं विभोः
वेध्यं विद्धि मनोभुवः स्वमपि तां मञ्जुं धनुर्मञ्जरीम् ।
यन्नित्याङ्कनिवासलालिततमज्याभुज्यमानं लस-
न्नाभीमध्यबिला बिलासमखिलं रोमालिरालम्बते १२७

त्वदिति । हे भैमि ! तव गुच्छावलेः हारविशेषस्य हार-भेदा यष्टिभेदाद् गुच्छगुच्छार्द्धगोस्तना इत्यमरः । मुक्ता एव मौक्तिकानि विनयादित्वात् स्वार्थे ठगिति वामनः मौक्तिकानि मुक्ताफलानीत्यर्थः विभोः समर्थस्य कुशलस्येति भावः मनोभुवः कामस्य पक्षिमारकस्य व्याधस्येति भावः । गुलिकाः वुटिकाः गुलीति लोके ख्याताः विद्धि जानीहि । तं राजहंसं राजश्रेष्ठं तमेव कलहंसं राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोरिति विश्वः । वेधितुं प्रहर्त्तुम् अर्हं वेध्यं लक्ष्यं शरव्यमित्यर्थः विध विधाने इत्यस्मात् ऋहलोर्ण्यदिति ण्यत्प्रत्ययः । अनेकार्था धातव एवमाह वेधितच्छिद्रिताविव्यत्र स्वामी । अन्येत्वाहुः स्वप्नेऽपि विधानार्थ एव प्रयोगाच्च विध वेधन इत्येवाकरस्थः पाठः । पाठान्तरन्तु प्रामादिकमन्धपरम्परायामिति । विद्धि जानीहि । स्वम् आत्मानमपि । स्वो ज्ञातावात्मनि स्वमित्यमरः । यस्याः धनुर्मञ्जर्य्या नित्यं सततम् अङ्कनिवासेन क्रोड़ावस्थानेन लालिततमा अतिशयेन लालिता अत्यादृतेत्यर्थः या ज्या मौर्वी । मौर्वी ज्या शिञ्जिनी गुण इत्यमरः । तया भुज्यमानम् अनुभूयमानम् अखिलं समग्रं विलासं शोभां लसत् शोभमानं नाभीमध्यमेव नाभ्यन्तरमेव बिलं गुलिकास्थानमिति भावः यस्याः तथाविधा रोमालिः तव रोमराजिः आलम्बते प्राप्नोति, तां मञ्जुं मनोहारिणीं धनुर्मञ्जरीं चापवल्लरीं वल्लरी मञ्जरी

पुष्पेषुश्चिकुरेषु ते शरचयं त्वद्भालमूले धनुः
रौद्रे चक्षुषि यज्जितस्तनुमनुभ्राष्ट्रस्य यश्चिक्षिपे।
निर्विद्याश्रयदाश्रमं स वितनुस्त्वां तज्जयायाधुना
पद्मालिस्त्वदुरोजशैलनिलया तत्पर्णशालायते॥१२८

स्त्रियामित्यमरः विद्धि जानीहि। हे दमयन्ति! त्वमेव धनुर्मञ्जरी तव रोमराजिः मौर्वीभूता तव नाभिमध्यं गुलिकाधारणस्थानम् इति भावः। भज्यमानमिति पाठे भज्यमानं सेव्यमानमित्यर्थः। अत्र मौक्तिकादौ गुलिकाद्यवयवारोपात् अवयविनि कामे वेधृत्वरूपणस्य गम्यमानत्वात् एकदेशविवर्त्तिरूपकं तदुक्तं दर्पणे। यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तदिति। शार्दूलविक्रीड़ितं वृत्तम्॥ १२७॥

पुष्पेषुरिति। यज्जितः येन नलेन जितः पराभूतः सौन्दर्य्यातिशयेनेति भावः। यः पुष्पेषुः कुसुमधन्वा काम इत्यर्थः निर्विद्य ईर्ष्यया धिङ् मम जीवितमित्यात्मानमवज्ञायेत्यर्थः तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननेति दर्पणः। ते तव चिकुरेषु केशेषु, चिकुरः कुन्तलो बालः कचः केशः शिरोरुह इत्यमरः। शरचयं बाणसमूहं तत्र रचितकुसुमचयव्याजादिति भावः। तव भालमूले ललाटमूले धनुः भ्रूव्याजादिति भावः रुद्रस्य इदं रौद्रं तस्मिन् रौद्रे चक्षुषि हरतृतीयनेत्रे इति यावत् एव अनुभ्राष्ट्रम् अम्बरीषे भर्जनपात्रभूते इत्यर्थः विभक्त्यर्थे अव्ययीभावः क्लीवेऽम्बरीषं भ्राष्ट्रो नेत्यमरः। तनुं शरीरञ्च दग्धतनुव्याज्यादिति भावः चिक्षिपे न्यस्तवानित्यर्थः। स्वरितेत्त्वात्तङ् सः पुष्पेषुः वितनुः अपिरताध्याहार्यः अनङ्गोऽपि सन्नित्यर्थः अधुना साम्प्रतं तस्य नलस्य जयाय त्वाम् आश्रमं

इत्यालपत्यथ पतत्त्रिणि तत्र भैमीं
सख्यश्चिरात्तदनुसन्धिपराः परीयुः।
शर्मास्तु ते विसृज मामिति सोऽप्युदीर्य्य
वेगात् जगाम निषधाधिपराजधानीम्॥ १२९॥
चेतोजन्मशरप्रसूनमधुभिर्व्यामिश्रतामाश्रयत्
प्रेयोदूतपतङ्गपुङ्गवगवीहैयङ्गवीनं रसात्।

त्वदङ्गरूपं तपोवनमित्यर्थः आश्रयत् आश्रितवान् अतएव तव उरोजः स्तन एव शैलः पर्वतः निलय आधार इत्यर्थः यस्याः सा तत्रस्थेत्यर्थः पत्रालिः पत्ररचनाः पर्णनिचयश्च तस्य कामस्य पर्णशालायते पर्णशाला पर्णकुटीरं सेव आचरति उपमानात् कर्त्तुः क्यङ्। साम्प्रतं पुष्पायुधः त्वामेव सहायमासाद्य तपश्चर्ययापि नलं जेतुं चेष्टते इति तात्पर्य्यम्। यथा कश्चित् वीरपुरुषः शत्रुणा पराजितः निर्वेदमापन्नः पर्वते पर्णशालां कृत्वा शत्रुपराजयार्थं तपस्यति तद्वत् कामोऽपि नलेन पराजितः सन् तव कुचपर्वतस्थ पत्रशालायां तपश्चरति इति भावः। अत्र पूर्वार्द्धे शरचापादीनां पुष्पादिरूपविषयनिगरणेन तदभेदाध्यवसायाद् भेदेऽप्यभेदरूपातिशयोक्तिस्तत्पर्णशालायते इत्युपमा च आभ्यामुत्थापितेन त्वामाश्रममिति रूपकेण व्यञ्जकाप्रयोगाद् गम्योत्प्रेक्षा कामस्याश्रमाश्रयणरूपा सङ्कीर्य्यते। इत्येषामङ्गाङ्गिभावेन सङ्करः। शार्दूलविक्रीड़ितं वृत्तम्॥ १२८॥

इतीति। तत्र तस्मिन् पतत्त्रिणि पक्षिणि हंसे इति एवंप्रकारेण भैमीम् आलपति कथयति सति अथास्मिन् समये चिरात् बहुक्षणं तस्याः भैम्याः अनुसन्धिरन्वेषणम् उपसर्गे घः किरिति किप्रत्ययः। तत्पराः तत्र प्रसक्ता इत्यर्थः सख्यः

स्वादं स्वादमसीममृष्टसुरभि प्राप्तापि तृप्तिं न सा
तापं प्राप निताममन्तरतुलां नानर्च्छ मूर्च्छामपि॥१३०

सहचर्य्यः परीयुः परिवव्रुः प्रापुरित्यर्थः इणो लिट्। सोऽपि हंसोऽपि वे तव शर्म्म सुखं मङ्गलमित्यर्थः शर्म्मशातसुखानि चेत्यमरः अस्तु भवतु, मां विसृज मुञ्च इति उदीर्य्य उक्त्वा वेगात् वेगमाश्रित्य ल्यब्लोपे पञ्चमी। निषधाधिपस्य नलस्य राजधानीं जगाम प्रस्थितवान्। वसन्ततिलकं वृत्तम्॥ १२८॥

तदानीमस्या दौर्मनस्यं वर्णयति, चेत इति। सा दमयन्ती चेतसि चेतसो वा जन्म यस्य स चेतो जन्मा मनसिजः कन्दर्पः इत्यर्थः तस्य शराश्चेव प्रसूनानि कुसुमानि तेषां मधुभिः रसै-रित्यर्थः चौद्रैश्च मधुमद्ये पुष्परसे चौद्रे इत्यमरः। व्यामिश्रताम् प्राप्नयत् विशेषेण मिश्रीभवदित्यर्थः नास्ति सीमा यस्य तत् असीमं सीमारहितम् अपरिमितमित्यर्थः नकारान्तोत्तरपदो बहुव्रीहिः। मृष्टं विशदं निर्मलञ्च तत् सुरभि सुगन्धि प्रसिद्धञ्च खञ्जकुञ्जवद्विशेषणसमासः। असीममिष्टसुरभीति पाठे इष्ट-सुरभि अभीष्टसौरभमित्यर्थः, प्रेयसः प्रियतमस्य नलस्य दूतः सन्देशहरः स्यात् सन्देशहरो दूत इत्यमरः। यः पतङ्गः पुमान् गौः पुङ्गवः स इव पतङ्गपुङ्गवः पक्षिश्रेष्ठो हंस इत्यर्थः पतङ्गौ पक्षिसूर्य्यौ चेत्यमरः। गोरतद्धितलुगिति टच्। तस्य गौर्वाक् तद्गवी पूर्ववत् टचि टिड्ढाणञित्यादिना ङीप्। स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौ-रित्यमरः। सैव हैयङ्गवीनं ह्योगोदोहोद्भवं घृतं हैयङ्गवीनं संज्ञायामिति निपातः। तद्गवी सैव धेनुः तस्याः हैयङ्गवीन-मिति च अभ्यते। रसात् अनुरागात् प्रीत्येत्यर्थः स्वादं स्वादं

तस्या दृशो वियति बन्धुमनुव्रजन्त्याः
तद्बाष्पवारि नचिराद्व्यवधिर्बभूव ।
पार्श्वेऽपि विप्रचकृषे तदनेन दृष्टेः
आरादपि व्यवदधे न तु चित्तवृत्तेः ॥ १३१ ॥

पुनः पुनरास्वाद्य आभीक्ष्ण्ये णमुल्प्रत्ययः । पौनःपुन्यमाभीक्ष्ण्यम् आभीक्ष्ण्ये द्वे भवत इत्युपसंख्यानाद् द्विरुक्तिः । तृप्तिं परितोषं प्राप्तापि सम्यक् पीत्वापीति यावत् अपिर्विरोधे। नितान्तम् अन्तस्तापं न प्राप अतुलाम् आत्यन्तिकीं मूर्च्छामपि न आनर्च्छ नापि मुमोहेत्यर्थः। मधुमिश्रघृतस्य विषत्वं वाग्भटेनोक्तं, यथा—भजते विषरूपत्वं तुल्यांशौ मधुसर्पिषोरिति। ज्योतिषे च, अमृतं सिद्धियोगश्च यत्रैकस्मिन् दिने भवेत्। दिनं दूषयते सर्वं मधुसर्पिर्यथा विषमिति। अतएव तत्पानात् तापो मूर्च्छा च जायते एव अत्र तु न तथेति विरोधः सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति विशेषोक्तिश्च सैव हैयङ्गवीनमिति रूपकेणानुप्राणित इत्येषामङ्गाङ्गिभावेन सङ्करः। नानर्च्छेत्यत्र आनर्च्छ इति नकाररहितं पाठं कृत्वा केचित्तु तृप्तिं न प्राप्तापि पुनः पुनः श्रवणेच्छयेति भावः अन्तस्तापं प्राप अतुलां मूर्च्छाञ्च आनर्च्छेति व्याचक्षते। शार्दूलविक्रीडितं वृत्तम् ॥ १३० ॥

अथास्या हंसगमनेन दुर्मनायमानाया अश्रुपतनं तच्चिन्तनञ्च वर्णयति, तस्या इति। वियति आकाशे वियद् विष्णुपदं वापि पुंस्याकाशविहायसी इत्यमरः बन्धुं हंसमित्यर्थः नृपतिबन्धुमिति पाठे नृपतेर्नलस्य बन्धुं दूतमिति यावत् अनुव्रजन्त्याः अनुगच्छन्त्यास्तस्याः भैम्याः दृशः चक्षुषः तस्या बाष्पवारि

अस्तित्वं कार्य्यसिद्धेः स्फुटमथ कथयन् पक्षयोः
कम्पभेदैः
आख्यातुं वृत्तमेतन्निषधनरपतौ सर्वमेकः प्रतस्थे ।
कान्तारे निर्गतासि प्रियसखि! पदवी विस्मृता
किन्नु मुग्धे !
मा रोदीरेहि यामेत्युपहृतवचसो निन्युरन्यां वयस्याः
॥१३२॥

अश्रुजलं बन्धुवियोगजनितमिति भावः न चिरात् अविलम्बेनै-वेत्यर्थः अवधिः शेषसीमा बभूव उदकान्तं स्निग्धमनुव्रजेदिति भावः यावत् नयनवारिणा दृष्टिर्नोपरुद्धा तावदेव तं गच्छन्त-मवलोकितवतीति तात्पर्य्यम् । तत् तस्माद् वाष्पोपगमादि-त्यर्थः हेतोः अनेन हंसेन पार्श्वेऽपि सन्निधानेऽपीति दृष्टेः सकाशात् विप्रचकर्षे विप्रकृष्टेन अभावीत्यर्थः समीपाकाश-वर्त्ती अपि न द्रष्टुं शकित इत्यर्थः । तु किन्तु आरादपि दूरे-ऽपि आराद् दूरसमीपयोरित्यमरः चित्तवृत्तेः मनोव्यापारात् न व्यवदधे न व्यवहितेनाभावीत्यर्थः तथा स्नेहबन्धो जातः यथा मनसो नापैति स्मेति भावः । उभयत्रापि भावे लिट् । अत्र समीपस्थोऽपि विप्रकृष्टः, विप्रकृष्टोऽपि समीपस्थ इति क्रिययो विरुद्धत्वमिव प्रतीतिरिति विरोधालङ्कारः तदुक्तं दर्पणे । जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः क्रिया क्रियाद्रव्याभ्यां द्रव्यं द्रव्येण वा मिथः । विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिरिति । वसन्ततिलकं वृत्तम् ॥ १३१ ॥

अथ हंसस्य नलसन्निधौ गमनं भैम्याश्च गृहगमनमाह, अस्तित्वमिति । अथानन्तरम् एकः उभयोरनयोरन्यतरः हंसः

सरसि नृपमपश्यद् यत्र तत्तीरभाजः
स्मरतरलमशोकानोकहस्योपमूलम्।
किसलयदलतल्पम्लापिनं प्राप तं स
ज्वलदसमशरेषु-स्पर्द्धिपुष्पर्द्धिमौलेः॥ १३३॥

पक्षयोः कम्पभेदैः स्पन्दनविशेषैः कार्य्यस्य दमयन्तीनलयोः सङ्गमरूपस्य या सिद्धिः सुनिष्पत्तिः तस्याः अस्तित्वं विद्यमानत्वम् अवश्यम्भावित्वमित्यर्थः अस्तीत्यव्ययं विद्यमानपर्य्यायान्तरम् तस्मात्त्वप्रत्ययः। कथयन् प्रकटयन् सूचयन्नित्यर्थः अथ कथयन्नित्यत्र अनुकथयन्निति पाठान्तरम्। निषधनरपतौ नले तत्समीपे इत्यर्थः सामीप्याधारे सप्तमी एतत् सर्वं वृत्तं वृत्तान्तमित्यर्थः आख्यातुं कथयितुं प्रतस्थे चचाल। वयस्याः समानवयसः सख्य इत्यर्थः नौ वय इति यत्प्रत्ययः। हे प्रियसखि! हे मुग्धे! कान्तारे दुर्गमे कानने कान्तारो वर्त्म दुर्गममित्यमरः निर्गतासि प्रविष्टासि, पदवी पन्थाः विस्मृता किम्? मा रोदीः न रुदिहि, एहि आगच्छ, याम गच्छाम इति उपहृतं बद्धं वचः याभिः ताः तथोक्ताः एतद्वाक्यं कथयन्त्य इत्यर्थः अन्याम् अपरां दमयन्तीं निन्युः प्रापयामासुः गृहमिति शेषः स्रग्धरावृत्तं म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात्॥ १३२॥

अथास्य हंसस्य नलसङ्गतिमाह, सरसीति। स हंसः यत्र सरसि नृपं नलम् अपश्यत् पूर्वं दृष्टवान्। तस्य सरसः तीरं भजते इति तत्तीरभाक् तस्य तत्तटरुहस्येति यावत् ज्वलन्तः ये असमशरस्य कामस्य इषवः शराणि तान् स्पर्द्धते इति तत्स्पर्द्धिनी तत्सदृशीत्यर्थः पुष्पर्द्धिः कुसुमसमृद्धिः मौलौ शिखर-

परवति! दमयन्ति! त्वां न किञ्चिद्वदामि
द्रुतमुपनम किं मामाह सा शंस हंस!।
इति वदति नलेऽसौ तच्छशंसोपनम्रः
प्रियमनु सुकृतां हि स्वस्पृहाया विलम्बः॥१३४॥

देशे यस्य तथाभूतस्य विकसितपुष्पचयस्येति भावः अशोकानोकहस्य अशोकतरोः अनोकहः कुठः सालः पलाशी द्रुद्रुमागमा इत्यमरः। उपमूलं मूले तलदेशे इत्यर्थः विभक्त्यर्थे अव्ययीभावः स्मरेण कामेन तरलं चञ्चलं किसलयदलतल्पं पल्लवपत्रशय्यां म्लापयति स्वाङ्गतापेन म्लपयतीति तथाभूतं तं नृपं नलं प्राप। अशोककुसुमानामारक्तत्वात् ज्वलदसमशरशरसाम्यमित्युपमालङ्कारः। मालिनीवृत्तं ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात्॥ १३३॥

परवतीति। हे परवति! पराधीने दमयन्ति! परतन्त्रः पराधीनः परवान्नाथवानपीत्यमरः। पित्रादीनामधीनत्वादिति भावः त्वां किञ्चित् किमपि न वदामि न कथयामि, त्वां प्रति किञ्चित् कथनमयुक्तमिति भावः किन्तु, हे हंस! त्वं शीघ्रम् उपनम मत्समीपमागच्छ, सा दमयन्ती मां किमाह, किमुक्तवतीत्यर्थः भूतसामीप्ये लट्। शंस कथय, इति इत्थं नले वदति कथयति सति असौ हंसः उपनम्रः सन्निधौ विनतः सन् तत्सर्वं वृत्तान्तं शशंस कथयामास। हि तथाहि सुकृतां पुण्यवतां जनानां सुकर्म्मपापपुण्येषु कृञ इति क्विप्। प्रियमनु अभीष्टविषयं प्रति अनुयोगे द्वितीया स्वस्पृहाया निजाभिलाषस्य एव विलम्बः इच्छायां सत्यान्तु अविलम्बेनैव कार्य्यसिद्धिर्भवतीति भावः। पुण्यवन्तः स्वेष्टं प्रति वीतरागत्वात्

कथितमपि नरेन्द्रः शंसयामास हंसं
किमिति किमिति पृच्छन् भाषितं स प्रियायाः ।
अधिगतमथ सान्द्रानन्दमाध्वीकमत्तः
स्वयमपि शतकृत्वस्तत्तथान्वाचचक्षे ॥ १३५ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।

निःस्पृहा एव भवन्ति, स्पृहावन्तश्चेदचिरात् सिद्धार्थाः भवन्तीति तात्पर्य्यम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । मालिनीवृत्तम् ॥ १३४ ॥

कथितमिति । स नरेन्द्रः नलः कथितमपि हंसेन वर्णितमपि प्रियाया दमयन्त्या भाषितं किमिति किमिति पृच्छन् अनुयुञ्जानः हंसं शंसयामास पुनः पुनः कथयामास अयामन्तरं हंसस्य पुनः पुनः कथनान्तरमित्यर्थः सान्द्रेण घनेन निरतिशयेनेत्यर्थः आनन्द एव माध्वीकं मधु तेन मत्तः मार्द्वीकमत्त इति पाठे मृद्वीकाया विकारः मार्द्वीकं द्राक्षामद्यं मृद्वीका गोस्तनी द्राक्षेत्यमरः तेन मत्तः विह्वल इत्यर्थः सन् अधिगतं सम्यग् अवगतं तदुक्तं स्वयमपि शतकृत्वः शतवारं संख्यायाः क्रियाभ्यावृत्तिकथने कृत्वसुच् । तथा तेनोक्तप्रकारेण अन्वाचचक्षे अनूक्तवान् मत्तस्यायं धर्म्मः यदुक्तमप्यर्थं पुनः पुनर्वक्तीति भावः । अधिगतमथ सान्द्रानन्द माध्वीकमत्त इत्यत्र अधिमतमति-मात्रानन्दमाध्वीकमत्त इति पाठान्तरं सुगमम् । मालिनी-वृत्तम् ॥ १३५ ॥

श्रीहर्षमिति । तार्त्तीयीकतया तृतीय एव तार्त्तीयीकः तस्य भावः तत्ता तया द्वितीयतृतीयाभ्यामीकक् स्वार्थे वक्तव्यः

तार्त्तीयीकतया मितोऽयमगमत्तस्य प्रबन्धे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः
॥१३६॥

---

## चतुर्थः सर्गः।

अथ नलस्य गुणं गुणमात्मभूः
सुरभि तस्य यशः कुसुमं धनुः।
श्रुतिपथोपगतं सुमनस्तया
तमिषुमाशु विधाय जिगाय ताम्॥ १॥

ततो भावे तप्रत्ययः। मितः गणितः तृतीय इत्यर्थः अयं सर्गः अगमत् समाप्तिं गत इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्॥१३६॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्य-विरचिता
नैषधचरितस्य तृतीयसर्गव्याख्या समाप्ता।

अथ भैम्याः प्राक् सञ्जातमपि अनुरागं हंसमुखाद् विशेषेण नलगुणश्रवणादतिशयेन व्यञ्जयन् पूर्व्वरागे विरहावस्थां वर्णयति, अथेत्यादि। अथ हंसप्रस्थानानन्तरम् आत्मनः भवतीति आत्मभूः मनसिजः काम इत्यर्थः नलस्य गुणं स्वोत्कर्षहेतुशीलसौन्दर्य्यादिकं गुणं मौर्वीं च सुरभि सुविख्यातं मनोज्ञमिति यावत् सुगन्धि च, सुगन्धौ च मनोज्ञे च वाच्यवत् सुरभिः स्मृत इति विश्वः। तस्य नलस्य यशः कुसुमं पुष्पमयमित्यर्थः धनुः कार्मुकं तथा सुष्ठु मनो यस्य स सुमनाः तस्य

यदतनुज्वरभाक् तनुते स्म सा
प्रियकथासरसीरसमज्जनम्।
सपदि तस्य चिरान्तरतापिनी
परिणतिर्विषमा समपद्यत ॥ २ ॥

भावः तया सुवृत्तेन धीरत्वेनेति यावत् पुष्पत्वेन च सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोरिति मेदिनी। श्रुतिपथोपगतं भैम्याः श्रवणेन्द्रियं प्राप्तमित्यर्थः हंसादिमुखादिति भावः आकर्णकृष्टञ्च तं नलम् इषुं शरं विधाय कृत्वा तां भैमीं दमयन्तीं जिगाय जितवान् नलैकासक्तचित्तामकरोदित्यर्थः सखिटोर्जोरिति कुत्वम्। व्यस्तरूपकमलङ्कारः। अस्मिन् सर्गे द्रुतविलम्बितं वृत्तं द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात् ॥ १ ॥

यदिति। सा दमयन्ती अतनुज्वरम् अनङ्गसन्तापं प्रबलं ज्वरञ्च भजते इति तथोक्ता मदनसन्तापवती अतिशयेन ज्वरार्त्ता च सती भजोण्विः। प्रियकथा नलसम्बन्धालाप एव सरसी सरोवरं तस्यां रसो रागो विप्रलम्भः शृङ्गार इति भावः जलञ्च रसो गन्धरसे जले शृङ्गारादौ विषे वीर्य्ये तिक्तादौ द्रवरागयोरिति मेदिनी। तत्र मज्जनं तदेकासक्ततामिति यावत् अवगाहनञ्च यत् तनुते स्म चकार स्मेति भूते लट्। तस्य मज्जनस्य सपदि झटिति चिरम् अन्तरं हृदयमिति यावत् तापयतीति तत्तापिनी विषमा दारुणा परिणतिः परिणामः समपद्यत सञ्जाता। पूर्वं नले जातानुरागा पश्चात् हंसामुखात्तद्गुणातिशयं श्रुत्वा नितरां तदासक्तया मदनार्त्ता बभूवेति भावः। अन्योऽपि ज्वरसन्तापवान् तत्सन्तापनिवृत्तये यदि

ध्रुवमधीतवतीयमधीरतां
दयितदूतपतङ्गतवेगतः ।
स्थितिविरोधकरीं कृशकोदरी
तदुदितः स हि यो यदनन्तरः ॥ ३ ॥

जलमज्जनं करोति तदा तस्य ततोऽपि समधिका ज्वरार्त्तिः सञ्जायते, उक्तञ्च भैषज्यरत्नाकरे। परिषेकान् प्रदेहांश्च स्नानं संशोधनानि च। दिवास्वप्नं व्यवायञ्च व्यायामं शिशिरं जलम्। क्रोधप्रवातभोज्यानि वर्जयेत्तरुणज्वरी। शोषच्छर्दिमदान् मूर्च्छा भ्रमतृष्णाद्यरोचकान्। प्राप्नोत्युपद्रवानेतान् परिषेकादिसेवनादिति। अत्र ज्वरशान्त्यर्थं समज्जनात्तदुद्रेकरूपानर्थोत्पत्ते-र्विषमालङ्कारभेदः विरुद्धकार्य्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत्। विरुद्धघटना वा स्याद् विषमालङ्कृतिस्त्रिधेति तल्लक्षणात्। एतेन द्वादशावस्थावादिनां मते नवमी संज्वरावस्था सूचिता तथाचोक्तम्। चक्षुः प्रीतिर्मनः सङ्गः सङ्कल्पोऽथ प्रलापिता। जागरः कार्श्यमरतिर्लज्जात्यागोऽथ संज्वरः। उन्मादो मूर्च्छनञ्चैव मरणं चरमं विदुः। इति ॥ २ ॥

ध्रुवमिति। कृशकोदरी अतिकृशोदरीत्यर्थः इयं दमयन्ती दयितस्य कान्तस्य नलस्य यो दूतः पतन् पक्षी हंस इत्यर्थः पतत्पत्ररथाण्डजा इत्यमरः तस्य गतं गमनं प्रस्थानमित्यर्थः तत्र यो वेगः जवः तस्मात् स्थितेर्मर्य्यादायाः अवस्थानस्य च विरोधकरीं विरोधिनीं तद्विरोधहेतुमित्यर्थः कृञो हेत्वित्यादिना हेत्वर्थेऽचि ङीप्। अधीरताम् अस्थिरताम् एकस्थानवस्थानरूपामिति भावः अधीतवती ध्रुवमुत्प्रेक्षायां गृहीतवती शिक्षितवतीत्यर्थः एतेन चापलाख्यः सञ्चारीभाव उक्तः।

अतितमां समपादि जड़ाशयं
स्मितलवस्मरणेऽपि तदाननम्।
अजनि पङ्गुरपाङ्गनिजाङ्गन-
भ्रमिकणेऽपि तदीक्षणखञ्जनः॥ ४॥

तथाचोक्तम्। चापलन्त्वनवस्थानं रागद्वेषादिसम्भवमिति। ननु कथमन्यस्य व्यापारेणान्यत्र तत्कार्य्योक्तिरित्यत्राह तदुदित इति। यः अर्थः यदनन्तरः यत्परमुत्पन्नः सः तदुदितः इत्यव-धार्य्य। तदुत्पन्न एवेत्यर्थः। नात्र स्वपरयोर्व्यापारनियमः कार्य्यस्य प्राक्क्षणावच्छिन्नस्यैव सामान्येन कारणताभ्युप-गमादिति भावः हंसगमनानन्तरमेवास्यास्तथा चापल्यं सञ्जा-तमिति भावः। अत्रोत्प्रेक्षाया कारणेन कार्य्यसमर्थनरूप-स्यार्थान्तरन्यासोपजीवित्वेनानयोरङ्गाङ्गिभावेन सङ्करः॥ ३॥

अतितमामिति। तस्या दमयन्त्या आननं मुखं स्मित-लवस्य हास्यलेशस्य स्मरणेऽपि किं वक्तव्यं करणे इत्यपि-शब्दार्थः अतितमाम् अतिमात्रं किमेत्तित्यादिना अव्ययादाम्-प्रत्ययः अतितरामिति पाठान्तरम्। जड़ आशयो यस्य तत् जड़ाशयं मूढ़चित्तमित्यर्थः, विमुखमिति भावः समपादि सम्पन्नं सञ्जातमित्यर्थः। अन्योऽपि जड़ाशयः पूर्ववृत्तं न किमपि स्मरतीति दृश्यते। चिण् ते पद इति कर्त्तरि चिण्। तस्या भैम्या ईक्षणमेव नयनमेव खञ्जनः खञ्जरीटाख्यः पक्षि-विशेषः अपाङ्गः नेत्रप्रान्तभाग एव निजाङ्गनं स्वं चत्वरं तत्र भ्रमिर्भ्रमणं तस्याः कणेऽपि लेशेऽपि पङ्गुः सञ्चाराक्षम इत्यर्थः अजनि जातः दीपजनेत्यादिना जनेः कर्म्मणि चिण्। तथास्याः कामसन्तापो जातः येन स्मितं दृष्टिविकासश्च विलुप्त आसी-

किमु तदन्तरुभौ भिषजौ दिवः
स्मरनलौ विशतः स्म विगाहितुम् ?।
तदभिकेन चिकित्सितुमाशु तां
मखभुजामधिपेन नियोजितौ ॥ ५ ॥
कुसुमचापजतापसमाकुलं
कमलकोमलमैक्ष्यत तन्मुखम्।

दिति भावः। अत्र ईक्षणखञ्जन इति समस्तरूपकं पङ्गुरिति च व्यस्तरूपकं तदनयोः संसृष्टिः ॥ ४ ॥

किम्विति। तदभिकेन तस्यां दमयन्त्यामभिकः कामुकः तेन अनुकोऽभिकः कमिति निपातः। मखं भुञ्जते इति मखभुजः यज्ञभुजो देवाः तेषाम् अधिपेन प्रभुणा देवराजेनेत्यर्थः नारदमुखाद् दमयन्तीगुणान् श्रुत्वा देवेन्द्र इमामभिलषितवानिति वक्ष्यते। तां भैमीं तथा सन्तप्तामिति भावः आशु शीघ्रं चिकित्सितुं निरुजं कर्त्तुमित्यर्थः नियोजितौ प्रेषितौ उभौ दिवः स्वर्गस्य भिषजौ वैद्यौ स्वर्वैद्यावित्यर्थः अश्विनौ कुमाराविति यावत् भिषग् वैद्यश्चिकित्सक इति स्वर्वैद्यावश्विनीसुताविति चामरः। स्मरनलौ कामनलौ तद्रूपाभ्यां मन्तौ विगाहितुं रोगनिर्णयं कर्त्तुमित्यर्थः तस्या भैम्याः अन्तः अन्तःशरीरं प्रविशतः स्म किमु? प्रविश्य स्थितौ किमित्युत्प्रेक्षा। कामसन्तप्ता सततमेव नलं चिन्तितवती सेति भावः एतेन चिन्ताख्यः सञ्चारी भावो व्यज्यते तदुक्तं दर्पणे। ध्यानं चिन्ता हितानाप्तेः शून्यता श्वासतापकृदिति ॥ ५ ॥

कुसुमेति। कमलवत् पद्मवत् कोमलम् अतिमृदु तस्याः

अहरहर्वहदभ्यधिकाधिकां
रविरुचिग्लपितस्य विधोर्विधाम् ॥ ६ ॥
तरुणतातरणिद्युतिनिर्मित-
द्रढ़िम तत्कुचकुम्भयुगं तदा।
अनलसङ्गतितापमुपैतु नो
कुसुमचापकुलालविलासजम्? ॥ ७ ॥

भैम्या मुखं कुसुमचापजेन स्मरसन्तापसमुत्थेन तापेन समाकुलं ग्लपितमिति भावः अतएव अहरहः प्रतिदिनम् अत्यन्तसंयोगे वीप्सायां द्विर्वचनम्। रोसुपीत्यङ्गो नकारस्य रेफादेशः अभ्यधिकाधिकाम् अतिमात्राधिकाम् आभीक्ष्ण्ये द्विर्भावः। रवेः सूर्य्यस्य या रुचिः सन्तापिनी प्रभेति भावः तया ग्लपितस्य ग्लानिं नीतस्य विधोश्चन्द्रस्य विधां प्रकारं सादृश्यमित्यर्थः वहत् प्राप्नुवत् ऐक्ष्यत दृष्टं सखीजनेन सकरुणमिति शेषः। अत्रान्यस्य धर्मं कथमन्यो वहेदिति विधामिव विधामिति सादृश्याक्षेपान्निदर्शनालङ्कारः तदुक्तं दर्पणे। सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बितं बोधयेत् सा निदर्शनेति ॥ ६ ॥

तरुणतेति। तरुणता तारुण्यं यौवनमित्यर्थः सैव तरणिः तस्य सूर्य्यस्य द्युमणिस्तरणिर्मित्रं चित्रभानुर्विभावसुरित्यमरः। द्युतिः प्रभा आतप इति यावत् तया निर्मितः जनितः द्रढ़िमा दार्ढ्यं काठिन्यमित्यर्थः यस्य तत् तस्याः भैम्याः कुचौ कुम्भाविव कुचकुम्भौ स्तनकलशौ तयोर्युगं द्वयमित्यर्थः कर्तृ तदा तस्मिन् समये कुसुमचापः काम एव कुलालः कुम्भकारः। कुम्भकारः

अभूत यद्विरहोष्मणि मज्जितं
मनसिजेन तदूरुयुगं तदा।
स्पृशति तत्कदनं कदलीतरु-
र्यदि मरुज्ज्वलदूषरदूषितः॥ ८॥

कुलालः स्यादित्यमरः। तस्य विलासो विचेष्टितं तद्दुल्यचम् अनलसङ्कतितापं नलसङ्गत्यभावजनितं सन्तापम् अग्निसंयोग-तापञ्च नो उपैतु? न प्राप्नोतु? अपितु उपैत्वेवेति काकुः। प्रार्थकाले लोट्। कुम्भकारोऽपि कलसमामं सूर्य्यातपविशेष-येन कठिनीकृत्य अनलसन्तापेन पक्कं करोति तद्वदिति भावः। अत्रानलसङ्कतितापमिति श्लेषेणोज्जीवितं रूपकमलङ्कार इति सङ्करः। तदेत्यत्र तथेति पाठे तथा तेन प्रकारेणेति उपैत्विति क्रियाविशेषणम्॥ ७॥

अभूतेति। तदा तस्मिन् समये मनसिजेन कामेन विरहो-ष्मणि विरहसन्तापे मज्जितं मग्नीकृतं भृशसुत्तापितमिति भावः तस्या भैम्या ऊरुयुगम् ऊरुद्वयं यत् कदनं क्लेशम् अव-सादमित्यर्थः अभूत प्राप्तवत् कदलीतरुः रम्भावृक्षः मरौ मरु-देशे निर्जलभूभागे ज्वलता ज्वरेण ऊषरदा स्यादूषः क्षार-मृत्तिका ऊषवानूषरो द्वावित्यमरः। दूषितः सन्तापितः यदि भवेदिति शेषः तदा तत् कदनं तादृशम् अवसादं स्पृशति प्राप्नोति। कदनं मार्दने पापे इति विश्वः। केचित्तु तदा यत् तस्या ऊरुयुगं मनसिजेन विरहोष्मणि मज्जितम् अभूत अव-स्थितं भुवपस्थाने इति धातोर्लुङि तङ्, ह्रस्वादङ्गादिति सलोपः। कदलीतरुः मरौ ज्वलता ज्वरेण दूषितो यदि भवेदिति शेषः तदा तत् कदनं तेन ऊरुयुग्मेन कदनं कलहं

स्मरशराहतिनिर्मितसंज्वरं
करयुगं हसति स्म दमस्वसुः।
अनपिधानपतत्तपनातपं
तपनिपीतसरःसरसीरुहम् ॥ ९ ॥
मदनतापभरेण विदीर्य्य नो
यदुदपादि हृदा दमनस्वसुः।

साम्यमित्यर्थः स्पृशति इति व्याख्यानयन्ति। अत्रोपमानस्य कदलीतरोरुपमेयत्वकल्पनात् प्रतीपालङ्कारभेदः तदुक्तं दर्पणे। प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्। निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते। ऊषरप्ररूढ़कदलीस्तम्भ इव तदूरुयुगं भृशं सन्तापम्लपितमासीदिति पर्य्यवसितोऽर्थः ॥ ८ ॥

स्मरेति। स्मरस्य कामस्य शरैः आहतिराघातः तया निर्मितः जनितः संज्वरः सन्तापः यस्य तथाभूतं सन्तापः संज्वरः समावित्यमरः। दमस्वसुः दमयन्त्याः करयुगं पाणि-द्वयम् अनपिधानात् अनावरणात् हेतोः पतन् प्रविशन् तपनस्य सूर्य्यस्य आतपः यस्मिन् तथोक्तं तपेन निदाघेन निदाघ उष्णोपगम उष्ण उष्मागमस्तप इत्यमरः निपीतं निःशेषेण पीतं शोषितमिति यावत् यत् सरः सरोवरं तस्य तत्र वा सरसीरुहं पद्मं हसति स्म तत्सदृशमभूदिति भावः हसतीत्यंति असूयतीत्येषां दण्डिना सदृशपर्य्यायेषु पठितत्वात् उपमालङ्कारः ॥ ९ ॥

मदनेति। दमस्वसुर्दमयन्त्या हृदा हृदयेन कर्त्रा मदनतापस्य कामज्वरस्य भरेण अतिरेकेण हेतुना विदीर्य्य स्फुटित्वा नो उदपादि नोत्पतितम् इति यत् भावे लुङ् लिविकयोः

निविड़पीनकुचद्वययन्त्रणा
तमपराधमधात् प्रतिबध्नती ॥ १० ॥
निविशते यदि शूकशिखा पदे
सृजति सा कियतीमिव न व्यथाम्? ।
मृदुतनोर्वितनोतु कथं न ताम्
अवनिभृत्तु निविश्य हृदि स्थितः ॥ ११ ॥

कठिनयोः पीनयोः स्थूलयोः कुचयोर्द्वयेन युगलेन यन्त्रणा आवरणमित्यर्थः प्रतिबध्नती प्रतिबन्धकतामाचरन्ती सती तमपराधं हृदयस्यानुत्पतनदोषम् अधात् धृतवती स्वयमुवाहेत्यर्थः अत्रातिदाहेऽपि अस्फुटनं हृदयस्य आयुषोऽवशेषनिबन्धनमपि कुचयन्त्रणानिमित्तमित्युत्प्रेक्ष्यते। निविड़पीनकुचद्वयमेतत् विना प्रियतमकरस्पर्शं विफलं माभूदिति प्रत्याशयैव सा हृदयमाश्वासितवतीति भावः ॥ १० ॥

निविशते। शूकः सूक्ष्मतीक्ष्णाग्रं वस्त्वित्यर्थः तस्य शिखा अग्रभागः शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे इत्यमरः। पदे चरणे निविशते यदि, नेर्विश इत्यात्मनेपदम्। तदा सा प्रविष्टा शूकशिखा कियतीमिव व्यथां पीड़ाम् इवशब्दो वाक्यालङ्कारे। कीदृशमपि क्लेशमित्यर्थः न सृजति? न जनयति? अपितु अतीव क्लेशं जनयतीत्यर्थः। तथाच मृदुतनोः अतिसुकुमाराङ्ग्याः न तु कठिनाङ्ग्याः दमयन्त्या हृदि हृदये निविश्य प्रविश्य स्थितः अवनिं बिभर्त्तीति अवनिभृत् राजा नलः पर्वतश्च तु पुनः तां व्यथां कथं वितनोतु? न जनयतु अपितु ततोऽप्यधिकां जनयत्वेवेत्यर्थः सम्भावनायां लोट्। पादप्रविष्टं सूक्ष्मं कण्ट-

मनसि सन्तमिव प्रियमीक्षितुं
नयनयोः स्पृहयान्तरुपेतयोः ।
ग्रहणशक्तिरभूदिदमीययो:
अपि न सम्मुखवास्तुनि वस्तुनि ॥ १२ ॥
हृदि दमस्वसुरस्रुभरप्लुते
प्रतिफलद्विरहात्तमुखानतेः ।

कायमपि व्यथयति किमुत हृदयप्रविष्टः पर्वतसमो राजा नल इत्यर्थापत्त्या सततं नलचिन्तैव तां व्यथयति स्मेति भावः । अत्र अवनिभृति श्लेषेणानुप्राणितार्थापत्तिरलङ्कारः तदुक्तं दर्पणे । दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते इति ॥ ११ ॥

मनसीति । मनसि हृदये सन्तमिव वर्त्तमानमिव प्रियं नलम् ईक्षितुं द्रष्टुं स्पृहया लालसया अन्तः अभ्यन्तरम् उपेतयोः प्रविष्टयोः अस्या इमे इदमीये अस्याः सम्बन्धिनौ इत्यर्थः इदंशब्दोत्यदादेर्वृद्धाच्छः । तयोः नयनयोः सम्मुखे पुरोभागे वास्तु वसतिः स्थानमित्यर्थः यस्य तादृशेऽपि सम्मुखवर्त्तिन्यपीत्यर्थः वस्तुनि विषये घटपटादौ ग्रहणशक्तिः ज्ञानसामर्थ्य नाभूत् । अन्तर्नलं ध्यायन्ती पश्यन्ती अपि मनःसंयोगराहित्यात् बाह्यवस्तु किमपि न ज्ञातवतीति तात्पर्य्यम् । अत्रापि चिन्ताख्यः सञ्चारीभावः सुव्यक्तः । सन्तमिवेत्युत्प्रेक्षालङ्कारः ॥ १२ ॥

हृदीति । विरहेण आत्ता गृहीता मुखस्य आनतिर्नतता यया तथाभूताया अवनतमुख्या इत्यर्थः दमस्वसुः दमयन्त्याः मुखं कर्त्तृ अस्रूणां भरः प्रवाहः तेन प्लुते सिक्ते हृदि हृदये प्रतिफलत् प्रतिबिम्बतां गच्छत् सत् हृदयं भजते इति

हृदयभाजमराजत चुम्बितु
नलमुपेत्य किलागमितं मुखम्॥ १३॥
सुहृदमग्निमुदश्वयितुं स्मरं
मनसि गन्धवहेन मृगीदृशः।
अकलि निश्वसितेन विनिर्गमा-
नुमितनिह्नुतवेशनमायिता॥ १४॥

हृदयभाजं हृदयस्थितं नलं चुम्बितुम् उपेत्य उपगम्य आगमोऽस्य जात इति आगमितं चुम्बनानन्तरं सञ्जातप्रतिगमनं किल प्रत्यागतं किम्? इत्युत्प्रेक्षा। अराजत शुशुभे। वार्त्ता सम्भाव्ययोः किलेत्यमरः। यद्वा आगमितं मुखमित्यत्र आगमितमुखमिति पाठे तत् तादृक् अतिमनोहरमित्यर्थः मुखं नलं चुम्बितुम् उपेत्य तत्समीपं गत्वा आगमः आगमनम् विद्यते अस्येति आगमि अस्त्यर्थे इन्प्रत्ययः। चुम्बनानन्तरं प्रत्यागतमित्यर्थः। विरहार्त्तमुखानतेरित्यत्र पञ्चमीविभक्ती विरहेण आर्त्ता या मुखानतिः तस्या हेतोः प्रतिफलदित्यनेनान्वयः॥ १३॥

सुहृदमिति। मृगीदृशो मृगाक्ष्या दमयन्त्या निश्वसितेन निश्वासरूपेण गन्धवहेन वायुना कर्त्रा गन्धवहशब्दोपादानात् तस्या निश्वासपवनस्य स्वतः सौगन्ध्यं व्यज्यते। मनसि स्थितमिति शेषः सुहृदं सखायं रोहिताश्वो वायुसख इत्यमरेणाग्नेर्वायुसखित्वाभिधानात्। स्मरमेव काममेव अग्निम् उदश्वयितुम् उद्दीपयितुं विनिर्गमेन अनुमितम् अनुमानविषयीकृतं यत् निह्नुतवेशनं गुप्तप्रवेशः तत्र मायिता मायावित्वं कापट्यमित्यर्थः शौण्डादित्वादिनिः अकलि गृहीतं किमित्युत्प्रेक्षा

विरहपाण्डिमरागतमोमसी-
शितिमतन्निजपीतिमवर्णकैः ।
दश दिशः खलु तद्दृगकल्पयत्
लिपिकरी नलरूपकचित्रिताः ॥ १५ ॥

स्मरकृतां हृदयस्य दशां मुहुः
मृदु वदन्निव निश्वसितानिलः ।

व्यञ्जका प्रयोगात् गम्या। तस्या निश्वसितं हृदयस्थं कामानलं सखायं प्रज्वाल्य उष्णं सत् निर्गच्छति स्म नो चेत् कथमस्य तादृगुष्णत्वमित्यनुमितं गुप्तप्रवेशेन तथाचरणरूपं चापल्यं गन्धवहस्य। यथान्योऽपि गूढं परगृहे प्रविश्य तत्राग्निं दत्वा चापल्येन निर्गच्छेति तद्वदिति भावः केचित्तु गन्धवहेन वायुना सुहृदं स्मरमेवाग्निम् उदश्वयितुं निश्वासितेन निश्वासव्याजेनेति व्याचक्षते ॥ १४ ॥

विरहेति। तस्या दमयन्त्या दृक् दृष्टिरेव लिपिकरी चित्रकर्म्मकारिणी विरहेण पाण्डिमा धावल्यं मुखादेरिति शेषः रागोऽनुरागः निरन्तररोदनात् नयनादेः रक्तिमा च तमो मोह एव मसी तस्याः शितिमा नीलिमा तस्या दमयन्त्या निजः स्वीयः पीतिमा गौरत्वं तैरेव वर्णकैः विविधैश्चित्रसाधनैरञ्जनद्रव्यभेदैः दश दिशः भित्तीरिति भावः नलरूपकेण नलस्य प्रतिकृतिसमूहेन चित्रिताः सञ्जातचित्राः तारकादित्वादितच्प्रत्ययः। अकल्पयत् अकरोत् खलु। सततचिन्तया सर्वासु दिक्षु एव भ्रान्तिमयं नलरूपं ददर्शेति भावः। रूपकमलङ्कारः ॥ १५ ॥

स्मरेति। निश्वसितानिलः निश्वासवायुः स्मरकृतां मदन-

व्यधित वाससि कम्पमदःश्रिति
त्रसति कः सति नाश्रयबाधने ?॥ १६॥
करपदाननलोचननामभिः
शतदलैः सुतनोर्विरहज्वरे।
रविमहो बहु पीतचरं चिरात्
घनिशतापमिषादुदसृज्यत॥ १७॥

जनितां हृदयस्य दमयन्त्या इति शेषः दशाम् अवस्थां पीड़ामिति भावः मुहुः पुनः पुनः बहु अतिमात्रं क्रियाविशेषणं वदन्निव कथयन्निवेत्युत्प्रेक्षा अदो हृदयं श्रिति आश्रिते वाससि वसने कम्पं स्पन्दनं तत्कारणभूतं भयञ्च व्यधित विहितवान् जनयामासेत्यर्थः दधातेर्लुङि तङ् स्थाघ्वोरिच्चेतीकारः। ह्रस्वादङ्गादिति सिचो लोपः। निश्वसितानिलेन अभ्यन्तरवर्त्तिना अतएव हृदयदशां पश्यता स्वनिर्गमनात् त्वा कम्पितं हृदयनिहितं वसनं स्वाधारस्य हृदयस्य तथावस्थां विज्ञापितमिव त्रासात् चकम्पे इति तात्पर्य्यम्। तथाहि आश्रयस्य बाधने पीड़ायां सति को जनः न त्रसति न बिभेति ? अपितु सर्व एव त्रसत्येवेत्यर्थः। अत्र सामान्येन विशेषसमर्थनरूपेणार्थान्तरन्यासेन उत्प्रेक्षितार्थस्य समुज्जीवनादुभयोरङ्गाङ्गिभावेन सङ्करः॥ १६॥

करेति। करौ पाणी पदे चरणौ आननं मुखं लोचने नेत्रे एतानि नामानि संज्ञाः येषां तैः तद्रूपत्वात् गृहीततत्तन्नामकैरित्यर्थः शतदलैः पद्मैः करकमलादिभिरित्यर्थः कर्तृभिः चिरात् बह्नोः कालात् पूर्वं पीतं पीतचरं भूतपूर्वे चरट्प्रत्ययः। बहु प्रभूतं प्रभूतं बहुलं बहिरित्यमरः। रविमहः सौरं तेजः

उदयति स्म तदद्भुतमालिभिः
धरणिभृद्भुवि तत्र विमृश्य यत् ।
अनुमितोऽपि च वाष्पनिरीक्षणाद्
व्यभिचचार न तापकरोऽनलः ॥ १८ ॥

सुतनोर्दमयन्त्या विरहज्वरे अनिग्रतापमिषात् निरन्तरोत्ताप-व्याजात् उदसृज्यत उत्सृष्टं वान्तमित्यर्थः । नूनमिति शेषः शेषः अस्याः करचरणादिभ्यस्तथोष्मा निरगच्छत् यथा ज्वर-प्राबल्ये वान्तमिति भावः । अत्र पद्मानां भैमीकरचरणादिभ्यो नामत एव भेदः न तु स्वरूपत इति भेदेऽप्यभेदोक्तिरूपाति-शयोक्तिः तया च समुज्जीविता पूर्वपीतरवितेजोवमनोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या सा च तापमिषादित्यपह्नुत्यानुप्राणितेत्येषामङ्गाङ्गिभावेन सङ्करः ॥ १७ ॥

उदयतीति । आलिभिः सखीभिः आलिः सखी वयस्या चेत्यमरः तत्र तस्यां धरणिं बिभर्त्तीति धरणिभृत् राजा भीमः तस्मात् भूरुत्पत्तिर्यस्याः तथोक्तायां राजनन्दिन्याम् भैम्या-मित्यर्थः अन्यत्र धरणिभृत् पर्वतः महीध्रे शिखरि क्ष्माभृद-हार्य्यधरपर्वता इत्यमरः । तस्य भूर्भूमिः तस्यां पर्वतभूमावित्यर्थः विमृश्य विविच्य व्याप्तिमनुसृत्येति यावत् वाष्पनिरीक्षणात् वाष्पाणामश्रूणां धूमानाञ्च वाष्पोऽश्रुरुष्मधूमे चेति वैजयन्ती । निरीक्षणात् दर्शनात् अनुमितः अनुमानविषयीकृतः पक्षसत्त्व-सपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टाल्लिङ्गात् अवधारितश्च अपि-रवधारणार्थः अवधारित एव अतएव तापकरः सन्तापकः नलः नैषधो राजा अनलश्च न व्यभिचचार नान्यथा बभूवेत्यर्थः इति यत् तत् अद्भुतम् आश्चर्यम् उदयति स्म उत्पन्नम् अभवत् ...

हृदि विदर्भभुवं प्रहरन्शरै
रतिपतिर्निषधाधिपतेः कृते।
कृततदन्तरगस्वदृढव्यथः
फलदनीतिरमूर्छदलं खलु ॥ १९ ॥

विति धातोः प्रयोगे भूते लट्। नलचिन्तानुभावोऽयं सन्ताप इति सखीभिरश्रुदर्शनादनुमितं वाष्पलिङ्गदर्शनादनलज्ञानं तत्राव्यभिचारीत्यापाततो विरोधस्य स्फुरणमिति वाष्पदर्शनमात्रेण नल एव सन्तापहेतुर्नान्य इत्यनुमानस्याद्भुतत्वे हेतुरिति बोध्यम् अत्र तापकरो नल इति स भङ्गश्लेषः ॥ १८ ॥

हृदीति। रतिपतिः कामः निषधाधिपतेः नलस्य दमयन्तीहृदयस्थितस्येति भावः कृते तदर्थमिति भावः अर्थे कृते च शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञिताविति वचनात्। विदर्भभुवं दमयन्तीं शरैः हृदि प्रहरन् अतएव कृता तदन्तरगस्य दमयन्तीहृदयगतस्य स्वस्य आत्मनः दृढ़ा व्यथा येन तथोक्तः स्वयमपि तत्र स्थितत्वात् तच्छराहत इत्यर्थः सुतरां फलन्ती सञ्जातफला अनीतिः दुर्नयः यस्य तथाभूतः सन् अलमत्यन्तम् अमूर्छत् खलूत्प्रेक्षायां मुमोह किमित्यर्थः। दमयन्तीहृदयस्थं नलं प्रहरन् आत्मरक्षणपूर्वकपरप्रहारित्वरूपवीरनयानभिज्ञतया तत्र स्थितमात्मानमपि प्रमादात् प्रहृत्य यत् मोहं गतवान् तद्युक्तमेव परानिष्टकारिणः स्वानिष्टोत्पत्तेरेव प्रतिफलत्वेन कीर्त्तनादिति भावः। अथच अमूर्छत् अवर्द्धतेति परमार्थः। मूर्छा मोहसमुच्छ्राययोरित्यनुशासनात्। दमयन्ती नितरां कामाविष्टचित्ता आसीदिति भावः। अत्र मूर्छालक्षणकार्य्यदर्शनात् मोहसमुच्छ्रायाभेदेन रतिपतेः स्वस्यापि प्रहार उत्प्रेक्ष्यते

विधुरमानि तया यदि भानुमान्
कथमहो ! स तु तद्धृदयं तथा ? ।
अपि वियोगभरास्फुटनस्फुटी-
कृतदृषत्त्वमजिज्वलदंशुभिः ॥ २० ॥

इत्युत्प्रेक्षा सा च श्लेषमूलया भेदेऽप्यभेदरूपयातिशयोक्त्यानु-प्राणितेत्येषामङ्गाङ्गिभावेन सङ्करः। यत्तु च परप्रहारोद्यतस्य स्वप्रहाररूपानर्थोत्पत्तेर्विषमभेदश्च व्यज्यते इत्यभियुक्तैरुक्तं तच्चिन्त्यं तस्यारब्धवैफल्यसहकृतानर्थोत्पत्तिरूपत्वेनोक्तत्वात् तथा च दर्पणः। गुणौ क्रिये वा यत् स्यातां विरुद्धे हेतुकार्य्ययोः। यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः। विरूपयोः सङ्घटना या च तद्विषमं मतमिति। अत्र तु आरब्धस्य नलप्रहारस्य वैफल्यं नास्तीत्यधेयम् ॥ १९ ॥

विधुरिति। तया दमयन्त्या विधुश्चन्द्रः भानुमान् सूर्य्यः अमानि अमन्यत अबोधीत्यर्थः यदि सम्भावनायां पतिविरहिण्याश्चन्द्रस्य नितरामुद्दीपकत्वात् सूर्य्यत्वेन मननं सम्भाव्यते इत्यर्थः तु किन्तु सः सूर्य्यत्वेनाभिमतो विधुः वियोगभरेण विरहप्राचुर्य्येण यत् अस्फुटनम् अविदारणं तेन स्फुटीकृतं व्यक्तीकृतं दृषत्त्वं पाषाणत्वम् अर्कोपलत्वमिति यावत् यस्य तथाभूतमपि अन्यथा लोष्टादिवदतिभारेण विशीर्य्येतेति भावः। तस्या दमयन्त्या हृदयम् अंशुभिः किरणैः तथा वास्तवसूर्य्यवदित्यर्थः कथम् अजिज्वलत् ज्वालयामास काल्पनिकस्य वस्तुनो वास्तववस्तुकार्य्यकारित्वस्यासम्भवादिति भावः। अत एव अहो आश्चर्य्यम्। ज्वलतेर्ण्यन्तरूपम्। चन्द्रोदयेऽस्या नितरां मदनबाधा जातेति तात्पर्य्यम् ॥ २० ॥

हृदयदत्तसरोरुहया तया
क्व सदृगस्तु वियोगनिमग्नया ? ।
प्रियधनुः परिरभ्य हृदा रतिः
किमनुमर्त्तुमशेत चितार्च्चिषि ? ॥ २१ ॥

अनलभावमियं स्वनिवासिनो
न विरहस्य रहस्यमबुध्यत ।

हृदयेति । वियोगे विरहे निमग्ना नितान्तविरहार्त्तेत्यर्थः विरहानलपतितेति यावत् तया अतएव हृदये दत्तं तापशान्तये निहितं सरोरुहं कमलं यया यस्या वा तथाभूतया तया दमयन्त्या समाना दृश्यते इति सदृक् सदृशी क्वीति शेषः समानान्ययोश्चेत्युपसङ्ख्यानात् समानोपपदात् दृशेः क्विप् प्रत्ययः । दृग्दृशवतुष्विति समानशब्दस्य स भावः । क्व कस्मिन् देशे अस्तु ? वर्त्ततां ? न कुत्रापि तत्सदृशी रमणी अस्तीत्यर्थः । नन्वेतस्याः सदृशी रतिरस्तीत्याशङ्क्य सापि नैतत्सदृशीत्याह प्रियधनुरिति । रतिः कामपत्नी प्रियस्य कान्तस्य कामस्य धनुः पौष्पमिति भावः हृदा परिरभ्य हृदि न्यस्येत्यर्थः अनुमर्त्तुम् अनुमरणार्थं चितार्च्चिषि चिताग्नौ अशेत ? शयितवती किम् ? नव अशेतेत्यर्थः । यदि सा पतिविरहात् तदनुमरणार्थं चितानले हृदयन्यस्तभर्तृपुष्पधनुः शयीत तदास्याः सदृशी सेति वक्तुं युज्येत तत्तु नेति एतस्याः सदृशी नास्तीति भावः । यद्वा रतिः हृदा प्रियस्य धनुः पुष्पमयमिति भावः परिरभ्य धृत्वेति यावत् अनुमर्त्तुं चितार्च्चिषि अशेत किम् ? तथाभूता रतिः साक्षात् किमियमित्युत्प्रेक्षा । तस्या विरहानलज्वलितावस्थात् ज्वलति वेति भावः ॥ २१ ॥

प्रशमनाय विधाय तृणान्यसून्
ज्वलति तत्र यदुज्झितुमैहत ॥ २२ ॥

प्रकृतिरेतु गुणः स न योषितां
कथमिमां हृदयं मृदु नाम यत् ।
तदिषुभिः कुसुमैरपि धुन्वता
सुविवृतं विबुधेन मनोभुवा ॥ २३ ॥

अनलेति। इयं दमयन्ती स्वनिवासिनः स्वगतस्य विरहस्य तज्जनितदुःखस्येति भावः रहस्यं मर्मोक्तिवत् निगूढम् अनलभावम् अग्नित्वं न अबुध्यत अग्निवत् अयं विरहो मां भक्षतीति न ज्ञातवती अथच अनलभावनिमित्तत्वं न अबुध्यत अपितु अबुध्यतैवेत्यर्थः। यत् यतः तत्र तस्मिन् विरहे ज्वलति सति प्रशमनाय तस्य शान्त्यर्थम् असून् प्राणान् तृणानि विधाय तृणवत् तुच्छत्वेनावधार्येत्यर्थः उज्झितुं त्यक्तुं प्रक्षेप्तुं च ऐहत ऐच्छत् अग्निज्वलने कथं तच्छान्तये तत्र तृणप्रक्षेप इति भावः। विरहदुःखातिशयमसहमाना स्वाभीष्टजनस्यासुलभतां सम्भावयन्ती मर्तुमभिलषितवतीति पर्यवसितोऽर्थः। एतेनास्या विरहेण मृतप्रायत्वं सूच्यते। अनलभावमिति शेषः ॥ २२ ॥

प्रकृतिरिति। योषितां स्त्रीणां हृदयम् अन्तःकरणं मृदु कोमलं नामेति प्रसिद्धौ। इति यत्, सः विधेयप्राधान्यात् पुंलिङ्गता, प्रकृतिः स्वभावरूपो गुणः मार्दवो गुण इत्यर्थः इमां दमयन्तीं योषितं कथं न एतु ? न प्राप्नोतु ? अपितु एत्वेत्यर्थः। कुत इत्याह तदिति। कुसुमैरपि पुष्पैरपि इषुभिः

रिपुतरा भवनादविनिर्य्यतीं
विधुरुचिर्ग्रहजालबिलैर्नु ताम् ।
इतरथात्मनिवारणशङ्कया
ज्वलयितुं बिसवेशधराविशत् ? ॥ २४ ॥

शरैः धुन्वता कम्पयता दुन्वतेति पाठे दुन्वता पीड़यता दमयन्तीहृदयमिति शेषः विबुधेन देवेन विदुषा च सन्देहनिर्णयस्य विद्वदधिकारत्वात् इति भावः । मनोभुवा कामेन तत् मृदुत्वं कोमलत्वं सुविहितं सुष्ठु व्याख्यातं कथमन्यथा कुसुमाघातेन तत् व्यथते न हि कठिनं वस्तु मृदुवस्तुनाहतं भवति तस्मात् कुसुमादपि सुकुमारमस्या हृदयमिति नितरां कामस्य पुष्पमयैः बाणैः सा व्यथितहृदया जातेति भावः ॥ २३ ॥

रिपुतरेति । रिपुतरा उद्दीपकत्वादतिविद्वेषिणी विधोश्चन्द्रस्य रुचिः प्रभा आलोक इत्यर्थः भवनात् गृहात् अविनिर्य्यतीम् अवहिर्गच्छन्तीम् इणः शतरि ङीप् । तत्तापभयादिति भावः । तां दमयन्तीं ज्वलयितुं तापयितुम् इतरथा अन्येन प्रकारेण निजरूपेणेति भावः आत्मनः स्वस्य निवारणं प्रवेशनिषेधः तस्य शङ्कया भयेन विसवेशधरा सखीभिस्तापशान्तये समानीतानां मृणालानां रूपधारिणीत्यर्थः सती गृहस्य जालबिलैः गवाक्षरन्ध्रैः अविशत् नु ? प्रविष्टा किम् ? इत्युत्प्रेक्षा । शिशिरोपचारार्थं समानीतमृणालानि सततान्तर्गृहवर्तिन्या भैम्याः पीड़नाय प्रच्छन्नभावेन प्रविष्टा इन्दुकरा इव विभान्ति स्मेति भावः । अन्योऽपि शत्रुः परगृहप्रवेशे तत्कर्तृकनिवारणाशङ्कया प्रच्छन्नवेशेन तत्र प्रविश्य स्वकार्यं साधयतीति इन्मतो । विसोपचारेणापि तस्याः सन्तापस्य शान्तिर्नासीत् प्रत्युत

हृदि विदर्भभुवोऽश्रुभृति स्फुटं
विनमदास्यतया प्रतिबिम्बितम्।
मुखदृगोष्ठमरोपि मनोभुवा
तदुपमाकुसुमान्यखिलाः शराः॥ २५॥
विरहपाण्डुकपोलतले विधुः
व्यधित भीमभुवः प्रतिबिम्बितः।

हरिरेवाभूदिति भावः। विसवेशधरेति प्रकृतप्रतिषेधेनान्यस्थापनादपह्नुतिरलङ्कारः स चोक्तया उत्प्रेक्षयानुप्राणित इत्यनयोरङ्गाङ्गिभावेन सङ्करः॥ २४॥

हृदीति। विदर्भभुवः दमयन्त्याः विनमत् आस्यं यस्याः सा विनमदास्या तस्या भावः तत्ता तया नम्रानमत्वेन हेतुनेत्यर्थः अश्रूणि बिभर्त्तीति अश्रुभृत् तस्मिन् अश्रुजलसिक्ते इत्यर्थः क्विप् प्रत्ययः। हृदि वक्षसि वैमल्यात् प्रतिबिम्बितं सञ्जातप्रतिबिम्बं मुखञ्च दृशौ च ओष्ठश्च मुखदृगोष्ठं वदनं नयनयुगलम् ओष्ठाधरश्चेत्यर्थः प्राण्यङ्गत्वादेकवद्भावः। मनोभुवा मन्मथेन तेषां मुखदृगोष्ठानाम् उपमाकुसुमानि कमलनीलोत्पलबन्धूककुसुमानीत्यर्थः अखिलाः समग्राः शराः प्रागुक्तकमलादिरूपबाणपञ्चकमित्यर्थः अरोपि निहितं स्फुटमित्युत्प्रेक्षायाम्। तस्यास्तादृशे वक्षसि प्रतिफलितं मुखादिपञ्चावयवरूपं कुसुमशरपञ्चकं कामेन तस्याः प्रहारार्थं निहितमिव लक्ष्यते इत्यर्थः। विरहपीड़या भैम्याः नम्रानमत्वं रोदनञ्च सञ्जातमिति भावः। अरोपीत्युद्देश्यकर्मण एव प्रस्तुतस्य मुखादेः प्राधान्यादेकवचनान्तता॥ २५॥

विरहेति। विधुश्चन्द्रः। विधुः सुधांशुः शुभ्रांशुरोषधीशो

अनुपलक्ष्यसितांशुतया मुखं
निजसखं सुखमङ्कमृगार्पणात् ॥ २६ ॥
विरहतापिनि चन्दनपांशुभिः
वपुषि सार्पितपाण्डिममण्डना।

निशापतिरित्यमरः। भीमभुवः भीमसुतायाः दमयन्त्याः विरहेण पाण्डुनि धवले इत्यर्थः कपोलतले गण्डदेशे प्रतिविम्बितः प्रतिफलितः सञ्जातप्रतिविम्ब इत्यर्थः अतएव अनुपलक्ष्याः सावर्ण्यात् अज्ञेयाः सिता धवला अंशवः किरणा यस्य तत्तया अनुपलक्ष्यसितांशतयेति पाठे अनुपलक्ष्यः सितः शुभ्रः अंशः भागः यस्य तत्तया हेतुना सुखम् अनायासेन अङ्कमृगार्पणात् अङ्कस्थितसितकलङ्करूपमृगसमर्पणात् तत् प्रतिविम्बसंक्रान्तिव्याजेनेति भावः। मुखं भीमभुव इत्यनुषङ्गः निजसखं स्वमित्रं स्वसदृशञ्च व्यधित चकार। कपोलस्य पाण्डुतया तत्र सम्पूर्णस्य प्रतिविम्बितस्य चन्द्रस्य श्वेतांशः श्वेतकिरणश्च नोपलक्ष्यः केवलं कलङ्कः कृष्णत्वात् प्रतिविम्बितो लक्षितः। विरहात् पूर्वं मुखस्य गौरत्वात् प्रतिविम्बितोऽपि चन्द्रः सकलङ्कः एव पृथग् विभाव्यते स्मेति निष्कलङ्कतया चन्द्राधिकसौन्दर्य्यमासीत् इदानीन्तु तत्तुल्यं जातमिति भावः। दोषिणामयमेव स्वभावः यत् स्वदोषं निर्दोषे संक्रमय्य स्वसमानं कुर्वन्तीति महद्भिः सख्यमिच्छन्तश्च उपदादिसमर्पणेन तान् वशीकृत्य सख्यं कुर्वन्ति लोका इति च गम्यते। अत्र चन्द्रस्य कपोलसावर्ण्येन तदेकत्वप्रतिपादनात् सामान्यालङ्कारः तदुक्तम्। सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति ॥ २६ ॥

विरहेति। सा दमयन्ती विरहस्य तापः अस्त्यस्येति

विषधराभविसाभरणा दधे
रतिपतिं प्रति शम्भुविभीषिकाम् ॥ २७ ॥
विनिहितं परितापिनि चन्दनं
हृदि तया धृतबुद्बुदमाबभौ ।
उपनमन् सुहृदं हृदयेशयं
विधुरिवाङ्कगतोडुपरिग्रहः ॥ २८ ॥

विरहतापिनि वियोगसन्तापशालिनि वपुषि शरीरे चन्दनस्य तापशान्त्यर्थं प्रलिप्तस्येति भावः पांशुभिः उत्तापाच्छुष्कचन्दनरजोभिरित्यर्थः अर्पितं जनितं पाण्डिमा पाण्डुत्वमेव मण्डनं भूषणं यया सा यद्वा पाण्डिम्नः विरहजनितपाण्डुभावस्य मण्डनम् अलङ्कृतिः स्वतोऽप्यधिकौज्ज्वल्यरूपमिति भावः यया सा तथा विषधरस्य पन्नगस्य आभेव आभा यस्य तादृशं यत् विसं मृणालं तदेव आभरणं तापशान्त्यर्थं धृतं वलयादि यया तथाभूता सती रतिपतिं कामं प्रति शम्भुविभीषिकां शम्भुरेवाहमिति विभीषिकां भयप्रदर्शनं भीषयतेर्धात्वर्थनिर्देशे ण्वुल्, सुप्सुपेति समासः। न तु शम्भोर्विभीषिकेति कर्तृषष्ठीसमासः तृजकाभ्यां कर्त्तरीति निषेधात्। दधे चकार दधातेर्लिट्। शम्भुदग्धः कामो मां शम्भुबुद्ध्या न प्रहरेदिति धिये वेति व्यञ्जकाप्रयोगाद् गम्योत्प्रेक्षा ॥ २७ ॥

विनिहितमिति। तया दमयन्त्या परितापिनि विरहसन्तापवति हृदि हृदये वक्षसीत्यर्थः विनिहितं सन्तापनिवृत्तये विशेषेण न्यस्तं चन्दनं धृता बुद्बुदाः फेनविकारभेदाः येन तथाभूतं सत् हृदये शेते इति हृदयेशयं मध्यम् अधिकरणे

स्मरहुताशनदीपितया तया
बहु मुहुः सरसं सरसीरुहम्।
श्रयितुमर्द्धपथं कृतमन्तरा
श्वसितनिर्मितमर्मरमुज्झितम् ॥ २९ ॥

शेतेरित्यच्प्रत्ययः शयवासवासिष्वकालादित्यलुक्। उपनमन् उपगच्छन् अर्द्धं गताः समन्तात् परिवार्य्य स्थिता इत्यर्थः उडवः तारा एव परिग्रहाः परिजनाः यस्य तथाभूतः नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियामित्यमरः। परिग्रहः परिजने पत्न्यां स्वीकारमूलयोरिति मेदिनी। विधुरिव चन्द्र इव आबभौ रराजेत्युत्प्रेक्षा। चन्दनस्य चन्द्रसाम्यं बुद्बुदानाञ्च तारागणसाम्यमिति बोध्यम्। अन्योऽपि बन्धुः सपरिवारो मित्रमुपसर्पति ॥ २८ ॥

स्मरेति। स्मरः काम एव हुताशनः अग्निः तेन दीपितया सन्तप्तया तया दमयन्त्या बहु प्रभूतं सरसम् आर्द्रं सरसीरुहं पद्मं श्रयितुं सन्तापनिवृत्तये सेवितुं स्वशरीरे अर्पयितुमिति भावः अर्द्धः पन्थाः अर्द्धपथः तं कृतम् आनीतमित्यर्थः अन्तरा मध्ये श्वसितेन निश्वासवायुना उष्णेनेति भावः निर्मितः जनितः मर्मरः शब्दविशेषो यस्य तथाभूतं सत् तथाविधनिश्वासोष्मयोगात् शोषेण कृतमर्मरशब्दमित्यर्थः। अथ मर्मरः स्वनिते वस्त्रपर्णानामित्यमरः। अतएव उज्झितं परित्यक्तं यदर्थमानीतं तत्कार्य्यकरणानुपयोगित्वादिति भावः एतेनास्या विरहेण निश्वासस्य नितरामुष्णत्वं जातमिति तात्पर्य्यम्। अत्र श्वसितस्य तादृक्धर्मासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ २९ ॥

प्रियकरग्रहमेवमवाप्स्यति
स्तनयुगं तव ताम्यति किं न्विति ?।
अगदतुर्निहिते हृदि नीरजे
दवथुकुट्मलनेन पृथुस्तनीम् ॥ ३० ॥

त्वदितरो न हृदापि मया धृतः
पतिरितीव नलं हृदयेशयम् ।
स्मरहविर्भुजि बोधयति स्म सा
विरहपाण्डुतया निजशुद्धताम् ॥ ३१ ॥

प्रियेति। हृदि वक्षसि निहिते न्यस्ते नीरजे पद्मे ताप-शान्त्यर्थमिति भावः कर्त्तृणी दवथुः सन्तापः टुडुः ङित्त्वादथुच्-प्रत्ययः तेन यत् कुड्मलनं सङ्कोचनं निपीड़ितभाव इत्यर्थः तेन पृथुस्तनीं स्थूलकुचां दमयन्तीं तव स्तनयुगं कुचद्वयम् एवम् अनेन प्रकारेण मन्निपीड़नरीत्येति भावः प्रियस्य नलस्य करेण ग्रहं ग्रहणं निपीड़नम् अवाप्स्यति प्राप्स्यति, किं नु ? किमर्थं भोः ताम्यति क्लाम्यति यद्वा ताम्यतीत्यस्य कर्त्तृपदं भवती इत्य-ध्याहार्य्यम्। इति अगदतुः कथयामासतुः किमित्युत्प्रेक्षा व्यञ्ज-काप्रयोगाद्गम्या। एतेनापि सन्तापातिशयः सूचितः ॥ ३० ॥

त्वदितर इति। सा दमयन्ती हृदये शेते इति हृदयेशयं हृद्गस्थितं नलं त्वदितरः त्वद्भिन्नः पतिः मया हृदापि मनसापि किमुत वाग्व्यापारादिनेति अपिशब्दार्थः न धृतः न चिन्तितः इति एवंप्रकारेण निजशुद्धतां निजपातिव्रत्यं विरहपाण्डुतया हेतुना स्मर एव हविर्भुक् अग्निः तस्मिन्

विरहतप्ततदङ्गनिषेविता
कमलिनी निमिषद्दलमुष्टिभिः ।
किमपनेतुमचेष्टत किं परा-
भवितुमैहत तद्दवथुं पृथुम् ? ॥ १२ ॥

कामानले इत्यर्थः कामाग्निप्रवेशेनेति भावः बोधयति स्मेव निवेदयामासेवेत्यर्थः । सीता राममिव अन्यापि नारी निज-दोषखण्डनाय अग्निपरीक्षया पतिं सन्तोषयति । गतिशुद्धी-त्यादिना अविवक्षितुर्नलस्य वा कर्म्मत्वम् । उत्प्रेक्षालङ्कारः । विरहाग्निना तथा पाण्डुदेहा जाता यथा दग्धपापकालुष्या स्वच्छशरीरा जाता वेति प्रतिभाति स्मेति भावः ॥ ११ ॥

विरहेति । विरहेण तप्तं यत् तस्याः भैम्या अङ्गं शरीरं तत्र निषेविता तापोपशमनार्थं निहिता कमलिनी पद्मलता निमिषन्तः मुकुलीभवन्तः तापयोगेन शोषादिति भावः दलाः पत्राण्येव मुष्टयः तैः करणैः पृथुं महान्तं तस्या दवथुं तापम् अप-नेतुं ताड़यितुम् अचेष्टत किम् ? चेष्टितवती किम् ? पराभवितुं निर्जेतुं प्रहर्त्तुमिति यावत् उपशमयितुमिति भावः ऐहत किम् ? अचेष्टत किम् ? इत्युत्प्रेक्षाद्वयम् । मुष्टिबन्धनस्यैतदेव सन्ताड़नं प्रहरणञ्च प्रयोजनं परं तत् किमपि कर्त्तुं नाशकी शमाक प्रत्युत निमिषद्दलतया स्वयमेव दग्धेति आरब्धस्य वैफल्यादन-र्थोत्पत्तेश्च विषमालङ्कारमेदः तथाचोक्तं दर्पणे । गुणौ क्रिये वा यत् स्यातां विरुद्धे हेतुकार्य्ययोः । यद्वारब्धस्य वैफल्य-मनर्थस्य च सम्भवः । विरूपयोः सङ्घटना या च तद् विषमं मतमिति । अत्र च प्रागुक्तोत्प्रेक्षाद्वयेनानुप्राणितत्वादङ्गाङ्गि-भावेन सङ्करः । एतेनाप्यस्याः सन्तापाधिक्यमुक्तम् ॥ १२ ॥

इयमनङ्गशरावलिपन्नग-
क्षतविसारिवियोगविषावशा ।
शशिकलेव खरांशुकरार्दिता
करुणनीरनिधौ निदधौ न कम् ? ॥ ३३ ॥
ज्वलति मन्मथवेदनया निजे
हृदि तयार्द्रमृणाललतार्पिता ।

इयमिति । इयं दमयन्ती अनङ्गस्य कामस्य शरावलयः बाणपङ्क्तय एव पन्नगाः सर्पाः तैः क्षतं दंशनं नपुंसके भावे क्तप्रत्ययः । तेन विसरति व्याप्नोति सर्वाङ्गमिति विसारि प्रसरणशीलं यत् वियोग एव विषं तेन अवशा विह्वला सती खरास्तीक्ष्णा अंशवो यस्य स खरांशुः सूर्य्यः तस्य करैः मयूखैः बलिहस्तांशवः करा इत्यमरः । अर्दिता पीड़िता मलिनीकृतेति भावः शशिकलेव चन्द्ररेखेव कं जनं करुणस्तदाख्यो रस एव नीरनिधिः समुद्रः तस्मिन् करुणरससिन्धौ करुणस्तु रसे वृक्षे कृपायां करुणा मतेति विश्वः । तल्लक्षणन्तु दर्पणेनोक्तं यथा। इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् । धीरैः कपोतवर्णोऽयं कथितो यमदैवतः । शोकोऽत्र स्थायि भावः स्यात् शोच्यमालम्बनं मतम् । तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः । अनुभावा दैवनिन्दाभूपात क्रन्दितादयः । वैवर्ण्योच्छासनिश्वास-स्तम्भ-प्रलपनानि । निर्वेद-मोहापस्मारव्याधिग्लानिस्मृतिश्रमाः । विषादजड़तोन्मादचिन्ताद्या व्यभिचारिण इति । न निदधौ न निमज्जयामास ? अपितु सर्वमेव जनं निदधावेवेत्यर्थः । अत्र रूपकेणानुप्राणिता उपमालङ्कारः इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ३३ ॥

स्वजयिनोस्तपया सविधस्थयो:
मलिनतामभजत्तुजयोर्भृशम् ॥ ३४ ॥
पिकरुतश्रुतिकम्पिनि शैवलं
हृदि तया निहितं विचलद्बभौ ।
सतततद्गतहृच्छयकेतुना
हतमिव स्वतनूघनघर्षिणा ॥ ३५ ॥

ज्वलतीति। तया दमयन्त्या मन्मथवेदनया मदनसन्तापेन ज्वलति निजे स्वीये हृदि वक्षसि अर्पिता निहिता आर्द्रा सरसा मृणाललता विसवल्ली सविधे समीपे तिष्ठत इति सविधस्थौ तयो: सन्निहितयोरित्यर्थ: स्वम् आत्मानं जयत: निजमार्द्दवगुणादिनेति स्वजयिनो: आत्मपराभवकारिणोरित्यर्थ: इवादिव्यञ्जकाप्रयोगाद् गम्योत्प्रेक्षा। भृशम् अतिमात्रं मलिनतां मालिन्यं सन्तापातिशयात् वैवर्ण्यमिति भाव: अभजत् प्राप। उचितञ्चेतच्छत्रुरग्रे जितस्येति भाव: ॥ ३४ ॥

पिकेति। तया दमयन्त्या पिकानां कोकिलानां कोकिल: पिक इत्यपीत्यमर: रुतानि कूजितानि तेषां श्रुत्या श्रवणेन कम्पते इति तथोक्ते तेषां रवस्यातीवोद्दीपकत्वादिति भाव: हृदि वक्षसि निहितं न्यस्तं तापशान्त्यर्थमिति भाव: शैवलं कर्त्तृ जलनीली तु शैवलमित्यमर:। विचलत् विकम्पमानं सत् आश्रयकम्पनादिति भाव: स्वतनूं शैवालशरीरं घनं सततं घर्षतीति तथोक्तेन मत्स्यानां शैवालेषु शरीरघर्षणं प्रसिद्धम्। सततं निरन्तरं तद्गत: तत्स्थ इत्यर्थ: यो हृदि शेते इति हृच्छय: काम: तस्य केतु: ध्वज: मीन इत्यर्थ: तेन हतमिव

न खलु मोहवशेन तदाननं
नलमनः शशिकान्तमबोधि तत् ?।
इतरथाऽभ्युदये शशिनस्ततः
कथमसुस्रुवदस्रुमयं पयः ॥ ३६ ॥

रतिपतेर्विजयास्त्रमिषुर्यथा
जयति भीमसुतापि तथैव सा।
स्वविशिखानिव पञ्चतया ततो
नियतमैहत योजयितुं स ताम् ॥ ३७ ॥

ताड़ितमिव घर्षणार्थमिति भावः बभौ प्रतिभाति स्म। उत्प्रेक्षालङ्कारः ॥ ३५ ॥

न खल्विति। नलस्य मनः अन्तःकरणं कर्त्तृ मोहवशेन अनुरागातिशय्यजनितभ्रमवशेन तत् तस्या दमयन्त्या आननं मुखं शशिकान्तं शशी चन्द्रः तद्वत् कान्तं सुन्दरं चन्द्रकान्तोपलञ्च न खलु नैव अबोधि ? इति काकुः। अबुध्यतैवेत्यर्थः। इतरथा तदसत्यत्वे शशिनश्चन्द्रस्य अभ्युदये ततः तस्मात् तदाननात् अस्रुमयं वाष्पात्मकं पयः जलं कथम् असुस्रुवत् सुस्राव। यतश्चन्द्रोदये ततः पयः स्रवति ततस्तस्य चन्द्रकान्तत्वं सत्यमेवेत्यर्थः। चन्द्रोदये अतीव विरहसन्तप्ता सा रुरोदेति भावः। स्रवतेर्लुङि णिश्रीत्यादिना चङ्कवङ्कादेशः। अत्र तदाननं शशिकान्तमिति सामान्येन वक्तुं युक्तं न तु नल मनः कर्त्तृकं तज्ज्ञानं तयोस्तेरत्वानुपयोगित्वादिति सुधीभिर्विभाव्यम् ॥ ३६ ॥

रतिपतेरिति। रतिपतेः कामस्य इषुः बाणः विजयास्त्रं विजयसाधनमायुधं सन् यथा जयति, सा भीमसुता दमयन्ती

शशिमयं दहनास्त्रमुदित्वरं
मनसिजस्य विमृश्य वियोगिनी ।
झटिति वारुणमस्तुमिषादसौ
तदुचितं प्रतिशस्त्रमुपाददे ॥ ३८ ॥

अपि तथैव विजयास्त्रं सत् जयति सर्वोत्कर्षेण वर्त्तते । ततः तस्माद्धेतोः स रतिपतिः स्वविशिखानिव निजशरानिव तां दमयन्तीं पञ्चतया पञ्चसंख्यकत्वेन मरणेन च । पञ्चता पञ्चभावे स्यात् पञ्चता मरणेऽपि चेति विश्वः । योजयितुम् ऐहत अचेष्टत नियतं सत्यम् । अन्यानि आयुधानि विजयसाधनानि पञ्चतयायुक्तानि, इयमपि विजयास्त्रमित्येनामपि पञ्चतया योजयितुमैच्छदित्युत्प्रेक्षा । एतेनास्याः मरणदशापि प्रायेण सञ्जातेति भावः । उपमोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः ॥ ३७ ॥

शशिमयमिति । वियोगिनी विरहिणी असौ दमयन्ती उदेतीति उदित्वरम् उद्गच्छत् इण्नशिजिसर्त्तिभ्यः क्वरप् । शशिमयं चन्द्रमयं मनसिजस्य कामस्य दहनास्त्रम् आग्नेयास्त्रं विमृश्य समालोच्य अवधार्य्येति यावत् झटिति सद्यः अस्रुमिषात् नयनजलच्छलात् वारुणं वरुणदेवताकं सास्य देवतेत्यण्प्रत्ययः । तदुचितं तस्याग्नेयास्त्रस्य उचितम् उपयुक्तं निर्वापणक्षममित्यर्थः प्रतिशस्त्रं प्रतिकूलमायुधम् उपाददे अस्रुजलरूपं वारुणास्त्रं जग्राहेत्यर्थः । चन्द्रकिरणासहिष्णुः केवलमरोदीदिति भावः । अत्र प्रकृतस्य अस्रुणः प्रतिषेधेन अप्रकृतस्य वारुणास्त्रस्य स्थापनादपह्नुतिभेदः उक्तश्च दर्पणे । प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति ॥ ३८ ॥

अतनुना नवमम्बुदमाम्बुदं
सुतनुरस्त्रमुदस्तमवेक्ष्य सा।
उचितमायतनिश्वसितच्छलात्
श्वसनमस्त्रममुञ्चदमुं प्रति ॥ ३९ ॥

रतिपतिप्रहितानिलहेतितां
प्रतियती सुदती मलयानिले।
तदुरुतापभयात्सरसालिका-
मयमियं भुजगास्त्रमिवादित ॥ ४० ॥

अतनुनेति। सा सुतनुः चार्वङ्गी भैमी अतनुना अनङ्गेन उदस्तम् उत्क्षिप्तं प्रयुक्तमिति भावः नवं नूतनम् अम्बुदं मेघम् आम्बुदं मेघदैवतम् अस्त्रम् अवेक्ष्य दृष्ट्वा नवमेघस्य कामोद्दीपकत्वादिति भावः आयतस्य दीर्घस्य निश्वसितस्य छलात् व्याजात् अमुम् अम्बुदं प्रति उचितं तत्प्रतीकारक्षमं श्वसनं वायुदैवतम् अस्त्रं वायव्यास्त्रमित्यर्थः अमुञ्चत् प्रयुक्तवतीत्यर्थः मेघदर्शनोद्दीपनमभूत् यथा दीर्घं निशश्वासेति भावः। अत्रापि प्रकृतं निश्वसितं प्रतिषिध्य तदन्यस्य वायव्यास्त्रस्य स्थापनादपह्नवभेदः। अथातनुना सूक्ष्मशरीरेण प्रयुक्तस्यास्त्रस्य सुतनुना प्रबलशरीरेण निश्वासरूपसामान्यास्त्रेण निराकरणं व्यज्यते ॥ ३९ ॥

रतिपतीति। इयं सुदती शोभनदन्तवती दमयन्ती मलयानिले मलयपर्वतादागते वायौ रतिपतिना कामेन प्रहिता प्रयुक्ता या अनिलहेतिः वायव्यास्त्रं तस्या भावः ताम्। हेतिः अस्त्रं प्रहरणं स्यादायुधमस्त्रमेव चेति हलायुधः। प्रतियती

न्यधित तद्धृदि शल्यमिव द्वयं
विरहितास्य तथापि च जीवितम् ।
किमथ तत्र निहत्य निखातवान्
रतिपतिः स्तनबिल्वयुगेन तत् ? ॥ ४१ ॥

बिभ्रसती सती इषः शतरि ङीप् । तेन भक्षेण मलयानिलरूपवायव्यास्लेषणेत्यर्थः यः उरुः महान् तापः व्यथा तस्मात् भयं तेन भात्ता ग्रहीता या मृणालिका तदात्मकं तन्मयं विसरूपमित्यर्थः भुजगास्त्रं पन्नगास्त्रम् भादित इव गृहीतवती इव भुजगानां वायुभोजित्वात् मृणालमयं भुजगं मलयानिलभक्षणाय दधार किम् ? इत्युत्प्रेक्षा । स्वाध्योरित्वेतीकारः झस्वादङ्गादिति सलोपः ॥ ४० ॥

न्यधितेति । रतिपतिः कामः तस्या दमयन्त्या हृदि हृदये विरहितां च वियोगित्वञ्च तथापि वियोगितायामपीत्यर्थः जीवितञ्च इति द्वयं शल्यमिव शङ्कुमिव न्यधित निहितवान् जीविनो विरहस्य विरहिणो जीवनस्य च द्वयोरपि शल्यसमदुःखप्रदत्वादिति भावः । दधातेर्लुङि तङ् । स्वाध्योरित्वेतीकारः झस्वादङ्गादिति सलोपः । अथ शल्यनिधानानन्तरं स्तनाविव बिल्वे श्रीफले तयोर्युगेन द्वयेन तत् शल्यद्वयं तत्र हृदि निहत्य नितरामाहत्य निखातवान् किम् ? यथा लोके पूर्वनिहितं शङ्कुं शिथिलो माभूदिति धिया केनचित् कठिनेन वस्तुना आहत्य दृढं निदधाति तद्वदिति भावः । अत्र पूर्वार्द्धे व्यञ्जकाप्रयोगाद् गम्योत्प्रेक्षा उत्तरार्द्धे तु किमित्युत्प्रेक्षाव्यञ्जकप्रयोगात् वाच्योत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करः । एतेनास्याः स्तनयोरतिकाठिन्यं व्यज्यते ॥ ४१ ॥

अतिशरव्ययता मदनेन तां
निखिलपुष्पमयस्वशरव्ययात् ।
स्फुटमकारि फलान्यपि मुञ्चता
तदुरसि स्तनतालयुगार्पणा ॥ ४२ ॥
अथ मुहुर्बहुनिन्दितचन्द्रया
स्तुतविधुन्तुदया च तया मुहुः ।
पतितया स्मरतापमये गदे
निजगदेऽश्रुविमिश्रमुखी सखी ॥ ४३ ॥

अतीति। तां भैमीम् अतिशरव्ययता अतिशयेन शरवेध्यां कुर्वता शरव्यशब्दात् तत्करोतीति ण्यन्तात् लटः शतरि पित्। लक्षं लक्ष्यं शरव्यञ्चेत्यमरः। मदनेन कामेन निखिलानि पुष्पमयानि यानि स्वशराणि तेषां व्ययात् एकैकशः प्रयोगेण क्षयादित्यर्थः फलानि तत्तत्कुसुमतरुफलानि अपि मुञ्चता प्रयुञ्जानेन मदनेन कामेन तस्या दमयन्त्या उरसि वक्षसि स्तनावेव ताले तालफले तयोर्युगस्य द्वयस्य अर्पणा प्रक्षेपः अकारि स्फुटं कृतेवेत्युत्प्रेक्षा। वीराणामयमेव स्वभावः यत् स्वशस्त्रक्षये सम्मुखस्थं यत् किमपि वस्तु गृहीत्वा तेनैव शत्रुं प्रति प्रहरति यथार्जुनोऽश्वत्थामा च महादेवं प्रति। तद्वदिति भावः ॥ ४२ ॥

इत्थं विरहावस्थामाख्याय साम्प्रतं सखीं प्रति तस्यास्तत्कालोचितं वचनमाह अथेति। अथानन्तरं स्मरतापमये कामसन्तापरूपे गदे रोगे रोगव्याधिगदामया इत्यमरः। पतितया अतएव मुहुः पुनः पुनः बहु यथा तथा निन्दितः चन्द्रः

नरसुराजभुवामिव यावता
भवति यस्य युगं यदनेहसा।
विरहिणामपि तद्रतवद्युव-
क्षणमितं न कथं गणितागमे॥ ४४॥

यया तथाभूतया तस्यातीवोद्वेगोपमेन सन्तापनादिति भावः। अतएव च मुहुः स्तुतः प्रशंसितः विधुं चन्द्रं तुदति ग्रसतीति विधुन्तुदः राहुः यया तथाभूतया विधुन्तुदत्वमेव स्तुतिहेतुरिति भावः विध्वरुषोस्तुद इति खच्प्रत्ययः। अरुर्द्विषदजन्तस्य मुमिति मुमागमः। तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुद इत्यमरः। तया दमयन्त्या अश्रुविमिश्रं सबाष्पमित्यर्थः मुखं यस्याः तथोक्ता अनिष्टशङ्कया रोदयमानेत्यर्थः सखी काचित् रहस्यज्ञा सहचरीत्यर्थः निजगदे उक्ता, गदतेः कर्मणि लिट्॥ ४३॥

किमित्याह, नरेति। नरश्च सुरश्च अजभूश्च तेषां नरसुराजभुवां मनुष्यदेवब्रह्मणामिव यावता यत्परिमितेन अनेहसा कालेन यस्य प्राणिनः यत् युगं भवति, तत् विरहिणां विरहवतां पुंसां विरहिणीनां स्त्रीणाञ्च, सर्वेषामेव जातिभेदेन तुल्यमित्यर्थः किन्तु गणितागमे गणितशास्त्रे ज्योतिःशास्त्रे इत्यर्थः रतवतां सम्भोगिनां यूनां क्षणेन मितं परिमितं कथं न सिद्धान्तितमिति शेषः। तथाच मानवधर्मशास्त्रे उक्तम्। चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः॥ इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु। एकापायेन वर्त्तन्ते सहस्राणि शतानि च॥ यदेतत् परिसंख्यातमादावेव चतुर्युगम्। एतद्द्वादशसाहस्रं देवानां

जनुरधत्त सती स्मरतापिता
हिमवतो न तु तन्महिमादृता।
ज्वलति भालतले लिखितः सती-
विरह एव हरस्य न लोचनम्॥ ४५॥

युगमुच्यते॥ दैविकानां युगानान्तु सहस्रं परिसङ्ख्यया। ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव चेति। सम्भोगिनां विरहिणाञ्च नरत्वेन तुल्यत्वात् सममेव युगपरिमाणं किन्तु सम्भोगिभिः यावान् कालः क्षणत्वेन ज्ञायते विरहिभिस्तु स कालः युगवत् ज्ञायते अतो गणितागमे सम्भोगिविरहिणोर्युगपरिमाणस्य पार्थक्यौचित्यात् कथं तुल्यतया निरूपणमिति भावः। विरहे तस्याः क्षणोऽपि क्षणो युगकल्पोऽभूदिति तात्पर्य्यम्॥ ४४॥

अनुरिति। सती भवजाया दक्षकन्या स्मरेण तापिता विरहसन्तप्तेति यावत् सती हिमवतः हिमालयात् अनुः जन्म जनुर्जननजन्मानीत्यमरः। अधत्त गृहीतवती, तस्य हिमवतः महिम्नि माहात्म्ये आदृता आदरवती यद्वा महिमा आदृता यया तथोक्ता आदृततन्महिमेत्यर्थः आहिताग्न्यादित्वाक्ति-ष्ठायाः परनिपातः। न तु नैव। विरहशान्त्यर्थमेव हिमालये शैत्यप्रधाने देशे जाता न तु तत्तपस्याप्रभावादित्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या। हरस्य भालतले ललाटदेशे लिखितः ब्रह्मणेति शेषः सतीविरह एव ज्वलति दीप्यते, लोचनं तृतीय-मिति शेषः न। गौरीशङ्करयोरपि ईदृशी विरहज्वाला बल-वती किं वक्तव्यमन्याद्दशामिति भावः अत्रोत्तरार्द्धे प्रकृतं लोचनं प्रतिषिध्य अप्रकृतस्य मूर्त्तिमतो विरहाग्नेः स्थापना-दपह्नुतिभेदः॥ ४५॥

दहनजा न पृथुर्दवथुव्यथा
विरहजैव पृथुर्यदि नेदृशम् ।
दहनमाशु विशन्ति कथं स्त्रियः
प्रियमपासुमुपासितुमुद्धुराः ? ॥ ४६ ॥

हृदि लुठन्ति कला नितराममूः
विरहिणीवधपङ्ककलङ्किताः ।
कुमुदसख्यकृतस्तु बहिष्कृताः
सखि ! विलोकय दुर्विनयं विधेः ॥ ४७ ॥

दहनजेति । दहनात् अग्निदाहात् अग्नेर्वा जायते इति दहनजा अग्निदाहजनिता अग्निजनिता वा दवथुव्यथा सन्तापदुःखं न पृथुः न महती, विरहजा वियोगजनिता दवथुव्यथा एव पृथुः । यदि ईदृशम् एवंविधं न स्यादिति शेषः । तदा स्त्रियः साध्व्यो नार्यः उत्कृष्टा धूर्भारो यासां ता उद्धुराः विरहभारमधिकं मन्यमाना इत्यर्थः सत्यः ऋक्पुरित्यादिना समासान्तोऽकारः । उत्सुका इति पाठे उत्सुका उत्कण्ठिताः सत्य इत्यर्थः अपगताः असवः प्राणा यस्य तम् अपासुं मृतमित्यर्थः प्रियं पतिम् आशु शीघ्रं विलम्बमकृत्वेति यावत् उपासितुम् सेवितुम् अनुमर्त्तुमित्यर्थः कथं दहनम् अग्निं विशन्ति ? तस्मात् विरहव्यथैव अग्निदाहात् ज्यायसीति भावः । अत्र स्त्रीणामग्निप्रवेशकार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४६ ॥

साम्प्रतं चन्द्रस्यातीवोद्दीपकत्वं तन्निन्दाच्छलेन वर्णयति, हृदीति । हे सखि ! विरहिणीनां बधात् नाशात् यः पङ्कः

अयि ! विधुं परिपृच्छ गुरोः कुतः
स्फुटमशिक्ष्यत दाहवदान्यता ?।
ग्लपितशम्भुगलात् गरलात् त्वया
किमुदधौ जड़ ! वा वड़वानलात् ? ॥४८॥
अयमयोगिवधूवधपातकै-
र्भ्रमिमवाप्य दिवः खलु पात्यते।

पापम् अस्त्री पङ्कं पुमान् पाप्मेत्यमरः तेन कलङ्किताः मलिनी-कृताः अमूः कलाः अंशविशेषाः हृदि हृदयमध्ये नितराम् अतिशयेन लुठन्ति प्रसरन्ति, कुमुदैः सख्यं कुर्वन्तीति तथा-भूताः विशुद्धाः स्वच्छा इति यावत् कलास्तु वहिष्कृताः लोक-दर्शनार्थमिति भावः। अतः विधोश्चन्द्रस्य दुर्विनयं दुश्चेष्टितं विलोकय पश्य पापिनः पापांशान् सङ्गोप्य विशुद्धानेव गुण-भागान् वहिः प्रकटयन्तीति भावः॥ ४७॥

अयीति। अयि ! सखि ! त्वं विधुं चन्द्रं परिपृच्छ, किमि-त्याह, गुरोरित्यादि। हे जड़ ! मूढ़ ! त्वया दाहवदान्यता दाहदातृत्वं दाहकत्वमिति यावत्। स्युर्वदान्यस्थूललक्ष्यदान-शौण्डा बहुप्रदे इत्यमरः। ग्लपितः ग्लानिं प्रापितः मलिनी-कृत इत्यर्थः शम्भोर्हरस्य गलः कण्ठः येन तथोक्तात् गरलात् कालकूटात् किं ? वा उदधौ समुद्रे तत्र स्थितिकाले इति शेषः वड़वानलात् वाड़वाग्नेः, कुतो गुरोः कस्मादाचार्य्यात् स्फुटं सम्यक् अशिक्ष्यत शिक्षिता ? शिक्षतेः कर्म्मणि लङ्। काल-कूटस्य वाड़वाग्नेश्च दाहसमश्चन्द्रदाह इति भावः॥ ४८॥

अयमिति। अयं विधुः अयोगिन्यः वियोगिन्य इत्यर्थः; या वध्वः नार्य्यः तासां वधाः नाशाः तैः पातकानि पापानि तैः

शितिनिशादृषदि स्फुटदुत्पतत्-
कणगणाधिकतारकिताम्बरः ? ॥ ४९ ॥
त्वमभिधेहि विधुं सखि ! मद्गिरा
किमिदमीदृगधिक्रियते त्वया ? ।
न गणितं यदि जन्म पयोनिधौ
हरशिरःस्थितिभूरपि विस्मृता ? ॥ ५० ॥

विरहिणीवधजनितैर्दुष्कृतैरित्यर्थः कारणैः भ्रमिं भ्रमणम् अवाप्य प्रापय्य आप्नोतेर्ण्यन्तात् क्त्वो ल्यबादेशः। विभाषा य इति विकल्पादयादेशाभावः शितिनिशा कृष्णपक्षरजनी। निशा निशीथिनी रात्रिरित्यमरः। सैव दृषद् शिला तस्यां स्फुटन्तः पातनविलासु विसरन्तः मङ्गेभ्यः च्यवन्त इत्यर्थः पश्चात् उत्पतन्तश्च ये कणाः विन्दवः क्षुद्रा लवा इत्यर्थः तेषां गणैः सङ्घैः अधिकं यथा तथा तारकितं सञ्जाततारकं तारापुञ्जवत् जातमित्यर्थः अम्बरम् आकाशम् यस्य तथाभूतः सन् अतएव कृष्णपक्षे तारकावाहुल्यं दृश्यते इति भावः। तारकशब्दात् तत्करोतीति ण्यन्तात् कर्मणि क्तप्रत्ययः। णिण्मतोर्लुगिति मतुपो लुक्। दिवः आकाशात् पात्यते खलु निक्षिप्यते किम् ? इत्युत्प्रेक्षा। महापराधिनां नगरपरिभ्रामणं शिलायां पातनेन चूर्णनञ्च युक्त एव दण्ड इति भावः। तस्मात् कृष्णपक्षनिशा विरहिणीनां न तथा सन्तापिनीति तात्पर्य्यम् ॥ ४९ ॥

त्वमिति। हे सखि ! त्वं विधुं चन्द्रं मद्गिरा मम वचसा अभिधेहि ब्रूहि, किमित्याह, किमित्यादि। त्वया भवतेति भावः इदम् ईदृक् वियोगिनीवधरूपं कर्मेत्यर्थः

निपततापि न मन्दरभूभृता
त्वमुदधौ शशलाञ्छन ! चूर्णितः ? ।
अपि मुनेर्जठरार्चिषि जीर्णतां
वत गतोऽसि न पीतपयोनिधेः ? ॥ ५१ ॥

किं कथम् अधिक्रियते अधिकृत्य क्रियते ? नैतदुचितं भवत इति भावः यदि पयोनिधौ समुद्रे रत्नाकरे इति भावः । जन्म न गणितं महाकुलप्रसूतत्वं न विचारितमिति यावत् तदपि हरस्य ईश्वरस्य शिर एव स्थितिभूः वासभूमिः सापि विस्मृता ? सत्संसर्गगुणोऽपि तव नास्तीत्यर्थः । महाकुलप्रसूताः साधुसङ्गिनश्च न कदापि पापमाचरन्तीति भावः ॥ ५० ॥

निपततेति । शशः मृगविशेषः लाञ्छनं चिह्नं तदाकारः कलङ्को वा यस्य तत्सम्बुद्धौ, हे शशलाञ्छन ! हे कलङ्किन्निति भावः कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणमित्यमरः । उदधौ समुद्रे निपतता अमृतलाभार्थं देवासुरकर्त्तृकमन्थनसमये इति भावः मन्दरभूभृता मन्दराख्यगिरिणापि मन्थनदण्डभूतेनेति शेषः । त्वं न चूर्णितः तथा पीतः आचमितः पयोनिधिः सागरो येन तथाभूतस्य । सागराभ्यन्तरे निभृतं स्थित्वा प्रागसुराः समये छद्मनागत्य देवान् ऋषींश्चोत्पीड़यन्ति स्म ते प्रकाश्यमानाः समरे अस्माभिर्हनिष्यन्ते इति देवानामनुरोधात् सागरं पीतवत इत्यर्थः मुनेः अगस्त्यस्य जठरार्चिषि जाठरे अग्नौ वातापिवत् जीर्णतां परिपक्वतां भस्मीभूततामिति यावत् नापि गतोऽसि ? प्राप्तोऽसि ? वतेति खेदे, तथा सति विरहिणीनाम् एवंविधं दुःखं न स्यादिति तात्पर्य्यम् । दुर्जनाः कठोरमाया सता अपि न म्रियन्ते इति भावः ॥ ५१ ॥

किमसुभिर्गलितैः जड़ ! मन्यसे
मयि निमज्जतु भीमसुतामनः ?।
मम किल श्रुतिमाह तदर्थिकां
नलमुखेन्दुपरां विबुधः स्मरः ॥ ५२ ॥

किमिति। रे जड़ ! मूढ़मते ! गलितैः निष्क्रान्तैः असुभिः प्राणैः प्राणवियोगेन हेतुनेत्यर्थः भीमसुतायाः भीमदुहिताया दमयन्त्या मनः मयि चन्द्रे इति आत्मनिर्देशः। निमज्जतु निमग्नं भवतु मदासक्तमस्त्विति यावत्। सम्भावनायां लोट्। इति किम् मन्यसे ? अभिलषसि किम् ? इत्यर्थः। यत्रास्य पुरुष-स्याग्निं वागप्येति वा तं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधी लोमानि वनस्पतीन् केशा अप्सु रोहितञ्च रेतश्च निधीयते इति श्रुतेः। तथाभिलाषस्ते-ऽयमित्याह, ममेति। विबुधो देवः स्मरः कामः वेदव्याख्याता पण्डितश्च स्मरः स्मृतौ स्मरः कामे वेदव्याख्यातरि स्मर इति बलः। सः अर्थः मृतमनश्चन्द्रमेतीत्येवंरूपः यस्याः सा तद-र्थिका तां शेषाद् विभाषेति कप्समासान्तः प्रत्ययस्तस्मात् कात् पूर्वस्यात इदाप्यसुप इतीकारः। श्रुतिं प्रागुक्तवेदवाक्यं नल-मुखेन्दुपरां नलस्य मुखेन्दुः वदनचन्द्रः परो मुख्योऽर्थः यस्याः तां नलमुखरूपचन्द्रविषयामित्यर्थः परं दूरान्यमुख्येष्विति वैजयन्ती। मम आह किल ब्रवीति खलु। सामान्यशब्दस्य क्वचिद् विशेषपरत्वमिति न्यायात् पण्डितेन स्मरेण मीमांसित एवायमर्थो ग्रहीतुं युक्तः तस्मात् जन्मान्तरेऽपि नल एव मे भर्त्ता नान्य इति तया सम्भावनाशायां ते प्रयास इति भावः॥ ५२ ॥

मुखरयस्व यशोनवडिण्डिमं
जलनिधेः कुलमुज्ज्वलयाधुना ।
अपि गृहाण वधूवधपौरुषं
हरिणलाञ्छन ! मुञ्च कदर्थनाम् ॥ ५३ ॥
निशि शशिन् ! भज कैतवभानुताम्
असति भास्वति तापय पाप ! माम् ।

मुखरयस्वेति। हे हरिणलाञ्छन ! मृगाङ्क ! पूर्ववत् कलङ्कि-श्चेति ध्वन्यते। यशसः नवं डिण्डिमम् उद्घोषणवाद्यविशेषं मुखरयस्व मुखरं कुरु उच्चैर्वादयेत्यर्थः वाद्यप्रभेदा डमरुमड्डु-डिण्डिमझर्झरा इत्यमरः। अधुना साम्प्रतं जलनिधेः समुद्रस्य स्वपितुरिति भावः कुलम् उज्ज्वलय उद्दीपय मन्निधनेनेति भावः। वधूवधपौरुषं स्त्रीवधपुरुषकारम् अपि गृहाण स्त्रीवधेन पौरुषं प्रकाशयेत्यर्थः। सोल्लुण्ठनोक्तिरियम्। मम वधेन तव उज्ज्वले कुले कलङ्कः कापुरुषत्वञ्च प्रकटीभविष्यतीति भावः। तस्मात् कदर्थनां कुत्सितोऽर्थः कदर्थः कोः कत्तत्पुरुषे चेति कुशब्दस्य कदादेशः तस्य करणं कदर्थना कदर्थशब्दात् तत्-करोतीति एयन्ताद् युच्। क्लेशप्रदानमित्यर्थः मुञ्च त्यज। यद्वा तदस्तु किन्तु कदर्थनां यन्त्रणादानशीलत्वमित्यर्थः मुञ्च त्यज शीघ्रं मारय न तु समधिकयन्त्रणादानेनेति भावः। अत्रानिष्टस्यार्थस्याविधेयत्वेन विध्याभासत्वात् द्वितीयाक्षेपा-लङ्कारः यदुक्तं दर्पणे। अनिष्टस्य तथार्थस्य विध्याभासः परो मतः। पर आक्षेप इति॥ ५३॥

निशीति। हे पाप! निष्ठुर! शशिन्! चन्द्र! कुमंसी

अहमहन्यवलोकयितास्मि ते
पुनरहर्पतिनिर्धुतदर्पताम् ॥ ५४ ॥

शशकलङ्क! भयङ्कर! मादृशां
ज्वलसि यन्निशि भूतपतिं श्रितः।
तदमृतस्य तवेदृशभूतता-
द्भुतकरी परमूर्द्धविधूननी ॥ ५५ ॥

घातुकः क्रूरः पाप इत्यमरः। निशि रात्रौ। निशा निशीथिनी रात्रिरित्यमरः भास्वति सूर्ये। भास्वद्विवस्वत्-सप्ताश्व-हरिदश्वो-ष्णरश्मय इत्यमरः। असति अविद्यमाने अस्तं गते इति यावत् कैतवभानुतां कैतवेन छलेन भानुतां सूर्य्यतां तत्कार्य्यसन्ताप-कारितामिति भावः। भज मां तापय सन्तप्तां कुरु। यद्वा निशि कैतवभानुतां भज, असति भास्वति मां तापय इति योजना। पुनः किन्तु अहम् अहनि दिवसे ते तव अहर्पतिना दिवाकरेण निर्धुतः अपनीतः दर्पः अहङ्कारो यस्य तस्य भावः तत्ताम् अहरादीनां पत्यादिष्विति रेफादेशः। सूर्य्यनिराकृतगर्वत्व-मित्यर्थः अवलोकयितास्मि द्रष्टास्मि लुटि तास्प्रत्ययः। दुर्जना महतां समक्षं स्वदौर्जन्यं न प्रकाशयितुं शक्नुवन्ति तेषां परोक्षन्तु स्वां प्रकृतिमनुवर्त्तन्ते तत्प्रकाशे तु गर्वनाशः स्यादिति भावः ॥ ५४ ॥

शशीति। हे शशकलङ्क! शशाङ्क! शाश्वत् कलङ्कितेत्यर्थः मादृशां निरपराधानामबलानामिति भावः, भयङ्कर! भीषण! मेघर्त्तिभयेषु खच् इति खच्प्रत्ययः। अरुर्द्विषदित्यादिना मुमागमः। त्वं भूतानां क्षित्यादीनां पञ्चानां पतिं शाश्वात् चेष्टमित्यर्थः आकाशमिति यावत् अथच भूतानां प्रमथानां

श्रवणपूरतमालदलाङ्कुरं
शशिकुरङ्गमुखे सखि ! निक्षिप ।
किमपि तुन्दिलितः स्थगयत्यमुं
स यदि तेन समुच्छ्वसिमि क्षणम् ॥ ५६ ॥

पतिं हरं वेतालस्येति ध्वन्यते श्रितः सन् निशि रात्रौ यत् ज्वलसि दीप्यसे वेतालानां रात्रावेव सञ्चार इति च गम्यते। अन्तर्भूतण्यर्थतायान्तु ज्वलसि विरहिजनान् ज्वलयसीत्यर्थः। तत् तस्मात् अमृतस्य अमृतमयूखस्येति भावः मृततरस्य जीवतश्चेत्यर्थः तव परेषां दर्शकानां विरहिजनानामिति भावः आविष्टानाञ्चेति ध्वन्यते। मूर्द्धानं विधुनोतीति मूर्द्धविधूननी विस्मयात् आवेशाच्च शिरःकम्पविधायिनी ईदृग्भूतता एवम्प्रकारत्वं विरहिजनदाहनस्वरूपतेति यावत् ईदृशप्रेतत्वञ्च अद्भुतकरी चमत्कारिणीत्यर्थः। वेतालो हि यम् आविशति तस्य शिरःकम्पते। त्वन्तु विरहिजनान् कम्पयसीति तव हरशिरोमणेरपि ईदृशकार्य्यकारित्वमद्भुतमिति वाक्यार्थः ॥ ५५ ॥

श्रवणेति। हे सखि ! श्रवणपूरः कर्णभूषणभूतः यस्तमालदलाङ्कुरः तमालपत्रप्ररोहः तं नूतनं तमालकिसलयमित्यर्थः। शशिनः चन्द्रस्य यः कुरङ्गः मृगविशेषः तस्य मुखे वदने निक्षिप अर्पय, किन्तत इत्याह, किमिति। तेन दलाङ्कुरेण किमपि किञ्चिदपि तुन्दिलितः तुन्दिलीकृतः परिपुष्टकलेवर इति भावः सन् स शशिकुरङ्गः यदि अमुं शशिनं स्थगयति आच्छादयति अमयत्विति पाठान्तरं तदा तेन शशिनः स्थगनेन क्षणं कियन्तं कालम् उच्छ्वसिमि जीवामि। रुदादिभ्यः सार्वधातुक इतीडागमः ॥ ५६ ॥

असमये मतिरुन्मिषति ध्रुवं
करगतैव गता यदियं कुहूः ।
पुनरुपैति निरुध्य निवास्यते
सखि ! मुखं न विधोः पुनरीक्ष्यते ॥ ५७ ॥

अयि ! ममैष चकोरशिशुर्मुनेः
व्रजति सिन्धुपिबस्य न शिष्यताम् ? ।
अशितुमब्धिमधीतवतोऽस्य वा
शशिकराः पिबतः कतिशीकराः ? ॥ ५८ ॥

असमये इति । हे सखि ! असमये समयातिक्रमे अयोग्य-समये वा मतिः बुद्धिः उन्मिषति स्फुरति ध्रुवं निश्चितमित्यर्थः । यद् यस्मात् इयं कुहूः अमावास्या सा नष्टेन्दुकला कुहूरित्य-मरः । करं गता करगता हस्तागतैव अथच हस्तास्थमचन्द्र-गतैव गता अतिक्रान्ता, किन्तु पुनः उपैति आगमिष्यति अविलम्बेनेति भावः भविष्यत्सामीप्ये लट् एवमुत्तरत्र । तदा निरुध्य अवरुध्य निवास्यते समीपे एव कृतवासा क्रियते । एवं सति विधोश्चन्द्रस्य मुखं न पुनर्निरीक्ष्यते न पुनर्दृश्यते । पापिष्ठस्य अदर्शनमेव सर्वथा श्रेयस्करमिति भावः ॥ ५७ ॥

अयीति । अयि ! सखि ! एष मम चकोरशिशुः बाल-चकोरः विषपरीक्षार्थं गृहपालित इति भावः । उक्तञ्च काम-न्दकेन । चकोरस्य विरज्येते नयने विषदर्शनादिति । पिबतीति पिबः पाघ्रेत्यादिना शप्रत्यये पिबादेशः । सिन्धोः पिबः सिन्धु-पिबः तस्य समुद्रं पीतवत इत्यर्थः मुनेरगस्त्यस्य शिष्यताम् अन्तेवासितां शिष्यान्तेवासिनौ छात्र इत्यमरः । न व्रजति ?

कुरु करे गुरुमेकमयोघनं
बहिरितो मुकुरञ्च कुरुष्व मे ।
विशति तत्र यदैव विधुस्तदा
सखि ! सुखादहितं जहि तं द्रुतम् ॥ ५९ ॥

व्रजत्येवेति काकुः । अयीत्यत्र अपीति पाठे न व्रजति अपि ? अपरिवार्य्यः व्रजत्येवेत्यर्थः । किं तत इत्याह अशितुमिति । अब्धिं समुद्रम् अशितुं पातुम् अधीतवतः अध्ययनं कृतवतः अधीताब्धिपानकौशलस्येति भावः । अतएव पिबतः अब्धिपान-प्रवृत्तस्य अस्य चकोरशिशोः शशिनः चन्द्रस्य कराः किरणाः कति वा शीकराः ? कणाः ? शीकरोऽम्बुकणः स्मृत इत्यमरः । समुद्रपानप्रवृत्तस्य शशिकरपानं लघौ मात्रेति दण्डापूपिकयैवास्यार्थस्यावगतेरर्थापत्तिरलङ्कारः । तदुक्तं दर्पणे, दण्डा-पूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते इति । एवं सति पुनश्चन्द्र-दर्शनं न स्यात् येन मां तापयेदिति तात्पर्य्यम् । चकोराणां चन्द्रिकापानस्य चकोर्य्य एव चतुराश्चन्द्रिका पानकर्म्मणी-त्यादिवाक्येन प्रसिद्धत्वात् चकोरशिशुरित्यभिधानं बोध्यम् ॥ ५८ ॥

कुर्विति । हे सखि ! एकं गुरुं महान्तम् अयोघनं लौह-मुद्गरं करे हस्ते कुरु धारय, इतः अस्मात् स्थानादिति शेषः बहिः बाह्यदेशे मे मम मुकुरं दर्पणं दर्पणे मुकुरादर्शाविल्य-मरः कुरुष्व च । किं तत इत्याह विशतीति । तत्र मुकुरे विधु-श्चन्द्रः यदैव विशति प्रतिफलति तदा सुखात् अनायासात् तम् अहितं शत्रुं द्रुतं शीघ्रं तत्क्षणमित्यर्थः जहि नाशय अयोघन-प्रहारेणेति भावः । हन्तेर्जोटि सिपि हिरादेशः हन्तेर्ज इति

उदर एव धृतः किमुदन्वता
न विषमो वड़वानलवद्विधुः ?।
विषवदुज्झितमप्यमुना न सः
स्मरहरः किममुं बुभुजे विभुः ? ॥ ६० ॥
असितमेकसुराशितमप्यभूत्
न पुनरेष पुनर्विशदं विषम्।

जादेशस्यासिद्धवदत्राभावादित्यसिद्धत्वान्न हेर्लुक्। तथाच चन्द्रस्य नाशात् मम तद्दर्शनजा पीड़ा न भविष्यतीति भावः॥ ५९ ॥

उदर इति। विषमः निष्ठुरः विषेण सा उपमा यस्य तथोक्तः विषोपम इति वार्थः विधुश्चन्द्रः उदन्वता समुद्रेण उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णव इत्यमरः। "उदन्वानुदधौ चेति निपातः। वड़वानलवत् वाड़वाग्निना तुल्यं तेन तुल्यं क्रिया चेद् वतिरिति वतिप्रत्ययः। उदरे जठरे स्वगर्भे इत्यर्थः किं कथं न धृतः ? अथवा विभुः समर्थः स्मरं कामं हरतीति स्मरहरः शम्भुः अमुना उदन्वता उज्झितं त्यक्तमपि अमुं विधुं विषवत् विषेण तुल्यं कालकूटवदित्यर्थः पूर्ववद् वतिप्रत्ययः। किं कथं न बुभुजे न भक्षितवान् ? यथा समुद्रः वाड़वाग्निं स्वगर्भे संस्थाप्य कृपया जगन्ति दाहात् रक्षितवान् तथा अस्यापि शशिनः स्वगर्भे एव स्थापने कृते माहृशविरहिजनरक्षाजनितसुकृतलाभः स्यात् तत्कार्यं तेन तव कृतम् ? यथा प्रभुर्भगवान् हरः स्मरं विनाश्य कालकूटञ्च भक्षयित्वा जगतां हितमकरोत् तथा अमुं विधुमपि भावदैत्य अपहृत्वा यदि भक्षयेत् तदापि माहृशविरहिजनपीड़ा पुनर्न भवेत् तत् कार्यं तेन तथा न कृतमिति तात्पर्य्यार्थः॥ ६० ॥

अपि निपीय सुरैर्जनितक्षयं
स्वयमुदेति पुनर्नवमार्णवम् ॥ ६१ ॥
विरहिवर्गबधव्यसनाकुलं
कलय पापमशेषकलं विधुम् ।
सुरनिपीतसुधाकमपापकं
ग्रहविदो विपरीतकथाः कथम् ? ॥ ६२ ॥

असितमिति । अर्णवे सागरे जातमार्णवं सामुद्रमित्यर्थः तत्र जात इत्यण्प्रत्ययः । असितं श्यामं विषं कालकूटम् एकेन सुरेण देवेन एकमात्रेण हरेणेत्यर्थः यद्वा एकः अद्वितीयः मुख्यो वा सुरः देवः तेन महादेवेनेत्यर्थः एके मुख्यान्यकेवला इत्यमरः । अशितमपि ग्रस्तमपि भक्षितमपीत्यर्थः पुनर्न अभूत् नोदपद्यत किन्तु एषः चन्द्रः पुनः आर्णवं विशदं स्वच्छं शुभ्रमित्यर्थः विषं सुरैः बहुभिर्देवैरित्यर्थः न तु एकेन द्वाभ्यां त्रिभिर्वेति भावः। निपीय प्रथमं पिबते वह्निरित्याद्युक्तनियमेन निःशेषं पीत्वा जनितः क्षयः नाशः यस्य तथाभूतमपि सम्यक् क्षयं नीतमपि स्वयं नवं नूतनं सत् पुनः उदेति उद्गच्छति । चित्रमेतदिति भावः । अत्रोपमानस्य कालकूटस्य उपमेयात् चन्द्रात् न्यूनता चन्द्रस्य चाधिक्यमिति व्यतिरेकालङ्कारः तदुक्तं दर्पणे, आधिक्यमुपमेयस्योपमानान्न्यूनताथवा । व्यतिरेक इति । पुनरेव पुनः इत्यत्र न पुनरेव विधुः इति पाठान्तरम् ॥ ६१ ॥

विरहीति । हे सखि ! विरहिणां वर्गः समूहः तस्य बध एव व्यसनम् अशुभकर्म यद्वा बधे यत् व्यसनम् आसक्तिः तेन आकुलं व्यस्तं तत्र निरतमित्यर्थः व्यसनस्त्वशुभे सक्तौ पानस्त्री-

विरहिभिर्बहुमानमवापि यः
स बहुलः खलु पक्ष इहाजनि ।
तदमितिः सकलैरपि यत्र तैः
व्यरचि सा च तिथिः किममीकृता ? ॥६३॥

भगयादिषु दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे इति मेदिनी। अशेषाः समग्राः कलाः यस्य तम् अशेषकलं सम्पूर्णमण्डलमित्यर्थः विधुं चन्द्रं पापं दुराचारं तथा सुरैः देवैः निपीता निःशेषेण पीता प्रथमां पिबते वह्निरित्यादिप्रागुक्तनियमेनेति भावः। सुधा यस्य तं क्षीणमिति भावः शेषिकः कःसमासान्तः पापोऽन्यतरस्यामिति कप्रार्थस्याभावः। विधुम् अपाप एव अपापकः पापशून्यः तं शुभमित्यर्थः कलय अवधारय। किन्तु ग्रहविदः ज्योतिर्विदः कथं विपरीता कथा येषां ते विपरीतकथाः क्षीणेन्द्वर्कार्किभूपुत्राः पापास्तत्संयुतो बुधः। पूर्णचन्द्रबुधाचार्यशुक्रास्ते स्युः शुभग्रहा इत्येवं विरुद्धभाषिणः भवन्तीति शेषः पूर्णचन्द्रस्य शुभग्रहत्वं क्षीणचन्द्रस्य पापग्रहत्वमिति मतं भ्रमविलसितमेव अनुभवविरोधादिति भावः ॥ ६२ ॥

विरहिभिरिति। यः पक्षः कृष्ण इति भावः विरहिभिः वियोगिभिः बहुमानं बहुसत्कारम् अवापितः प्रापितः ह्रासितचन्द्रस्य क्षयकरणादिति भावः अवपूर्वादाप्नोतेर्ण्यन्तात् कर्मणि लुङ् गतिबुद्धीत्यादिना अणिकर्तुः कर्मत्वं ण्यन्ते कर्तुश्च कर्मण इत्यभिधानात्। सः पक्षः विरहिभिर्बहुमत इति भावः। इहास्मिन् लोके बहु सम्मानमित्यर्थः लाति गृह्णातीति बहुलः योगार्थनिष्पन्न इति भावः। लातोऽनुपसर्गे कप्रत्ययः

स्वरिपुतीक्ष्णसुदर्शनविभ्रमात्
किमु विधुं ग्रसते स विधुन्तुदः ?।
निपतितं वदने कथमन्यथा
बलिकरम्भनिभं निजमुज्झति ॥ ६४ ॥

न तु वक्रोमलङ्घितेति भावः। अजनि खलु? जातः किम्? इत्युत्प्रेक्षा बहुलः कृष्णपक्षेऽस्मादिति शब्दार्णवः। तथा यत्र तिथौ सकलैरपि सर्वैरपि तैर्विरहिभिः तस्य बहुमानस्य अमितिः अपरिमितता व्यरचि कृता या तिथिः अन्यापेक्षया अपरिमितसम्मानभाजनं कृतेत्यर्थः सम्यक् चन्द्रक्षयकरणादिति भावः। सा तिथिः न मा परिमाणं बहुमानस्येति भावः। यस्याः सा अमा तत्कृता अमीकृता अमानाम्नीकृतेत्यर्थः। मातेर्भावार्थे सम्पदादित्वात् क्विपि नञ्समासे मत्वर्थीये चाकारप्रत्यये यस्येति लोपे अजाद्यतष्टाप्। किम् इति उत्प्रेक्षा। न तु अमा सहभावोऽस्यां चन्द्रार्कयोरिति व्युत्पत्तिः। अमेति सहार्थमव्ययं ततो भावप्रधानान्मत्वर्थीयाकाराट्टाप्। अमावास्या त्वमावस्या तथैवामावसीति च। अमावसी च दर्शः स्यादमा सूर्य्येन्दुसङ्गम इति शब्दरत्नावली। चन्द्रक्षयकारित्वात् कृष्णपक्षः एव विरहिणां सम्मतः तत्रापि सम्यक्क्षयकरणादमावास्या अतिशयेन सम्मानितेति भावः। अत्रोत्प्रेक्षालङ्कारः ॥ ६३ ॥

स्वेति। स प्रसिद्धो विधुन्तुदः राहुः तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुद इत्यमरः। स्वस्य रिपुः शत्रुः घातक इत्यर्थः विष्णुरिति भावः तस्य तीक्ष्णः निशितः यः सुदर्शनः तदाख्यं चक्राख्यं तस्य विभ्रमः स एव एष इति विशिष्टभ्रमः तस्मात् विधुं

वदनगर्भगतं न निजेच्छया
शशिनमुज्झति राहुरसंशयम्।
अशित एव गलत्ययमत्ययं
सखि! विना गलनालबिलाध्वना ॥ ६५ ॥

चन्द्रं ग्रसते कवलयति किमु? किमु इत्युत्प्रेक्षा। पूर्ववैरस्मरणादिति भावः। अन्यथा तदक्षमे इत्यर्थः वदने मुखे निपतितं निजं स्वभक्षणीयं बलये उपहारार्थं पूजार्थं वा बलिः पूजोपहारयोरिति विश्वः। यः करम्भः दधिमिश्रितशक्तवः करम्भो दधिशक्तव इत्यमरः। तन्निभं तत्सदृशम् एनम्। करम्भं राहवे दद्यादिति शास्त्रात् राहुग्रहपूजायां करम्भदानं प्रसिद्धम्। कथम् उज्झति? त्यजति? नैव त्यजतीत्यर्थः। चन्द्रो हि पूर्ववैरस्मरणात राहुणा ग्रस्त एव न पुनस्त्यज्यते,सुदर्शन एव इति भ्रमात् पूर्ववैरं स्मरता ग्रसते किन्तु तालुच्छेदभयात् उद्गीर्य्यते एवेति भावः ॥ ६४ ॥

वदनेति। हे सखि! राहुः वदनस्य गर्भः अन्तरं तं गतः तं मुखमध्यप्रविष्टमित्यर्थः शशिनं चन्द्रं निजेच्छया आत्मनः अभिलाषेण न उज्झति न उद्गिरति, असंशयं संशयो नास्तीत्यर्थः अभावार्थेऽव्ययीभावः : यद्वा नास्ति संशयो यत्र तत् असंशयमिति उज्झतीति क्रियाविशेषणम्। किन्तु अयं शशी अशित एव राहुणा ग्रस्त एव अत्ययं कृच्छ्रम् आयासमिति यावत् अत्ययोऽतिक्रमे कृच्छ्रे इति वैजयन्ती। विना गलं ग्रीवेत्यर्थः नलनालं कण्ठनलीत्यर्थः तदेव बिलं रन्ध्रं तदेव अध्वा मार्गः तेन गलति स्वयमेव निःसरति राहोः शिरोमात्रत्वेन जठरप्रवेशाविरहादस्य शशिनोऽजीर्णत्वमिति भावः। अत्राप्युत्प्रेक्षालङ्कारः ॥ ६५ ॥

ऋजुदृशः कथयन्ति पुराविदो
मधुभिदं किल राहुशिरश्छिदम्।
विरहिमूर्द्धभिदं निगदन्ति न
क्व नु शशी यदि तज्जठरानलः? ॥ ६६ ॥

स्मरसखौ रुचिभिः स्मरवैरिणा
मखमृगस्य यथा दलितं शिरः।

ऋजुदृश इति। ऋजुः सरला दृक् येषां ते ऋजुदृशः तत्कालदर्शिनः तात्कालिककार्य्यमात्रदर्शिनः न तु तत्फलदर्शिन इति भावः पुराविदः पौराणिकाः पूर्ववृत्तनिबन्धकारकाः इत्यर्थः मधुभिदं मधुर्नामदैत्यविशेषः तं भिनत्तीति तथोक्तं मधुसूदनं विष्णुमित्यर्थः राहोः शिरः छिनत्तीति तथोक्तं राहुशिरश्छिदं राहुमस्तकच्छेदिनं कथयन्ति किलेति प्रसिद्धौ वार्त्तायां वा, वार्त्ता सम्भाव्ययोः किलेत्यमरः। विरहिणां मूर्द्धानं भिनत्तीति तथोक्तं विरहिमूर्द्धभिदं विरहिमस्तकच्छेदिनमित्यर्थः न निगदन्ति? न कथयन्ति? काकुः तथैव कथनीयमिति भावः। कथमित्याह, क्वेति। यदि तस्य राहोः जठरानलः जाठरोऽग्निः स्यादिति शेषः तदा शशी चन्द्रः क्व? कुत्र वर्त्तते नु? नु वितर्के, न कुत्रापि वर्त्ततेत्यर्थः राहोर्जठराग्निना पचनमेवासौ दग्धो भवेदिति भावः। तथाच राहुशिरश्छेदेन तज्जठराग्नेः सुतरां चयकारणात् तेन गिलितमपि शशिनं परम्परया समुज्जीवयति यतः विष्णुः विरहिशिरश्छिदिति नाम्ना व्यपदेष्टुं युक्त इति तात्पर्य्यार्थः॥६६॥

स्मरेति। रुचिभिः कान्तिभिः सौन्दर्य्यैरित्यर्थः स्मरस्य कामस्य सखायौ स्मरसखौ कन्दर्पसदृशावित्यर्थः तत्सुहृदौ च

सपदि संदधतुर्भिषजौ दिवः

सखि ! तथा तमसोऽपि करोतु कः ? ॥ ६७॥

नलविमस्तकितस्य रणे रिपोः

मिलति किं न कबन्धगलेन वा ।

मृतिभिया भृशमुत्पततस्तमो-

ग्रहशिरस्तदसृग्दृढबन्धनम् ? ॥ ६८ ॥

दिवः स्वर्गस्य भिषजौ वैद्यौ अश्विनीसुतौ भिषग् वैद्यश्चिकित्-सक इति स्वर्वैद्यावश्विनीसुताविति चामरः । स्मरस्य कामस्य वैरिणा शत्रुणा शिवेन दलितं छिन्नं मखमृगस्य मख एव मृगः मखमृगः तस्य मृगरूपधारिणो यज्ञस्येत्यर्थः शिरः सपदि तत्क्षणं सन्दधतुः संयोजयामासतुः शत्रोः शत्रुर्मित्रमेव मित्रस्य मित्रं मित्रमेव तदयं यज्ञः स्मरस्य मित्रं तस्मात् स्मरमित्रा-भ्यामश्विनीकुमाराभ्यां मित्रमित्रस्य तस्य शिरःसंयोजनं युक्त-मेवेति भावः । किन्तु सखि ! तमसः राहोः अपि कः तथा करोतु ? सम्भावनायां लोट् । न कमपि तच्छिरःसंयोगक्षमं सम्भावयामीति भावः । तथा सति तज्जठराग्निना चन्द्रभक्षी-करणादस्मादस्यामीदृशी दुर्दशा न स्यादिति भावः । पुरा दक्षाध्वरे अवमानितेन हरेण क्रोधात् तस्य यज्ञस्य मृगरूपेण पलायमानस्य शिरश्छिन्नं पश्चादश्विनीकुमाराभ्याञ्च संयोजित-मिति पुराणवार्त्ता चात्र अनुसन्धेया । ततो वै तौ यज्ञस्य शिरः-प्रत्यधत्तामिति श्रुतिः तच्छिरसः पुनः सन्धाने प्रमाणमिति ॥ ६७॥

नलेति । वा पक्षान्तरे अथवेत्यर्थः नलेन रणे संग्रामे विगतं मस्तकं यस्य स विमस्तकः तथाभूतः कृत इति विम-स्तकितः तस्य छिन्नशिरस इत्यर्थः मृतिभिया रणभूमावस्थाने

सखि ! जरां परिपृच्छ तमःशिरः
सममसौ दधतापि कबन्धताम् ।
मगधराजवपुर्दलयुग्मवत्
किमिति न व्यतिसीव्यति केतुना ? ॥६९॥

मरणाधइ्येत्यर्थः भृशम् अत्यर्थम् उत्पतत: उच्छ्छत: ऊर्ध्वं गच्छत इत्यर्थः रिपोः शत्रोः कस्यचिदिति शेषः कबन्धगलेन छिन्नमस्तककलेवरकण्ठेन कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्ध-कलेवरमित्यमरः। सह तमोग्रहस्य राहुग्रहस्य तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुद इत्यमरः। शिरः शिरोमात्रस्यैव राहुत्वेन शास्त्रे कीर्त्तनात् । तस्य कबन्धगलस्य अङ्कना रात्रेण रुद्धं यथा तथा बन्धनं समासक्तिं न मिलति किम् ? न सङ्गच्छते किम् ? इत्युत्प्रेक्षा। तथा सति तज्जठराग्निना चन्द्रे जीर्णे अत्याहग्रासमीदृशी पीड़ा न भवेदिति भावः ॥६८॥

सखीति। हे सखि ! त्वं जरां जरानाम्नीं निशाचरीं परिपृच्छ तां प्रति प्रश्नं कुरु, असौ जरा तमसः राहोः शिरः कबन्धताम् अपमूर्द्धकलेवरतां दधतापि धारयतापि केतुना केतुग्रहेण समं सह साकं सार्द्धं समं सहेत्यमरः। मगधानां तदाख्यदेशविशेषाणां राजा मगधराजः जरासन्धः तस्य वपु-र्दलयोः शरीरखण्डयोर्युग्मवत् द्वयमिव किमिति कथं न व्यति-सीव्यति ? न सन्धत्ते ?। त्वया पुरा यथा मगधराजस्य शरीर-खण्डद्वयं सङ्घटितं तथा राहुशिरः तच्छरीरेण केतुना कथं न संयोज्यते, अवश्यमेव तत्संयोजनं तव युक्तमिति भावः तथा सति तज्जठराग्निना चन्द्रस्यावश्यं जीर्णत्वादत्याहग्रासमीदृग्दुःखं न स्यादिति भावः ॥ ६९ ॥

वद विधुन्तुदमालि ! मदीरितै:
त्यजसि किं द्विजराजधिया रिपुम् ? ।
किमु दिवं पुनरेति यदीदृश:
पतित एष निषेव्य हि वारुणीम् ? ॥ ७० ॥
दहति कण्ठमयं खलु तेन किं
गरुड़वद् द्विजवासनयोज्झित: ? ।

वदेति । हे आलि ! सखि ! आली सखी वयस्या चेत्यमर: । त्वं मम ईरितै: वचनै: विधुन्तुदं राहुं वद कथय, किमित्याह, त्यजसीति । हे राहो ! त्वं रिपुं शत्रुं विधुं विधुमिति पाठान्तरं द्विजराजधिया अयं द्विजराज: ब्राह्मणश्रेष्ठ: चन्द्रश्च । द्विजराज: शशधरो नक्षत्रेश: क्षपाकर इति । दन्तविप्राण्डजा द्विजा इति चामर: । इति धिया ब्राह्मणो न हन्तव्य इति बुद्धेरित्यर्थ: किं कथं त्यजसि ? यदि एष चन्द्र: ईदृश: द्विजराज इत्यर्थ: स्यादिति शेष: तदा वारुणीं सुरां प्रतीचीञ्च वारुणी गण्डदूर्वायां प्रतीची सुरयोरपीति विश्व: । निषेव्य पीत्वा आश्रित्य च पतित: पातकी अस्तं गतश्च । पुन: किमु किमिति दिवं स्वर्गम् आकाशञ्च एति ? गच्छति ? । पतितस्य ब्राह्मणस्य स्वर्गगमने अनधिकारिता प्रसिद्धा तस्मात् पतितस्य अस्य ब्राह्मणस्य हत्यायां न दोष इति भाव: । तथा सति अस्माकं पीड़ाशान्तिर्भवेदिति तात्पर्य्यम् ॥ ७० ॥

दहतीति । हे विधुन्तुद ! विधुपीड़क ! राहो ! अयं विधु: निश्चित इति शेष: द्विजवासनया द्विजो ब्राह्मणोऽयमिति वासना पूर्वसंस्कार: तया कण्ठं गलं दहति तेन तद्दाहकालेन हेतुनेत्यर्थ: गरुड़वत् गरुड़ेन तुल्यं तेन तुल्यं क्रिया चेद्वतिरिति

प्रकृतिरस्य विधुन्तुद ! दाहिका
मयि निरागसि का वद विप्रता ? ॥ ७१ ॥
सकलया कलया किल दंष्ट्रया
समवधाय यमाय विनिर्मितः ।
विरहिणीगणचर्वणसाधनं
विधुरितो द्विजराज इति स्मृतः ॥ ७२ ॥

वतिप्रत्ययः । उज्झितः उद्गीर्णः किम् ? यद्वा गरुड़वत् गरुड़स्येव तव कण्ठं दहतीति योजना तथात्वे तत्र तस्येवेति वतिप्रत्ययः । अथवा किं कथम् उज्झितः परित्यक्तः ? नैव परित्यक्तुं युक्त इति भावः । नन्वस्य विप्रत्वात् कथं न दाहकत्वमित्यत्राह, प्रकृतिरिति । अस्य विधोः प्रकृतिः स्वभाव एव निरागसि मयि निरपराधायां मद्विधायां स्त्रियामिति भावः दहतीति दाहिका दहनकारिणी आगोऽपराधो मन्तुश्चेत्यमरः । विप्रता का ? वद ब्राह्मणा हि अपराधकारिणं जनं शापेन दहन्ति न तु निरागसं जनम्, अस्य तु निरपराधस्त्रीघातित्वात् न ब्राह्मण्यमस्तीति भावः । पुरा किल अमृताहरणेन मातृदास्यं निराकरिष्यता गरुड़ेन स्वर्गं प्रति प्रस्थितेनाऽपथि पितरमागच्छन्तं कश्यपं दृष्ट्वा क्षुधया भोजनार्थं कोऽभ्युपाय इति निवेदिते स मुनिः पथि कश्चिम्लेच्छनिवासं प्रदर्शयन् अमीत्याः त्वया भक्षणीया विप्र-वर्जमित्युवाच । स तु तथोक्तो महत्मान् कथमहं तमवक्षं विप्रं ज्ञास्यामीत्युवाच । ततः कश्यपः येन भक्षितेन तव कण्ठदाहो भविता तं विप्रं मत्वा तत्क्षणं परित्यक्ष्यसि इति अब्रवीत् । तेन च तथैव पितुरादेशेन कृतमिति पौराणिकी वार्त्ता ॥ ७१ ॥

नन्वस्य द्विजसंज्ञा कथमित्यत्राह, सकलयेति । सकलया

स्मरमुखं हरनेत्रहुताशनात्
ज्वलदिदं चक्षषे विधिना विधुः ।
बहुविधेन वियोगिवधागसा
शशमिषादथ कालिकयाङ्कितः ॥ ७३ ॥

समग्रया कलया दंष्ट्रया दन्तेन जातावेकवचनम् । सर्वाभिः कलाभिरेव दंष्ट्राभिरित्यर्थः यमाय अन्तकाय तस्याहार्यार्थमिति भावः समवधाय सम्यग् अवधानं कृत्वा विरहिणीगणानां वियोगिनीवर्गाणां चर्वणस्य साधनम् उपायभूतः विधुश्चन्द्रः विनिर्मितः विशेषेण सृष्टः विधिनेति शेषः । अतः कारणात् दंष्ट्रामयत्वेन निर्मितत्वादित्यर्थः द्विजैर्दन्तैः राजते इति व्युत्पत्त्या द्विजराज इति स्मृतः कथितः दन्तविप्राण्डजा इत्यमरः । न तु द्विजेषु ब्राह्मणेषु राजते वा द्विजानां राजेति व्युत्पत्त्या द्विजराज इति ब्राह्मणानामीदृशनिष्ठुरव्यवहारायोगादिति भावः ॥ ७२ ॥

ज्वलदिति । विधुश्चन्द्रः विधिना दैवेन तत्तदुष्क् तजनिताऽदृष्टेनेति भावः । कर्त्रा ज्वलत् हरलोचनार्चिषि दहने इति भावः । इदं स्मरस्य कामस्य मुखं हरस्य नेत्रमेव हुताशनः यद्वा नेत्रादुदितः हुताशनः अग्निः तस्मात् चक्षषे आकृष्टं नूनमिति शेषः । अथ आकर्षणानन्तरं बहुविधेन विविधरूपेण वियोगिनां वध एव आगः अपराधः तेन हेतुना कर्त्रा वा शशमिषात् शशच्छलात् कालिकया कालिम्ना अङ्कितः चिह्नितः । यद्वा विधिना विधुरूपम् इदं स्मरमुखं ज्वलत् हरनेत्रहुताशनात् चक्षषे आकृष्टं तेन अग्निदाहेन ज्वलितया अथ यद्वा बहुविधेन वियोगिवधागसा जनितेनेति शेषः कालिकया दाहपापोभय-

इति विधोर्विविधोक्तिविगर्हणं
व्यवहितस्य वृथेति विमृश्य सा ।
अतितरां दधती विरहज्वरं
हृदयभाजमुपालभत स्मरम् ॥ ७४ ॥

हृदयमाश्रयसे वत मामकं
ज्वलयसीत्यमनङ्ग ! तदेव किम् ? ।
स्वयमपि क्षणदग्धनिजेन्धनः
क्व भवितासि हताश ! हुताशवत् ? ॥७५॥

जनितया श्यामिकयेत्यर्थः शशमिषात् शशाङ्कव्याजात् अङ्कितः किमिति योजना। अत्र प्रकृतशशप्रतिषेधेन तदन्यकालिकास्थापनादपह्नुतिः तया समुत्थापितोत्प्रेक्षालङ्कारः इत्युभयोरङ्गाङ्गिभावेन सङ्करः ॥ ७३ ॥

इत्येवं चन्द्रं निर्भर्त्स्य साम्प्रतं कामं विनिन्दति, इतीति। अतितराम् अतिशयेन अव्ययादाम्प्रत्ययः। विरहज्वरं वियोगपीड़ां दधती धारयन्ती सा दमयन्ती इत्येवं व्यवहितस्य दूरस्थितस्य विधोश्चन्द्रस्य विविधाभिः बहुप्रकाराभिः उक्तिभिः वचनैः विगर्हणं विनिन्दनं वृथा निरर्थकम् अरण्यरोदनमिवेत्यर्थः विमृश्य विविच्य हृदयभाजं चित्तस्थं सन्निहितमिति भावः स्मरं कामम् उपालभत निन्दितवतीत्यर्थः। निन्द्यस्य जनस्य अव्यवहितनिन्दाश्रवणेन एव निन्दायाः फलं नो चेत् स्वप्रलापमात्रमिति भावः ॥ ७४ ॥

हृदयमिति। हे अनङ्ग ! ममेदं मामकं मदीयमित्यर्थः तवकममकावेकवचने इत्यपि ममकादेशः। हृदयं चित्तम्

पुरभिदा गमितस्त्वमदृश्यतां
त्रिनयनत्वपरिप्लुतिशङ्कया ।
स्मर ! निरैक्ष्यत कस्यचनापि न
त्वयि किमक्षिगते नयनैस्त्रिभिः ? ॥ ७६ ॥

आश्रयसे यदि, आश्रित्य तिष्ठसि चेत्, तदा तदेव हृदयमेव इत्थम् अनेन प्रकारेण किं कथं ज्वलयसि पीड़यसीत्यर्थः, हे हुताश ! दुर्बुद्धे ! विफलमनोरथ ! भाविफलपर्य्यालोचनाविरहादिति भावः । त्वं क्षणेन अल्पेनैव कालेन दग्धं भस्मीकृतं निजं स्वम् इन्धनं काष्ठं मद्धृदयलक्षणमिति भावः येन तथाभूतः दग्धाश्रयः सन्नित्यर्थः स्वयम् अपि हुतम् अश्नातीति हुताशः अग्निः कर्त्तर्य्यण्प्रत्ययः । तद्वत् क्व ? कुत्र भवितासि, ~~न कुत्रापी~~-त्यर्थः स्वाश्रयभक्षकस्त्वं न कुत्रापि स्थानं लप्स्यसे इति यावत् । अनद्यतने लुट् । परहिंसायामीदृशी प्रवृत्तिस्ते, यत् स्वाश्रयनाशमपि न पर्य्यालोचयसीति भावः । उपमालङ्कारः ॥ ७५ ॥

पुरभिदेति । हे स्मर ! त्वं पुरभिदा त्रिपुरारिणा हरेण त्रिनयनत्वस्य नेत्रत्रयधारणस्य परिप्लुतिः वैफल्यम् अतिप्रसङ्गो वा तस्याः शङ्कया भयेन क्षुभ्नादित्वात् णत्वाभावः । अदृश्यतां अदर्शनत्वं गमितः तृतीयलोचनार्चिषा दग्ध इत्यर्थः गतिबुद्धीत्यादिना अणिकर्त्तुः कर्म्मत्वे तत्रैव क्तप्रत्ययः स्मन्ते कर्त्तुश्च कर्म्मणश्च इति वचनात् । अथवा, त्वम् अक्षिगतः इति शेषः पृथिव्यविकृष्टस्य अक्ष्णा दग्धुम् अशक्यत्वात् द्वेष्यस्यापि अदहनत्वात् अक्ष्णोऽदृश्यताम् अदर्शनीयत्वं प्रापित इति भावः । अतएव कस्यचनापि यस्य कस्यचिदपि लोकस्य अक्षिगते दृष्टिगोचरे द्वेष्ये च त्वयि । द्वेष्ये त्वक्षिगतो वध्य इत्यमरः ।

 

सहचरोऽसि रतेरिति विश्रुतिः
त्वयि वसत्यपि मे न रतिः कुतः ? ।
अथ न सम्प्रति सङ्गतिरस्ति वा
अनुमृता न भवन्तमियं किल ? ॥ ७७ ॥

त्रिभिः नयनैः किं न निरैक्ष्यत ? न निरीक्षितम् ? अपितु सर्वस्यैव जनस्य त्वयि त्रिभिर्नयनैः निरीक्षितं स्यादित्यर्थः त्वां दुराचारं ये पश्यन्ति ते एव त्रिनयनवत् त्वां नाशयन्तीति भावः। तस्मात् त्रिनेत्रस्य त्रिनेत्रत्वं व्यर्थमेवेति भावः। अत्र निरैक्ष्यत इत्यस्य त्वयीति कर्मत्वौचित्येऽपि अनेकशक्तियुक्तस्येति न्यायेन मातरि प्रहृतमित्यादिवदाधारत्वविवक्षया सप्तमी ततश्चाविवक्षितकर्मकादीक्षतेर्भावे लङ्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेति वचनात्। अत्र निरैक्ष्यतेत्यत्र निरैक्ष्यतेति पाठे त्वयि अक्षि गते सति कस्यचन जनस्य त्रिभिर्नयनैः न निरैष्यत न निर्गतैरभविष्यत? अपितु सर्वस्यैवेत्यर्थः। सर्व एव तव दुर्विनीतताप्रतीकारार्थं तपश्चरणेन त्रिनयनत्वमासाद्य त्वामधक्ष्यदिति भावः। यद्वा त्वयि अक्षिगते सति कस्यचन जनस्य त्रिभिर्नयनैः न निरैष्यत न निरगमिष्यत ? अपितु सर्वस्यैवेत्यर्थः। सर्व एव त्वद्दर्शनेन ललाटे ज्वलदग्निरिव भवेत् ततश्च तन्मन्युना अवश्यमेव विध्वंसः स्यात् परहिंसाप्रवृत्तस्य एषा एव गतिरिति भावः। उत्प्रेक्षालङ्कारः ॥ ७६ ॥

सहचर इति। हे स्मर ! त्वं रतेः स्वपत्न्याः प्रीतेश्च रतिः स्मरप्रियायाञ्च रागे च सुरते रतिरिति विश्वः। सह चरसीति सहचरः समभिव्याहारी असि भवसि इति विश्रुतिः प्रसिद्धिरस्तीति शेषः यद्वा विश्रुतिर्विरुद्धा श्रुतिः श्रवणम् अलीकमेतत्

रतिवियुक्तमनात्मपरज्ञ ! किं
त्वमपि मामिव तापितवानसि ?।
कथमतापभृतस्तव सङ्गमात्
इतरथा हृदयं मम दह्यते ?॥ ७८॥

अवश्यमित्यर्थः कथमित्युच्यते तत्राह त्वयि वसति अपि तिष्ठति अपि मम हृदये इति शेषः कुतः कस्मात् मे मम रतिः प्रीतिः सन्तोष इत्यर्थः न अस्तीति शेषः रतिसहचरेण सह रतेरवश्य-मेव सहावस्थानं युक्तं मम तु सा नास्तीति श्रुतेर्विरुद्धत्वमिति भावः। अथवा सम्प्रति इदानीं वां युवयोः सङ्गतिः सहवासः नास्ति, यतः इयं रतिः भवन्तं हरनयनदग्धमिति भावः न किल नैव अनुस्मृता सहमृता। अन्यारोहणं नैव ... इत्यर्थः अतस्तस्यास्तव च साम्प्रतं पृथक्स्थितिरिति भावः। अत्र प्रीतिलक्षणाया रतेः तदाख्यस्मरप्रियया सहाध्यवसायाद् भेदे-ऽप्यभेदरूपातिशयोक्तिरलङ्कारः॥ ७७॥

रतीति। आत्मानं स्वं परञ्च जानातीति आत्मपरज्ञः स न भवतीति अनात्मपरज्ञः तत्सम्बुद्धौ। हे अनात्मपरज्ञ ! आत्मनः परस्य च घातने निर्विवेक इत्यर्थः त्वं मामिव रतिवियुक्तं त्वमपि आत्मानमपि किं कथं तापितवान् असि ? इतरथा आत्मतापनादृते इत्यर्थः तापं बिभर्तीति तापभृत् न तापभृत् अतापभृत् तस्य तव सङ्गमात् सम्बन्धात् मम हृदयं कथं दह्यते ? यतस्तव स्पर्शादेव तापः तस्मात् त्वमपि तापितः। न खलु अत-प्तेन केनापि वस्तुना किमपि ताप्यते अग्निरेवात्र प्रमाणमिति भावः। तस्मादीदृशः परापकारी त्वं यत्तद्व्यसनेन आत्मनोऽप-कारमपि न पश्यसीति तात्पर्य्यम्॥ ७८॥

अनुममार न मार ! कथं नु सा
रतिरतिप्रथितापि पतिव्रता ? ।
विरहिणीशतघातनपातकी
दयितयापि तयासि किमुज्झितः ? ॥ ७९ ॥

सुगत एव विजित्य जितेन्द्रियः
त्वदुरुकीर्त्तितनुं यदनाशयत् ।
तव तनूमवशिष्टवतीं ततः
समिति भूतमयीमहरद्धरः ॥ ८० ॥

अनुममारेति। मारयतीति मारः तत्सम्बुद्धौ, हे मार ! सर्वजन्तुमारणशील ! मदन ! मदनो मन्मथो मार इत्यमरः । सा पतिव्रता साध्वीति अतिशयेन प्रथिता ख्यातापि रतिः स्वप्रिया कथं न अनुममार ? न त्वामन्वारुरोह ? नु वितर्के । अनुमरणं तस्या उचितमेव अन्यथा आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा। मृते म्रियेत या स्त्री सा साध्वी ज्ञेया पतिव्रतेति पातिव्रत्यभङ्गप्रसङ्गादिति भावः। अथवा तयापि तादृश्या पतिप्राणया दयितया प्रिययापि विरहिणीनां शतस्य घातनेन पातकी अतिपापीयान् इति हेतुगर्भविशेषणं त्वम् उज्झितः परित्यक्तः असि किम् ? महापापिनो दाहनिषेधादेवान्वारोहणं सुतरां निषिद्धं तथाच स्मृतिः। अस्पृश्यः समुपेक्ष्यो हि महापातकदूषित इति ॥ ७९ ॥

सुगत इति। जितम् इन्द्रियं येन स जितेन्द्रियः वशीकृतेन्द्रियवृत्तिरित्यर्थः सुगत एव बुद्धदेव एव तव उरुकीर्त्तिं महतीं कीर्त्तिम् एव दुर्जयत्वख्यातिमिति भावः। तनुं शरीरं विजित्य

फलमलभ्यत यत् कुसुमैस्त्वया
विषमनेत्रम् अनङ्ग ! विगृह्णता ।
अहह ! नीतिरवाप्तभया ततो
न कुसुमैरपि विग्रहमिच्छति ॥ ८१ ॥
अपि धयन्नितरामरवत् सुधां
विनयनात् कथमापिथ तां दशाम् ? ।

विशेषेण पराभूय यत् यस्मात् अनाशयत् नाशितवान् ततः तस्मा-नाशादनन्तरं हरः शम्भुः समिति युद्धे समित्याजिसमिद्युध इत्यमरः । अवशिष्टवतीं यशःशरीरादवशिष्टां भूतमयीं पञ्चभूत-निर्मितां तनूम् अहरत् हृतवान् ददाहेत्यर्थः ~~ततोऽबला~~जन-निर्जितो अकृतश्च त्वं प्रगल्भसे इति आश्चर्यमिति भावः ॥८०॥

फलमिति । हे अनङ्ग ! काम ! कुसुमैः पुष्पैः शरभूतैरिति भावः करणैः विषमनेत्रं त्रिनेत्रं हरं विगृह्णता प्रहरता त्वया यत् फलं स्वनाशरूपमित्यर्थः अलभ्यत प्राप्तम्, अहह आश्चर्यं ततस्तस्मात् अवाप्तं प्राप्तं भयं यया तथाभूता नीतिः कुसुमै-रपि साधनैः किं पुनरन्यविधैः निशितशरादिभिरित्यपि-शब्दार्थः विग्रहं युद्धं कर्त्तुमिति शेषः न इच्छति न प्रवर्त्तय-तीति भावः । अतिकोमलपुष्पप्रहारेऽपि शम्भोरौद्धत्यः क्रोधः येन तत्प्रहारिणं सद्य एव विनाशयति, तीक्ष्णास्त्रप्रहारे तु का कथा तस्मात् युद्धपरित्याग एव श्रेयानिति नीतिशास्त्राभि-प्रायः । त्वन्तु तथा मूर्खः यन्मृत्युञ्जयं कुसुमशरो भूत्वा योद्धुं प्रवृत्त इत्याश्चर्यमिति भावः ॥ ८१ ॥

अपीति । हे स्मर ! इतरे अन्ये अमराः इतरामराः

भण रतेरधरस्य रसादरात्
अमृतमाप्तघृणः खलु नापिबः? ॥ ८२ ॥
भुवनमोहनजेन किमेनसा
तव परेत! बभूव पिशाचता?।
यदधुना विरहाधिमलीमसाम्
अभिभवन् भ्रमसि स्मर! मद्विधाम् ॥ ८३ ॥

अपरे देवा इन्द्रादय इत्यर्थः तद्वत् सुधाम् अमृतं धयन् पिबन्नपि धेटपाने इत्यस्मात् शतृप्रत्ययः। त्रिनयनात् हरात् कथं तां दशां दाहरूपाम् आपिथ? प्राप्तवानसि? आप्नोतेर्लिटि वशादि... इडागमः। भण कथय, अमृतपानेनामरत्वलाभेऽपि कथं तव मरणमभूदिति भावः। अथवा रतेः स्वप्रियायाः अधरस्य रसः स्वादः तत्र आदरात् आस्थातिशयात् आप्ता गृहीता घृणा जुगुप्सा अमृतं प्रतीति भावः येन तथाभूतः अमृतं तुच्छं मन्यमानः सन्नित्यर्थः अमृतं न अपिबः खलु? न पीतवान् किम्? घृणा जुगुप्सा कृपयोरिति वैजयन्ती। तथाच त्वं रतेरधररसपरितृप्ततया अमृतमपिबन् त्रिनयनकोपादनङ्गत्वरूपं फलं प्राप्तवानित्यहो तव बालिशतेति भावः ॥८२॥

भुवनेति। हे परेत! प्रेत! मृत इत्यर्थः परेतः प्राप्तपञ्चत्व इत्यमरः। भुवनानां जगतां तद्वासिनामित्यर्थः मोहनात् विमुग्धीकरणात् जायते इति तथोक्तेन एनसा पापेन तव पिशाचता निकृष्टदेवयोनिविशेषत्वं विद्याधरोऽप्सरो यक्षो रक्षो गन्धर्वकिन्नराः। पिशाचो गुह्यको सिद्धो भूतोऽमी देवयोनय इत्यमरः। बभूव किम्? यद् यस्मात् अधुना इदानीं

बत ददासि न मृत्युमपि स्मर!?
स्खलति ते कृपया न धनुः करात्?।
अथ मृतोऽसि मृतेन च मुच्यते
न किल मुष्टिदृढीकृतबन्धनः॥ ८४॥

विरहेण यः आधिः मानसी व्यथा पुंस्याधिर्मानसीव्यथेत्यमरः। तेन मलीमसा मलिना दीनेत्यर्थः तां मलीमसन्तु मलिनं कच्चरं मलदूषितमित्यमरः। मद्विधां मादृशीम् अबलामिति शेषः अभिभवन् आवेशेन पीड़यन् भ्रमसि। महापापाः मरणानन्तरं पिशाचयोनिं प्राप्य इत्थं दुर्बलान् स्त्रीबालकान् आविश्य पीड़यन्ति त्वमपि तादृश एवेति भावः। अत्र समेन कार्य्येण प्रस्तुतस्य अरस्याप्रकृतपिशाचव्यवहारारोपणात् समासोक्तिरलङ्कारः तदुक्तं दर्पणे। समासोक्तिः समैर्यत्र कार्य्यलिङ्ग-विशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति॥८३॥

बतेति। हे स्मर! काम! बतेति खेदे। त्वं मृत्युमपि मरणमपि न ददासि? येन दुःखशान्तिर्भवेदिति भावः। कृपया मादृग्जनेष्वनुकम्पयेति यावत् ते तव करात् हस्तात् धनुश्च कौसुममिति शेषः न स्खलति? न भ्रश्यति? येन शरप्रहारकरणा-सम्भवेन मादृशां पीड़ा न भवेदिति भावः। अथवा मृतोऽसि प्रेतोऽसि, मृतेन च दृढीकृतम् अश्लीकृतं बन्धनं यस्य तथा-भूतः दृढबद्ध इत्यर्थः उपर्युपर्युपरीभाव करोति कुरुते परे इति अहमहः। मुष्टिः न मुच्यते खलु न भ्रश्यते एव कर्मकर्त्तरि लट्। दृढमुष्टिधृतस्य धनुषः कथं कराद्भ्रंशनमिति भावः। तस्मात् मृतादपि त्वत्तो निष्कृतिर्नास्ति मद्विधानामिति भावः

दृगुपघात्यपमृत्युविरूपताः
शमयतेऽपरनिर्जरसेविता ।
अतिशयान्ध्यवपुःक्षतिपाण्डुताः
स्मर ! भवन्ति भवन्तमुपासितुः ॥ ८५ ॥
स्मर ! नृशंसतमस्त्वमतो विधिः
सुमनसः कृतवान् भवदायुधम् ।

दृगिति । हे स्मर ! काम ! अपरम् अन्यं त्वद्भिन्नमित्यर्थः निर्जरं देवम् अमरा निर्जरा देवा इत्यर्थः सेवते इति तत् सेविता अन्यदेवोपासक इत्यर्थः जन इति शेषः तृच्प्रत्ययः । दृशोश्चक्षुषोरुपहतिः उपघातः आन्ध्यमिति यावत् अपमृत्युः आकस्मिकमरणं विरूपता रूपान्यथाभावः ताः शमयते शान्तिं नयति तत्तद्देवतानुकम्पयेति भावः । णिचश्चेत्यात्मनेपदं मित्त्वाद् ह्रस्वत्वञ्च । भवन्तं त्वां देवमिति शेषः उपासितुः जनस्य ताच्छील्ये तृच् । न लोकेत्यादिना षष्ठीप्रतिषेधः । अतिशयेन आन्ध्यं दृष्टेरुपघातः वपुषः शरीरस्य क्षतिः क्षयः पाण्डुता विवर्णता ताः भवन्ति । देवतान्तरसेवने दोषशान्तिः त्वत्सेवने तु केवलं दोषोत्पत्तिरित्यतो नव देवत्वं महदिति सोल्लुण्ठोक्तिः । अत्रान्यदेवादुपमानादुपमेयस्य स्मरस्य न्यूनताप्रतीतेर्व्यतिरेकालङ्कारो व्यज्यते । आरब्धस्य श्रेयःप्राप्त्यर्थसेवनस्य वैफल्यादनर्थस्यातिशयान्ध्यादिदोषस्य च सम्भवाद् विषमालङ्कारभेदः । तदुक्तं दर्पणे । गुणौ क्रिये वा यत् स्यातां विरुद्धे हेतुकार्य्ययोः । यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः । विरूपयोः सङ्घटना या च तद्विषमं मतमिति ॥ ८५ ॥

स्मरेति । हे स्मर ! काम ! त्वं नॄन् शंसति हिनस्तीति

यदि धनुर्दृढमाशुगमायसं
तव सृजेत् प्रलयं त्रिजगद् व्रजेत् ॥ ८६ ॥
स्मररिपोरिव रोपशिखी पुरां
दहतु ते जगतामपि मा त्रयम्।
इति विधिस्त्वदिषून् कुसुमानि किं
मधुभिरन्तरसिञ्चदनिर्वृतः ? ॥ ८७ ॥

नृशंसो घातुकः शृनसहिंसायामिति धातोः पचाद्यच्। अतिशयेन नृशंसः नृशंसतमः अतिनिष्ठुर इत्यर्थः नृशंसो घातुकः क्रूर इत्यमरः। अतोऽस्माद्धेतोः विधिः विधाता विश्वसृग् विधिरित्यमरः। सुमनसः पुष्पाणि भवतः तव आयुध्यतेऽनेनेति आयुधम् अस्त्रं कृतवान्। यदि तव दृढं कठिनं धनुः आयसं लोहमयम् आशु शीघ्रं गच्छतीति आशुगः शरः तच सृजेत्, तदा त्रयाणां जगतां समाहारः त्रिजगत् त्रिभुवनं प्रलयं नाशं व्रजेत् गच्छेत् तव शरप्रहारेणेति भावः। तव क्रूरभावातिशयं दृष्ट्वा बुद्ध्वा च विचक्षणेन विधात्रा तथा एव व्यवस्थापितं नो चेत् सृष्टिनाशः स्यादिति भावः ॥ ८६ ॥

स्मरेति। स्मरस्य तवेति शेषः रिपोः हरस्येत्यर्थः रोपशिखी शराग्निः कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोरित्यमरः। पुरां त्रयमिव त्रिपुरमिव ते तव रोपशिखी अपि जगतां त्रयं मा दहतु नैव भस्मीकरोतु इति धियेति शेषः अनिर्वृतः व्याकुलितः विधिः तव इषून् शरान् कुसुमानि अन्तः अभ्यन्तरे मधुभिः मकरन्दैः मधुमद्ये पुष्परसे इति विश्वः। असिञ्चत् किम् ? कुसुमान्यपि शराः पापिष्ठस्य तव शौर्य्येण प्रहरणक्षमा इति हेतोः मकरन्दयोगेन शरस्य

विधिरनङ्गमभेद्यमवेक्ष्य ते
जनमनः खलु लक्ष्यमकल्पयत् ।
अपि स वज्रमदास्यत चेत्तदा
त्वदिषुभि र्व्यदलिष्यदसावपि ॥ ८८ ॥

अपि विधिः कुसुमानि तवाशुगान्
स्मर ! विधाय न निर्वृतिमाप्तवान् ।

शरीरसेचनात् तादृशीं पीड़ां नानुभावयिष्यन्ति इति मत्वेव तत्तत्पुष्पाणि मकरन्दरसेनोक्षामासेव इत्युत्प्रेक्षा ॥ ८७ ॥

विधिरिति । विधिः विधाता नास्ति अङ्गम् अवयवः यस्य तत् अनङ्गं निरवयवम् अङ्गं प्रतीकोऽवयव इत्यमरः । अतएव अभेद्यं भेत्तुमशक्यं जनानां मनः अवेक्ष्य अवधार्य्य ते तव लक्ष्यं शरव्यम् अकल्पयत् खलु कृतवान् किम् ? इत्युत्प्रेक्षा खलु निश्चये वा तथा सति कृतवानेवेत्यर्थः । चेत् यदि विधिः वज्रं कुलिशम् अपि अदास्यत तव लक्ष्यत्वेनेति शेषः ह्रादिनी वज्रमस्त्री स्यादित्यमरः । वज्रं यदि तव लक्ष्यमकल्पयदित्यर्थः । तदा असौ वज्रोऽपि तव इषुभिः शरैः व्यदलिष्यत् चूर्णितोऽभविष्यत् । तव अस्त्राणामीदृक्सामर्थ्यं यत् अतिकठिनं वज्रमपि सद्यश्चेद् विदलतीति पर्य्यालोच्य विधात्रा अनङ्गत्वादभेद्यं जनमनः तव शराणां लक्ष्यमवधारयता सम्यग् वैचक्षण्यमात्मनः प्रदर्शितमिति तात्पर्य्यम् ॥ ८८ ॥

अपीति । हे स्मर ! विधिः ब्रह्मा कुसुमानि अतिकोमलानीति भावः तव आशुगान् शरान् विधायापि परिकल्प्यापि निर्वृतिं स्वस्थतां न आप्तवान् अतिकठिनस्वभावोऽसौ विधिः अतिकोमलैः पुष्पैरपि शरैर्जगद् विध्वंसयितुं समर्थः इति चिन्तेव

अदित पञ्च हि ते स नियम्य तान्
तदपि तैर्बत जर्जरितं जगत् ॥ ८९ ॥
उपहरन्ति न कस्य सुपर्वणः
सुमनसः कति पञ्च सुरद्रुमाः ? ।
तव तु हीनतया पृथगेकिकां
धिगियतापि न तेऽङ्गविदारणम् ? ॥ ९० ॥

निर्वृतिं न प्राप्तवानित्यर्थः । कुत इदं ज्ञायते तत्राह अदितेति । हि यतः स विधिः तान् कुसुमशरान् पञ्च नियम्य पञ्चसंख्यकत्वेन अवधार्य ते तुभ्यम् अदित दत्तवान् न तु ततोऽधिकानित्यर्थः बत खेदे, तदपि तथापि पञ्चसंख्यत्वेऽपीत्यर्थः तैः बाणैः पञ्चभिरेवेति शेषः जगत् जर्जरितं जर्जरतां नीतम् । अतिदुर्जयस्त्वं यत् विधातुराग्रहमपि विफलयसीति भावः ॥८९

उपहरन्तीति । हे स्मर ! पञ्च पञ्चसंख्यकाः सुरद्रुमाः देवतरवः मन्दारादयः पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनमित्यमरः । कस्य सुपर्वणः देवस्य सुपर्वाणः सुमनस इति देवपर्य्यायेष्वमरः । कति कियतीः सुमनसः पुष्पाणि स्त्रियः सुमनसः पुष्पमित्यमरः । नोपहरन्ति नोपायनत्वेन प्रयच्छन्ति ? सर्वस्यापि देवस्य प्रभूतानि कुसुमानि उपाहरन्त्येवेत्यर्थः उपायनमुपग्राह्यमुपहारस्तथोपदेत्यमरः । तव अनङ्गस्येति भावः हीनतया नीचतया निरङ्गत्वेन च पृथक् प्रत्येकम् एकिकाम् एकामेव सुमनसम् एकादाकिन् चासहाये इति चकारात् कन्प्रत्यये पूर्वेकारः । उपहरन्तीत्यनुषङ्गः अतएव ते पञ्चशरत्वमिति भावः इयतापि एतावता अवमाननेनापि तव अङ्गस्य विदारणं

कुसुममप्यतिदुर्नयकारि ते
किमु वितीर्य्य विधिर्धनुरग्रहीत्?।
किमकृतैष तवैकतदास्पदे
द्वयमभूदधुना हि नलभ्रुवौ?॥ ८१॥

विध्वंसः न भवतीति शेषः धिक् निन्दामि ते ईदृशमवशात जीवनमिति भावः धिङ्निर्भर्त्सननिन्दयोरित्यमरः। यद्वा अनङ्गस्य अङ्गाभावात्तद् विदारणमनुपपन्नमिति अङ्गेति। पृथगामन्त्रणपदम् अङ्ग भोः स्मर! ते तव मनसि समुद्भूतवृत्तिविशेषस्यापीति भावः विदारणं विध्वंसनम् अत्यन्ताभाव इति यावत् न भवति? धिगित्यर्थः। अङ्गविधारणेति अङ्गविधारणमिति वा पाठे इयतापि अवमाननेन ते तव अङ्गविधारणा शरीरधारणं न धिक्? न निन्दनीयम्? अपितु धिगेवेत्यर्थः। अत्रापि पाठे अङ्गत्वस्य पृथक् पदत्वे अङ्ग भोः ते तव विधारणं विधारणा वा जीवनमित्यर्थः न धिक्? अपितु धिगेवेत्यर्थः॥ ८०॥

कुसुममिति। विधिः ब्रह्मा कुसुममपि अतिमृदुलमपीति भावः अतिदुर्णयकारि अत्याहितकरं धनुः ते तव वितीर्य्य समर्प्य किमु अग्रहीत्? पुनर्जहार किम्? इत्युत्प्रेक्षा अतिदुश्चेष्टितेन जगतामपकारितया दत्तमपि तत् पुनरग्रहीदित्यर्थः। पापिष्ठेभ्यो दत्तापहारे न दोषः अमङ्गलकरत्वात्तस्येति भावः। तर्हि तेन भद्रमेव कृतं तत् कथं तदुक्तेस्य इत्यत्राह किमिति। एष विधिः किम् अकृत? धनुर्हरणेन अस्माकं किमुपकृतवान्? न किमपीत्यर्थः। हि यतः तव एकस्य तस्य धनुषः आस्पदे स्थाने द्वयं इति यावत् प्रतिष्ठा कृत्यमास्पदमित्यमरः। अधुना

षडृतवः कृपया स्वकमेककं
कुसुममङ्गमनन्दितनन्दनाः।
ददति यन्नवते कुरुते भवान्
धनुरिवैकमिषूनिव पञ्च तैः॥ ९२॥
यदतनुस्त्वमिदं जगते हितं
क्व स मुनिस्तव यः सहते हतीः।

नलस्य भ्रुवोर्द्वयं भ्रूयुगलम् अभूत्। हे नलभ्रुवौ कामधनुषः कार्य्यकारिणौ निर्मितवतोऽस्य तद्वृत्तापहरणं विफलं जातं प्रत्युत एकोत्पातनिवारणप्रवृत्तस्य उत्पातद्वयसङ्घटनमिति भावः तदुचारब्धवैफल्यमनर्थोत्पत्तिश्चेति प्रागुक्तविषमालङ्कारभेदः॥९१

षडिति। अक्रमेण क्रमं पौर्वापर्य्यं त्यक्त्वेत्यर्थः एकदैवेति भावः। नन्दितं स्वस्वकुसुमविकासेन उल्लासितमित्यर्थः। नन्दनं देवोद्यानं यैः ते षट् ऋतवः हेमन्तादयः षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमादिति मार्गादिपर्य्यायेष्वमरः। कृपया अनुकम्पया कृपादयानुकम्पा स्यादनुक्रोश इत्यमरः। न तु प्रीत्या गौरवेण वेति भावः स्वकं स्वं स्वम् एककम् एकमात्रम् असहाये कन्प्रत्ययः। यत् कुसुमम् एकैकदानात् मिलित्वा कुसुमषट्कमित्यर्थः भवते तुभ्यं ददति, भवान् तैः कुसुमैः षड्भिरिति भावः। एकं धनुरिव एकेन कुसुमेनेति भावः पञ्च इषूनिव शरानिव पञ्चभिः कुसुमैरिति भावः। कुरुते रचयति। कृपया प्रत्येकस्य एकैकमात्रदानं मत्वधिकमित्यतिदीनता तव देवेषु तेषु स्वयमलुपभुक्तैः व्याधवृत्तिसंसाधनार्थं तव धनुर्बाण-रचनमिति नीचवृत्तिश्च गम्यते। किन्तु तेषामोहमदुराचाराय

विशिखमाश्रवणं परिपूर्य्य चेत्
अविचलद्भुजमुज्झितुमीशिषे ? ॥ ८३ ॥

सह तया स्मर ! भस्म धगित्यभूः
पशुपतिं प्रति यामिषुमग्रहीः ।
ध्रुवमभूदधुना वितनोः शरः
तव पिकस्वर एव स पञ्चमः ॥ ८४ ॥

एकैककुसुमदानमपि न युक्तं येनास्माकमीदृग्दुःखदाने परम्परया तेषां प्रयोजकत्वेन दुरदृष्टसम्बन्धस्य दुर्वारत्वादिति भावः ॥ ८२ ॥

यदिति । हे मदन ! त्वं नास्ति तनुः शरीरं यस्य सः अतनुः अनङ्ग इति यत् इदं तव अतनुत्वमित्यर्थः । जगते त्रिभुवनाय हितं शुभं जातमिति शेषः हितयोगे चेति चतुर्थी वक्तव्या । त्वम् अनङ्गवानिति भावः आश्रवणम् आकर्णं परिपूर्य्य आकृष्य विशिखमित्यनुषङ्गः अविचलन्तौ सुदृढं तिष्ठन्तौ भुजौ बाहू यत्र तद् अकम्पितहस्तमित्यर्थः । यथा तथा विशिखं शरम् उज्झितुं त्यक्तुं मोक्तुमित्यर्थः ईशिषे प्रभवसि चेत् तदा यः ते तव इतीः प्रहारान् सहते सोढुं शक्नोति, स मुनिः जितेन्द्रिय इति भावः क्व ? कुत्र तिष्ठति ? न कुत्रापि तादृशो विजितेन्द्रियो मुनिरस्ति यस्तव अनङ्गस्यापि शरप्रहारान् सोढुं शक्नोति किमु वक्तव्यमङ्गिन इति भावः । तस्मात् भगवता शङ्करेण विश्वजगद्धितार्थं त्वं निरङ्गः कृत इति भावः ॥ ८३ ॥

सहेति । हे स्मर ! त्वं पशुपतिं हरं प्रति यामिषुं शरं पञ्चौ रोप इषुर्द्वयोरिति स्त्रीलिङ्गता अग्रहीः मुक्तवानसीत्यर्थः तया इष्वा सह धगिति भस्म अभूः धगिति अव्यक्तशब्दसहकारेण

स्मर ! स मद्दुरितैर्विफलीकृतो
भगवतोऽपि भवद्दहनश्रमः।
सुरहिताय हुतात्मतनुः पुनः
ननु जनुर्दिवि तत्क्षणमापिथ ॥ ८५ ॥

भस्मीभूतवानसि। धगितीत्यत्र झटितीति पाठे झटिति तत्क्षणमित्यर्थः अतः वितनोः अनङ्गस्य तव अधुना तदिषुदाहादिति भावः। पिकस्य कोकिलस्य स्वर एव पञ्चमः शरः अभूत् ध्रुवमुत्प्रेक्षे। पिकः कूजति पञ्चममिति शास्त्रात् साम्प्रत तच्छरनाशेऽपि तत्कार्य्यसिद्धेरिति भावः। कोकिलस्वरो विरहिणां भृशमुद्दीपक इति तात्पर्य्यम् ॥ ८४ ॥

स्मरेति। मम दुरितैः दुष्कृतैः कर्तृभिः भगवतः ईश्वरस्यापि स प्रसिद्धः भवतः तव दहनश्रमः दग्धप्रयासः अविफलः विफलः कृतः विफलीकृतः काकुः निष्फलतां नीतः किम् ? इत्युत्प्रेक्षाव्यञ्जकाप्रयोगाभावाद् गम्या। ननु यतः सुराणां देवानां हिताय मङ्गलाय हुता हरलोचनानले होमीकृता आत्मनः तनुः शरीरं येन तथाभूतः सन् तत्क्षणं तस्मिन्नेव क्षणे अविलम्बेनैवेत्यर्थः अत्यन्तसंयोगे द्वितीया। दिवि सुरसद्मनि पुनर्जनुः जन्म। जनुर्जनन-जन्मानि जनिरुत्पत्तिरुद्भव इत्यमरः। आपिथ प्राप्तवानसि। पुरा देवैस्तारकासुरनिर्जितैस्तद्विनाशार्थं ब्रह्मणः परामर्शेन सेनानीं स्रष्टुमिच्छद्भिः अभ्यर्थितः कामः हरस्य तपोभङ्गार्थं प्रवृत्तः। तत्र तथा प्रवृत्तं दृष्ट्वा भगवान् तपोविघ्नजनितक्रोधेन ललाटाग्निना ददाह। अथ पार्वत्यां परिणीतायां तैरेव देवैर्याचितो देवदेवः पुनः कामं स्वेन वपुषा संयोज्य समुज्जीवयत् इति पुराणवार्त्ता।

विरहिणो विमुखस्य विधूदये
शमनदिक्पवनः स न दक्षिणः ।
सुमनसो नमयन्नटनी धनुः
तव तु बाहुरसौ यदि दक्षिणः ॥ ८६ ॥
किमु भवन्तमुमापतिरेककं
मदमुदान्धमयोगिजनान्तकम् ।

मम दुष्कृतपरिणामेनैव पुनस्तथा दग्धस्यापि तव जन्मेति तात्पर्य्यम् ॥ ८५ ॥

विरहिण इति। यदि तु तव असौ बाहुः सुमनसः धनुः पौष्पं कार्मुकम् अटनी कोट्याम् अटनिर्धनुषःकोटिरिति बलः। नमयन् शरसन्धानार्थं नम्रीकुर्वन् दक्षिणः अनुकूलः कथञ्चित् सह्य इति भावः। नैव च सव्येतरः किन्तु विधोश्चन्द्रस्य उदये विमुखस्य वैमुख्येन स्थितस्येत्यर्थः यत्र दिशि विधूदयः तां दिशं पश्चात्कृत्य स्थितस्येति यावत् कथञ्चित् तस्य दर्शनाभावात् सह्यतामतिक्रम्येति भावः। विरहिणः वियोगिजनस्य स शमनदिक्पवनः यमदिक्समीरणः मलयानिल इत्यर्थः न दक्षिणः नानुकूलः अतीव असह्य इत्यर्थः अथच न दक्षिणपार्श्वस्थः इति यावत्। चन्द्रोदयोद्दीपितस्य तव कथमपि सह्यता किन्तु मलयानिलोद्दीपितस्य तव नितरामसह्यतेति भावः। अत्र दक्षिणोऽपि न दक्षिण इति विरोधः अनुकूल इति तत्परिहारश्चेति श्लेषमूलो विरोधाभासोऽलङ्कारः ॥ ८६ ॥

किम्विति। उमापतिः हरः मदो विकारः सौभाग्ययौवनाद्यवलेपज इति। तेन या मुत् हर्षः उल्लास इत्यर्थः तेन यद्वा मदश्च मुच्च तत् मदमुत् इन्द्वैकवद्भावः तेन मदानन्दाभ्यामित्यर्थः

यदजयस्तत एव न गीयते
स भगवान् मदनान्धकमृत्युजित् ? ॥ ९७ ॥

त्वमिव कोऽपि परापकृतौ कृती
न ददृशे न च मन्मथ ! शुश्रुवे ।
स्वमदहद्दहनात् ज्वलतात्मना
ज्वलयितुं परिरभ्य जगन्ति यः ॥ ९८ ॥

अन्धयति अन्धं करोति त्वदाविष्टं जनमिति शेषः। मदसुदान्धम् अन्धदृष्टिप्रतिघाते इति धातोश्चौरादिकात् पचाद्यच्। अयोगिजनान् विरहिजनान् अन्तयति नाशयतीति अयोगिजनान्तकः तं विरहिजनमृत्युमिति यावत् एककम् एकमात्रम् एकादाकिनिच्चासहाये इति च कात् कन्प्रत्ययः। भवन्तम् अजयत् जितवान् इति यत् तत एव तस्मादेव एकस्यैव भवतो जयादेव स भगवान् मदनान्धकमृत्युजित् मदनजित् अन्धकजित् मृत्युजिच्च न गीयते ? न कीर्त्यते किमु ? अपितु गीयत एवेत्यर्थः न तु मदनस्य तव अन्धकाख्यासुरभेदस्य मृत्योश्च प्रत्येकं जयकरत्वात् तत्तन्नाम्ना तस्य व्यपदेश इति त्वमेवातितरां दुःसह इति भावः। अत्र मदनादीनां भेदेऽप्यभेदप्रतीतेरतिशयोक्तिरलङ्कारः ॥ ९७ ॥

त्वमिति। मनो मथ्नातीति मन्मथः तत्सम्बुद्धौ, हे मन्मथ ! नाम्नैव ते मनोमादकत्वं परिचितमिति भावः त्वमिव परेषाम् अपकृतौ अनिष्टकरणे कृती कुशलः कोऽपि जनः न ददृशे न दृष्टः न शुश्रुवे न श्रुतः, कुत इत्याह स्वमिति। यः अपकर्त्ता ज्वलता आत्मना कायरूपेण जगन्ति भुवनानि परिरभ्य समालिङ्ग्य ज्वलयितुं दग्धुं दहनात् हरकोपानलात् स्वमात्मानम्

त्वमुचितं नयनार्चिषि शम्भुना
भुवनशान्तिकहोमहविः कृतः ।
तव वयस्यमपास्य मधुं मधुं
हतवता हरिणा बत किं कृतम् ? ॥ ४९ ॥

मदहत् भस्मालयत् । तव ईदृशं परापकारव्यसनित्वं यदात्मपतिरपि तव नालोच्यते एतदेव समासाच्छेदनेन अन्योन्यवभङ्ग इत्याख्यायते, अहो महत्त्वं तव अतीवेति सोल्लुण्ठनोक्तिः । स्मरदहदहनादित्यत्र स्मरदहोदहनादिति पाठे यस्त्वं स्मरम् अदहः दग्धवानसीत्यर्थः ॥ ४८ ॥

त्वमिति । शम्भुना शिवेन त्वं नयनार्चिषि नेत्राग्निशिखायां भुवनानां शान्तिके शान्तिप्रयोजनके तदस्य प्रयोजनमिति ठञ् । कर्मणि होमहविः होमार्थमाहुतिः कृत इति यत् तत् उचितम् उपयुक्तमेव कृतमिति भावः । शम्भुर्भुवनानां शान्तिविधानार्थं त्वां दग्धवान् नो चेत् त्रिभुवनं नाशयिष्यदिति भावः । किन्तु बत खेदे, हरिणा विष्णुना तव वयस्यं सखायं मधुं वसन्तम् अपास्य त्यक्त्वा उपेक्ष्येति भावः मधुं तदाख्यं दैत्यविशेषम् । 'मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्ते दैत्यभिच्चैत्रे इति मेदिनी । हतवता नाशयता किं कृतम् ? न किमपि कृतमित्यर्थः कुत्सितं कृतमिति वार्थः । जगतां शान्तये अवतीर्णोऽपि हरिर्वसन्तमविनाश्य न किमपि शान्तिं कृतवान् यद्यपि मधुदैत्योऽपि जगदुपद्रवकारित्वाद् वध्य एव तथापि असौ वसन्ताज्जगदपकारिणो न महान् न च दुर्धर्ष इति वसन्तस्यैवापततो वध्यत्वं तदकृत्वा केवलं मधुदैत्यं हतवतो हरेः अविमृश्यकारित्वमापतितमिति बतेति शब्दस्याशयः ॥४९॥

इति कियद्वचसैव भृशं प्रिया-
धरपिपासु तदाननमाशु तत्।
अजनि पांशुलमप्रियवाग्ज्वलन्-
मदनशोषणबाणहतेरिव ॥ १०० ॥

प्रियसखीनिवहेन सहाथ सा
व्यरचयद्गिरमर्द्धसमस्यया।
हृदयमर्मणि मन्मथसायकैः
क्षततमा बहुभाषितुमक्षमा ॥ १०१ ॥

इत्येवं प्रलपन्त्याः तस्या मुखशोषो जात इत्याह, इतीति। प्रियस्य नलस्य अधरं तद्रसमित्यर्थः पिपासु पातुमिच्छु मधुपिपासप्रभृतीनां गमिगाम्यादिपाठात् समास इति वामनः। तत् तादृशं सुकोमलं सुरसञ्चेति भावः। तस्याः भैम्या आननं मुखम् इत्युक्तप्रकारेण कियता अल्पेनेति भावः वचसैव प्रलापेनैवेति भावः अप्रिया वाचः कटूक्तयः ताभिः ज्वलतः क्रुध्यत इति यावत् मदनस्य कामस्य शोषयतीति शोषणः तदाख्यो बाणः शरः, मोहनो मादनश्चैव शोषणस्तापनस्तथा। मारणश्चेति विज्ञेया बाणाः पञ्च स्मरस्य वै इत्युक्तेः। तेन या आहतिः प्रहारः तस्या इव हेतोरित्यर्थः भृशम् अतिशयेन पांशुलं पांशुमत् शुष्कमिति भावः। अजनि जातम्। अत्र तद्बाणाहतेरिवेति हेतूत्प्रेक्षा ॥ १०० ॥

अथास्याः सम्यग् वचनाक्षमत्वेन परिमितभाषितामाह, प्रियसखीति। अथानन्तरं सा दमयन्ती मन्मथस्य कामस्य सायकैः शरैः हृदयमर्मणि हृदयरूपे मर्मस्थाने क्षततमा

अकरुणादव सूनशरादसून्
सहजयापदि धीरतयात्मनः ।
असव एव ममाद्य विरोधिनः
कथमरीन् सखि! रक्षितुमात्थ माम्? ॥१०२॥

अतिशयेन क्षतेत्यर्थः अतएव बहु भाषितुं वक्तुम् अक्षमा असमर्था सती प्रियसखीनिवहेन प्रियसखीनां सङ्घेन सह अर्द्धसमस्यया अर्द्धं समस्यते संक्षिप्यते अनयेति समस्या संक्षिप्ता कारिकेत्यर्थः तया सहस्यात्तु समासार्थेत्यमरः संज्ञायां समजनिपद्येत्यत्र सम्पूर्वादस्यतेर्बहुलकः क्यङिति क्षीरस्वामी। गिरं वाचं व्यरचयत् विरचितवती पूर्वार्द्धं सखीजनसमस्यया उत्तरार्द्धं तदुत्तरत्वेन आलपितवतीति भावः ॥ १०१ ॥

अकरुणादिति। हे सखि! आपदि सहजया स्वभावसिद्धतया विपदि धैर्य्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः। यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिः सिद्धमिदं हि महात्मनामिति नीतिशास्त्रादिति भावः। धीरतया धैर्य्येण नास्ति करुणा यस्य सः अकरुणः निर्दयः तस्मात् सूनशरात् कुसुमबाणात् कामात् आत्मनः स्वस्य असून् प्राणान् अव रक्ष इति सखीजनोक्तिः। हे सखि! अद्य असवः प्राणाः मम विरोधिनः शत्रव एव अतः अरीन् शत्रून् अमूनिति शेषः रक्षितुं कथं केन प्रकारेण माम् आत्थ? ब्रवीषि? ब्रुवः पञ्चानामिति साधुः। साम्प्रतमसव एव शत्रुभूता मां व्यथयन्ति, तद्विगम एव मे दुःखशान्तिकरस्तत्कथं भुजङ्गानां दुग्धेन पोषणमिव तद्रक्षणमनुबध्यते इति भावः। इति भैम्याः प्रत्युक्तिः ॥ १०२ ॥

हितगिरं न शृणोषि किमाश्रवे !
प्रसभमप्यव जीवनमात्मनः।
सखि ! हिता यदि मे भवसीदृशी
मदरिमिच्छसि या मम जीवितम् ? ॥१०३॥
अमृतदीधितिरेष विदर्भजे !
भजसि तापममुष्य किमंशुभिः ?।

हितेति। हे आश्रवे ! वचनकारिणि ! कदापि मदाज्ञामावहेलयन्तीति यावत् आशृणोति वाक्यमिति व्युत्पत्त्या आङ्पूर्वात् शृणोतेः पचाद्यच्। वचने स्थित आश्रव इत्यमरः। हितगिरं हितां वाचं किं कथं न शृणोषि ? नाकर्णयसि ? प्रसभमपि बलादपि आत्मनः स्वस्य जीवनम् अव रक्ष, एति जीवन्तमानन्दो नरं वर्षशतादपीति श्रुतेः। उक्तञ्च महाकविना कालिदासेन। क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसाविति। इति सखीजनोक्तिः। हे सखि ! या त्वं मम अरिं शत्रुभूतं मम जीवितम् इच्छसि रक्षितुमीहसे इत्यर्थः ईदृशी एवं कारिणी सा त्वं मम हिता हितकारिणी यदि भवसि ? भवसि किम् ? नैव भवसीत्यर्थः। मम शत्रुरक्षणकारित्वान्नैव तव वचनं शृणोमीति वाक्यार्थः। इति भैम्याः प्रत्युक्तिः॥ २ ॥

अमृतेति। हे विदर्भजे ! भैमि ! एषः पुरोवर्तीति भावः अमृतदीधितिः सुधानिधिः चन्द्रः, अमुष्य अमृतदीधितेः अंशुभिः किरणैः तापम् उत्तापं भजसि अनुभवसि किम् ? न हि अमृताकरात् तापमलं सम्भवतीति भावः। इति सखी-

यदि भवन्ति मृताः सखि ! चन्द्रिकाः
शशभृतः क्व तदा परितप्यते ? ॥ १०४ ॥
भज धृतिं त्यज भीतिमहेतुकाम्
अयमचण्डमरीचिरुदञ्चति ।
ज्वलयति स्फुटमातपमुर्मुरैः
अनुभवं वचसा सखि! लुम्पसि ? ॥ १०५ ॥

जनोक्तिः । हे सखि ! यदि शशभृतश्चन्द्रस्य चन्द्रिकाः किरणा इत्यर्थः मृताः भवन्ति न सन्तीति भावः । तदा क्व परितप्यते ? न क्वापि परितापकथेति भावः । अस्यामृतदीधितित्वमेव दुःखहेतुः मृतदीधितित्वे सर्वथा दुःखशान्तिरिति तात्पर्य्यम् । अत्रामृतेति सुधाभिप्रायायां प्रथमार्धे प्रयोगः उत्तरार्धे तु मृतेतरत्वेन योजनमिति वक्रोक्तिरलङ्कारः तथाचोक्तं दर्पणे । अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद् यदि । अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिर्निगद्यते इति । इति भैम्याः प्रत्युक्तिः ॥ १०४ ॥

भजेति । हे दमयन्ति ! अयम् अचण्डाः अतीक्ष्णाः शीता इत्यर्थः मरीचयः मयूखा यस्य सः अचण्डमरीचिः चन्द्रः उदञ्चति उदेति न चण्डांशुरिति भावः तस्मात् धृतिं सन्तोषं धैर्य्यं वा भज अवलम्बस्व, नास्ति हेतुर्यस्याः ताम् अहेतुकाम् अकारणां भीतिं भयं त्यज इति सखीजनोक्तिः । हे सखि ! आतपा एव मुर्मुराः तुषानलाः तैः मुर्मुरस्तु तुषानल इति वैजयन्ती । स्फुटं प्रत्यक्षं ज्वलयति दहति अयमचण्डमरीचिरिति शेषः, वचसा वाक्येन अचण्डमरीचिरिति शब्दप्रमाणेनेत्यर्थः अनुभवं लुम्पसि चोरयसि जले तरति पाषाणं गीतं गायति वानर इत्यलीकवाक्यवत् प्रत्यक्षमपलपसीति यावत् ।

अयि! शपे हृदयाय तवैव तत्
यदि विधोर्न रुचेरसि गोचरः।
रुचिफलं सखि! दृश्यत एव यत्
ज्वलयति त्वचमुज्ज्वलयत्यसून्॥ १०६॥
विधुविरोधितिथेरभिधायिनीम्
अपि न किं पुनरिच्छसि कोकिलाम्?।

अत्राचण्डमरीचौ चण्डमरीचिभ्रम इति भ्रान्तिमदलङ्कारः तदुक्तं दर्पणे। साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति॥ १०५॥

पुनरस्याचण्डमरीचित्वं पूर्वार्द्धेन विश्वासयति उत्तरार्द्धे तु तदन्यथेत्याह, अयीति। अयीति कोमलामन्त्रणे। अयि सखि! विधोश्चन्द्रस्य रुचेः आह्लादनस्य मयूखस्य गोचरः विषयः न असि न भवसि यदि, तत्तदा तवैव हृदयाय शपे तव जीवनाय द्रोहमाचरामीति यावत् एष चन्द्रकिरण एव तवाङ्गं स्पृशति तथ्यम्, अलीकं वदामि चेत् तव मस्तकं खादामीति शपथः क्रियते तद् मद्वाक्यं विश्वसिहीति तात्पर्य्यम्। श्लाघह्नुङ्-त्यादिना सम्प्रदानत्वात् चतुर्थी। इति सखीजनोक्तिः। हे सखि! रुचेः तेजसः फलं कार्य्यमेव दृश्यते न तु अचण्ड-मरीचीति नाम्न इति भावः। तथाहि त्वचं शारीरं चर्म्म ज्वल-यति दहति, असून् प्राणान् उज्ज्वलयति उत्क्रामयति व्याकुल-यतीति यावत्। इति भैम्याः प्रत्युक्तिः। अत्र पूर्वार्द्धे आह्ला-दनमयूखार्थे प्रयुक्तस्य रुचिशब्दस्य उत्तरार्द्धे दाहकतेजोरूपा-र्थकत्वेन योजनादत्रापि वक्रोक्तिरलङ्कार एव॥ १०६॥

विध्विति। हे भैमि! विधोश्चन्द्रस्य विरोधिनी विद्वेषिणी

सखि! किमर्थगवेषणया? गिरं
किरति सेयमनर्थमयीं मयि॥ १०७॥

हृदय एव तवास्ति स वल्लभः
तदपि किं दमयन्ति! विषीदसि?।
हृदि परं न बहिः खलु वर्त्तते
मम यतस्तत एव विषद्यते॥ १०८॥

या तिथिः कुहूनाम्नी अमावास्येत्यर्थः तस्या अभिधत्ते इति अभिधायिनी प्रतिपादयित्रीत्यर्थः तां कुहूशब्दोच्चारिणीमित्यर्थः कोकिलां पुनः किं कथं न इच्छसि? चन्द्रे तव विद्वेषोऽस्ति कुहू कुहू इति स्वबाख्या तद्विरोधिन्यास्तिथेरमाया आख्यायिकाम् अतएव ते मित्रभूतामेनां किमर्थं नाद्रियसे इत्यर्थः। इति सखीजनोक्तिः। हे सखि! अर्थस्य कुहूशब्दस्य सा नष्टेन्दुकला कुहूरित्यमरोक्तेरमावस्या तिथिरूपाभिधेयस्य गवेषणया अन्वेषणेन विचारेणेत्यर्थः किम्? न किमपि प्रयोजनं साध्यमित्यर्थः गम्यमानसाधनक्रियापेक्षया करणत्वात्तृतीया। यतः सा इयं कोकिला मयि विषये मत्समीपे वा सामीप्याधारे विषये वा सप्तमी। सामीप्याश्लेषविषयैर्व्याप्त्याधारश्चतुर्विध इति वोपदेवः। अर्थमयी अर्थयुक्ता न भवतीत्यनर्थमयी तां रथघोषादिवदर्थरहितेति यावत्। अनर्थमयी अनिष्टात्मिका च तां गिरं वाचं किरति वदति। अर्थशब्दात् मयट्प्रत्यये नञ्समासः। कोकिलवागपि मां व्यथयतीति कथं तस्यामादर इति भावः। इति भैम्याः प्रत्युक्तिः॥ १०७॥

हृदय इति। हे दमयन्ति! स वल्लभः प्रियः नलः तव हृदये एव न तु दूरे इत्यर्थः अस्ति वर्त्तते, तदपि तथापि किं

स्फुटति हारमणौ मदनोष्मणा
हृदयमप्यनलङ्कृतमद्य ते।
सखि! हतास्मि तदा यदि हृद्यपि
प्रियतमः स मम व्यवधापितः॥ १०९॥

इदमुदीर्य्य तदैव मुमूर्च्छ सा
मनसि मूर्च्छितमन्मथपावका।

कथं विषीदसि विषण्णा भवसि?। इति सखीजनोक्तिः। हे सखि! यतः मम हृदि परं हृदय एव न वहिः न तु वाह्ये देशे वर्त्तते खलु वर्त्तते एव ततः एव तस्मादेव विषद्यते खिद्यते, सदंर्भावे लट्। केवलं स्मरणं न तु दर्शनमिति विषादहेतुः ताहशप्रियजनस्य सततं दर्शनस्यैवाकाङ्क्षितत्वादिति भावः। इति भैम्याः प्रत्युक्तिः॥ १०८॥

स्फुटतीति। हे दमयन्ति! मदनोष्मणा कामसन्तापेन हारमणौ हाररत्ने स्फुटति विदलति सति ते तव हृदयं वक्षःस्थलम् अद्य अनलङ्कृतं न अलङ्कृतम् अलङ्कारेण न शोभितम् अथच नलशून्यं कृतमिति ध्वन्यते। दृश्यते इति शेषः। इति सखीजनोक्तिः। हे सखि! स प्रियतमो नलः मम हृदि हृदये स्थितोऽपीति शेषः व्यवधापितः दूरीकृतः अथवा हाराद्यलङ्कारेण व्यवधानं तिरोधानमिति भावः नीतः स्यादिति शेषः दधातेर्ण्यन्तात् कर्म्मणि क्तः। आर्त्तिहीत्यादिना पुगागमः। तदा हतास्मि गतजीविता भवामीत्यर्थः। अत्र पूर्वार्द्धे अनलङ्कृतमित्यस्य भूषणशून्यं कृतमित्यर्थे प्रयोगः उत्तरार्द्धे तु नलशून्यकरणरूपार्थस्य योजनेति प्राग्वत् वक्रोक्तिरलङ्कारः॥ १०९॥

इदमिति। सा भैमी इदं प्रागुक्तं सखि हतास्मीत्युत्तरार्द्ध-

क्व सहतामवलम्बलवाच्छिदाम्
अनुपपत्तिमतीमतिदुःखिता ॥ ११० ॥
अधित कापि मुखे सलिलं सखी
प्यधित कापि सरोजदलैः स्तनौ ।
व्यधित कापि हृदि व्यजनानिलं
न्यधित कापि हिमं सुतनोस्तनौ ॥ १११ ॥

वाक्यम् उदीर्य्य उक्त्वैव तदा तस्मिन् काले मनसि मूर्च्छितः प्रवृद्धः मन्मथ एव पावकः अग्निर्यस्याः तथाभूता सती मुमूर्च्छ मोहं गतवतीत्यर्थः मूर्च्छ-मोहन-मूर्च्छयोरिति धातोर्लिट् । तथाहि अतिदुःखिता अतिशयेन दुःखसन्तप्ता सा उपपत्तिः प्रामाणिकी युक्तिः तद्वती न भवतीति अनुपपत्तिमती तां श्लेषमात्रतात्पर्य्यादयुक्तिकीमित्यर्थः अवलम्बः अवलम्बनं सततचिन्तनेन प्राणधारणं तस्य लवः लेशः तस्य छिदां खण्डनां येन केनापि प्रकारेण विच्छेदं क्व सहताम् ? न क्वापीत्यर्थः दुःखितस्य सन्निधौ श्लेषेण अश्लेषेण वा भ्रान्त्या अभ्रान्त्या वा तदनिष्टसंवेदनं तस्य मोहजननं भवति तदत्र अनलङ्कृतं हृदयमिति सखीभाषणं सश्लेषमपि तद्गतप्राणां तामतएव तद्वाक्यस्यातात्त्विकतां पर्य्यालोचयितुमक्षमाममोहयदिति युक्तमेति वाक्यार्थः । अत्रोत्तरार्धवाक्यस्य पूर्वार्धवाक्यहेतुत्वात् काव्यलिङ्गमलङ्कारः । हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति तल्लक्षणात् । कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासश्चेत्यनयोः संसृष्टिः ॥ ११० ॥

तदानीमस्याः सखीजनोपचारक्रियामाह, अधितेति । उपचारीति च द्वाभ्याम् । कापि सखी सुतनोः सुन्दर्य्या भैम्याः

उपचचार चिरं मृदुशीतलै-
र्जलजनालमृणालजलादिभिः ।
प्रियसखीनिवहः स तथा क्रमात्
द्रुतमवाप यथा लघुचेतनाम् ॥ ११२ ॥
अयि सखि ! कलय श्वसिति स्फुटं
चलति पक्ष्म चले ! परिभावय ।

मुखे सलिलम् उदकम् अधित दधौ दत्तवतीत्यर्थः दधातेर्लुङि तन् । कापि सखी सरोजदलैः पद्मपलाशैः स्तनौ व्यधित अपिहितवती आच्छादितवतीत्यर्थः । अपेरलुप्धादौ वेत्यपेरकारलोपः । कापि सखी हृदि हृदये व्यजनानिलं तालवृन्तपवनं व्यधित कृतवती सञ्चालितवतीत्यर्थः । कापि सखी तनौ शरीरे हिमं शीतलं वस्तु मृणालादिकं चन्दनं वा न्यधित निहितवती चन्दने च हिमं विदुरिति विश्वः ॥ १११ ॥

उपचचारेति । स प्रियः प्रीतिकरः सखीनां निवहः वर्गः मृदुभिः कोमलैः शीतलैश्च जलजनालमृणालजलादिभिः जलजैः पद्मैः जलजं शङ्खपद्मयोरिति विश्वः नालैः पद्मदण्डैः मृणालैः बिसलताभिः जलादिभिः आदिपदेन चन्दनादिपरिग्रहः जलजजालमृणालजलादिभिरिति पाठे जलजजालैः पद्मसङ्घैरित्यर्थः चिरं बहुक्षणं क्रमात् तथा उपचचार उपचरितवती यथा इयं भैमी लघु क्षिप्रं लघु क्षिप्रमरं द्रुतमित्यमरः चेतना संज्ञाम् अवाप लेभे ॥ ११२ ॥

अन्वयः अयादीनां सखीनां तद्यंमि संज्ञा लब्धाता भवेति परीक्षार्थं मिथः कलकलं श्लोकाभ्यामाह । अयीति । हे सखि ! श्वसितीति निश्वासं मुञ्चति श्वसिति ध्रुवः

अधरकम्पनमुन्नय मेनके !
किमपि जल्पति कल्पलते ! शृणु ॥ ११३ ॥
रचय चारुमति ! स्तनयोर्वृतिं
गणय केशिनि ! कैश्यमसंयतम्।
अवगृहाण तरङ्गिणि ! नेत्रयोः
जलभराविति शुश्रुविरे गिरः ॥११४॥ युग्मकम्
कलकलः स तदालिजनाननात्
उदलसत् विपुलस्त्वरितैरितैः।

स्फुटं स्पष्टं कलय पश्य, हे चले! पक्ष्म नेत्रलोम चलति स्पन्दते परिभावय अवधेहि, हे मेनके! अधरकम्पनम् ओष्ठ-चलनम् उन्नय आलोकय, हे कल्पलते! किमपि जल्पति आलपति शृणु आकर्णय ॥ ११३ ॥

रचयेति। हे चारुमति! चारुमते इति पाठान्तरं स्तनयोः वृतिम् आवरणं रचय कुरु मूर्च्छापातेन आवरणशून्यतां गतौ स्तनौ आच्छादयेत्यर्थः, केशिनि! असंयतं स्खलितं केशानां समूहः कैश्यं केशसमूहं केशाभ्यामित्यां यङ् चावन्यतरस्यामिति यङ्प्रत्ययः। गणय चिन्तय संयच्छेति भावः, हे तरङ्गिणि! नेत्रयोः जलभरौ अश्रुप्रवाहौ अवगृहाण मोचय इति गिरः वाचः शुश्रुविरे श्रुतास्तत्रत्यैर्जनैरिति शेषः ॥ ११४ ॥

तदाकर्ण्य राज्ञो भीमस्य कन्यान्तःपुरप्रवेशमाह, कलकल इति। तदा तस्मिन् काले सखीजनानामित्थं मिथः सम्भाषण-काले आलिजनाननात् सखीजनमुखात् त्वरितैरितैः सत्-वरगतिभिः विपुलः तुमुलः स कलकलः कोलाहलः कोला-

यमधिगम्य सुतालयमेतवान्
द्रुततरः स विदर्भपुरन्दरः ॥ ११५ ॥

कन्यान्तःपुरबाधनाय यदधीकारान्न दोषा नृपं
द्वौ मन्त्रिप्रवरश्च तुल्यमगदङ्कारश्च तावूचतुः ।
देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलं
स्यादस्या नलदं विना न दलने तापस्य कोऽपि क्षमः
॥ ११६ ॥

हसः कलकल इत्यमरः। उदलसत् उल्लसितवान् उद्बभूवेत्यर्थः। यं कलकलम् अधिगम्य आकर्ण्य स विदर्भाणां विदर्भेषु वा पुरन्दरः इन्द्रः भीमनरेन्द्र इत्यर्थः द्रुततरः अतित्वरावान् सन् द्रुततरमिति पाठे द्रुततरमतिशीघ्रं क्रियाविशेषणम्। सुतालयं कन्यान्तःपुरम् एतवान् आगतवान् प्राप्त इत्यर्थः। द्रुततर इत्यत्र धृतदर इति पाठे धृतः गृहीतः दरो भयं येन सः धृतदरः प्राप्तत्रास इत्यर्थः। एतवानित्यत्र ईयिवानिति पाठेऽपि स एवार्थः ॥ ११५ ॥

अथ राज्ञो मन्त्रिवैद्याभ्यां श्लेषेण तद्रोगवृत्तान्तजिज्ञासायां तदुत्तरमाह, कन्येति। ययोः मन्त्रिवैद्ययोः अधीकारात् नियोगात् अध्यक्षतया पर्यवेक्षणात् उपसर्गस्य घञि बहुलमिति दीर्घः। दोषाः परपुरुषव्यभिचारादयः वातपित्तकफादिवैषम्यजनिता रोगाश्च कन्यान्तःपुरस्य बाधनाय योगक्षेमविध्वंसनाय पीडनाय च न सन्ति न प्रभवन्तीति शेषः अस्तिर्भवतिः परः प्रयुज्यमानोऽप्यस्तीति वचनात्। तौ मन्त्रिणां मन्त्रिषु वा प्रवरः श्रेष्ठः प्रधानमन्त्रीत्यर्थः अगदम् अपगतरोगं करोतीत्यगदङ्कारः वैद्यश्च रोगहार्यगद-

ताभ्यामभूद्युगपदप्यभिधीयमानं
भेदव्ययाकृति मिथःप्रतिघातमेव ।
श्रोत्रे तु तस्य पपतुर्नृपतेर्न किञ्चित्
भैम्यामनिश्चिततयाञ्चितयाकुलस्य ॥ ११७ ॥

•ङ्कारो भिषग् वैद्यश्चिकित्सक इत्यमरः । कर्त्तव्यमेव कार्य्येत्यागद-
स्येति मुमागमः तौ नृपं राजानं तुल्यम् एकवाक्यमित्यर्थः
जगदतुः उक्तवन्तौ, हे देव ! आकर्णय शृणु सुश्रुतेन सुष्ठु श्रव-
णेन अन्यत्र तदाख्यग्रन्थेन तत्पर्य्यालोचनयेत्यर्थः चरति लोक-
व्यवहारज्ञानाय गूढमिति चरः स एव चरकः गूढपुरुषः तस्यो-
क्तेन वचनेन च अन्यत्र चरकाचार्य्यप्रणीतग्रन्थेनेत्यर्थः तत्पर्य्या-
लोचनयेति यावत् अखिलं सर्वं वृत्तं जाने अवगच्छामि ।
किन्तदित्याह अस्याः इति । अस्याः तव दुहितुरित्यर्थः तापस्य
पीड़ाया हनने निवारणे शान्ताविव्यर्थः । नलं राजानं ददा-
तीति नलदः तं तत्संयोजकं पुरुषं तत्परिचयं वा आतोऽनुप-
सर्गे कप्रत्ययः । अन्यत्र नलदम् उशीरं स्यादीरणं वीरतरु
मूलेऽस्योशीरमस्त्रियाम् अभयं नलदं सेव्यमित्यमरः । विना
कोऽपि न क्षमः न शक्तः स्यात् । अस्यास्तापशान्त्यै साम्प्रतं
नलो राजा तदलाभे नलदं प्रभवति नान्य इति पर्य्यवसितो-
ऽर्थः । अनयोभयोरपि नलदयोः प्रकृतत्वात् शब्दश्लेषः । शार्दूल-
विक्रीड़ितं वृत्तं सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्री-
ड़ितमिति तल्लक्षणात् ॥ ११६ ॥

ताभ्यामेवमुक्तेऽपि राजा तदनिष्टशङ्कितत्वात्तदश्रवणमाह,
ताभ्यामिति । ताभ्यां भिषक्प्रवराभ्यामगदङ्काराभ्यां भेदश्च व्ययः
नाशश्च अभेद अव्ययः स एव आकृतिराकारो यस्य तद् भेद-

द्रुतविगमितविप्रयोगचिह्नाम्
अपि तनयां नृपतिः पदाभिनम्राम् ।
अकलयदसमाशुगाधिमग्नां
झटिति पराशयवेदिनो हि विज्ञाः ॥ ११८ ॥

व्ययाकृति अभिन्नाकारमित्यर्थः तुल्यरूपमिति यावत् यथा तथा, युगपत् समकालम् अभिधीयमानं कथ्यमानं तत् मलदं विनीति वाक्यं मिथोऽन्योन्यं मिथोऽन्योन्यं रहस्यपीत्यमरः । प्रतिघातो विसंवादो यस्य तादृशम् एव विपर्यस्तमेवेति भावः अभूत् समकालमुभयोः कथनस्य श्रोतुस्तदर्थबोधप्रणिधानप्रति-बन्धकत्वादिति भावः । भेदव्यपाकृतमिथःप्रतिघातमिति पाठे भेदेन श्लिष्टप्रयोगेण अर्थस्य भिन्नत्वेन व्यपाकृतः अपनीतः मिथः परस्परं प्रतिघातः शाब्दबोधप्रतिबन्धः यत्र तत् तथाभूत-मित्यर्थः । किन्तत इत्याह । भैम्यां दमयन्त्याम् अनिष्टगतं मरणादिरूपमिति भावः शङ्कते इति तच्छङ्की तस्य भावः तया आकुलस्य विह्वलस्य तथाविधवाक्यार्थपर्यालोचनाक्षमस्येति भावः । तस्य नृपतेः राज्ञः श्रोत्रे तु कर्णौ तु किञ्चित् तयोर्वच-मिति भावः । न पपतुः न सादरं जगृहतुः । अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तदुक्तं दर्पणे । हेतोर्वाक्यपदार्थत्वे काव्य-लिङ्गं निगद्यते इति । वसन्ततिलकं वृत्तं ज्ञेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ ११७ ॥

अथ राज्ञः कन्याभावपरिज्ञानमाह, द्रुतेति । नृपतिर्भीमः द्रुतं शीघ्रं राजा न पश्यत्विति धिया अतित्वरं विगमितानि अपनीतानि सखीभिरिति शेषः । विप्रयोगस्य विरहस्य चिह्नानि उशीरमृणालादीनि यस्याः ताम् अपि पदयोश्चरणयोरभिनम्रां

व्यतरदथ पिताऽऽशिषं सुतायै
नतशिरसे सहसोन्नमय्य मौलिम् ।
दयितमभिमतं स्वयंवरे त्वं
गुणमयमाप्नुहि वासरैः कियद्भिः ॥ ११९ ॥

प्रणतां वन्दनार्थमिति भावः तनयां भैमीम् असमाशुगस्य पञ्चबाणस्य कामस्य आधिषु व्यथायां पुंस्याधिर्मानसीव्यथेत्यमरः । मग्नां पतितां मदनार्त्तामित्यर्थः अकलयत् अवधारितवान् । ननु विना लक्षणं कथमवधारितमित्यर्थान्तरेण द्रढ़यति झटितीति । हि तथाहि विशेषेण जानन्तीति विज्ञाः प्रवीणाः प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिता इत्यमरः । झटिति अविलम्बेनैव परेषाम् आशयं भावं विदन्तीति तथोक्ताः परमर्मज्ञा इत्यर्थः भवन्तीति शेषः वाह्यलक्षणमदृष्ट्वापि स्वाभाविकाकृतिविकृतिदर्शनादेव अन्तर्गतं भावम् अवबुध्यन्ते इत्यर्थः । तथाचोक्तं मनुना । आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च । नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मन इति । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । तदुक्तं दर्पणे । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत इति । पुष्पिताग्रावृत्तम् अयुजि न युगरेफतो यकारो युजितु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात् ॥ ११८ ॥

तच्च तथाविधामाशिषा राजा सान्त्वयति, व्यतरदिति । अथ परिज्ञानानन्तरं पिता भीमनरपतिः नतम् अभिवन्दनार्थं पादयोः पतितं शिरो यस्याः तस्यै चरणनिपतितशिरसे इत्यर्थः तदनन्तरं लज्जावनतशिरसे वा सुतायै दुहित्रे सहसा

तदनु स तनुजासखीरवादीत्
तुहिनऋतौ गत एव हीमनोनाम्।
कुसुममपि शरायते शरीरे
तदुचितमाचरतोपचारमस्याम् ॥ १२० ॥

ततश्च मौलिं मस्तकम् उन्नमय्य उत्तोल्य, हे वत्से! त्वं कियद्भिः कतिपयैः स्वल्पैरेवेत्यर्थः वासरैः दिवसैः समौ दिवस-वासराविल्यमरः। स्वयं म्रियते भर्त्तानेनेति स्वयंवरे तत्समाजे इत्यर्थः एतेन पित्रपारतन्त्र्याभावात् स्वाभीष्टवरलाभो भविष्यतीति सूच्यते। अभिमतं स्वाभीष्टं गुणमयं बहुगुणाकरमित्यर्थः दयितं कान्तम् आप्नुहि लभस्व इति आशिषं व्यतरत् दत्तवान् तादृशेन शुभवचसा तां सान्त्वयामासेति भावः। एतदपि पुष्पिताग्रावृत्तम् ॥ ११८ ॥

अथास्याः सखीरादिशति, तदन्विति। तदनु तदनन्तरम् आशीर्वादानन्तरम् अनुलक्षणे इति कर्मप्रवचनीयसंज्ञा। स राजा तनुजायाः सुतायाः सखीः सहचरीः अवादीत् उक्तवान् हे सख्यः! तुहिनऋतौ शीतर्त्तौ ऋत्यकीति प्रकृतिभावः। तुहिने ऋतावित पृथक्पदं वा गत एव वसन्तागमे एवेत्यर्थः। हीमनोनां सुकुमाराङ्गीनाम् अभिनवयौवनशालिनीनामित्यर्थः। शरीरे कुसुममपि पुष्पमपि शरायते शर इवाचरति शिरस-धारणे। शरप्रहारवत् दुःसहं भवतीत्यर्थः। अत्यसुन्दरम् अभि-नवयौवनं वात्र हेतुरिति भावः तत् तस्मात् अस्यां भैम्याम् एकमवस्थायामिति भावः उचितं योग्यं का समीचीनमिति भावः उपचारं परिचर्य्याम् आचरत कुरुत। पुष्पिताग्रावृत्तम् ॥ १२० ॥

कतिपयदिवसैर्वयस्यया वः
स्वयमभिलष्य वरिष्यते वरीयान् ।
कृशिमशमनयानया तदासु
रुचिरुचिताऽद्य भवद्विधाभिधाभिः ॥ १२१ ॥

एवं यद्वदता नृपेण तनया नाप्रच्छि लज्जापदं
यन्मोहः स्मरभूरकाल्पि वपुषः पाण्डुत्वतापादिभिः ।

न खल्वेतच्चिरकर्त्तव्यमित्यत्राह, कतिपयेति । वः युष्माकं वयस्यया सख्या दमयन्त्या आलिः सखी वयस्येत्यमरः । कतिपयैः अल्पैरेव दिवसैः स्वयम् आत्मना अभिलष्य अभिलाषविषयीकृत्य वरीयान् अतिश्रेष्ठः वरः वरिष्यते ग्रहीष्यते इत्यर्थः । यं कामयते तमेव ग्रहीष्यतीति भावः । तत्तस्मात् अद्य साम्प्रतम् अनया दमयन्त्या भवतीनां विधेव विधा यासां तासां भवद्विधानां सखीनां सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । अभिधाभिः वचनैः उपदेशैरिति यावत् कृशस्य भावः कृशिमा दौर्बल्यमित्यर्थः तं शमयति शान्तिं नयतीति तयाभूतया भवतीनामुपदेशानुरूपाचरणेन स्वस्थभावमापन्नयेति भावः सत्या उचिता अनुरूपा रुचिः कान्तिः प्रीतिर्वा आसुं लब्धुम् उचिता । अतिशीघ्रं स्वयंवरो भविता तदनयेयं युष्माकं परिचर्य्यया स्वां प्रकृतिं लभते तथा युष्माभिः कर्त्तव्यमिति भावः । पुष्पिताग्रावृत्तम् ॥ १२१

इत्थं राजवचनेन तस्य दुहितुरामयवेदितामवगत्य तासां लज्जाहर्षयोः सममेवाविर्भावमाह, एवमिति । एवम् इत्थं वदता कथयता नृपेण राज्ञा तनया दमयन्ती लज्जापदं लज्जाहेतुं न आप्रच्छि न पृष्टेति यत् लज्जास्पदमिति पाठे लज्जास्पदं लज्जावतीति तनयेत्यस्य विशेषणम् । पृच्छतेर्दुहादित्वाद-

यच्चाशीःकपटादवादि सदृशी स्यात्तव या सान्त्वना
तन्मत्वालिजनो मनोऽब्धिमतनोदानन्दमन्दाक्षयोः
॥ १२२ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तुर्य्यः स्थैर्य्यविचारणप्रकरणभ्रातर्य्ययं तन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः
॥१२३॥

प्रधाने कर्म्मणि लुङ् । मोहः मूर्च्छा वपुषः शरीरस्य पाण्डुत्वं पाण्डिमा तापश्च आदिर्येषां तैः लक्षणैरिति शेषः स्मरात् भवतीति स्मरभूः कामजः अकल्पि कल्पितः अवधारित इत्यर्थः इति यत् तत्र तस्याम् अवस्थायामिति भावः दुहितरि वा या सान्त्वना सदृशी अनुरूपा स्यात् सा च आशिषः आशीर्वादस्य गुणमयमाप्नुहि दयितमित्युक्तस्य कपटात् व्याजात् अवादि प्रयुक्तेति भाव इति च यत् तत्सर्वं मत्वा पर्य्यालोच्य आलिजनः सखीजनः मनश्चित्तम् कर्म्म आनन्दमन्दाक्षयोः हर्षत्रपयोः मन्दाक्षं ह्रीस्त्रपा व्रीडेत्यमरः। अब्धिं सागरम् अतनोत् कृतवान् आनन्दलज्जारूपसागरे आत्मानं निमज्जयामासेत्यर्थः। सख्यु-रचिरमेव मनोरथः सेत्स्यतीत्यानन्दः राज्ञा चैतद्विदितमिति लज्जा चेति भावः। शार्दूलविक्रीडितं वृत्तं प्रागुक्तम् ॥ १२२ ॥

श्रीहर्षमिति। तुर्य्यश्चतुर्थः चतुरश्च यतावाद्यक्षरा-लोपश्चेति साधुः। स्थैर्य्यस्य विचारणं नाम यत् स्वरचितं प्रक-रणं प्रबन्धविशेषः तस्य भ्रातरि सहोदरे समानकर्तृके इति

पञ्चमः सर्गः ।

यावदागमयतेऽथ नरेन्द्रान्
स स्वयंवरमहाय महीन्द्रः ।
तावदेव ऋषिरिन्द्रदिदृक्षुः
नारदस्त्रिदशधाम जगाम ॥ १ ॥

भावः। श्रीहर्षेण स्थैर्य्यविचारणं नाम प्रकरणनामकं प्रणीतं ततश्च तस्य भ्राता इदं नैषधकाव्यमिति भावः ॥ १२३ ॥

इति श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्य-विरचिता
नैषधचरितस्य चतुर्थसर्गव्याख्या समाप्ता ।

अथ स्वयंवरं इन्द्रादीनां देवानामागमनं विवक्षुस्तदधिगमाय नारदमुनेः स्वर्गनगरीयात्रामाह, यावदिति। अथाशीर्वादवचनेन दुहितुः सान्त्वनानन्तरं स महीन्द्रः भीमः दमयन्तीपिता स्वयंवरमहाय स्वयंवरोत्सवाय मह उद्धव उत्सव इत्यमरः। नरेन्द्रान् नानादेशीयान् राज्ञः यावत् आगमयते आगमनेन कालं प्रतीक्षते इत्यर्थः आगमेः क्षमायामात्मनेपदं वक्तव्यम्। क्षमा अपेक्षा कालहरणमिति काशिका। तावदेव तस्मिन्नेव काले इत्यर्थः ऋषिर्नारदः ऋत्यकगिति प्रकृतिभावः। इन्द्रदिदृक्षुः इन्द्रं द्रष्टुमिच्छुः सन् मधुपिपासुवत् गमिगाम्यादिपाठात् द्वितीया समासः। तिस्रो दशा बाल्य-यौवन-प्रौढ़ानि येषां ते त्रिदशाः देवाः तेषां धाम आलयं सुरपुरमित्यर्थः जगाम गतवान्। अस्मिन् सर्गे स्वागताहृत्तं स्वागता रनभगैर्गुरुणा चेति तल्लक्षणात् ॥ १ ॥

नात्र चित्रमनु तं प्रययौ यत्
पर्वतः स खलु तस्य सपक्षः।
नारदस्तु जगतो गुरुरुच्चैः
विस्मयाय गगनं विललङ्घे॥ २॥

अथ सप्तभिः श्लोकैरस्य स्वर्गगमनं वर्णयति, नेत्यादि। पर्वतः तदाख्यो मुनिभेदः शैलश्च पर्वतौ शैलदेवर्षी इति विश्वः। तं नारदम् अनु प्रययौ अनुजगामेति यत् अत्र अस्मिन् विषये न चित्रं नाश्चर्य्यं, खलु यतः स पर्वतः तस्य नारदस्य सपक्षः मित्रं यद्वा स नारदः तस्य पर्वतस्य सपक्ष इति योजना। पक्षवांश्च। प्राक् पर्वताः पक्षवन्त आसन्निदानीम् इन्द्रेण तेषां पक्षच्छेदात् तदभावः। मित्रस्य मित्रानुगमनं पक्षवतः पक्ष-वदनुगमनञ्च नाश्चर्य्यमिति भावः। नारदस्तु जगतः उच्चैर्महान् गुरुराचार्य्यः तस्मादधिकभारवांश्चेति गम्यते गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपीति मेदिनी। विस्मयाय लोकचमत्का-राय गगनम् आकाशं विललङ्घे लङ्घितवान् यद्वा गगनं विल-लङ्घे इति यत् तत् विस्मयायेति योजना। विना विमानं गगनलङ्घनं विस्मयकरमिति भावः गुरुवस्तुनः उत्पतनानर्हतया पतनमेव प्रकृतिः गगनविलङ्घनन्तु विस्मयायेति च गम्यते। गच्छतीति जगदिति वोपदेवीयव्याख्यानात् गमनशीलस्य जगतस्तत्स्खलितजनस्येति भावः नास्माभिरेवमुत्पत्यते इति धिया विस्मयायेति वा योजना। यद्वा वीनां पक्षिणां स्मयाय नास्माभिरेवमुड्डयितुं शक्यते इति चमत्कारायेत्यर्थः। अत्र श्लेषानुप्राणितो विरोधाभासालङ्कारः॥ २॥

गच्छता पथि विनैव विमानं
व्योम तेन मुनिना विजगाहे ।
साधने हि नियमोऽन्यजनानां
योगिनान्तु तपसाऽखिलसिद्धिः ॥ ३ ॥
खण्डितेन्द्रभवनाद्यभिमानान्
लङ्घते स्म मुनिरेष विमानान् ।
अर्थितोऽप्यतिथितामनुमेने
नैव तत्पतिभिरङ्घ्रिविनम्रैः ॥ ४ ॥

गच्छतेति। पथि मार्गे विमानं व्योमयानं व्योमयानं विमानोऽस्त्रीत्यमरः। विनैव गच्छता तेन मुनिना नारदेन व्योम आकाशं विजगाहे प्रस्थितमित्यर्थः यद्वा गच्छता तेन मुनिना विनैव पक्षिणा इव एव शब्दस्यापि इवार्थत्वमपि दृश्यते। विगतं मानं परिमाणं यस्य तद् विमानम् अपरिमाणमित्यर्थं असीमेति यावत् व्योम विजगाहे इत्यन्वयः। नैतच्चित्रमित्यत्राह साधने इति साध्यते अनेनेति साधनम् उपायः तस्मिन् अन्यजनानां योगिव्यतिरिक्तानामित्यर्थः नियमः स्थिरवधारणे, क्रियासिद्धिरुपायमपेक्षते एवेति भावः योगिनान्तु तपसैव तपोबलेनैव अखिलस्य समस्तस्य कार्य्यस्य सिद्धिर्भवतीति शेषः तस्मान्महायोगिनोऽस्य साधनान्तरापेक्षा नेति भावः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३ ॥

खण्डितेति। एष मुनिः नारदः खण्डितः न्यक्कृत इत्यर्थः इन्द्रभवनादीनां देवेन्द्रालयानाम् अभिमानः रमणी-

तस्य तापनभिया तपनः स्वं
तावदेव समकोचयदर्चिः।
यावदेष दिवसेन शशीव
द्रागतप्यत न तन्महसैव ? ॥ ५ ॥
पर्य्यभूद्दिनमणिर्द्विजराजं
यत्करैरहह ! तेन तदा तम्।

यदाहङ्कारो यैः तादृशानपि ततोऽप्यधिकरमणीयानित्यर्थः विमानान् देवयानानि लङ्घते स्म अतिक्रम्य जगामेत्यर्थः। तथाच अङ्घ्रिविनम्रैः पदानतैः तत्पतिभिः तेषां विमानानां पतिभिः अधिष्ठातृभिरिति भावः अर्थितः भगवन्ननुकम्पया-स्मानिति याचितोऽपि अतिथितताम् आतिथ्यं तेषामिति शेषः न अनुमेने नानुमोदितवान् विलम्बे कार्य्यहानिः स्यादिति भियेति भावः ॥ ४ ॥

तस्येति। तपनः सूर्य्यः तस्य मुनेः कर्म्मभूतस्य तापनात् स्वातपस्पर्शेन पीड़नात् भिया भयेन स्वं निजम् अर्चिः तेजः अर्चिर्हेतिः शिखा स्त्रियामित्यमरः। तावदेव तथैव समकोचयत् सङ्कुचितमकरोत् यावत् यथा एषः तपनः दिवसेन शशीव चन्द्र इव तस्य मुनेर्महसा तेजसा एव द्राक् झटिति द्राग् झटित्यञ्जसाह्नायेत्यमरः। न अतप्यत अतितेजसा सन्तापे मुनिः क्रोधेन स्वतेजसा दिवसः शशिनमिव मां तापयेत् स्वतेजसः सम्यक्प्रान्ती सत्त्विषितस्य मुनेस्तेजसा अस्य सन्तापो दुर्वारः अल्पस्य तेजसः प्रसरणे न तथेति विविच्य स्वं तेजो मन्दीचकारेति भावः। एतेन नारदस्य सूर्य्यवत्तेजस्वित्वं गम्यते ॥ ५ ॥

पर्य्यभूत् खलु करैर्द्विजराजः
कर्म्म कः स्वकृतमत्र न भुङ्क्ते ? ॥ ६ ॥
विष्टरं तटकुशालिभिरद्भिः
पाद्यमर्घ्यमथ कच्छरुहाभिः।
पद्मवृन्दमधुभिर्मधुपर्कं
स्वर्गसिन्धुरदितातिथयेऽस्मै ॥ ७ ॥

पर्य्यभूदिति। दिनमणिः सूर्य्यः द्विजराजं चन्द्रं द्विजराजः शशधरो नक्षत्रेशः क्षपाकर इत्यमरः। ब्राह्मणश्रेष्ठश्च करैः अंशुभिः हस्तैश्च बलिहस्तांशवः करा इत्यमरः। पर्य्यभूत् परिभवति स्मेति यत्, अहह आश्चर्य्यं तदा तस्मिन् काले तेन द्विजराजपरिभवेण हेतुना द्विजराजः ब्राह्मणप्रवरः नारद इत्यर्थः चन्द्रश्च करैः अंशुभिः हस्तैश्च तं दिनमणिं सूर्य्यं पर्य्यभूत् खलु परिभूतवानेवेत्यर्थः। यो येन परिभूयते स तेनापि परिभूयत एवेति भावः। सूर्य्यो यथा नारदं स्वकरेण तापयति स्म नारदोऽपि तं सूर्य्यं तथैवेति तात्पर्य्यम्। तथाहि अत्र संसारे को जनः स्वकृतं कर्म्म न भुङ्क्ते ? अपि तु सर्व एव जनः स्वं कर्मफलं भुङ्क्त एवेत्यर्थः स्वकर्मफलभाक् पुमानिति शास्त्रात्। कर्मणः औत्कट्येन तत्क्षणफलभोगस्य अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते इति शास्त्रीयत्वात् सूर्य्यस्य तत्क्षणमेव मुनितेजसाभिभव इति भावः॥ ६॥

विष्टरमिति। अथानन्तरं स्वर्गप्राप्त्यनन्तरमित्यर्थः स्वर्गसिन्धुः मन्दाकिनी अतिथये अभ्यागताय अतिथिर्ना गृहागते इत्यमरः। अस्मै नारदाय तटेषु याः कुशानाम आलयः राजयः

स व्यतीत्य वियदन्तरगाधं
नाकनायकनिकेतनमाप।
सम्प्रतीर्य्य भवसिन्धुमनादिं
ब्रह्म शर्म्मभरचारु यतीव॥ ८॥

ताभिः विष्टरम् आसनं वृक्षासनयोर्विष्टर इति निपातात् षत्वम्। अद्भिः जलैः पाद्यं पादप्रक्षालनजलं पाद्यं पादाय वारिणीत्यमरः। कच्छेषु अनूपेषु जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविध इत्यमरः। रोहन्ति जायन्ते इति रुहा दूर्वाः ताभिः दूर्वा तु शतपर्विका। सहस्रवीर्य्या भार्गव्यौ रुहानन्ते-त्यमरः। अर्घ्यं पादार्घ्याभ्याञ्चेति तादर्थ्ये यत्प्रत्ययः। पद्म-वृन्दानां कमलसङ्घानां मधुभिर्मकरन्दैः मधुपर्कञ्च अदित दत्तवती ददातेर्लुङ्। तथाविधमन्दाकिनीदर्शनेनास्य ज्ञाता-तिथ्यस्येव परितोष आसीदिति भावः। अत्र स्वर्गसिन्धोरचे-तनाया चेतनधर्मदानक्रियायां तदन्वयायोगात् प्रतीयमानोत्-प्रेक्षा तथाच अदित। किम् इत्युत्प्रेक्षाव्यञ्जकाध्याहारेण व्याख्येयमिति केचिदाहुः। वस्तुतस्तु स्वर्गसिन्धुस्तदधिष्ठात्री-देवीत्यर्थ एव साधीयान् ततश्च न काप्यनुपपत्तिर्नाप्यध्याहार-दोष इति सुधीभिर्विभाव्यम्॥ ७॥

स इति। स मुनिः नारदः यतम् इन्द्रियसंयमः अस्या-स्तीति यती योगी परमहंस इत्यर्थः अनादिं निरवधिकम् अनन्तमिति च भवसिन्धुं संसारसागरं सम्प्रतीर्य्य सम्यगुत्तीर्य्य शर्म्मणां सुखानां शर्म्मशातसुखानि चेत्यमरः। भरैः अतिरेकैः चारु मनोज्ञं परमानन्दमनोरमामित्यर्थः ब्रह्म च आनन्दमय-त्वञ्च आनन्दं ब्रह्मणोरूपमित्यादिश्रुतिसिद्धत्वादिति भावः।

अर्चनाभिरुचितोच्चतराभिः
चारु तं सदकृतातिथिमिन्द्रः ।
यावदर्हकरणं किल साधोः
प्रत्यवायधुतये न गुणाय ॥ ९ ॥
नामधेयसमतासखमद्रेः
अद्रिभिन्मुनिमथाद्रियत द्राक् ।

अत्र परमात्मानमिव अगाधम् असीमेत्यर्थः वियदन्तः गगनान्तरं व्यतीत्य व्यतिक्रम्य उल्लङ्घ्येत्यर्थः शर्म्मभरचारु सुखातिशयरम्यं नाकनायकस्य देवेन्द्रस्य निकेतनम् आलयम् आप प्राप्तवान् । उपमालङ्कारः ॥ ८ ॥

अथाभ्यागतं तं प्रति देवेन्द्रस्यातिथ्यमाह, अर्चनाभिरिति । इन्द्रः अतिथिं अभ्यागतं तं नारदम् उचितात् विहितात् उच्चतराभिः अतिमहतीभिः अर्चनाभिः पूजाभिः चारु मनोज्ञं यथा तथा सदकृत सत्कृतवान् अभिनन्दितवानित्यर्थः। आदरानादरयोः सदसतीति निपातनात् प्राक्प्रयोगः । नन्वधिकार्चना कुत इत्याह, यावदिति । यावदर्हं यथायोग्यं यावदवधारणे इत्यव्ययीभावः तस्य करणं यावदर्हकरणं षष्ठीतत्पुरुषः। यथाविधानमाचरणं साधोः सज्जनस्य प्रत्यवायधुतये अकरणजन्यदुरदृष्टपरिहाराय, न गुणाय किल नाधिकफलायैव भवतीति भावः । तस्मात् समधिकफलकामनयैव देवराजस्तं विशेषेण सम्पूजितवानित्यर्थः यो भूय आरभते तस्य फले विशेष इति न्यायोऽत्र हेतुरिति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास इति प्राञ्चः । नव्यास्तु यत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यास इत्याचक्षते । तत्तत्त्वमुक्तं प्राक् ॥९॥

पर्वतोऽपि लभतां कथमर्च्चां
न द्विजः स विबुधप्रभुलम्भी ॥ १० ॥
तद्भुजादतिवितीर्णसपर्य्यात्
द्योद्रुमानपि विवेद मुनीन्द्रः।

अथ तत्सख्युः पर्वतस्यापि देवेन्द्रेण सत्कारमाह, नामधेयेति। अथ नारदसत्कारानन्तरम् अद्रिभित् पर्वतभेदी इन्द्रः अद्रेः पर्वतस्य नामधेयेन या समता सादृश्यं तया सखा मित्रं तं नारदसखं मुनिं पर्वताख्यमित्यर्थः द्राक् झटिति द्राग् झटित्यञ्जसाह्नायेत्यमरः। आद्रियत सच्चकार। ननु पर्वतः पर्वतपक्षभेदिनः सकाशात् कथं पूजां लेभे इत्यत्राह, पर्वतोऽपीति। स द्विजः विबुधानां देवानां पण्डितानाञ्च प्रभुः विबुधप्रभुः विबुधः पण्डिते देवे इति विश्वः। तं देवेन्द्रं पण्डितप्रवरञ्च लभते इति तल्लम्भी तत्प्राप्तः सन् कथम् अर्चां पूजां न लभताम्? अपितु लभतामेवेत्यर्थः सम्भावनायां लोट्। अरावप्युचितं कार्य्यमातिथ्यं गृहमागते। छेत्तुः पार्श्वगतां च्छायां नोपसंहरति द्रुम इति नयेन शत्रोरपि गृहागतस्य पूजा विहिता अयन्तु नाममात्रतः शत्रुर्न तु वास्तविकः तदवश्यमेवासौ पूजामर्हतीति भावः। पर्वतः अतिकठिनः अतिनिष्ठुर इति भावः द्विजः दुराचारोऽपि ब्राह्मण इत्यर्थः विबुधप्रभुलम्भी पण्डितप्रवरप्राप्तः सन् कथमर्चां न लभतामपि तु लभतामेव दुर्वृत्तो वा सुवृत्तो वा ब्राह्मणो मामकी तनुरिति भगवद्वचनेन जातिमात्रेणापि ब्राह्मणस्य पूज्यत्वस्योक्तत्वादिति च ध्वन्यते ॥ १० ॥

अथेन्द्रस्यातीव वदान्यतां प्रकटयति, तद्भुजादिति। स

स्वः सद्मस्थितिसुशिक्षितया तान्
दानपारमितयैव वदान्यान् ॥ ११ ॥
मुद्रितान्यजनसंकथनः सन्
नारदं बलरिपुः समवादीत् ।

मुनीन्द्रो नारदः तान् प्रसिद्धान् द्योः स्वर्गस्य द्रुमाः द्योर्द्रुमाः कल्पतरवः तान् सुरलोको द्यो दिवौ द्वे इत्यमरः। अतिशयेन वितीर्णा दत्ता सपर्य्या पूजा येन तस्मात् पूजा नमस्यापचितिः सपर्य्यार्चार्हणाः समा इत्यमरः। तस्य इन्द्रस्य भुजात् हस्तात् शिक्षकात् गुरोरिति भावः। स्वः स्वर्गे स्वरव्ययं स्वर्गनाकेत्यमरः। सद्मस्थित्या सद्मावस्थानेन सुशिक्षितया इन्द्रस्य निरन्तरदान-कार्य्यदर्शनात् स्वतएव अभ्यस्तयेति भावः परममिव पारमं दानमेव पारमं परमर्थं इति यावत् विद्यतेऽस्येति दानपारमी तस्य भावः दानपारमिता तया दानस्य परमतत्त्वेनेत्यर्थः दान-पारमिता नाम वदान्यतोत्कर्षप्रतिपादकग्रन्थविशेषः तयेति प्राञ्चः एव हेतुना वदान्यान् दानशीलान् स्युर्वदान्यस्थूललक्ष्य-दानशौण्डा बहुप्रदे इत्यमरः। विवेद ज्ञातवान्। कल्पतरवः स्वभावत एव न दानशीलाः किन्तु सततं देवेन्द्रस्य दानव्यापा-रावलोकनेनैव दानशीलतां विहितवन्त इत्यवगतवानित्यर्थः। कल्पवृक्षानपि अतिशेते देवेन्द्रहस्त इति भावः ॥ ११ ॥

अथेन्द्रस्य नारदं प्रति वचनोपक्रममाह, मुद्रितेति। बलस्य दैत्यविशेषस्य रिपुः शत्रुः तन्निसूदन इत्यर्थः इन्द्रः बलारातिः शचीपतिरित्यमरः। मुद्रितं निवारितम् अन्यैः जनैः सह सङ्कथनं संलापः येन तथोक्तः अन्यैः सहालापं रहयन्नित्यर्थः। सन् नारदं समवादीत् सम्यगुवाच नारदेन सह संलापमकरो-

आकरः स्वपरभूरिकथानां
प्रायशो हि सुहृदोः सहवासः ॥ १२ ॥
तं कथानुकथनप्रसृतायां
दूरमालपनकौतुकितायाम्।
भूभृतां चिरमनागमहेतुं
ज्ञातुमिच्छुरवदच्छतमन्युः ॥ १३ ॥

दित्यर्थः। हि यतः सुहृदोः मित्रयोः सहवासः सङ्गः स्वे आत्मानः परे अन्ये च स्वपरे तेषां भूरयः अनेका याः कथाः तासाम् आत्मसम्बन्धिनीनाम् अपरसम्बन्धिनीनाञ्च कथामामित्यर्थः प्रायशः बाहुल्येन आकरः हि खनिरेव उत्पत्तिस्थानमेवेत्यर्थः सुहृदोः सङ्गमे परस्परहृदयनिहिता रहस्या अरहस्याश्च विविधा इष्टालापाः प्रवाहरूपेण प्रसरन्तीति भावः। खनिः स्त्रियामाकरः स्यादित्यमरः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ १२ ॥

तमिति। शतं मन्यवो यज्ञा यस्य स शतमन्युः शतक्रतुरिन्द्रः मन्युर्दैन्ये क्रतौ क्रुधीत्यमरः। शतमन्युर्दिवस्पतिरिति चामरः। आलपने सम्भाषणे या कौतुकिता कुतूहलपरता तस्यां दूरमतिशयेन कथानुकथाभ्याम् उक्तिप्रत्युक्तिभ्यां प्रसृतायां विस्तृतायां सत्यां प्रसङ्गक्रमेणेत्यर्थः भूभृतां राज्ञां चिरं दीर्घकालं व्याप्य अनागमहेतुम् अनागमनकारणं प्रायेण संग्रामनिहताः शूराः स्वर्गं प्राप्य मत्समीपमागच्छन्ति सुचिरञ्च तन्न दृश्यते किमत्र कारणमिति भावः। ज्ञातुमिच्छुः जिज्ञासुः सन् तं नारदम् अवदत् प्रसङ्गसङ्गत्या पृष्टवानित्यर्थः। अनागमहेतुमित्यत्रअनागतिहेतुमिति पाठेऽपि स एवार्थः ॥ १३ ॥

प्रागिव प्रसुवते नृपवंशाः
किन्नु सम्प्रति न वीरकरीरान् ? ।
ये परप्रहरणैः परिणामे
विक्षताः क्षितितले निपतन्ति ॥ १४ ॥

पार्थिवं हि निजमाजिषु वीराः
दूरमूर्द्धगमनस्य विरोधि ।
गौरवात् वपुरपास्य भजन्ते
मत्कृतामतिथिगौरवचट्टिम् ॥ १५ ॥

प्रागिति । नृपवंशाः नृपाणां राज्ञां वंशाः कुलानि नृपा एव वंशाः वेणवश्च । वंशो वेणौ कुले वर्गे इति विश्वः । प्रागिव पूर्ववत् सम्प्रति वीराणां करीराः अङ्कुराः वीरप्ररोहाः वीरा एव करीरा वंशाङ्कुरोऽ तान् वंशाङ्कुरे करीरोऽस्त्रीत्यमरः । किं नु न प्रसुवते ? न जनयन्ति किम् ? नु वितर्के सम्बुद्धौ वा । किन्तत इत्याह, ये इति । ये वीरकरीराः परिणामे प्रौढ़-दशायां परेषां शत्रूणामन्येषाञ्च । परं दूरान्यमुख्येषु परोऽरि-परमात्मनोरिति वैजयन्ती । प्रहरणैः प्रहारसाधनैः अस्त्रै-रित्यर्थः कुठारादिभिश्च विक्षताः छिन्नाः सन्तः क्षितितले भू-पृष्ठे निपतन्ति लुठन्ति । वंशा इव प्रौढ़दशायां ये वीराः रण-भूमौ शत्रुप्रहरणविदलिताङ्गाः सन्तः भूमौ पतन्ति ते साम्प्रतं किं नोत्पद्यन्ते इति प्रश्नवाक्यार्थः । रूपकमलङ्कारः ॥ १४ ॥

नन्वेतावता किमित्यत्राह, पार्थिवमिति । हि यतः वीराः शूरा नृपतयः पार्थिवं पृथिवीविकारं वपुषः पाञ्चभौतिकत्वे-ऽपि तदंशबाहुल्यात् पार्थिवमिति भावः । अतएव गौरवात्

साभिशापमिव नातिथयस्ते
मां यदद्य भगवन्नुपयन्ति।
तेन न श्रियमिमां बहु मन्ये
स्वोदरैकभृतिकार्य्यकदर्य्याम्॥ १६ ॥

पतनजन्यात् गुरुत्वात् दूरम् अतिशयेन ऊर्द्धंगमनस्य उत्पतनस्य ऊर्द्धलोकरूपस्वर्गप्राप्तेश्च विरोधि प्रतिबन्धकं निजं स्वीयं वपुः शरीरम् आजिषु संग्रामेषु समित्याजिसमिद्युध इत्यमरः। अपास्य परित्यज्य मत्कृतां मया कृताम् अतिथिषु यत् गौरवम् आदरः स एव ऋद्धिः सम्पद् ताम् अतिथिसत्कारविशेषमित्यर्थः ऋत्यकगिति प्रकृतिभावः। भजन्ते प्राप्नुवन्ति। तेषाञ्च साम्प्रतमनुपस्थितेः ममातिथ्यधर्म्मस्याननुष्ठानप्रसङ्गः तेनास्मद् गार्हस्थ्यधर्मव्याघात इति तत् प्रश्नहेतुरिति भावः॥ १५॥

नन्वतिथिसेवानाचरणे का क्षतिस्तव, प्रत्युत तेषामेवागतित्वमित्यत्राह, साभिशापमिवेति भगः ऐश्वर्य्यादिषट्कम् ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गनेत्युक्तेः विद्यतेऽस्येति भगवान् तत्सम्बुद्धौ, हे भगवन्! ते वीरा अतिथयः अभिशापेन मिथ्याभिशंसनेन अलीकमहापातकादिदोषकीर्त्तनेनेति भावः। अथ मिथ्याभिशंसनमभिशाप इत्यमरः। सह वर्त्तते इति तथोक्तमिव महापातकदूषितमिवेत्यर्थः माम् अद्य यत् न उपयन्ति न प्राप्नुवन्ति न मद्गृहमुपतिष्ठन्ते इति भावः। तेन हेतुना अतिथीनामनागमनेन कारणेनेत्यर्थः स्वस्य आत्मनः उदरं तस्यैव एकस्य केवलस्य एके मुख्यान्यकेवला इत्यमरः। भृतिकार्य्येण भरणव्यापारेण कदर्य्या कृपणा नीचा वा कदर्य्यः कृपणः क्षुद्र

पूर्वपुण्यविभवव्ययलब्धाः
श्रीभरा विपद एव विमृष्टाः।
पात्रपाणिकमलार्पणमेषां
तासु शान्तिकविधिर्विधिदृष्टः॥ १७॥

इत्यमरः। तथाच स्मृतिः। आत्मानं धर्म्मकृत्यञ्च पुत्रदारांश्च पीड़येत्। लोभाद् यः पितरौ भृत्यान् स कदर्य्य इति स्मृत इति। इमां श्रियं स्वर्गाधिपत्यैश्वर्य्यमिति भावः न बहु मन्ये नात्यन्तमाद्रिये इत्यर्थः। अतिथिसत्कार एव सम्पत्तेः फलं केवलं स्वोदरपूरणन्तु श्वानोऽपि कुर्वन्ति तदतीव गर्हितं सम्पन्नानामिति मदीया महती सम्पत् अतिथिविमुखं मां न प्रीणयतीति फलितार्थः साभिप्रायमिवेत्युत्प्रेक्षा॥ १६॥

पूर्वेति। पूर्वपुण्यानां प्राक्तनानां सुकृतानां विभवः प्रभावः तस्य व्ययेन क्षयेण लब्धाः प्राप्ताः बद्धा इति पाठे बद्धाः संयमिताः स्वायत्तीकृता इति यावत्। श्रीभराः सम्पदतिशयाः महत्यः सम्पद इत्यर्थः। विमृष्टा विचारिताः सन्तः विपद एव बहुक्लेशजनितसुकृतराशिविनिमयेन प्राप्तानां यथोचिताभोगेन दुःखपर्य्यवसायित्वादिति भावः। एषां श्रीभराणां पात्रपाणिकमलेषु योग्यपात्रहस्तपद्मेषु अतिथिकरेष्विति यावत् अर्पणं दानं तासु विपत्सु विधिदृष्टः शास्त्रदृष्टः यद्वा विधिना ब्रह्मणा दृष्टः श्रुतिष्विति भावः शान्तिः प्रयोजनमस्येति शान्तिकः प्रशमनफल इत्यर्थः विधिरनुष्ठानम्। विनष्टसुकृतलब्धसम्पदा पात्रदानजनितसुकृतातिशयोत्पत्तेरिति भावः। फलातिशयसूचनाय पात्रेति पदं प्रयुक्तम् उक्तञ्च। सर्वत्र गुणवद्दानं श्वपाकादिष्वपि स्मृतम्। देशे काले विधानेन पात्रे

तत् विसृज्य मम संशयशिल्पि
स्फीतमत्र विषये सहसाघम् ।
भूयतां भगवतः श्रुतिसारैः
अद्य वाग्भिरघमर्षणऋग्भिः ॥ १८ ॥

दत्तं विशिष्यते इति। विपन्नाः शान्तिकर्म आचरन्तीति-प्रसिद्धिः। श्रियोऽधिष्ठानत्वेन पाणौ कमलत्वारोपः इति रूपक-मलङ्कारः ॥ १७ ॥

तदिति। तत्तस्मात् भगवतस्तव श्रुतिः श्रवणं तत्र साराः उत्कृष्टाः श्रुतिसुखा इत्यर्थः अन्यत्र श्रुतिषु वेदेषु साराः श्रेष्ठांशभूताः तैः सारो बले स्थिरांशे चेत्यमरः। तैः वाग्भिः वचनैः अत्रास्मिन् विषये वीराणां मदगृहेऽनागमनविषये इत्यर्थः मम स्फीतं प्रवृद्धं संशयस्य किं मम मिथ्याभिशंसन-मनागमनहेतुरन्यो वेति सन्देहस्य शिल्पि स्रष्टृ जनकमित्यर्थः यद्वा संशय एव शिल्पी जनको यस्य तत् सन्देहहेतुकमित्यर्थः। अघं दुःखम् उद्वेगमिति यावत् दुःखैनो व्यसनेष्वघमिति वैज-यन्ती। सहसा श्रवणमात्रेणेति भावः विसृज्य निरस्य अघानि पापानि दुःखानि वा मर्षयन्ति नाशयन्तीति अघ-मर्षणाः ताश्च ऋचश्च ताभिः अघमर्षण-ऋग्भिः स्त्रियाः पुंव-दित्यादिना पुंवद्भावः ऋत्यकमिति प्रकृतिभावः। भूयतां भावे लोट्। यथा श्रुत्युक्ता अघमर्षणमन्त्राः पाठश्रवणमात्रेण अघं नाशयन्ति तथा भगवद्वाक्येन मम सन्देहदुःखम् अपगच्छ-त्विति भावः। रामाममागमनकारणं निःसन्दिग्धं ब्रूहीति तात्पर्य्यम्। अत्र नारदवाक्ये अघमर्षणमन्त्रारोपणस्य प्रकृता-घहरणोपयोगित्वात् परिणामालङ्कारः तदुक्तं दर्पणे। विष-

इत्युदीर्य्य मघवा विनयर्द्धिं
वर्द्धयन्नवहितत्वभरेण ।
चक्षुषां दशशतीमनिमेषां
तस्थिवान् मुनिमुखे प्रणिधाय ॥ १९ ॥

वीक्ष्य तस्य विनये परिपाकं
पाकशासनपदं स्पृशतोऽपि ।
नारदः प्रमदगद्गदयोक्त्या
विस्मितः स्मितपुरःसरमाख्यत् ॥ २० ॥

यात्मतयारोप्ये प्रकृतार्थोपयोगिनि । परिणामो भवेत्तुल्या तुल्याधिकरणो द्विधेति ॥ १८ ॥

इतीति । मघवा इन्द्रः इति उदीर्य्य कथयित्वा अवहित त्वभरेण अवधानातिशयेन विनयर्द्धिं विनयसम्पदं विनयातिशयं वर्द्धयन् प्रकटयन् अनिमेषां निर्निमेषां चक्षुषां नेत्राणां दशानां शतानां समाहारः दशशतीं सहस्रमित्यर्थः तद्धितार्थेत्यादिना समाहारद्विगावकारान्तोत्तरपदत्वात् स्त्रियां द्विगोरिति ङीप् । मुनिमुखे मुनेर्नारदस्य मुखे प्रणिधाय संस्थाप्य तस्थिवान् अतिष्ठत् लिटः क्वसुरादेशः । मुनिः किं वदेदिति श्रवणौत्सुक्यात् एकाग्रतया चक्षुषां सहस्रेण मुनिमुखं निरीक्षमाणः स्थित इति यावत् ॥ १९ ॥

वीक्ष्येति । नारदः पाको नामासुरभेदः तस्य शासन इन्द्रः तस्य पदम् इन्द्रत्वमित्यर्थः स्पृशतोऽपि तादृशपरमैश्वर्य्यपदमधितिष्ठतोऽपीत्यर्थः तस्य इन्द्रस्य विनये नम्रतायां शिष्टाचारे इति यावत् परिपाकम् उत्कर्षम् अतिविनीतत्वमित्यर्थः । वीक्ष्य

भिक्षिता शतमखी सुकृतं यत्
तत्परिश्रमविदः स्वविभूतौ ।
तत्फले तव परं यदि हेला
क्लेशलब्धमधिकादरदन्तु ॥ २१ ॥

दृष्ट्वा विस्मितः । यौवनं धनसम्पत्तिः प्रभुत्वमविवेकता । एकैकमप्यनर्थाय किमु तत्र चतुष्टयमित्युक्तस्य यौवनादित्रिकस्य प्रत्येकमप्यनर्थहेतुत्वेऽपि केवलं विवेकितैव तदनर्थपातनिवारणहेतुरिति अहो विवकित्वमेव सर्वश्रेष्ठमिति धिया चमत्कृतः सन् । कर्त्तरि क्तप्रत्ययः । प्रमदेन हर्षेण गद्गदा अस्पष्टा या उक्तिः तया । हर्षजड़वचसेत्यर्थः स्मितपुरःसरं मृदुहासपूर्वकम् आख्यत् कथयामास अस्यति वक्तिभ्योऽङादेशः ॥ २० ॥

अतःपरं षोड़शभिः श्लोकैर्नारदोक्तमनुवदति भिक्षितेत्यादिभिः । शतानां मखानां समाहारः शतमखी अश्वमेधशतमित्यर्थः पूर्ववत् द्विगुसमासः । यत् सुकृतं भिक्षिता याचिता त्वयेति शेषः भिक्षेर्दुहादित्वादप्रधाने क्तः । त्वया अश्वमेधशतं कृत्वा यत् सुकृतं सञ्चितमिति भावः । तस्य सुकृतस्य फले फलभूतायामित्यर्थः स्वस्य विभूतौ निजैश्वर्य्ये इन्द्रत्वलक्षणे इति भावः । हेला न श्रियमिमां बहु मन्ये इत्यवज्ञा हेलावज्ञा विलासयोरिति विश्वः । यदि सम्भावनायां भवति कस्यचिदिति शेषः । तत् तथाविधपदे अवहेलनमित्यर्थः परिश्रमविदः शतयज्ञानुष्ठानस्य याज्ञाक्लेशविद इत्यर्थः स्वर्गकामोऽश्वमेधेन यजेतेति श्रुत्युक्तविधिना अश्वमेधयज्ञस्यैकस्यापि आयासबाहुल्येनानुष्ठानं प्रायो न घटते, भवांस्तु तादृशशताश्वमेधयष्टेति तत्क्लेशं सम्यगनुभवत इति भावः । तव परं

सम्पदस्तव गिरामतिदूरा
यन्न नाम विनयं विनयन्ते ।
श्रद्दधाति क इवेह न साक्षात्
आह चेदनुभवः परमाप्तः ? ॥ २२ ॥

तवैव केवलं नान्यस्येति भावः । परः स्यादुत्तमानाप्तवैरि दूरेषु केवले इति विश्वः । आयासलब्धे धने तवैव अनास्था दृश्यते नान्यस्येति भावः । कथमित्याह, क्लेशेति । क्लेशेन आयासेन लब्धम् उपार्जितं धनमिति शेषः अधिकम् आदरम् आस्थां ददाति जनयतीति तथोक्तन्तु तुरेवार्थे समधिकयत्नेन रक्षणीयमित्यर्थः । दुस्त्यजमिति भावः । अन्ये क्लेशलब्धं धनम् अधिकादरेण रक्षन्ति त्वन्तु कथमिदं धनं पात्रसात्करोमीति खिद्यसे इत्याश्चर्य्यमिति तात्पर्य्यम् ॥ २१ ॥

सम्पद इति । तव सम्पदः ऐश्वर्य्याणि गिरां वाचाम् अतिदूराः अगोचराः अपिरत्नाध्याहार्य्यः अतुलतया निर्वक्तुमशक्या अपीत्यर्थः यत् विनयं विनीततां तवेति शेषः न विनयन्ते नाम नापनयन्ति एव, नयते र्ञित्वात् सरित ङित इत्यात्मनेपदं कर्त्तृस्थे चाशरीरे कर्मणीति केचित् । तदसत् सम्पदादिकर्त्तृणां चेतनत्वेन कर्मणो विनयस्य इन्द्रियनिष्ठत्वेन चाकर्त्तृस्थत्वादिति । इह अस्मिन् विनीतत्वे इत्यर्थः परमाप्तः परमविश्वस्त अतिशयेन प्रमाणभूत इति भावः । साक्षात् अनुभवः प्रत्यक्षावगतिः प्रत्यक्षदर्शनं वेत्यर्थः न आह चेत् न ब्रवीति यदि, न प्रमाणत्वे विश्वसिति यदीति भावः । तदा क इव श्रद्दधाति ? विश्वसिति ? न कोऽपीत्यर्थः । इवशब्दोऽत्र वाक्यालङ्कारे । साक्षादनुभव एव तव सम्पदां विनयोत्तरत्वं

श्रीभराननतिथिसात्करवाणि
स्वोपभोगपरता न हितेति ।
पश्यतो बहिरिवान्तरपीयं
दृष्टिसृष्टिरधिका तव कापि ॥ २३ ॥
श्राः स्वभावमधुरैरनुभावैः

प्रमाणयतीति भावः । प्रायेण अन्यत्र सम्पदां विनयहारित्व-दर्शनात् सम्पदो विनयं हरन्तीत्यस्माकं विश्वासः आसीत्, अधुना तव सम्पदान्तु न तथात्वमित्यत्र साचादनुभव एव प्रमाणमिति पर्य्यवसितोऽर्थः ॥ २२ ॥

श्रीभरादिति । श्रीणां सम्पदां भराः अतिशयाः तान् सम्पत्समूहानित्यर्थः अतिथिसात्करवाणि अतिथिभ्यो देयानि कुर्य्यां देये त्राचेति चकारात् सातृप्रत्ययः । विध्यर्थे लोट् अडु-त्तमस्यापि श्मेर्निः । स्वोपभोगपरता स्वस्यैव सम्भोगपरत्वम् आत्मम्भरितेत्यर्थः न हिता न हितकरीति पश्यतः अवलोकयतः विमृशत इत्यर्थः तव बहिरिव बाह्यदेशे इव देहस्येति शेषः अन्तरपि अन्तःकरणेऽपि इयं कापि अनिर्वचनीयेत्यर्थः अधिका अतिरिक्ता अन्यविलक्षणेति यावत् दृष्टीनां ज्ञानानां चक्षुषाञ्च दृष्टिर्ज्ञानेऽक्ष्णिदर्शने इत्यमरः । सृष्टिः निर्माणम् उद्भव इत्यर्थः यथा तव देहबहिर्भागे बहुतरा दृष्टिस्तथा अन्तःशरीरेऽपि भूयसी ज्ञानदृष्टिरिति त्वत्तो नान्यो विवेकवानिति भावः । अत्र उभयासामपि दृष्टीनां श्लिष्टत्वेनाभेदाध्यवसायमूलाति-शयोक्तिर्बहिरिवेत्युपमया सङ्कीर्य्यते इत्युभयोरङ्गाङ्गिभावेन सङ्करः ॥ २३ ॥

तावकैरतितरां तरलाः स्मः ।
द्यां प्रशाधि गलितावधिकालं
साधु साधु विजयस्व विडौजः ! ॥ २४ ॥
सञ्ज्वलत्ततनुस्ववदस्र-
क्षालिताखिलनिजाघलघूनाम् ।

आ इति । विड् भेदकं विड्भेदने इत्यस्मादिगुपधलक्षणः कप्रत्ययः । यद्वा विट् व्यापकं विषव्याप्ताविति धातोः क्विप् । ओजः तेजः यस्य स विडौजा इन्द्रः । विडौजाः पाकशासन इत्यमरः । तत्सम्बुद्धौ, हे विडौजः ! स्वभावेन मधुराः स्वभाव-मधुराः निसर्गमनोहराः तैः तव इमे तावकाः तवकममका-वेकवचन इत्यणि तवकादेशः । तैः अनुभावैः महिमभिः अनुभवविषयतां गतैः कार्य्यैर्वा आ इति विरक्तौ अतितराम् अत्यन्तम् अव्ययादाम्प्रत्ययः । तरलाः चञ्चलाः आनन्दाति-शयनिमग्नत्वादिति भावः । स्मः भवामः । भवदनुभावदर्शनेने-तादृगानन्दोदयोऽस्ति येन मुनितागर्हितेऽपि चापल्ये वर्त्तामहे इति विरक्तिसूचकेन आ इति पदेन द्योत्यते । अतः गलितः गतः अवधिर्यस्य स गलितावधिः तादृशः कालो यत्र क्रियायां तत् गलितावधिकालं यथा तथा यद्वा गलितावधिः कालः गलितावधिकालः अनन्तकाल इत्यर्थः तम् अत्यन्तसंयोगे द्वितीया । द्यां स्वर्गं सुरलोको द्योदिवौ इत्यमरः । साधु सम्यक् यथा तथा प्रशाधि परिपालय, तथा साधु यथा तथा विजयस्व सर्वोत्कर्षेण वर्त्तस्व, साधु साधु भद्रं भद्रमिति वा पृथगर्थः । शास्तेर्लोटि हि । विपराभ्यां जेरात्मनेपदञ्च ॥ २४ ॥

इत्थमिन्द्रं संवर्ण्य तत्प्रश्नोत्तरं प्रारभते सञ्ज्वलेति । संज्व

यत्त्विहानुपगमः शृणु राज्ञां
तं जगद्युवमुदन्तमुदन्तम् ॥ २५ ॥
सा भुवः किमपि रत्नमनर्घं
भूषणं जयति तत्र कुमारी ।

युद्धे विक्षताभ्यः विशेषेण शरादिभिः प्रहताभ्यः तनुभ्यः शरीरेभ्यः स्रवद्भिः क्षरद्भिः अस्रैः रुधिरैः क्षालितानि धौतानि अखिलानि समस्तानि निजानि स्वीयानि अघानि पापानि तैर्हेतुभिः लघवः भारशून्यतां गता इत्यर्थः यद्वा तादृशानि पापानि येषां ते अतएव लघवः ऊर्द्धस्थितस्वर्गपुरगमनयोग्या इति भावः तेषां राज्ञां यत्तु यत एव तुरेवार्थे । इह सुरपुरे अनागमः अनुपस्थितिः, तं जगत्सु ये युवानः जगद्युवानः तेषां त्रिभुवनतरुणानामिति यावत् तेषां मुदः हर्षस्य अन्तः अवसानं पराकाष्ठेति यावत् यत्र तम् एतेन तवाप्यत्र श्रवणे परमप्रीतिर्भवितेति व्यज्यते । उदन्तं वृत्तान्तं वार्त्ताप्रवृत्तिवृत्तान्त उदन्तः स्यादित्यमरः । शृणु आकर्णय । यत्त्विहेत्यत्र यस्त्विहेति पाठे यः अनुपगमः, अनागमनं तस्य तव वेति पदमध्याहार्य्यं तस्य तव वा तं प्रसिद्धमित्यर्थः उदन्तमित्यन्वयः । अत्र क्षालितेति पदार्थस्य लघुत्वहेतुत्वात् काव्यलिङ्गम् आगमनहेतावपि अनागम इति विशेषोक्तिश्च तदुक्तं दर्पणे । हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति च तदनयोरङ्गाङ्गिभावेन सङ्करः ॥ २५ ॥

सेति । या भीमभूपस्य भीमनरेन्द्रस्य तनया अमोघम् अव्यर्थं मदनस्य कामस्य अस्त्रं प्रहरणसाधनं दमयन्ती नाम

भीमभूपतनया दमयन्ती
नाम या मदनशस्त्रममोघम् ॥ २६ ॥
सम्प्रति प्रतिमुहूर्त्तमपूर्वा
कापि यौवनभरेण भवन्ती।
आशिखं सुकृतसारभृते सा
क्वापि यूनि भजते किल भावम् ॥ २७ ॥

कुमारी अनूढ़ा कन्यका, एतेन तवापि यदि तत्र स्पृहा स्यात्तदा साम्प्रतं यतस्वेति ध्वन्यते। सा भुवः पृथिव्या भूषणम् अलङ्करणसाधनं किमपि अनिर्वचनीयम् असामान्यमित्यर्थः अनर्घ्यम् अमूल्यं निरुपममिति यावत् रत्नं तत्र भुवि भीमनगरे वा जयति सर्वोत्कर्षेण वर्त्तते। अत्र अमूल्यं रत्नमिति अमोघं शस्त्रमिति चारोपणं प्रकृते इन्द्रमनोहरणरूपे विषये उपयोगित्वात् परिणामालङ्कारः तदुक्तं विषयात्मतयारोप्ये प्रकृतोपयोगिनि। परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधेति ॥ २६ ॥

अथास्याः अन्यासक्तिं कीर्त्तयन् इन्द्रस्य मात्सर्य्यमुत्तेजयति, सम्प्रतीति। सम्प्रति अधुना प्रतिमुहूर्त्तं प्रतिक्षणं यौवनस्य भरेण गौरवेण कापि अपूर्वा भवन्ती क्षणे क्षणे लावण्यमयावयवपोषणात् अपरेव भवन्ती सा दमयन्ती आशिखं शिखापर्य्यन्तम् अभिविधावव्ययीभावः सुकृतसारभृते पुण्यातिशयपूर्णे क्वापि कस्मिन्नपि यूनि तरुणे भावम् अनुरागं भजते किलेति प्रसिद्धौ। जगत्सुन्दरी सा कमपि सुकृतातिशयेन महाभाग्यशालिनं युवानं कामयते इति प्रसिद्धिरिति भावः ॥ २७ ॥

कथ्यते न कतमः स इति त्वं
मां विवक्षुरसि किं चलदोष्ठः ?।
अर्द्धवर्त्मनि रुणत्सि न पृच्छां
निर्गमेण न परिश्रमयैनाम् ॥ २८ ॥

यत्पथावधिरणुः परमः सा
योगिधीरपि न पश्यति यस्मात् ।

कथ्यते इति। त्वं चलन् स्फुरन् ओष्ठो यस्य सः तथोक्तः सन् स युवा कतमः बहूनां यूनां मध्ये क इति मां विवक्षुः वक्तुमिच्छुः प्रष्टुमिच्छुरित्यर्थः असि किम् ? अर्द्धे मार्गे अर्द्धोक्ता-वित्यर्थः पृच्छां प्रश्नं प्रश्नोऽनुयोगः पृच्छा चेत्यमरः। भिदा-दित्वादङ्प्रत्ययः। न रुणत्सि ? इति काकुः न स्थगयसि किम् ? इत्यर्थः। प्रश्ननिरोधः कर्त्तव्य एवेत्यर्थः। निर्गमेण मुखाद् वहि-ष्करणेन एनां पृच्छां न परिश्रमय न खेदय निरर्थकः प्रश्न इति भावः। न कथ्यते न कथयितुं शक्यते मयेति शेषः। यद्वा स दमयन्त्या अनुरागविषय इति भावः युवा कतमस्त्वया किं कथं न कथ्यते इतीत्थं चलदोष्ठः सन् मां विवक्षुरसि काकुः प्रष्टुमिच्छुरसि किमित्यर्थः। एनां पृच्छाम् अर्द्धवर्त्मनि अर्द्धो-च्चारणे एवेत्यर्थः न रुणत्सि ? अपितु एतत्प्रश्ननिरोधः कर्त्तव्य एवेत्यर्थः। एनां पृच्छां निर्गमेण मुखाद् वहिष्करणेन न परि-श्रमय मा खेदय विफलां मा कुर्वित्यर्थः। मया नासौ परि-ज्ञायते इति भावः॥ २८ ॥

ननु योगिना त्वया योगबलेनासौ ज्ञायत एव तत्कथं कपटयसीत्यत्राह, यदिति। परमः अणुः परमाणुः अतिसूक्ष्मः

वालया निजमनःपरमाणौ
ह्रीदरीशयहरीकृतमेतम् ॥ २९ ॥
सा शरस्य कुसुमस्य शरव्यं
सूचिता विरहवाचिभिरङ्गैः ।

तमः पदार्थविशेष इत्यर्थः यस्याः योगिधियः पन्थाः यत्पथः तस्य अवधिः सीमा, या परमाणुपर्य्यन्तमपि ज्ञातुं शक्नोतीति भावः। सा योगिनां समाधिमतां धीर्बुद्धिरपि बुद्धिर्मनीषा धीषणा धीः प्रज्ञा सेमुषी मतिरित्यमरः। बालया मुग्धया दमयन्त्या निजं स्वीयं मन एव परमाणुः तस्मिन् मनसः परमाणुरूपत्वं दार्शनिकैरभिहितम्। तत्र या ह्रीर्लज्जा एव दरी गुहा दरीतु कन्दरो वास्त्री देवखातविले गुहेत्यमरः। तस्यां शेते इति तथाविधो यो हरिः सिंहः। सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केशरी हरिरित्यमरः। असः सः कृत इति ह्री-दरीशय-हरीकृतः तम् अभूततद्भावे च्विप्रत्ययः। एतं युवानं यस्मात् न पश्यति तस्मान्मया योगिनापि स कथयितुं न शक्यते। न कपटेनेति पूर्वेणान्वयः। योगिनां परमाणुपर्य्यन्तज्ञानक्षमत्वमस्ति अयन्तु युवा परमाणुभूतस्य मनसोऽन्तर्गतगुहायां शेते तत् कथमस्मादृशां योगिनामपि तस्य ज्ञानं सम्भवतीति भावः। ह्रीदरीत्यनेन तस्या लज्जालुतया तस्य यूनस्तथा गोपनं कृतं यथा केनापि ज्ञातुं न शक्यते इति ध्वन्यते॥ २९ ॥

सेति। सा भैमी विरहवाचिभिः वियोगव्यञ्जकैः पूर्वसगजन्यपाण्डुत्वकृशत्वादिमद्भिरित्यर्थः अङ्गैः कर्त्तृभिः कुसुमस्य शरस्य कामशरस्येत्यर्थः शरव्यं लक्ष्यं सूचिता प्रकटिता। कुत्रचित् यूनि बद्धानुरागतया एतदाकारवैलक्षण्यं पितरि ज्ञापि-

तातचित्तमपि धातुरधत्त
स्वस्वयंवरमहाय सहायम् ॥ ३० ॥
मन्मथाय यदथादित राज्ञां
हूतिदूत्यविषये विधिराज्ञाम् ।
तेन तत्परवशाः पृथिवीशाः
सङ्गरं गरमिवाकलयन्ते ॥ ३१ ॥

तेति भावः । सती तातस्य पितुश्चित्तमपि मानसञ्च स्वस्य स्वयंवरमहाय स्वयंवरोत्सवाय । मह उद्धवः उत्सव इत्यमरः । धातुः विधातुः सहायम् अधत्त चकार विधेः प्रेरणया पितुर्मानसं स्वयंवरमहं विधातुमुद्युक्तं कृतवतीत्यर्थः । अरव्येति पाठान्तरं न समीचीनं लक्ष्यं वेध्यं शरव्यमित्येषामजहल्लिङ्गत्वेन व्यवस्थितेरिति विभाव्यम् ॥ ३० ॥

अस्त्वेतत् राज्ञामत्रानागमे को हेतुरित्यत्राह, मन्मथायेति । अथानन्तरं तत्पितुश्चित्तस्य स्वयंवरमहाय प्रेरणात् परमित्यर्थः विधिः ब्रह्मा राज्ञां हूतिः स्वयंवरसभायामाह्वानं हूतिराकारणाह्वानमित्यमरः । तदेव दूत्यं दूतकर्म्म दूतस्य भावकर्मणोरिति यत्प्रत्ययः । तस्य विषये विधानार्थं करणायेत्यर्थः मन्मथाय कामाय यत् यस्मात् आज्ञाम् आदेशम् अदित ददौ ददातेर्लुङिरूपम् । तेन आज्ञादानेन हेतुना तस्य कामस्य परवशाः अधीनाः शिवभागवत्समासः । पृथिवीशाः भूपतयः सङ्गरं युद्धं गरमिव विषमिव आकलयन्ते मन्यन्ते विषं स्वाद् गरलं गरमिति हलायुधः । दमयन्त्यासक्तचित्ततया साम्प्रतं स्वयंवरमहायैव समुद्युक्तानां राज्ञां युद्धवार्त्तापि विरक्तिकरी जातेति

येषु येषु सरसा दमयन्ती
भूषणेषु यदि वापि गुणेषु ।
तत्र तत्र कलयापि विशेषो
यः स हि चितिभृतां पुरुषार्थः ॥ ३२ ॥

शैशवव्ययदिनावधि तस्याः
यौवनोदयिनि राजसमाजे ।
आदरादहरहः कुसुमेषोः
उल्ललास मृगयाभिनिवेशः ॥ ३३ ॥

कथमत्र तेषामागमनमिति भावः। आकलयन्तीति पाठान्तरम् ॥ ३१ ॥

येष्विति। दमयन्ती येषु येषु भूषणेषु अलङ्कारेषु हारकेयूरादिषु यदि वा अथवा गुणेषु। शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी। ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणा इत्युक्तेषु नायकधर्म्मेषु दयादाक्षिण्यादिषु वा सरसा सानुरागा स्पृहावतीत्यर्थः तत्र तत्र तेषु तेषु भूषणेषु गुणेषु च कलयापि लेशेनापि यो विशेषः अन्यापेक्षया वैशिष्ट्यम् उत्कर्ष इति यावत् स हि स एव हि हेताववधारणे इत्यमरः। चितिभृतां राज्ञां पुरुषार्थः पुरुषप्रयोजनं दमयन्तीप्रीतिसाधनार्थं यतमानानां युद्धादिक्षत्रधर्म्मप्रतिपालने मतिरेव नास्तीति भावः ॥ ३२ ॥

शैशवेति। तस्याः भैम्याः शैशवस्य बाल्यस्य व्ययः अपगमः तस्य दिनम् अवधिः सीमा यत्र तद् यथा तथा शैशवापगमात् यौवनप्रवेशदिनमारभ्येत्यर्थः यौवनस्य उदयः आविर्भावः यस्य

इत्यमी वसुमतीं कमितारः
सादरास्त्वदतिथीभवितुं न ।
भीमभूसुरभुवोरभिलाषे
दूरमन्तरमहो नृपतीनाम् ॥ ३४ ॥

यौवनस्य उदयः धनसमृद्धिश्च तद्वति अभिनवयौवनशालिनि धनयौवनवति वा राजसमाजे नृपतिसङ्घे अहरहः प्रतिदिनं वीप्सायां द्विर्भावः अत्यन्तसंयोगे द्वितीया। कुसुमेषोः कामस्य मृगयायाम् अभिनिवेशः आवेशः आदरात् यत्नातिशयात् उल्लास अवर्द्धत। अभिनवयौवनपदवीमाश्रितां दमयन्तीमेव शरमवलम्ब्य कुसुमशरो मृगयुः चत्रसङ्घानेव मृगान् विध्यन् व्यथयामासेति भावः। तत्तथा व्यथितमनसां तेषां कथं युद्धाभिनिवेश इति तात्पर्य्यम् ॥ ३३ ॥

उपसंहरति, इतीति। इति पूर्वोक्तात् हेतोरित्यर्थः अमी नृपतयः वसुमतीं वसुन्धरां कमितारः अभिलषन्त इत्यर्थः ताच्छील्ये तृन् न लोकेत्यादिना षष्ठीनिषेधः आर्द्धधातुके चेति विकल्पादिजभावः। वसुमतीकमितार इति पाठे वसुमत्यां कमितारः कामयितार इत्यर्थः। युद्धेन परभुवं जित्वा भोक्ष्यामीत्यभिलषन्त इत्यर्थः सन्तः तव अतिथीभवितुं तव अभ्यागता भवितुं न सादराः नाग्रहवन्त इत्यर्थः। यद्वा वसु धनं रत्नभूतां दमयन्तीमिति भावः विद्यते अस्यामिति वसुमती तां कमितारः रत्नभूता दमयन्ती यत्र तिष्ठति सैवास्माकं स्वर्गादपि मनोरमेति धिया पृथिवीं प्रति आदरवन्त इति यावत् अतः तव अतिथीभवितुं न सादरा इत्यन्वयः। तथाहि भीमभूः भीमनगरी कुण्डिनपुरीत्यर्थः सुरभूः देवपुरी अमरावतीत्यर्थः

तेन जाग्रदधृतिर्दिवमागां
सङ्ख्यसौख्यमनुसर्त्तुमनु त्वाम् ।
यन्मृधं क्षितिभुजां न विलोके
तन्निमग्नमनसां भुवि लोके ॥ ३५ ॥
वेद यद्यपि न कोऽपि भवन्तं
हन्त हन्तुकरुणं विरुणद्धि ।

यद्वा भीमभूः भीमतनया दमयन्ती सुरभूः सुरकन्या देवाङ्गने-त्यर्थः तयोरभिलाषे नृपतीनां राज्ञां दूरम् अत्यन्तम् अन्तरं प्रभेदः विशेष इत्यर्थः तारतम्यमिति यावत् अहो आश्चर्य्यं राजानः स्वर्गपुरं सुराङ्गनासम्भोगञ्चोपेक्ष्य कुण्डिननगरीं दम-यन्तीञ्चैवाभिलषन्तीति लोकोत्तरं सौन्दर्य्यं दमयन्त्या इति व्यज्यते । अत्रोत्तरार्द्धवाक्यस्य पूर्वार्द्धवाक्यहेतुत्वात् काव्यलिङ्ग-मलङ्कारः ॥ ३४ ॥

इत्थं राज्ञां चरितमनुवर्ण्य स्वस्यागमनहेतुं वक्ति तेनेति । यद् यस्मात् भुवि लोके भूतले तस्यां दमयन्त्यां निमग्नं समा-सक्तं मनो येषां तथाविधानां क्षितिभुजां भूपतीनां मृधं संग्रामं मृधमास्कन्दनं सङ्ख्यमित्यमरः । न विलोके न पश्यामि तेन युद्धादर्शनेन हेतुना जाग्रती दीप्यमाना अधृतिः अस-न्तोषः यस्य तथाभूतः निरन्तरकलहप्रियत्वात्तददर्शनेनासुखित-चित्तः सन्नित्यर्थः सङ्ख्यसौख्यं युद्धदर्शनसुखम् अनुसर्त्तुम् अनु-भवितुं त्वामनु त्वां प्रति तव तत्र प्रवर्त्तनोद्देशेनेति भावः । दिवं स्वर्गम् आगाम् अभ्यागमम् । तत् त्वमेव स्वयं क्वचित् युद्धार्थं प्रवर्त्तस्व येनाहं तद्दर्शने सुखीभवामीति तात्पर्य्यम् ॥ ३५ ॥

वेदेति । कोऽपि वीरः हन्तृषु घातकेषु प्रहारिषु वीरेषु

पृच्छसि तदपि येन विवेक-
प्रोञ्छनाय विषये रससेकः॥ ३६॥
एवमुक्तवति देवऋषीन्द्रे
द्रागभेदि मघवाननमुद्रा।

नास्ति करुणा दया यस्य सः अकरुणः निर्दयः तं समूलघातिनमित्यर्थः भवन्तं न विरुणद्धि न विरुणाति न भवता सह योद्धुं शक्नोतीति यावत्। यद्यपि एतत् अहं वेद जानामि, विदो लटो वेति विदो णलादेशः। यद्यपि अवधारणे, जानाम्येवेत्यर्थः। तदपि तथापि एवं विदितत्वेऽपीत्यर्थः पृच्छसि कथ्यसे युद्धार्थं प्रवक्ष्यसे इति भावः। कथमित्याह, येनेति। येन हेतुना विषये अभिलषितभोग्ये वस्तुनि युद्धसन्दर्शने च रसस्य अनुरागस्य सेकः आवेशः जलसेचनञ्च गम्यते। विवेकस्य ज्ञानस्य पङ्कादिलेपस्य चेति गम्यते प्रोञ्छनाय ध्वंसाय प्रमार्जनाय चेति गम्यते भवतीति शेषः। हन्तेति खेदे निर्विवेकत्वमेव पृच्छाहेतुरिति खिद्यामीति भावः। अत्र विवेकप्रोञ्छनाय रससेक इति सामान्येन तदपि पृच्छसि इति विशेषस्य समर्थनादर्थान्तरन्यासः। कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यास इति केचित्॥ ३६॥

एवमिति। देवऋषीन्द्रे देवर्षिश्रेष्ठे नारदे ऋत्यकगिति प्रकृतिभावः। एवम् इत्थम् उक्तवति कथितवति सति मघवत इन्द्रस्य आनने मुखे आननस्य मुखस्य वा मुद्रा मौनीभावः मघवा बहुलमिति विकल्पादादेशाभावः। द्राक् झटिति द्राग् झटित्यञ्जसाह्नायेत्यमरः। अभेदि स्वयमेव भिद्यते स्म इन्द्रो वक्तुं प्राक्रमतेति भावः कर्म्मवत् कर्मणा तुल्यक्रिय इति कार्म्मणः

उत्तरोत्तरशुभो हि विभूनां
कोऽपि मञ्जुलतमः क्रमवादः ॥ ३७ ॥
कानुजे मम निजे दनुजारौ
जाग्रति स्वशरणे रणचर्चा ।

कर्त्तृवद्भावात् कर्म्मकर्त्तरि लुङि तङादिकार्य्यं यगात्मनेपदादिचिह्नं भावः प्रतीतमिति वचनात् तल्लक्षणञ्चोक्तम्। क्रियमाणन्तु यत् कर्म्म स्वयमेव प्रसिध्यति। सुकरैः स्वैर्गुणैः कर्त्तुः कर्म्मकर्त्तेति तं विदुरिति। तथाहि विभूनां महात्मनाम् उत्तरोत्तरशुभः उपर्य्युपरि सुभगः क्रमवादः क्रमेण प्रश्नोत्तरोक्तिः आदौ प्रश्नः पश्चात्तदुत्तरमित्येवं पौर्वापर्य्यक्रम इति भावः कोऽपि अन्यविलक्षण इत्यर्थः अतएव मञ्जुलतमः अतिहृद्य इत्यर्थः। महतां प्रश्नोत्तरवाक्येषु अयं नियमः यत् प्रश्नवादिना सम्यक् प्रश्नवाक्ये उक्ते उत्तरवादिना तदुत्तरवचनाय प्रवृत्यते, इतरेषान्तु न तथा ते हि प्रश्नोत्तरयोर्यौगपद्येन परस्परभावं विपर्य्यासयन्तीति महतां प्रश्नोत्तरोक्तिक्रमस्य मञ्जुलत्वं त्वदितरेषान्तु तद्वैपरीत्यमिति भावः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३७ ॥

केति। स्वस्य आत्मनः स्वेषाम् आत्मीयानां सुरपक्षीयाणामिति वा शरणं रक्षिता तस्मिन् स्वशरणे स्वगृहे वा शरणं गृहरक्षित्रोरित्यमरः। निजे स्वकीये अनुजे कनीयसि भ्रातरीत्यर्थः एतेनास्य आज्ञावशंवदत्वं ध्वनितम्। दनुजानां दानवानाम् अरिः तस्मिन् दानवनिसूदने कृष्णे इत्यर्थः दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुड़ध्वज इत्यमरः। एतेनास्य सामर्थ्यातिशयशालित्वं ध्वन्यते। जाग्रति सति माहृशां योगक्षेमसवि-

यद्भुजाङ्कमुपधाय जयाङ्कं
शर्मणा स्वपिमि वीतविशङ्कः ॥ ३८ ॥
विश्वरूपकलनादुपपन्नं
तस्य जैमिनिमुनित्वमुदीये ।

धानार्थं व्याप्रियमाणे मतीत्यर्थः मम रणचर्चा युद्धव्यापारचिन्ता का ? न कापीत्यर्थः । जयः अङ्कश्चिह्नं यस्य यद्वा जयस्य अङ्कश्चिह्नं तत्स्वरूपं शङ्खचक्रादि यस्मिन् तं तथाभूतं यस्य भुज एव अङ्कः क्रोड़ः तम् उपधाय उपधानीकृत्य वीता विगता विशङ्का भयं यस्य तथोक्तः निरातङ्कः मन्नित्यर्थः शर्मणा सुखेन शर्मशातसुखानि चेत्यमरः । स्वपिमि शये न तु निद्रामीत्यर्थः देवानां स्वतएवास्वप्नत्वादिति भावः यथा रक्षिवर्गे जाग्रति राजा सुखेन निद्राति तद्वदिति ध्वनिः । मम तु सर्वं युद्धव्यापारं मद्भ्राता भगवानुपेन्द्र एव निर्वहति, अहन्तु तद्राहित्वात् सुखेन तिष्ठामीति कुतो मे रणचर्चा यद्दर्शनेन त्वं सुखीभवसीति फलितार्थः ॥ ३८ ॥

विश्वेति । तस्य कृष्णस्य विश्वरूपकलनात् सर्वं विष्णुमयं जगदिति वचनप्रामाण्यात् सर्वजगन्मूर्त्तिधारणात् अन्यत्र विश्वार्थरूपणात् विश्वरूपाख्यसूत्रप्रणयणाद्धेतोः जैमिनिर्नाम मुनिः तस्य भावः तत्त्वम् उदीये उत्पन्नं सिद्धमित्यर्थः इणगतौ कर्त्तरि लिडिति केचित् तन्न समीचीनं तस्य परस्मैपदित्वात् आत्मनेपदानुपपत्तेः । कर्मकर्त्तरि लिड़ित्यन्ये तच्च न सङ्गतं कर्मस्थधातूनामेव तद्विधानात् अयन्तु कर्तृस्थो धातुरिति तस्मात् निरूपितमित्यर्थः अस्माभिरिति शेषः धातूनामनेकार्थत्वादिति भावः । जैमिनेर्विश्वात्मकगम्यत्वात् विश्वमयस्य

विग्रहं मखभुजामसहिष्णु-
र्व्यर्थतां मदशनिं स निनाय॥ ३९॥

भगवतो जैमिनित्वमिति भावः। तदेवोपपादयति विग्रह-मिति। स कृष्णः मखं यज्ञं भुञ्जते इति मखभुजो देवाः तेषां विग्रहं युद्धं दैत्यैः सहेति शेषः अन्यत्र शरीरम् असहिष्णुः सोढुमक्षमः अन्यत्रास्वीकुर्वन्नित्यर्थः सन् मम अशनिं वज्रायुधम् अन्यत्र वज्रपाणिः पुरन्दर इत्यादि वाक्यप्रपञ्चं व्यर्थतां निष्प्रयोजनताम् अन्यत्र आरोपितार्थतां पातशून्यताञ्च निनाय प्रापयामास। असुराणां विनाशनात् मद्वज्रकृत्यं तेन निराकृतं जैमिनिनापि देवशरीरस्वीकारो देववज्रपातश्च स्वनामोच्चारणकारिणां निराकृत इति भावः। तदुक्तं कौमुद्याम्। "ननु देवताप्रीतिरेव यागव्यापारोऽस्तु किमपूर्वेणेति पूर्वपक्षः तत्र जैमिनिसूत्रं देवताचैतन्यासम्भवादिति। शरीरासम्भवादेव तेषां चैतन्यासम्भव इति भावः। अपरत्र च। युक्तञ्चैतत् इतरथा चेतनस्य सहस्राक्षादेर्देवतात्वे आवाहनेन ऐरावतारूढ़सहस्राक्षादेरधिष्ठाने घटकुड्यभङ्गप्रसङ्ग" इत्यादि। तस्य मीमांसकस्य मते मणिकारेणोक्तं यथा "देशनादेशितचतुर्थ्यन्तपदनिर्देश्यत्वं देवतात्वमिति। देशना वेदविधिः तया देशितं बोधितं यच्चतुर्थ्यन्तपदं तन्निर्देश्यत्वं तत्प्रतिपाद्यत्वं देवतात्वमिति तस्यार्थः। अपरञ्च देवानां विग्रहेऽङ्गीकृते युगपन्नाना देशेषु एकजातीयकर्म्मसु अनुष्ठीयमानेषु एकत्रागतस्येन्द्रशरीरस्य तस्मिन्नेव क्षणे भिन्नदेशीययागहविर्ग्रहणे शक्त्यभावात् यागान्तरलोपप्रसङ्ग एव स्यात्। न चैश्वर्य्यवशात् कायव्यूहस्वीकारेण युगपत् सर्वत्र प्रयाणमिति वाच्यं तस्यैवंविधैश्वर्य्यवत्त्वे प्रमाणाभावात्"

ईदृशानि मुनये विनयाब्धिः
तस्थिवान् स वचनान्युपहृत्य।
प्रांशुनिश्वसितपृष्ठचरी वाक्
नारदस्य निरियाय निरोजाः॥ ४०॥
स्वारसातलभवाहवशङ्की
निर्वृणोमि न वसन् वसुमत्याम्।

इति। अस्य वज्रपातनिवारकत्वञ्चोक्तं यथा "जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च। पुलस्त्यः पुलहो जिष्णुः षड़ेते वज्रवारकाः" इति अन्यच्च। "मुनेः कल्याणमित्रस्य जैमिनेश्चापि कीर्त्तनात्। विद्युदग्निभयं नास्ति लिखिते च गृहोदरे" इति॥ ३९॥

ईदृशानीति। विनयस्य अब्धिः सागरः अतिविनीत इत्यर्थः स्वयं महावीरत्वेऽपि अनुजस्योपेन्द्रस्यैव वीर्य्येण सुखी तिष्ठामीति स्वश्लाघावर्जनादिति भावः। स इन्द्रः मुनये नारदाय ईदृशानि एवम्प्रकाराणि प्रागुक्तरूपाणीति यावत् वचनानि उपहृत्य उपहारीकृत्य तस्थिवान् तूष्णीं स्थित इत्यर्थः। ततः प्रांशु दीर्घं यत् निश्वसितं निश्वासः तस्य पृष्ठे चरतीति तत्-पृष्ठचरी तदनुगामिनीत्यर्थः दीर्घनिश्वासपूर्व्विकेत्यर्थः अतएव निरोजाः दुर्बला दीनेत्यर्थः स्वेष्टसिद्धेरभावादिति भावः। वाक् वाणी निरियाय निर्जगाम। दीर्घं निश्वस्य मुनिरिन्द्रमब्रवी-दिति फलितार्थः॥ ४०॥

स्वरिति। अहं वसुमत्यां पृथिव्यां वसन् स्वश्च स्वर्गश्च स्वर-व्ययं स्वर्गनाकेत्यमरः। रसातलं पातालञ्च तयोर्भवं तत्रत्य-

द्यां गतस्य हृदि मे दुरुदर्कः
क्ष्मातलद्वयभटाजिवितर्कः ॥ ४१ ॥
वीक्षितस्त्वमसि मामथ गन्तुं
तन्मनुष्यजगतेऽनुमनुष्व ।
किं भुवः परिवृढ़ा न विवोढुं
तव तामुपनता विवदन्ते? ॥ ४२ ॥

मित्यर्थः स्वर्गीयं रसातलीयश्चेति यावत् रोरिति रेफलोपे दीर्घः। आहवं युद्धं शङ्कते इति तच्छङ्की इदानीं स्वर्गे युद्धं वर्त्तते किम्? पाताले वा वर्त्तते? इति सन्दिग्धचित्तः सन्नित्यर्थः न निर्वृणोमि न स्वस्थो भवामि तद्दिदृक्षाया औत्सुक्यात् स्वस्थेति भावः। तथा द्याङ्गतस्य स्वर्गं प्राप्तस्य मे मम हृदि मनसि क्ष्मा पृथिवी तलं तदधःप्रदेशः पातालमित्यर्थः अधः-स्वरूपयोरस्त्रीतलमित्यमरः। तयोर्द्वयस्य ये भटाः वीराः तेषाम् आजौ युद्धे वितर्कः शङ्का दुष्टः उदर्कः उत्तरं फलं यस्य सः उदर्कः फलमुत्तरमित्यमरः। दुरन्त इत्यर्थः। स्वर्गस्थितः पृथिव्यां युद्धं वर्त्तते किं पाताले वेति शङ्कितस्तथैव न निर्वृणोमीति तात्पर्य्यम्। पातालगतस्य भूस्वर्गयोः वीराणां युद्धशङ्की तथैव न निर्वृणोमीति शेषोऽत्र वक्तव्यः॥ ४१ ॥

वीक्षित इति। हे देवेन्द्र! त्वं वीक्षितोऽसि दृष्टोऽसि, साक्षात्कृतोऽसि भवद्दर्शनमेवागमनप्रयोजनं तदिदानीं सम्पन्न-मिति भावः। तत्तस्मात् अथ इदानीं मां मनुष्यजगते भूलोकाय गन्तुम् अनुमनुष्व अनुजानीहीत्यर्थः अनुज्ञार्थे लोट्। ननु कथं तत्र गमनमित्यत्राह, किमिति। तत्र मनुष्यजगति

इत्युदीर्य्य स ययौ मुनिरुर्वीं
स्वर्पतिं प्रतिनिवर्त्त्य जवेन ।
वारितोऽप्यनुजगाम स यान्तं
तं कियन्त्यपि पदान्यपराणि ॥ ४३ ॥
पर्वतेन परिपीय गभीरं
नारदीयमुदितं प्रतिनेदे ।

कुण्डिननगरे वा तां दमयन्तीं विवोढुं परिणेतुम् उपनताः समेताः भुवः पृथिव्याः परिवृढाः प्रभवः भूपाला इत्यर्थः परिवृढोऽधिप इत्यनेनास्य निष्ठाप्रत्ययान्तस्य साधुत्वम्। किं न विवदन्ते ? अपितु विवदन्ते एवेत्यर्थः। वदेरकर्म्मकादात्मनेपदम्। जगत्सुन्दरीं भैमीं प्रति समासक्तचित्तानां तदलाभे विवादः सम्भवत्येव तत्तत्र मे निर्वृतिरवश्यम्भाविनीति भावः ॥४२॥

इतीति। स मुनिर्नारदः इतीत्थं स्वर्पतिमिन्द्रम् अहरादीनां पत्यादिषु वैकल्पिको रेफादेशः। प्रतिनिवर्त्त्य मा मामनुसरेति निवार्य्य जवेन वेगेन उर्वीं पृथ्वीं ययौ प्रस्थितवान् जवेनेत्यत्र बलेनेति पाठे बलेन बलात्कारेण अनुयान्तमिन्द्रं प्रतिनिवर्त्त्येत्यन्वयः। सः इन्द्रः वारितोऽपि अनुगन्तुं निषिद्धोऽपि कियन्त्यपि कतिपयान्यपि वारणात् पूर्वमिति भावः। अपराणि पदानि पदन्यासान् वारणात् परमिति भावः अत्यन्तसयोगे द्वितीया। यान्तं गच्छन्तं तं नारदम् अनुजगाम ॥ ४३ ॥

पर्वतेनेति। पर्वतेन मुनिना स्वसहचारिणेति भावः महीधरेण च नारदीयं नारदसम्बन्धि अन्यत्र आपोनारा इति

स्वस्य कश्चिदपि पर्वतपक्ष-
च्छेदिनि स्वयमदर्शि न पक्षः ॥ ४४ ॥
पाणये बलरिपोरथ भैमी-
शीतकोमलकरग्रहमर्हम् ।
भेषजं चिरचिताशनिवास-
व्यापदामुपदिदेश रतीशः ॥ ४५ ॥

प्रोक्ता इति मनुवचनोक्तनारशब्दप्रतिपाद्यं जलं ददातीति नारदः मेघः तत्सम्बन्धि गभीरम् अर्थगौरववत् अन्यत्र गम्भीरम् उदितम् उक्तं वचनमित्यर्थः गर्जितश्च प्रतिभेदे प्रतिध्वनितं नारदोक्तमेवानूदितमिति भावः। अन्यत्र मेघगर्जितस्य प्रतिध्वनिः पर्वते युज्यते एवेति भावः। स्वतन्त्रतया नैव किञ्चिदुक्तमित्याशयेनाह स्वस्येति। पर्वतस्य पक्षं छिन्नवानिति तत्पक्षच्छिदि इन्द्रे स्वयमात्मना स्वातन्त्र्येणेत्यर्थः स्वस्य आत्मनः कश्चिदपि साध्यं प्रयोजनं पक्षः गरुच्च पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिष्विति वैजयन्ती। न अदर्शि न दर्शितः केवलं नारदसाहचर्य्यमेवास्य प्रयोजनं नान्यदिति तद्वाक्यमेवानूदितं न पृथक् किञ्चित् निवेदितमिति तात्पर्य्यम्। पर्वतपक्षच्छेदकस्याग्रे पर्वतेन स्वपक्षाप्रदर्शनं युक्तमेवेति भावः ॥ ४४ ॥

नारदमुखाद् दमयन्त्याः सौन्दर्य्यातिशयं श्रुत्वा इन्द्रस्य तत्रासक्तिमाह, पाणये इति। अथ नारदप्रश्नानामन्तरं रतीशः कामः बलरिपोः इन्द्रस्य पाणये कराय चिरचिताः बहुकालसञ्चिताः अशनिवासेन वज्रस्थित्या या व्यापदः पीडाविशेषरूपा आपद इत्यर्थः तासां वज्रधरत्वात् अनवरतवज्रव्यव-

नाकलोकभिषजोः सुषमा या
पुष्पचापमपि चुम्बति सैव।
वेद्मि तादृगभिषज्यदसौ त-
द्द्वारसंक्रमितवैद्यकविद्यः ॥ ४६ ॥

ह्वारेण जनितानां पीड़ानामित्यर्थः अर्हं योग्यं भेषजम् औषधं भैम्या दमयन्त्याः शीतः शीतलः कोमलः मृदुलः यः करः तस्य ग्रहं ग्रहणं दमयन्तीपाणिपीड़नमित्यर्थः। उपदिदेश दमयन्त्याः परिणये कृते तस्याः तथाविधपाणिस्पर्शजनितसुखप्रवाह-निमज्जनेन तव करस्य अशनिव्यथा मनसि न स्थितिं लप्स्यते तदस्याः पाणिं गृहाणेति उपदिष्टवानिवेति फलितार्थः। अत्र कामादेशनिबन्धनस्य दमयन्तीपाणिपीड़नस्य अशनिपीड़ाशम-यितृत्वरूपेणोत्प्रेक्षणात् प्रतीयमानोत्प्रेक्षा। समेन कार्य्येण प्रकृते रतीशे अप्रकृतस्य भिषजो व्यवहारारोपात् समासोक्तिः तदुक्तं दर्पणे। समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः व्यव-हारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः। इति तदनयोरङ्गाङ्गि-भावेन सङ्करः ॥ ४५ ॥

ननु कामस्य वैद्यत्वं कथमुत्पन्नमित्यत्राह, नाकेति। नाकलोकः स्वर्गलोकः तस्य तत्र वा यौ भिषजौ अश्विनी-कुमारावित्यर्थः स्वर्वैद्यावश्विनीसुतावित्यमरः। तयोः या सुषमा परमा शोभा, सुषमा परमा शोभेत्यमरः। सा सुषमा पुष्पचाप-मपि काममपि चुम्बति स्पृशति एवेत्यर्थः। अश्विनीकुमाराविव सौन्दर्य्येण कामः शोभते इति भावः। किन्तत इत्याह। सा सुषमा एव द्वारम् उपायः तेन तद्द्वारेण संक्रमिता संक्रान्तिं नीता वैद्यकविद्या आयुर्वेदविद्या यस्मिन् तथोक्तः। स इव दृश्यते

मानुषीमनुसरत्यथ पत्यौ
खर्वभावमवलम्ब्य मघोनी।
खण्डितं निजमसूचयदुच्चै-
र्मानमाननसरोरुहनत्या ॥ ४७ ॥

इति तादृक् आश्विनेयसमाकृतिशोभ इत्यर्थः। असौ पुष्पचापः अभिषज्यत् चिकित्सितवान् इन्द्रं तदीयकररोगशान्तये इति शेषः। तादृगिति क्रिया विशेषणत्वे तादृक् तद्वत् अश्विनीकुमारवदित्यर्थः। भिषज्यते कण्ड्वादित्वेन यगन्ताल्लङ्। वेद्मि जानामि उत्प्रेक्षे इत्यर्थः वाक्यार्थः कर्म। उत्प्रेक्षालङ्कारः॥४६

अथ षड्भिः श्लोकैः इन्द्रे भैमीं प्रति अनुरागवति शच्यादीनां दौर्मनस्यमाह, मानुषीमित्यादिभिः। अथ भैमीं प्रति कामावेशानन्तरं पत्यौ स्वामिनि खर्वभावं खर्वत्वं नीचत्वमित्यर्थः अवलम्ब्य आश्रित्य। सति देवत्वे मानुषीकामादिति भावः। मानुषीं मनुष्यकन्यां जातेरस्त्रीत्यादिना ङीप्। अनुसरति अनुगच्छति सति कामयमाने इति भावः। मघोनः पत्नी मघोनी इन्द्राणी शची पुंयोगादाख्यायामिति ङीप् श्वयुवमघोनामतद्धित इति सम्प्रसारणगुणः। आननमेव सरोरुहं पद्मं तस्य नत्या नमनेन अपमानादिति भावः। उच्चैः उन्नतं निजं स्वीयं मानं त्रिभुवनेश्वरस्य महिषी अहं मत्तोऽन्या न कापि सुन्दरी नापि माननीयास्तीति अहङ्कारमित्यर्थः। खण्डितं चूर्णितम् असूचयत् सूचयामास प्रकटितवतीत्यर्थः। यद्वा पत्यौ मानुषीमनुसरति सति मघोनी खर्वभावं सङ्कुचितत्वमवलम्ब्य निजम् उच्चैर्मानं खण्डितमसूचयदित्यन्वयः। खर्वस्य वामनस्य भावमाश्रितस्य मानं परिमाण-

यो मघोनि दिवमुज्झमाणे
रम्भया मलिनिमाऽलमलम्भि ।
वर्ण एव स खलूज्ज्वलमस्याः
शान्तमन्तरमभाषत भङ्ग्या ॥ ४८ ॥
जीवितेन कृतमप्सरसां तत्
प्राणमुक्तिरिह युक्तिमती नः ।

मुन्नतत्वं खण्डितं भवतीति ध्वन्यते । अत्र इन्द्राख्याः शिरो नत्या चिन्ताहेतुर्निर्वेदभावो व्यज्यते ॥ ४७ ॥

य इति । मघोनि इन्द्रे श्वयुवेत्यादिना सम्प्रसारणे गुणः । दिवमाकाशमुज्झमाणे परित्यज्य मर्त्यलोकं गच्छति सति उदश्चरः सकर्मकादित्यात्मनेपदम् । रम्भया तदाख्यया सुरसुन्दर्य्या यो मलिनस्य भावः मलिनिमा मालिन्यम् अलमतिशयेन अलम्भि प्राप्तः भाषाचिण्णमुलोरिति नुमागमः । स मालिन्यरूपो वर्ण एव भङ्ग्या आकारवैलक्षण्यभावेनेत्यर्थः अस्या रम्भायाः अन्तरम् अन्तःकरणवृत्ति शान्तरमिति पाठे स एवार्थः । उज्ज्वलं शृङ्गारः कामावेशजनितरसविशेषः शृङ्गारः शुचिरुज्ज्वल इत्यमरः । यद्वा उज्ज्वलनमुज्ज्वलः भावेऽण्प्रत्ययः उज्ज्वलत्वमित्यर्थः सततामिमतकान्तसम्भोगप्राप्त्या प्रफुल्लत्वमिति भावः शान्तम् अपनीतं वा दान्तेत्यादिना निपातः । अभाषत खलु असूचयदेवेत्यर्थः । एतेनास्याः अपि वैवर्ण्यनिबन्धनो निर्वेदः सञ्चारिभाव उक्तः । तदुक्तं दर्पणे । तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना । दैन्यचिन्ताश्रुनिश्वासवैवर्ण्योच्छ्वसितादिकृदिति ॥ ४८ ॥

जीवितेनेति । अप्सरसां सुराङ्गनानां नोऽस्माकं जीवितेन

इत्यनक्षरमवाचि घृताच्या
दीर्घनिश्वसितनिर्गमणेन ॥ ४९ ॥
साधु नः पतनमेवमितः स्यात्
इत्यभण्यत तिलोत्तमयापि ।
चामरस्य पतनेन कराब्जात्
तद्विलोलनचलद्भुजनालात् ॥ ५० ॥

जीवनेन कृतम् अलं यदीन्द्रोऽस्मानतिक्रम्य मानुषीमभिगच्छति तदास्माकं जीवनं निरर्थकमिति भावः । इहास्मिन् समये स्वर्गे वा प्राणमुक्तिः प्राणत्यागः युक्तिमती युक्ता, उचितेत्यर्थः ईदृगपमाने प्राणधारणं न युक्तमिति भावः । घृताच्या तदाख्यया कयाचित् सुररमण्या दीर्घं निश्वसितं निश्वासः तस्य निर्गमणं निःसरणं तेन तद्व्याजेनेत्यर्थः । इति अनक्षरं शब्दप्रयोगरहितं यद्वा अनक्षरमवाच्यं वक्तुमशक्यमित्यर्थः यथा तथा अमङ्गलत्वात्तद्वचनस्येति भावः । अनक्षरमवाच्यं स्यादित्यमरः । अवाचि उक्तं ब्रूञो वा कर्मणि लुङ् । प्राणानां निश्वासरूपत्वात् तेषां दीर्घनिर्गम एव प्राणविगम इति भावः । अत्र इवादिव्यञ्जकाप्रयोगात् प्रतीयमानोत्प्रेक्षा । प्रकृतस्य निश्वासस्य प्रतिषेधेन तदन्यस्य प्राणविगमस्य स्थापनादपह्नुतिश्च तदुक्तं दर्पणे । प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति । तदनयोरङ्गाङ्गिभावेन सङ्करः ॥ ४९ ॥

साध्विति । तिलोत्तमा नाम काचिदप्सराः तयापि तस्य चामरस्य विलोलनेन आन्दोलनेन चलन् भुजो बाहुः नाल इव दण्ड इव । नाला नालमथास्त्रियामित्यमरः । यस्य तथाभूतात् करोऽब्जमिव कराब्जं तस्मात् कराब्जात् करकमलात् चामरस्य

मेनका मनसि तापमुदीतं
यत्पिधित्सुरकरोदवहित्थाम्।
तत् स्फुटं निजहृदः पुटपाके
पङ्क्तिमिमसृजत् वहिरुत्थाम्॥ ५१॥

चमरमृगपुच्छलोमनिचयमयस्य व्यजनस्य इन्द्रपरिचर्य्यार्थमुद्धृतस्येति भावः। पतनेन भ्रंशनेन दौर्मनस्य-जनिताङ्गपारवश्यादिति भावः। एवं चामरवदित्यर्थः। नः अस्माकम् इतः स्वर्गात् पतनमेव साधु भद्रं युक्तमित्यर्थः स्यादिति अभण्यत भणितं कथितमित्यर्थः सूचितमिवेति भावः। इवादिव्यञ्जकाप्रयोगात् प्रतीयमानोत्प्रेक्षा कराब्जादित्युपमितसमासादुपमालङ्कारः तदनयोः संसृष्टिः। यत्त्वाभियुक्तैरुक्तं भुजनालात् कराब्जादिति सावयवरूपकेण संसृष्टिरिति तच्चिन्त्यं यत्र सामान्यधर्मो मुख्यतया उपमेये वर्त्तते उपमाने चोपचरति तत्रोपमा, यत्र तु उपमाने मुख्यतया वर्त्तते उपमेये चोपचरति तत्र रूपकमित्येवं सिद्धान्तः। तदसामान्यकर्म्मभूतस्य चामरपतनरूपस्य कररूपापादाने एव मुख्यतयान्वयादब्जे चोपचरितत्वाच्च उपमासाधकत्वमेव तदुक्तं दर्पणेन, एकदेशविवर्त्तिरूपकप्रस्तावे। लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम्। लोकचनलोरोलम्बकदम्बैः कैर्न पीयते॥ इत्यत्र लावण्यादौ मध्वाद्यारोपः शाब्दो मुखे पद्मारोप आर्थः। न चेयमेकदेशविवर्त्तिन्युपमा विकस्वरत्वधर्मस्य आरोप्यमाणे पद्मे एव मुख्यतया वर्त्तमानात् मुखे चोपचरितत्वादिति॥ ५०॥

मेनकेति। मेनका नाम काचिदप्सराः मनसि उदीतम् उत्थितम् उदीर्णमिति पाठे उदीर्णमुद्गतं तापं प्रियतमस्या-

उर्वशी गुणवशीकृतविश्वा
तत्क्षणस्तिमितभावनिभेन ।
शक्रसौहृदसमापनसीम-
स्तम्भकार्य्यमपुषत् वपुषैव ॥ ५२ ॥

सन्निजनितमाधिमित्यर्थः पिधित्सुः पिधातुमिच्छुः गोपयितु-मिच्छुरित्यर्थः सती यत् यस्मात् अवहित्थाम् आकारगुप्तिं भाव-संवरणमिति भावः । अवहित्थाकारगुप्तिरित्यमरः । सा च मम अन्यासक्तः प्रियः मां त्यक्ष्यतीति भीतिनिबन्धना उक्तञ्च दर्पण-कारेण । भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था । व्यापा-रान्तरसक्त्यन्यथावभाषणविलोकनादिकरीति । अकरोत् कृत-वती । तत् आकारगोपनं कर्त्तुं निजहृदयः स्वहृदयस्य पुटे मृ-त्तिकानिर्मिते कुत्रचित् आवरणविशेषे यः पाकः पचनं तस्मिन् विषये वहिस्तिष्ठतीति वहिस्था तां वहिर्गतां वाह्यामित्यर्थः पुटवहिर्भागे दत्तामिति भावः । आतश्चोपसर्गे इति कर्त्तरि कप्रत्ययः । पङ्केन कर्दमेन या लिप्तिः प्रलेपः तां स्त्रियां क्तिन् । असृजत् चकार । पुटपाकस्थःपच्यमानरजतादिवस्तु वाह्य-पङ्कलेपो यथा गोपायति तथा हृदये पच्यमानमाधिम् आकार-विशेषोऽस्या गोपायति स्मेति भावः । स्फुटमुत्प्रेक्षायामित्युत्-प्रेक्षालङ्कारः ॥ ५१ ॥

उर्वशीति । गुणैः शीलसौन्दर्य्यादिभिः वशीकृतम् अधीनी-कृतं विश्वं जगत् यया सा तथोक्ता गुणैर्जगन्मोहिनीत्यर्थः उर्वशी नाम सुरसुन्दरी तस्मिन् क्षणे इन्द्रस्य दमयन्तीलाभार्थं मर्त्त्यभूमौ प्रस्थानसमये इत्यर्थः स्तिमितस्य भावः स्तिमित-भावः निश्चलाङ्गत्वमिति भावः । स्तम्भापरनामा सात्त्विकभाव-

कापि कामपि बभाण बुभुत्सुं
शृण्वति त्रिदशभर्त्तरि किञ्चित्।
एष कश्यपसुतामभिगन्ता
पश्य काश्यपसुतः शतयज्ञः॥ ५३॥

विशेष इत्यर्थः तदुक्तं दर्पणे। स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृता इति। अथ इन्द्रो मां परित्यक्ष्यतीति भयनिबन्धनः स्तिमितभावः तथाचोक्तं तत्रैव। स्तम्भश्चेष्टाप्रतीघातो भयहर्षामयादिभिरिति। तस्य निभं व्याजः तेन। मिषं निभञ्च निर्दिष्टमिति हलायुधः। वपुषैव स्तिमितेमेति शेषः सुहृदयस्य भावः सौहृदं प्रेम सुहृदयशब्दाद् युवादित्वादण्प्रत्यये हृद्भावान्नोभयपदवृद्धिः। अतएव सौहृदं हृदयशब्दादपि हृद्भावादिति वामनः। शक्रस्य इन्द्रस्य सौहृदं शक्रसौहृदं तस्य समापनम् अवसानं तस्य सीम्नि सीमास्थाने स्तम्भकार्य्यं स्थूणकृत्यं जाड्यकृत्यञ्च अपुषत् चकार। स्तम्भः स्थूणजड़त्वयोरिति विश्वः। यथा लोके भूम्यादीनां सीमानिर्णयार्थं सीमासन्धिषु स्तम्भः स्थाप्यते तथा अस्याः स्तैमित्यं शक्रप्रेम एतावत्कालपर्य्यन्तं स्थितमिति अवधारयति स्मेति भावः। पुषादित्यादिना च्लेरङादेशः॥ ५२॥

तदानीम् अधीरायां कासाञ्चित् सोत्प्रुण्ठनोक्तिमाह, कापीत्यादि। कापि देवाङ्गना त्रिदशानां देवानां भर्त्तरि प्रभौ इन्द्रे इत्यर्थः शृण्वति आकर्णयति सति तस्य श्रवणार्थमिति भावः। बुभुत्सुम् इन्द्रः कथं मर्त्त्यलोकं गच्छतीति जिज्ञासमानामित्यर्थः कामपि देवीं किञ्चित् अल्पं बभाण उक्तवती, एषः

आलिमात्मसुभगत्वसगर्वा
काऽपि शृण्वति मघोनि बभाषे ।
वीक्षणेऽपि सघृणासि नृणां किं
यासि न त्वमपि सार्थगुणेन ? ॥ ५४ ॥

इति हस्तेन निर्देशः शतं यज्ञा अश्वमेधा यस्य स शतयज्ञः शतक्रतुः शताश्वमेधयाजीत्यर्थः कश्यपस्य मुनेः सुतः इन्द्रः कश्यपसुतां काश्यपीं क्षितिमित्यर्थः धरा-धरित्री-धरणिः क्षौणीज्या काश्यपी क्षितिरित्यमरः । अभिगन्ता अभिगमिष्यति गमेर्लुट् । पश्य शताश्वमेधयागेन लब्धेन्द्रपदस्यापि अस्य तत्परित्यागेन अधोभूमौ गमनम् अवलोकय इत्येकोऽर्थः । कश्यपस्य महामुनेर्धर्मोपदेशिन इति भावः सुतः पुत्रः स्वयं शतयज्ञः अनवरतधर्मानुष्ठानरतः इति भावः तथापि कश्यपस्य स्वजनकस्य सुतां भगिनीमिति भावः अभिगन्ता अभिगमिष्यतीत्यपरोऽर्थः कोपात् पारुष्योक्तिः । कश्यं मद्यं पिबतीति कश्यपः सुरापायी तस्य सुतामिति च ध्वन्यते । कश्यं त्रिषु कशार्हे स्यात् क्लीबं मद्याश्वमध्ययोरिति मेदिनी । अत्र द्वितीयार्थस्याप्रकृतत्वात् कश्यपसुतामिति न श्लेषः प्रत्युत ध्वनिरेवेति ॥ ५३ ॥

आलिमिति । आत्मनः स्वस्य सुभगत्वेन वाल्लभ्येन सगर्वा गर्विणी सुभगम्मन्येत्यर्थः काऽपि सुरकामिनी मघोनि इन्द्रे शृण्वति आकर्णयति सति तच्छ्रवणार्थमित्यर्थः आलिं सखीं बभाषे उवाच, हे सखि ! त्वं नृणां मानवानां वीक्षणेऽपि दर्शनेऽपि सम्भाषणस्पर्शनादौ किं वक्तव्यमिति भावः । सघृणा घृणावती किं कथम् असि भवसि ? नातःपरं त्वया मानुषेषु

अन्वयुर्द्युतिपयःपितृनाथाः
तं मुदाथ हरिताङ्कमितारः ।
वर्त्म कर्षतु पुरः परमेकः
तद्गतानुगतिको न महार्घः ॥ ५५ ॥

घृणा कर्त्तव्येति भावः । कथमित्याह, यासीति । त्वमपि सार्थस्य सहचरस्य इन्द्रस्येति भावः गुणेन अनुरोधेन रज्जुरूपेणाकर्षकेण प्रेमणेति वार्थः न यासि ? इति काकुः अपितु साहचर्य्यानुरोधात् इन्द्रेण सहैव यास्यसीत्यर्थः । यद्वा नृणां वीक्षणेऽपि सघृणासि, किन्तु सार्थगुणेन मक्षिगुणेन गड्डलिकान्यायरूपेण अविवेकेनेति भावः न यासि किम् ? अपितु यास्यस्येवेत्यर्थः । यदि विवेकलेशोऽस्ति तदा न गन्तव्यमेवेति भावः ॥ ५४ ॥

अथाग्न्यादीनां तदनुसरणमाह, अन्वयुरिति । अथेन्द्रप्रस्थानानन्तरं हरितां दिशां दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता इत्यमरः । कमितारः कामयमानाः दिक्पतय इत्यर्थः ततश्च तेषां दिक्पालस्य इन्द्रस्यानुगमनं युज्यते समकक्षत्वादिति भावः । द्युतयश्च पयांसि च पितरश्च तेषां नाथाः पतयः अग्निवरुणयमा इत्यर्थः मुदा हर्षेण दमयन्तीदर्शनाकाङ्क्षादिजनितेनेति भावः । तम् इन्द्रम् अन्वयुः अनुजग्मुः । लङ् शाकटायनस्येति सेर्जुसादेशः । तथाच पुरः अग्रतः एकः जन इति शेषः वर्त्म पन्थानम् इष्टलाभस्य उपायरूपमिति भावः । कर्षतु करोतु, परं किन्तु तस्य प्रथमं वर्त्मकर्त्तुरित्यर्थः गतं गमनम् अनुसृत्य गतिर्गमनं यस्य तथाविधो जनः न महार्घः न दुष्प्रापः । यः प्रथमम् इष्टस्य पन्थानं दर्शयन् गच्छति स एव

प्रेषिताः पृथगथो दमयन्त्यै
चित्तचौर्य्यचतुरा निजदूत्यः ।
तद्गुरुं प्रति च तैरुपहाराः
सख्यसौख्यकपटेन निगूढ़ाः ॥ ५६ ॥

दुर्लभः, ये तु तमनुसरन्ति ते तु गतानुगतिकत्वात् सुलभा एवेति भावः। तदत्र देवराजस्यैव प्राधान्यमन्येषान्तु तत्साहचर्य्यमेति भावः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५५ ॥

प्रेषिता इति। अथो अनन्तरं तैरिन्द्रादिभिः चित्तस्य चौर्य्ये अपहरणे आकर्षणे इत्यर्थः चतुराः निपुणाः निगूढ़ा इत्युभयत्रान्वेति निगूढ़ाः निजदूत्यः स्वस्वसन्देशार्थवाहिन्यः किङ्कर्य्य इत्यर्थः दमयन्त्यै दमयन्तीं प्रतीत्यर्थः पृथक् प्रत्येकं प्रेषिताः प्रेरिताः पृथगिति निजदूत्य इत्यस्य विशेषणं वा। तस्या दमयन्त्या गुरुं पितरं गुरुर्गीष्पति पित्राद्या इत्यमरः। प्रति तत्सकाशे इत्यर्थः सख्येन मैत्रेण यत् सुखानां समूहः सौख्यं सुखमेव सौख्यं वा तस्य कपटेन व्याजेन निगूढ़ाः गुप्ताः उपहाराः उपायनानि च प्रेषिता इत्यन्वयः। निगूढ़ा इति तेषामिन्द्रादीनां प्रत्येकस्य भैम्यां समानुरागित्वात् मामेवैषा अनुगच्छतु नान्यं देवमित्यहमहमिकया परस्परं सङ्गोप्य दूतीनाम् उपहाराणाञ्च प्रेषणं सूचयति। त्वया महात्मना सह सख्यमिच्छामीति कपटं यद्यसौ उपहारलाभेन सम्प्रीतः सन् सुहृत् अयमिति मत्वा मह्यं सुतां दास्यतीति व्यञ्जयति। सङ्ख्यसौख्यकपटेनेति पाठे सङ्ख्येन संग्रामेण भवत्कृतेन दुष्टानां जगद्विद्रावकानां निर्जयेन यत्सौख्यं प्रीत्यतिशयः तस्य कपटे-

चित्र मत्र विबुधैरपि यत्तैः
स्वर्विहाय वत भूरनुसस्ने।
द्यौर्न काचिदथवास्ति निरूढ़ा
सैव सा चलति यत्र हि चित्तम्॥ ५७॥
शीघ्रलङ्घितपथैरथ वाहैः
लम्भिता भुवममी सुरसाराः।

नेत्यर्थः एतच्च भवत्कृतप्रत्युद्गमनेन वयं प्रीताः स्मः तदेषः तव पुरस्काररूप उपहारः प्रेष्यते गृह्यतामित्युक्तोऽवश्यमेवास्मत्प्रति प्रीत्यर्थं कन्यारत्नमुपहरिष्यतीति ध्वनयति। अत्र प्रकृतस्य सख्यसौख्यस्य प्रतिषेधेन तदन्यस्य उपहारस्य स्थापनादपह्नुतिरिति केचित्। वस्तुतस्तु कपटेनेत्यस्य आशयेनेत्यर्थकत्वं समीचीनं तथात्वे प्रकृतप्रतिषेधकथाप्यत्र नास्तीति नैव तदलङ्कारस्य प्रसङ्ग इति विभाव्यम्॥ ५६॥

चित्रमिति। विबुधैरपि देवैरपि पण्डितैश्चापि विबुधः पण्डिते देवे इत्यमरः। तैरिन्द्रादिभिः स्वः स्वर्गं स्वरव्ययं स्वर्गेत्यमरः। विहाय परित्यज्य वत खेदे भूः पृथिवी यत् अनुसस्ने अनुसृता आश्रितेति यावत् अत्रास्मिन् संसारे तत् चित्रं स्वर्गपरित्यागेन देवानां भूलोकानुसरणम् आश्चर्य्यमित्यर्थः। अथवा पक्षान्तरे नैतदाश्चर्य्यमिति भावः। द्यौः स्वर्गः काचित् निरूढ़ा प्रसिद्धा इयमेव द्यौर्नान्येति नियता न अस्ति न विद्यते, यत्र चित्तं चलति गच्छति वलतीति पाठान्तरेऽप्ययमेवार्थः अनुरज्यतीत्यर्थः सैव सा द्यौर्हि स्वर्ग एवेत्यर्थः। ततश्च तदनुसरणं न चित्रमिति फलितार्थः॥ ५७॥

अन्वयः पथि नलेन सार्द्धं परिचयं चिकीर्षूणां देवानां तदीय-

वक्रितोन्नमितकन्धरबन्धाः
शुश्रुवुर्ध्वनितमध्वनि दूरम् ॥ ५८ ॥
किं घनस्य जलधेरथवैवं
नैव संशयितुमप्यलभन्त ।
स्यन्दनं परमदूरमपश्यन्
निस्वनश्रुतिसहोपगतं ते ॥ ५९ ॥

रथचक्रध्वनिश्रवणम् आह, शीघ्रेति । अथानन्तरं शीघ्रं द्रुतं लङ्घितः अतिक्रान्तः पन्था यैः तथाविधैः द्रुतगामिभिरिति भावः । वहन्तीति वाहाः तैः वाहनैः रथाश्वैरित्यर्थः भुवं भूलोकं लम्भिता नीताः अमी सुरेषु साराः श्रेष्ठा देवप्रवराः इन्द्राग्निवरुणयमा इत्यर्थः । वक्रिता साचीकृता उन्नमिता ऊर्द्धं नीताः कन्धरा ग्रीवा यस्मिन् तादृशः बन्धः शरीरसंस्थानं येषां तथाभूताः । यद्वा वक्रितः उन्नमितश्च कन्धरायाः बन्धः सन्धिर्येषां तादृशाः सन्तः अध्वनि पथि दूरम् उच्चैः दूरवर्त्ति वा ध्वनितं शब्दितं रथघोषमिति भावः शुश्रुवुः आकर्णयामासुरित्यर्थः । यद्वा नास्ति ध्वनिः शब्दान्तरं यस्मिन् तत् अध्वनीति श्रवणक्रियाविशेषणं दूरवर्त्तिशब्दस्य श्रवणे शब्दान्तरस्य प्रतिबन्धकत्वात् तन्निवारणपूर्वकमित्यर्थः ॥ ५८ ॥

अथ तेषां रथदर्शनमाह, किमिति । ते देवाः एवम् इत्थं ध्वनितमिति शेषः घनस्य मेघस्य किम् ? अथवा जलधेः समुद्रस्य ध्वनितमेतत् इति संशयितुमपि सन्देग्धुमपि निर्णेतुमिति यावत् । नैव अलभन्त नैवावसरं प्रापुरित्यर्थः शकधृषेत्यादिना तुमन्प्रत्ययः । तथाहि निस्वनस्य निर्घोषस्य श्रुत्या श्रवणेन सह उपनतम् उपस्थितम् अदूरं सन्निहितं

सूतविश्रमदकौतुकिभावं
भावबोधचतुरं तुरगाणाम् ।
तत्र नेत्रजनुषः फलमेते
नैषधं बुबुधिरे विबुधेन्द्राः ॥ ६० ॥

स्यन्दनं रथं परं रथमेव अपश्यन् दृष्टवन्तः । संशयोदयात् प्रागेव रथोपस्थित्या ध्वनिस्तदीय एवेति निर्णयात् न संशयावकाश इति भावः । एतेन नलस्य रथाश्वचालननैपुण्यं तेन चास्य गम्भीरध्वनिमत्त्वं द्रुतगामित्वञ्च व्यज्यते । अत्र प्रकृते रथस्वनिते अन्यस्य मेघस्य वा जलधेः स्वनितस्य संशय इति सन्देहालङ्कारः । एकञ्च उपगमनं निस्वनश्रवणस्य रथस्य चोभयोर्भिन्नमपि अध्यवसायेनोभयोर्वाचकतया सहोक्तिरलङ्कारः उक्तञ्च दर्पणकारेण । सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः इति सहार्थस्य बलादेकं यत्र स्याद् वाचकं द्वयोः । सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेदिति च तदनयोः संसृष्टिः ॥ ५९ ॥

ततश्चैषां नलसाक्षात्करणमाह सूतेति । एते विबुधेन्द्रा देवप्रवरा इन्द्रादयः तत्र तस्मिन् रथे सूताय सारथये विश्रमं विश्रान्तिं ददातीति सूतविश्रमदः कौतुकिभावः कुतूहलित्वं यस्य तं सूताय विश्रमं दत्त्वा स्वयमश्वान् चालयन्तमित्यर्थः तुरगाणाम् अश्वानां भावस्य आशयस्य स्वभावस्य वा बोधे ज्ञाने चतुरं निपुणम् अश्वहृदयज्ञमित्यर्थः अस्य अश्वहृदयज्ञता महाभारते वनपर्वणि नलोपाख्याने द्रष्टव्या । नेत्रजनुषः नयनोत्पत्तेः नेत्रधारणस्येत्यर्थः अनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव इत्यमरः । फलं साफल्यप्रदमित्यर्थः नेत्रानन्दकरमित्यर्थः

वीक्ष्य तस्य वरुणस्तरुणत्वं
यत् बभार निविड़ं जड़भूयम् ।
नौचिती जलपतेः किमु सास्य
प्राज्यविस्मयरसस्तिमितस्य ? ॥ ६१ ॥
रूपमस्य विनिरूप्य तथाति-
म्लानिमाप रविवंशवतंसः ।

नैषधं निषधानां राजा नैषधः तं नलमित्यर्थः जनपदशब्दात् क्षत्रियादङ् । बुबुधिरे ज्ञातवन्तः दहशुरित्यर्थः ॥ ६० ॥

अथास्य दर्शनेन वरुणस्य स्वेष्टसिद्धौ निराशस्य जाड्यमाह, वीक्ष्येति । वरुणः प्रत्यग्दिक्पालः तस्य नलस्य तरुणत्वं तारुण्यालङ्कृतरूपत्वमित्यर्थः वीक्ष्य विशेषेण दृष्ट्वा यत् निविड़म् अत्यन्तं जड़भूयं जाड्यम् अप्रतिभत्वमिति यावत् प्रतिपत्तिशून्यत्वं वा अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः । अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्रेति दर्पणः । बभार प्राप, प्राज्यः प्रभूतः प्रभूतं भूरि प्राज्यमित्यमरः । यो विस्मयरसः अद्भुतमिदं मनुष्येषु दृष्टमित्येवं भावविशेषः तेन जलेन च स्तिमितस्य निश्चलतां गतस्य अस्य जलपतेः जलाधिपस्य जड़पतेश्च यमकादौ भवेदैक्यं डलोर्वबोर्लरोस्तथेति वचनात् डलयोरभेदः । सा जड़भूयं विधेयप्राधान्यात् स्त्रीलिङ्गता औचिती उचितं कर्म्म किमु न ? अपितु उचितमेवेत्यर्थः । अथच जलपतेर्जलमयत्वात् जाड्यं युक्तमेवेति यद्वा जड़ानां मूर्खाणां पतेश्च जाड्यम् अप्रतिभत्वं युक्तमेवेति व्यज्यते । अतिसुन्दरं नलं दृष्ट्वा जलाधिपतिर्भैम्यां निराशत्वाज्जड़मतिरिवाभवदिति भावः ॥ ६१ ॥

कीर्त्त्यते यदधुनापि स देवः
काल एव सकलेन जनेन ॥ ६२ ॥
यत् बभार दहनः खलु तापं
रूपधेयभरमस्य विमृष्य।
तत्र भूदनलता जनिकर्त्री
मा तदप्यनलतैव तु हेतुः ॥ ६३ ॥

रूपमिति। रवेः सूर्य्यस्य वंशः रविवंशः तस्य वतंसः शिरोभूषणभूतः श्रेष्ठ इत्यर्थः यमः अस्य नलस्य रूपं सौन्दर्य्यं विनिरूप्य विशेषेण निरीक्ष्य तथा अतिम्लानिम् अतिशयेन मालिन्यमित्यर्थः अत्यन्तं कालिमानमित्यर्थः आप प्राप्तवान् यत् यथा अधुनापि सकलेन जनेन लोकेन स देवः यमः काल एव कृष्णवर्ण एव अथच कलनात् सर्वभूतानां स कालः परिकीर्त्तित इत्युक्तः प्रजाक्षयकरणात् कालाख्यः। तथा चामरः। कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तक इति। कीर्त्त्यते कथ्यते। नलसौन्दर्य्यदर्शनेन भैमीं प्रति हताशतया अन्तःकालिमायोगादस्य कालत्वं न तु प्रजासंहरणादिति भावः॥६२

यदिति। दहनोऽग्निः अस्य नलस्य रूपमेव रूपधेयं नामरूपभागेभ्यः स्वार्थे धेयो वक्तव्यः इति धेयप्रत्ययः। तस्य भरम् अतिशयं विमृष्य पर्य्यालोच्य यत् तापम् आधिं बभार खलु निश्चितं तत्र तापभरणे अनलस्य भावः अनलता अग्नित्वमित्यर्थः जनिकर्त्री जन्मकारिणी उत्पादयित्री माभूत् न भवतु तदपि तथापि अनलतैव अग्नित्वमेव हेतुस्तापस्येति शेष इति विरोधः। नलत्वाभाव एव हेतुरिति तत् परिहारः। स्वस्य अनलतानिबन्धनोऽसौ तापो न, केवलं नलरूपदर्शनेन भैमीं

कामनीयकमधःकृतकामं
काममक्षिभिरवेक्ष्य तदीयम् ।
कौशिकः स्वमखिलं परिपश्यन्
मन्यते स्म खलु कौशिकमेव ॥ ६४ ॥

रामणीयकगुणाद्वयवादं
मूर्त्तमुत्थितममुं परिभाव्य ।

प्रति निराशतया कथमहं नलो नास्मीति तापस्य हेतुः । अनलतानिबन्धनस्तापस्तु परस्यैव न स्वस्य सम्भवति अपरतापनस्यैव तत्स्वभावादिति फलितार्थः । अत्र अनलता न हेतुरपितु अनलैव हेतुरिति एकव्यक्तिमात्रवाचिनोरनञ्जयोर्विरोधात् विरोधालङ्कारः तदुक्तं दर्पणे । जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः । क्रियाक्रियाद्रव्याभ्यां वा द्रव्यं द्रव्येण वा मिथः । विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिरिति ॥६३

कामनीयकमिति । कौशिक इन्द्रः अधः कृतः तिरस्कृतः कामो येन तत् कन्दर्पातिशायीत्यर्थः । तस्य इदं तदीयं नलसम्बन्धीत्यर्थः । कामनीयकं रम्यतां कान्तिमित्यर्थः अक्षिभिर्नेत्रैः सहस्रेणेति शेषः कामं सम्यगित्यर्थः । अवेक्ष्य निरीक्ष्य स्वमात्मानम् अखिलं सर्वं सम्यगिति भावः । यथा तथा परिपश्यन् अवलोकयन् कौशिकं खलु उलूकमेव मन्यते स्म महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिक इत्यमरः । आत्मानं नलादपकृष्टं मत्वा भैम्यां निराशोऽभूदिति भावः ॥ ६४ ॥

अथ तेषां नलरूपदर्शनात् समकालमेव विस्मयो जात इत्याह, रामणीयकेति । सुरा देवा इन्द्रादयः अमुं नलं मूर्त्तं मूर्त्तिमन्तं रामणीयकं रमणीयत्वमेव गुणः तस्य अद्वयोऽद्वितीयो

विस्मयाय हृदयानि वितेरु:
तेन तेषु न सुरा: प्रबभूवु: ॥ ६५ ॥
प्रैयरूपकविशेषनिवेशै:
संवदद्भिरमरा: श्रुतपूर्वै: ।
एष एव स नल: किमितीदं
मन्दमन्दमितरेतमूचु: ॥ ६६ ॥

वाद: वचनं तस्म् उत्थितम् उत्पन्नं परिभाव्य विचार्य्य मूर्त्तिमान् रमणीयतागुणराशिरयमुत्पन्न इति विचिन्त्येत्यर्थ:। हृदयानि अन्त:करणानि विस्मयाय आश्चर्य्यरसाय वितेरु: ददु: अहो मर्त्त्येषु जगद्विलक्षणं रूपमिति धिया विस्मयरसे निमग्न-हृदया बभूवुरित्यर्थ:। तेन तद्दानेन तेषु हृदयेषु न प्रबभूवु: नेष्टवन्त: स्वस्वत्वध्वंसानन्तरं परस्वत्वोत्पत्तिरूपत्वाद् वितरणस्य युक्तमेव तत्राप्रभुत्वमिति भाव:। विस्मयविमूढतया ते किमधुना कर्त्तव्यमिति निश्चेतुं न शेकुरिति फलितार्थ:॥ ६५ ॥

प्रैयेति। अमरा देवा इन्द्रादय: श्रुतपूर्वै: पूर्वं श्रुतै: लोक-मुखादिति भाव: सुप्सुपेति समास:। संवदद्भि: यादृशा: प्राक्-श्रुता: तादृशा एव दृश्यन्तेऽत्रेति संवादम् ऐक्यतां व्रजद्भि: प्रियं रूपं प्रियरूपं तदेव प्रियरूपकं स्वार्थे कन्प्रत्यय:। तस्य भाव: प्रैयरूपकं मनोहरसौन्दर्य्यमित्यर्थ: मनोज्ञत्वादित्वाद् वुञ्। तस्य विशेषेण अन्यवैलक्षण्येन यद्वा विशेषेषु अवयवेषु विशेषो-ऽवयवे इत्युत्पलमाला। निवेशा: विन्यासा: तै: लिङ्गैरिति शेष: स: प्राक्श्रुत: नल: एषं एव किम्? इतीदम् इत्थमेतद् वाक्यं मन्दमन्दम् अनुच्चं यथा तथा इतरेतरं परस्परम् ऊचु: कथयन्ति स्म॥ ६६ ॥

तेषु तद्विधवधूवरणार्हं
भूषणं स समयः स रथाध्वा ।
तस्य कुण्डिनपुरं प्रतिसर्पन्
भूपतेर्व्यवसितानि शशंसुः ॥ ६७ ॥

धर्म्मराजसलिलेशहुताशैः
प्राणतां श्रितममुं जगतस्तैः ।
प्राप्य हृष्टचलविस्तृततापैः
चेतसा निभृतमेतदचिन्ति ॥ ६८ ॥

तेष्विति । तस्य नलस्य विधा प्रकारः आनुरूप्यं सौन्दर्य्यादिभिरसाधारणगुणैरिति भावः । यस्याः तथाविधा या बधूर्दमयन्ती तस्या वरणार्हं वरणयोग्यं भूषणम् अलङ्कारः स समयः स्वयंवरसमयः तथा कुण्डिनपुरं विदर्भनगरीं प्रति सर्पन् आभिमुख्येन गच्छन् स रथाध्वा रथपथः एते भूपतेः नलस्य व्यवसितानि उद्योगान् स्वयंवरार्थमिति शेषः । शशंसुः सूचयामासुः । वयमिव अयं नलोऽपि भैमीलाभाय स्वयंवरं यातीति निश्चितवन्त इति भावः ॥ ६७ ॥

अथ तद्दर्शनेन यमादीनां चिन्ता जातेत्याह, धर्मराजेति । तः धर्मराजो यमः, सलिले शेते इति सलिलेशः वरुणः, हुतं होमार्थं द्रव्यम् अश्नातीति हुताशः अग्निः तैः यमवरुणवह्निभिरित्यर्थः । जगतः भुवनस्य प्राणतां जीवनत्वम् अलोकसौन्दर्य्यादिगुणशालित्वात् तद्वत् प्रियतामित्यर्थः । धर्मार्थकामविविधक्रियाभिरुपकारित्वात् प्राणप्रदत्वमिति वार्थः श्रितम् आश्रितं नलं प्राप्य दृष्ट्वेति भावः । हृष्टाः प्रियत्वातिशयगुणयोगात्

नैव नः प्रियतमोभयथासौ
यद्यमुं न वृणुते वृणुते वा ।
एकतस्तु धिगमूमगुणज्ञाम्
अन्यतः कथमदःप्रतिलम्भः ॥ ६९ ॥

सन्तुष्टाः चलाः चञ्चलाः अधुना स्वयंवरक्षेत्रे अस्माभिर्गमनमुचितं न वेति सन्देहदोलामाश्रिता इति यावत् विस्तृततापाः भैमीं प्रति निराशत्वात् समधिकसन्तापशालिन इत्यर्थः तैः सद्भिः । विशेषणसमासः । चेतसा चित्तेन निभृतं गूढं यथा तथा एतत् वक्ष्यमाणरूपम् अचिन्ति चिन्तितं कर्मणि लुङ् । यमः जगत्प्राणान् प्राप्य संहृत्येत्यर्थः । हृष्यति वरुणः जलमयरूपः जगत्प्राणं वायुं प्राप्य चञ्चलो भवति अग्निश्च तथा वायुं प्राप्य प्रवृद्धत्वात् विस्तृततापो भवतीति च ध्वन्यते। अत्र हृष्टचलविस्तृततापैरिति पदं धर्मराजसलिलेशहुताशैरित्यनेन यथाक्रमम् अन्वेति तथाच धर्मराजो हृष्टः, सलिलेशश्चलः हुताशो विस्तृतताप इति उत्तरश्लोकत्रयञ्च तत्तत्प्रतिपादनपरमिति केचिदाहुः तन्न समीचीनं न हि धर्मराजादीनां हर्षादयो धर्माः प्रतिनियताः प्रत्युत सर्वेषामेव साधारणाः । अनन्तरश्लोके च न इति बहुवचनोपादानं दृश्यते । यच्चानन्तरश्लोके कर्त्तृपदस्यैकवचनान्तताऽस्ति तत्प्रत्येकाभिप्रायेण न विरुध्यते । चिन्ताविषयोपसंहारश्लोके च त्रयाणामेकाभिप्राय एव दृश्यते इत्यलं पल्लवितेन ॥ ६८ ॥

किं रूपा चिन्तेत्याह, नैवेत्यादि । असौ दमयन्ती अमुं नलं न वृणुते वृणुते वा वरत्वेन न गृह्णाति, गृह्णाति वा उभयथा पक्षद्वयेऽपीत्यर्थः । वरणे अवरणे चेति भावः । न

मामुपैष्यति तदा यदि मत्तो
वेद नैयमिदमस्य महत्त्वम् ।
ईदृशी च कथमाकलयित्री
मद्विशेषमपरान्नृपपुत्री ? ॥ ७० ॥

अस्माकं नैव प्रियतमा भवतीति शेषः। कुत इत्याह एकत इति तुशब्दोऽत्र हेतुवाचकः, तु यतः एकतः एकस्मिन् पक्षे नलावरणपक्षे इत्यर्थः। गुणान् शीलसौन्दर्य्यादीन् जानातीति गुणज्ञा सा न भवतीत्यगुणज्ञा ताम् अमुं दमयन्तीं धिक् निन्दामि धिङ्निर्भर्त्सननिन्दयोरित्यमरः। यदि तादृशं गुणराशिं नलं विहाय अस्मासु कमपि वरिष्यति तदा अनया गुणानुरागहीनया सङ्गतिरसुखावहेति भावः। अन्यतः नलवरणपक्षे अदः प्रतिलम्भः अमुष्या लाभः कथं भवेत् ? इति शेषः। नैव भवेदित्यर्थः परस्त्रीत्वादिति भावः॥ ६८ ॥

मामिति। इयं दमयन्ती अस्य नलस्य मत्तः मदपेक्षयेत्यर्थः महत्त्वम् उत्कर्षं यदि न वेद न जानाति तदा माम् उपैष्यति प्राप्स्यति वरिष्यतीत्यर्थः। तत्तु नैव सम्भवतीत्याह, ईदृशीति। ईदृशी इत्थंरूपगुणसमन्वितेत्यर्थः नृपपुत्री राजतनया एतेनातिचतुरेति गम्यते अपरात् नलात् मम विशेषं वैशिष्ट्यम् उत्कर्षमिति यावत् कथम् आकलयित्री कथं ज्ञात्री भवेत् ? इति शेषः नैव ज्ञास्यतीति भावः। अपरादिति पूर्वादिभ्यो वेति विकल्पात् स्मादादेशः। आकलयित्रीति तृणन्तादीकारः। न लोकेत्यादिना मद्विशेषमित्यत्र षष्ठीप्रतिषेधः। यतोऽसौ नलात् मदुत्कर्षं न ज्ञास्यति प्रत्युत नलमेव मत्तोऽधिकं ज्ञास्यति ततो नलमेव वरिष्यति न मामिति फलितार्थः॥७०॥

नैषधे वत वृते दमयन्त्या
व्रीड़ितो न हि वहिर्भवितास्मि।
स्वां गृहेऽपि वनितां कथमास्यं
ह्रीनिमीलि खलु दर्शयिताहे ॥ ७१ ॥
इत्यवेत्य मनसात्मविधेयं
किञ्चन त्रिविबुधी बुबुधे न।

नैषधे इति। वत खेदे, दमयन्त्या नैषधे नले वृते सति अहं व्रीड़ितः लज्जितः सन् न हि नैव वहिर्भवितास्मि वहिर्गन्तुं नैव शक्ष्यामीत्यर्थः। लोकसमाजे मद्गमनं लज्जाकरमेव भविष्यतीति भावः। भवतेर्लुट्। ननु गृह एव स्थातव्यं किं वहिर्गमनेनेत्यत आह, स्वामिति। गृहे स्वां निजां वनितां भार्य्यां ह्रिया निमीलति सङ्कुचतीति ह्रीनिमीलि लज्जासङ्कुचितमित्यर्थः णिन्प्रत्ययः। आस्यं मुखं कथं दर्शयिताहे दर्शयिष्यामि खलु? नैव दर्शयितुं शक्ष्यामीत्यर्थः। सा मामन्यासङ्गकामुकं ततो विहताशं दृष्ट्वा ईर्ष्यापरा हसिष्यति तदतीव मे लज्जाकरं भविष्यतीति भावः। दृशेर्ण्यन्तात् कर्त्तरि लुट्। अभिवादिदृशोरात्मनेपदे उपसङ्ख्यानमिति अणिकर्त्तुः वनितायां वैकल्पिककर्मत्वम्। अत्र णेरणादिसूत्रस्य यद्ग्रहणसामर्थ्यबलेन श्रूयमाणकर्म्मत्वाभावेन तद्विषयत्वात् णिचश्चेत्यात्मनेपदमिति केचित्। अणिकर्त्तुः कर्म्माश्रवणेऽपि तदतिरिक्तकर्माश्रवणादश्रूयमाणकर्मत्वमस्त्येवेति णेरणादिसूत्रविषयत्वमेवेति भाष्यकारः॥ ७१ ॥

उपसंहरति, इतीति। त्रयाणां विबुध्यते इति विबुधास्तेषां देवानामित्यर्थः विबुधः पण्डिते देवे इति विश्वः। समा-

नाकनायकमपास्य तमेकं
सा स्म पश्यति परस्परमास्यम् ॥ ७२ ॥
किं विधेयमधुनेति विमुग्धं
स्वानुगत्रयमवेत्य ऋभुक्षाः ।
शंसति स्म कपटे पटुरुच्चैः
वञ्चनं समभिलष्य नलस्य ॥ ७३ ॥

हारः त्रिविबुधी यमादिदेवत्रितयमित्यर्थः। इति उक्तप्रकारं मनसा अवेत्य ज्ञात्वा पर्य्यालोच्येत्यर्थः। किञ्चन किमपि आत्मनः स्वस्य विधेयं कर्त्तव्यं न बुबुधे न ज्ञातवतीत्यर्थः। ततश्च तैः किं कृतमित्याह, सा विबुधत्रयी तम् एकं नाकनायकं स्वर्गपतिम् इन्द्रम् अपास्य त्यक्त्वा परस्परम् अन्योन्यम् आस्यं पश्यति स्म। यद्वा तमेकं नाकनायकमपास्य सा त्रिविबुधी इन्द्रवर्जिता देवत्रयी इत्यवेत्य मनसा आत्मविधेयं न बुबुधे परस्परम् आस्यं पश्यति स्मेति योजना। अतःपरं किं कर्त्तव्यमिति विमूढ़ाः परस्परं निरीक्षाञ्चक्रे इति फलितार्थः॥ ७२ ॥

अथेन्द्रस्य व्यापारमाह, किमिति। कपटे प्रतारणायाम् उच्चैः पटुः अतिनिपुणः ऋभुक्षा इन्द्रः। आखण्डलः सहस्राक्ष ऋभुक्षा इत्यमरः। स्वमनुगच्छन्तीति स्वानुगाः तेषां स्वमनुगच्छतामित्यर्थः। त्रयं यमवरुणाग्नित्रयमित्यर्थः। अधुना इदानीं किं विधेयं कर्त्तव्यमिति विमुग्धं कर्त्तव्यतानिर्द्धारणाक्षममिति यावत् अवेत्य तेषां दैन्यं दृष्ट्वेति भावः। नलस्य वञ्चनं प्रतारणां समभिलष्य अभिसन्धाय शंसति स्म जगाद ॥ ७३ ॥

सर्वतः कुशलभागसि कच्चित् ?
त्वं स नैषध इति प्रतिभा नः।
स्वासनार्द्धसुहृदस्तव रेखां
वीरसेननृपतेरिव विद्मः ॥ ७४ ॥
क्व प्रयास्यसि नलेत्यलमुक्त्वा
यात्रयात्र शुभयाजनि यन्नः।

किमित्याह, सर्वत इति। सर्वतः सर्वेषु विषयेषु स्वशरीरादिषु राज्याङ्गेषु च कुशलं भजते इति कुशलभाक् असि कच्चित् ? कुशली भवसि किम् ? ननु अपरिचिते का कुशलपृच्छेत्यत्राह, त्वमिति। त्व स प्रसिद्धो नैषधः नल इति नोऽस्माकं प्रतिभा प्रतीतिर्विश्वास इति यावत् त्वां नैषधमेवेति प्रतीम इत्यर्थः कुत इत्याह, स्वेति। तव रेखाम् आकृतिलक्षणमित्यर्थः स्वस्य आसनार्द्धेन आसनार्द्धभागितया सुहृद् मित्रं तस्य ममार्द्धासनभाज इत्यर्थः वीरसेननृपतेरिव वीरसेनाख्यस्य राज्ञ इव तत्सदृशीमित्यर्थः। विद्मः जानीमः लक्षयाम इति यावत् तत्सादृश्यात् तत्पुत्रो नल एव त्वमित्यस्माभिर्ज्ञातं दीपात् प्रवर्त्तितस्य दीपस्येव पुत्रस्य पितुराकृतिलाभस्यैव सम्भवादिति भावः। ततश्च मित्रपुत्रोऽसि त्वमिति कुशलप्रश्नावकाशः। तवेत्यत्र त्वयीति पाठान्तरम् ॥ ७४ ॥

क्वेति। हे नल ! क्व कुत्र प्रयास्यसि ? गमिष्यसि ? इति उक्त्वा अलम् एष प्रश्नो निरर्थक इत्यर्थः। अलं खल्वोरित्यादिना क्त्वाप्रत्ययः। कुत इत्याह, यात्रयेति। यत् यस्मात् नोऽस्माकम् अत्र पृथिव्यां यात्रया यानेन आगमनेनेत्यर्थः। शुभया तव दर्शनेन भाविफलावश्यम्भावात् श्रेयस्कर्य्या अजनि

तत्त्वयैव फलसत्वरया त्वं
नाध्वनोऽर्द्धमिदमागमितः किम्?॥ ७५॥

एष नैषध! स दण्डभृदेष
ज्वालजालजटिलः स हुताशः
यादसां स पतिरेष च शेषं
शासितारमवगच्छ सुराणाम्॥ ७६॥

जातं भावे लुङ्। तत् तस्मात् फलेन सत्वरा त्वरावती तया फलसिद्धौ त्वरमाणयेत्यर्थः। तयैव यात्रयैव इदम् अध्वनः मार्गस्य अर्द्धम् अर्द्धपथमित्यर्थः। त्वं न आगमितः किम्? न प्रापितः किम्? अपितु आगमित एवेत्यर्थः। अस्मत्-कार्य्यार्थमेव तवेदमागमनं न तु स्वकार्य्यवशादिति त्वद्दर्शन-लाभात् सुयात्रैव निवेदयतीति भावः॥ ७५॥

ननु के यूयमित्यत्राह, एष इति। हे नैषध! नल! एष इति पुरोवर्त्तिनो हस्तेन निर्देशः स प्रसिद्धो दण्डं बिभर्त्तीति दण्डभृत् दण्डधरः यम इत्यर्थः। एषः स प्रसिद्धः ज्वालानां जालैः अर्चिःसमूहैः वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेति शिखा-स्त्रियामित्यमरः। जटा विद्यतेऽस्येति जटिलः शिखानिचय-रूपजटाधारीत्यर्थः पिच्छादित्वादिलच्। हुतम् अश्नातीति हुताशः अग्निः। एष च स प्रसिद्धो यादसां जलजन्तूनां यादांसि जलजन्तव इत्यमरः। पतिः जलाधिप इत्यर्थः वरुणः, शेषम् अवशिष्टम् एभ्योऽन्यमित्यर्थः। सुराणां देवानां शासि-तारं देवेन्द्रमित्यर्थः मामिति शेषः अवगच्छ जानीहि। दण्ड-भृदादिशब्दसामर्थ्यात् एतेषां देवानामाज्ञाहेलनं नैव श्रेयसे इति सूच्यते॥ ७६॥

अर्थिनो वयममी समुपेमः
त्वां किलेति फलितार्थमवेहि।
अध्वनः क्षणमपास्य च खेदं
कुर्महे भवति कार्य्यनिवेदम्॥ ७७॥

ईदृशीं गिरमुदीर्य्य विडौजा
जोषमाप न विशिष्य बभासे।
नात्र चित्रमभिधाकुशलत्वे
शैशवावधि गुरुर्गुरुरस्य॥ ७८॥

अर्थिन इति। अमी वयं अर्थिनः याचकाः सन्तः त्वां समुपेमः किल प्राप्नुम एव त्वत्समीपमुपगच्छाम एवेत्यर्थः। उपपूर्वादिणो लटो रूपम्। इति फलितार्थं निष्कृष्टाभिप्रायं अवेहि अवगच्छ। तर्हि शीघ्रं याच्यतां भवदभिलषितमित्यत्राह, अध्वन इति। क्षणम् अल्पं समयम् अध्वनः पथः खेदं परिश्रमम् अपास्य अपनीय किञ्चित् विश्रम्येति भावः। भवति त्वयि कार्य्यस्य निवेदं निवेदनं विदेर्ण्यन्तात् घञ्प्रत्ययः। कुर्महे भविष्यत्सामीप्ये लट्॥ ७७॥

ईदृशीमिति। विडं भेदकं शत्रूणामिति भावः। ओजो बलं यस्य स विडौजा इन्द्रः विडौजाः पाकशासन इत्यमरः। ईदृशीम् अविशेषामित्यर्थः। गिरं वाचम् उदीर्य्य उक्त्वा जोषं तूष्णीम्भावम् आप मौनभावमवलम्बितवानित्यर्थः। तूष्णीं जोषं भवेत् मौनमिति हलायुधः। विशिष्य विशेषं कृत्वा त्वमस्मदर्थे भैम्याः सकाशे दौत्याय गच्छेति विशेषेणेत्यर्थः। न बभाषे नोक्तवान् हठादुक्तौ अगौरवभियेति भावः। ननु कथमीदृक्

अर्थिनामहृषिताखिलरोमा
स्वं नृपः स्फुटकदम्बकदम्बम् ।
अर्चनार्थमिव तच्चरणानां
स प्रणामकरणादुपनिन्ये ॥ ७९ ॥
दुर्लभं दिगधिपैः किममीभिः ?
तादृशं कथमदो मदधीनम् ? ।

वाक्चातुर्यमस्येत्याह, नेति । अत्र अस्मिन् अभिधायाम् उक्तौ कुशलत्वं तस्मिन् विषये अस्य तथाविधवचनचातुर्य्यं न चित्रं नाश्चर्य्यं यतः अस्य इन्द्रस्य शैशवम् अवधिर्यत्र तत् शैशवावधि आशैशवमित्यर्थः । गुरुः वृहस्पतिः गुरुः आचार्य्यः उपदेष्टेत्यर्थः । वाचस्पतिशिष्यस्य तथा वाग्मित्वं न चित्रमित्यर्थः । गुरुर्गीष्पतिपित्राद्योरित्यमरः ॥ ७८ ॥

तच्छ्रवणेन नलस्य व्यापारमाह, अर्थीति । स नृपः नलः अर्थिनां याचकानाम् इन्द्रादीनां नाम्ना नामश्रवणेन यद्वा अर्थीति नामश्रवणेनेत्यर्थः, अर्थिप्रियत्वान्नलस्येति भावः । हृषितानि विकसितानि अखिलानि रोमाणि यस्य तथोक्तः मम भाग्यं यदर्थिनः प्राप्ता इति हर्षेण लोमाञ्चितकलेवरः सन्नित्यर्थः । हृषेर्लोमास्येति वैकल्पिक इड़ागमः । प्रणामकरणात् तद्व्याजादित्यर्थः । स्वमात्मानं तस्य तेषां वा चरणानाम् अर्चनार्थं पूजनार्थं स्फुटानां विकसितानां कदम्बानां नीपकुसुमानां कदम्बमिव निचयमिव उपनिन्ये उपनीतवान् तेषां पदतलेषु प्रणतिमकरोदिति भावः । कदम्बं निकुरम्बे स्यान्नीपसिद्धार्थयोः पुमानिति मेदिनी । अत्र लोमाञ्चिततनौ विकसितकदम्बनिचयत्वेन उत्प्रेक्षणात् उत्प्रेक्षालङ्कारः ॥७९॥

ईदृशं मनसिकृत्य विरोधं
नैषधेन समशायि चिराय ॥ ८० ॥
जीवितावधि वनीयकमात्रैः
याच्यमानमखिलैः सुलभं यत् ।
अर्थिने परिवृढाय सुराणां
किं वितीर्य्य मम तुष्यतु चेतः ? ॥ ८१ ॥

दुर्लभमिति । दिशामधि पान्तीति अधिपाः तैः दिक्पालैरित्यर्थः । अमीभिः इन्द्रादिभिः किं वस्तु दुर्लभम् ? दुष्प्रापम् ? न किमपीत्यर्थः । सर्व्वमेव एभिः ईश्वरत्वात् सुखेन लभ्यते इत्यर्थः । तादृशम् एषां स्वतो दुर्लभमिति भावः । अदो वस्तु मदधीनं कथम् ? ममायत्तं कथमेतदित्यर्थः । असम्भवमिदमिति भावः । ईदृशम् एवम्भूतं विरोधं संशयं मनसिकृत्य मनसि निधाय अमत्याधानम् उरसि मनसि इति गतिसंज्ञापक्षे कुगतिप्रादाय इति समासे ल्यबादेशः । नैषधेन नलेन चिरायेत्यव्ययं चिरं बहुक्षणमित्यर्थः । चिराय चिररात्राय चिरस्याद्याश्चिरार्थका इत्यमरः । समशायि संशयितं किमेदिति आन्दोलितमित्यर्थः भावे लुङ् ॥ ८० ॥

संशयप्रकारमाह, जीवितेति । यत् यस्मात् अखिलैः यैः कैश्चिदिति भावः । वनीयकमात्रैः अर्थिमात्रैः पात्रैरपात्रैर्वेति भावः । वनीयको याचनको मार्गणो याचनार्थिनावित्यमरः । जीवितावधि प्राणान्तमपि वस्तु याच्यमानं प्रार्थ्यमानं सुलभं सुप्रापं मत्सकाशादिति शेषः । सुराणां देवानां परिवृढाय प्रभवे देवेन्द्राय अर्थिने किं वस्तु वितीर्य्य दत्त्वा मम चेतः अन्तरात्मा तुष्यतु परितोषं लभताम् । अत्र वितरणे चेतसः

**भीमजा च हृदि मे परमास्ते**
**जीवनादपि धनादपि गुर्वी।**
**न स्वमेव मम सार्हति यस्याः**
**षोड़शीमपि कलां किल नोर्वी॥ ८२॥**

कर्तृत्वविवक्षया वितरणपरितोषयोः समानकर्तृकत्वस्य सिद्धिः बोध्या। जीवितावधि वस्तु यस्मै कस्मैचिदपि अर्थिने ददामि, अस्मैतु सर्वश्रेष्ठाय अर्थिने जीविताधिकं वस्तु देयं किन्तु तन्नास्ति तत् किं दीयते? केन वा दानेन मदन्तरात्मा प्रसीदति सर्वथा गुणवद्दानं पात्रेदानं विशेषत इत्यनेन पात्रे दानस्य प्राशस्त्यादिति भावः॥ ८१॥

ननु जीवितादपि अधिका दमयन्ती वस्तु तव हृदि वर्त्तते सैवास्मै दीयताम् इत्यत्राह, भीमजेति। उर्वी पृथ्वी रत्नपूर्णेति भावः। यस्याः भैम्याः षोड़शीमपि कलां भागं नार्हति किल षोड़शांशसाम्यमपि न लब्धुं शक्नोतीत्यर्थः। अतएव धनादपि किं बहुना जीवनादपि गुर्वी महती अधिकेत्यर्थः। भीमजा भीमनन्दिनी दमयन्ती मे मम हृदि परं मम हृदये एव आस्ते च अवधारणार्थश्चकारः। तिष्ठत्येवेत्यर्थः। सा मम स्वमेव धनमेव न अर्हति न भवतीत्यर्थः। आप्रदानात् तस्याः पितृधीनत्वात् न मम तत्र स्वत्वं नापि अस्वस्य दानं केनापि कर्त्तुं शक्यते, अहन्तु साम्प्रतं तत्कामित्वात् त्वां सततं हृदये धारयामि न तु तत्र मे स्वत्वं येनाहं तद्दाने अधिकरोमीति भावः। किञ्च सत्यपि स्वत्वे देयं दारसुताहृते इति वचनेन दाराणां पुत्राणाञ्च दाननिषेधशास्त्रं कथमतिक्रम्यते इति चावधेयमिति ध्वन्यते॥ ८२॥

मीयतां कथमभीप्सितमेषां ?
दीयतां द्रुतमयाचितमेव।
तं धिगस्तु कलयन्नपि वाञ्छाम्
अर्थिवागवसरं सहते यः॥ ८३॥
प्रापितेन चटुकाकुविडम्बं
लम्भितेन बहुयाचनलज्जाम्।

मीयतामिति। एषाम् इन्द्रादीनाम् अभीप्सितम् अभिलषितं वस्तु कथं केन प्रकारेण मीयतां ? ज्ञायेत ? न कथमपीत्यर्थः, तर्हि अयाचितमेव अप्रार्थितमेव द्रुतं शीघ्रं लघु क्षिप्रमर द्रुतमित्यमरः। दीयतामेव दातव्यमेवेत्यर्थः। नन्वर्थिकाङ्क्षितं विदित्वैव दास्यसि कात्र त्वरेत्यत्राह, तमिति। यो दाता वाञ्छाम् अर्थिनामभिलाषमिति यावत् कलयन् कथञ्चित् प्रकरणादिपर्य्यालोचनया जानन्नपि अर्थिनां वागवसरं प्रार्थनाकालं सहते प्रतीक्षते तं दातारं धिगस्तु स निन्दनीयो भवत्वित्यर्थः। याच्ञावाक्यप्रयोगो दैन्यसूचकत्वात् महतो जनानतीव लज्जयति तस्मात् ते स्पष्टतः तं वाक्यं गदितुं न पारयन्ति भङ्ग्या किञ्चित् प्रकटयन्ति तज्ज्ञानेनैव ये दातारः तदभिलषितं पूरयन्ति ते एव धन्याः, नो चेदर्थिनं तद्वचसा न्यक्कृतं विधाय दानं दातारमपि न्यक्कारयतीति भावः। तस्मादयाचितमेव दातव्यमिति भावः॥ ८३॥

उक्तमेवार्थं भङ्ग्यन्तरेण समर्थयति, प्रापितेनेति। दाता विलम्बात् कालाक्षेपं कृत्वेत्यर्थः। ददानः ददत् सन् चटुः चापल्योक्तिः देहि मे किञ्चिदिति पुनः पुनर्वचनमित्यर्थः।

अर्थिना यदघमर्ज्जति दाता
तन्न लुम्पति विलम्ब्य ददानः ॥ ८४ ॥

यत् प्रदेयमुपनीय वदान्यैः
दीयते सलिलमर्थिजनाय ।
याचनोक्तिविफलत्वविशङ्का-
त्रासमूर्च्छनचिकित्सितमेतत् ॥ ८५ ॥

काकुदैन्यसूचनम् अतिदीनाय मह्यं कृपया किञ्चिद्दानं महानुभवस्य भवतः समुचितमित्येवं वचनविन्यासः ताभ्यां विडम्बः हासास्पदत्वं विलम्बमिति पाठे विलम्बं समयक्षेपणं प्रापितेन दात्रेति शेषः। अतएव बहुना याचनेन पुनः पुनः प्रार्थनेन लज्जां सङ्कुचिततां कुण्ठितभावमित्यर्थः। लम्भितेन प्रापितेन अत्रापि दात्रेति शेषः। अर्थिना याचकेन करणेन हेतुना वा यत् अघं पापम् अर्जति प्राप्नोति, दानात् तत् अघं पापं न लुम्पति न क्षयं नयति, तत्पापस्य दानेन प्रायश्चित्तं न भवतीति भावः। तस्मात् प्रियवादादिप्रयोगात् प्रागेव अविलम्बेन दातव्यमिति तात्पर्य्यम् ॥ ८४ ॥

यदिति। वदान्यैः बहुदातृभिः स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे इत्यमरः। प्रदेयं प्रदातव्यं वस्तु उपनीय समीपं नीत्वा अर्थिन इति शेषः। अर्थिजनाय याचमानाय जनाय यत् सलिलं जलं उत्सर्गजलम् दीयते अर्थिहस्ते निक्षिप्यते एतत् सलिलदानं याचनस्य उक्तेः प्रार्थनावचनस्य विफलत्वस्य या विशङ्का संशयः तस्मात् त्रासो भयं तेन यत् मूर्च्छनं मूर्च्छा मोहप्राप्तिरिति यावत् अर्थिजनस्येति भावः। तस्य चिकित्सितं तन्मूर्च्छापनयनोपाय इति भावः। याचनोक्ति-

अर्थिने न तृणवद्धनमात्रं
किन्तु जीवनमपि प्रतिपाद्यम्।
एवमाह कुशवज्जलदायी
द्रव्यदानविधिरुक्तिविदग्धः॥ ८६ ॥

विफलत्वविशङ्का-त्रास-मूर्च्छन-चिकित्सितमेतदित्यत्र सार्थ-मोक्तिविफलत्वविशङ्का-त्रास-मूर्च्छदपमृत्युचिकित्सेति पाठे सा विधेयप्राधान्यात् स्त्रीलिङ्गता। सलिलदानक्रिया अर्थनाया याञ्चाया या उक्तिः देहि मे किञ्चित् दीनाय इत्येवंरूपा तस्या विफलत्वशङ्कया यस्त्रासः भयं तेन मूर्च्छन् सङ्कटमानः योऽप-मृत्युराकस्मिकमरणम् अर्थिजनस्येति भावः। तस्य चिकित्सा शान्त्युपाय इत्यर्थः। उत्सर्गजलदानेन याञ्चाया वैफल्यशङ्काप-गमात् तज्जनितत्रासेनापमृत्युघटनं शाम्यतीति भावः। तस्मात् शीघ्रमेवार्थिने देयं नात्र विलम्बः कार्य्य इति भावः। अत्र शान्तिशतकीयश्लोकः, क्व गन्तासि ? भ्रातः ! कृतवसतयो यत्र धनिनः, किमर्थं ? प्राणानां स्थितिमनुविधातुं कथमपि। धनै-र्याञ्चालब्धैः ननु परिभवोऽभ्यर्थनफलं, निकारोऽग्रे पश्चात् धन-मदहह ! भोस्तद्धि निधनम्॥ इति द्रष्टव्यः॥ ८५॥

अर्थिने इति। कुशवतः सकुशस्य जलस्य दायो दानं ददातेर्घञ् युगागमः। अस्त्यत्रेति कुशवज्जलदायी कुशसहित-जलप्रतिपादक इत्यर्थः। अतएव उक्तिविदग्धः उक्तौ अभिधाने बोधव्यापारे इत्यर्थः। विदग्धः श्लेषेणार्थान्तरप्रतिपादनचतुर इत्यर्थः। द्रव्याणां वस्तूनां दानविधिः दानविधायकं शास्त्रम् अर्थिने याचकाय तृणेन तुल्यं तृणवत् अतितुच्छमिति भावः। धनमात्रं धनमेव मात्रं कार्त्स्न्येऽवधारणे इत्यमरः। न

पङ्कसङ्करविगर्हितमर्हं
न श्रियः कमलमाश्रयणाय।
अर्थिपाणिकमलं विमलं त-
द्वासवेश्म विदधीत सुधीस्तत्॥ ८७॥

याचमानजनमानसवृत्तेः
पूरणाय वत जन्म न यस्य।

प्रतिपाद्यं न देयं किन्तु जीवनमपि आत्मनः जीवितमपि अर्थिनामुपकाराय प्रतिपाद्यमित्यनुषङ्गः एवम् इत्यमभिप्रायम् आह वदति व्यनक्तीत्यर्थः। सकुशजलं दातव्यमिति शास्त्रेण कुशजलरूपपवित्रवस्तुसहितदानमेव प्रशस्तं प्रतिपाद्यते, किन्तु सत्स्वपि अन्येषु पवित्रवस्तुषु कुशजलयोर्ग्रहणस्यायमभिप्रायः यत् कुशशब्दस्तृणविशेषवाची अतो धनं तृणं ज्ञात्वा दातव्यम्। जलञ्च जीवनापरपर्य्यायमतो जीवनमपि अर्थिना प्रार्थितं दातव्यमेवेति। अतएव दानविधेरुक्तिवैचित्र्यमिति भावः॥८६॥

पङ्केति। पङ्कस्य कर्द्दमस्य पापस्य च पङ्कोऽस्त्री कर्दमैनसोरिति वैजयन्ती। सङ्करेण सम्बन्धेन विगर्हितं कलुषितं निन्दितञ्च कमलं पद्मं श्रियः लक्ष्मीदेव्याः सम्पदश्च आश्रयणाय आवासाय न अर्हं न योग्यं पङ्किलत्वात्तत्र श्रियोऽवस्थानं न युज्यते इति भावः। तत्तस्मात् सुधीः सुपण्डितो जनः विमलं निर्मलं सुपात्रीयत्वात् निष्पापमित्यर्थः। अर्थिनः पाणिरेव कमलं तत् याचकजनकरपद्ममित्यर्थः। तस्याः श्रियः वासवेश्म आवासस्थानं विदधीत कुर्वीत सर्वथा पात्रेषु धनं दातव्यं नो चेत् तत् केवलं पापहेतवे स्यादिति भावः। अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः॥ ८७॥

तेन भूमिरतिभारवतीयं
न द्रुमै र्न गिरिभि र्न समुद्रैः ॥ ८८ ॥
मा धनानि कृपणः खलु जीवन्
तृष्णयार्पयतु जातु परस्मै।
तत्र नैष कुरुते मम चित्रं
यत्तु नार्पयति तानि मृतोऽपि ॥ ८९ ॥

याचमानेति। वत खेदे, यस्य जन्म उत्पत्तिः याचमानस्य अर्थिजनस्य मानसवृत्तेः मनोभिलाषस्य पूरणाय न भवतीति शेषः। तेन जनेन एकेनैवेति शेषः। इयं भूमिः अतिशयेन भारो विद्यतेऽस्या इति अतिभारवती अतिभाराक्रान्ता भवतीति शेषः। न द्रुमैः वृक्षैः, न गिरिभिः पर्वतैः न समुद्रैः भारवतीत्यनुषङ्गः। द्रुमादिभ्यः प्रजानां फलपुष्पौषधरत्नादिभिर्विशेषेणोपकारादिति भावः। जगदुपकृतिरेव जन्मसाफल्यहेतुरिति तात्पर्य्यम् ॥ ८८ ॥

मेति। कृपणः व्ययकुण्ठो जनः जीवन् प्राणान् धारयन् तृष्णया ममेदं चिरं तिष्ठत्विति वासनया धनानि जातु कदाचिदपि परस्मै अर्थिने इति शेषः। मा अर्पयतु खलु न प्रददातु एव। तत्राप्रदाने एषः कृपणः मम चित्रम् आश्चर्य्यं न कुरुते, तु किन्तु मृतोऽपि तानि धनानि न अर्पयति इति यत् तत् चित्रमित्यर्थः। अथच नृपस्य इमानि नार्पाणि नृपसम्बन्धीनि करोतीति नार्पयति राजायत्तानि करोतीति यत् तदेव चित्रमिति भावः। मृतधनं सर्वाभावे हरेन्नृप इति शास्त्रात् राजा बलेन गृह्णाति तस्मात् जीवितेन सर्वथार्थिमनोरथपूरणाय दातव्यमिति तात्पर्य्यम्। अथ यो नार्पयति

मामभीभिरिह याचितवद्भिः
दातृजातमवमत्य जगत्याम् ।
यत् यशो मयि निवेशितमेत-
न्निष्क्रयोऽस्तु कतमस्तु तदीयः ? ९० ॥
लोक एष परलोकमुपेता
हा विहाय निधने धनमेकः ।

स नार्पयतीत्यसङ्गत्या आपाततः क्रिययोर्विरोध आभासते नृपसम्बन्धीनि करोतीति तत्परिहारः तस्मात् श्लेषमूलो विरोधालङ्कारः ॥ ८९ ॥

साम्प्रतं देवदुर्लभं कतमं वस्तु यदेतैरपि मत्सकाशे प्रार्थ्यते इति चिन्तयति, मामिति । इह अस्यां जगत्यां भूमौ भुवने वा जगती भुवने भूम्यामिति वैजयन्ती । दातृजातं वदान्यसमूहम् अवमत्य अवधीर्य्य अवज्ञायेत्यर्थः । मां धनिनमिति शेषः । याचितवद्भिः प्रार्थितवद्भिः अमीभिर्देवैः यद् यशः मयि निवेशितं वदान्यश्रेष्ठोऽहमिति कीर्त्तिः संस्थापितेत्यर्थः । एतस्य यशसः निष्क्रयः प्रतिनिधिभूत इति यावत् कतमस्तु पदार्थः वस्तु तदीयः तेषां देवानां सम्बन्धी तदीप्सित इति भावः । अस्तु ? भवतु ? केन वस्तुना दत्तेन एतन्निष्क्रयं करवाणीति भावः । किं वस्तु देवदुर्लभमस्ति यद्दत्त्वा एतान् तोषयामीति तात्पर्य्यम् ॥ ९० ॥

न केवलं यशोऽर्थमेव धनदानम् अपितु आत्मनः परलोको-पकारायेत्याह, लोक इति । हा इति विषादे, एषः लोकः जनः लोकस्तु भुवने जने इत्यमरः । निधने अन्तकाले धनं

इत्यमुं खलु तदस्य निनीष-
त्यर्थिबन्धुरुदयद्दयचित्तः ॥ ९१ ॥
दानपात्रमधमर्णमिहैक-
ग्राहि कोटिगुणितं दिवि दायि ।
साधुरेति सुकृतैर्यदि कर्त्तुं
पारलौकिककुसीदमसीदत् ॥ ९२ ॥

विहाय परित्यज्य एकः एकाकी असहाय इत्यर्थः । सन् परलोकं लोकान्तरम् उपेता गमिष्यति इणो लुट् । इति हेतोः उदयन्ती दया यत्र तत् उदयद्दयम् उद्यत्करुणमित्यर्थः । चित्तं यस्य तथाभूतः अर्थी एव बन्धुः सुहृत् कथमन्यथा दयोदय इति भावः । अस्य मृतस्य तद्धनम् अमुं परलोकं निनीषति नेतुमिच्छति खलूत्प्रेचायाम् अन्ये बन्धवस्तु सर्वस्वमाददते नैनं प्रापयन्ति किञ्चिदपि, अर्थौतु यथार्थबन्धुकार्य्यमेव करोति दानग्रहणेन परलोकोपकारित्वादिति भावः । नादत्तमुपतिष्ठते इति स्मृतेरर्थिने अवश्यमेव देयमिति तात्पर्य्यम् ॥९१

किञ्च पात्राय यद्दीयते परलोके तत् आनन्त्याय कल्पते इत्याह, दानपात्रमिति । साधुः सज्जनः वार्द्धुषिकश्च साधुः स्त्रीषु क्षिते रम्ये सज्जने वार्द्धुषौ पुमानिति वैजयन्ती । असीदत् अविनश्वरं परलोके भवं पारलौकिकं तच्च तत् कुसीदञ्चेति पारलौकिककुसीदं परलोकाच्चेति वक्तव्यमिति भवार्थे ठञ्प्रत्ययः । लोकान्तरीणवृद्धिजीविकामित्यर्थः । कुसीदं वृद्धिजीविकेत्यमरः । कर्त्तुं निर्वाहयितुम् इहास्मिन् लोके एकं गृह्णातीति एकग्राहि एकमात्रवस्तुग्राहकं दिवि परस्मिन्

एवमादि स विचिन्त्य मुहूर्त्तं
तानवोचत पतिर्निषधानाम् ।
अर्थिदुर्लभमवाप्य च हर्षात्
याच्यमानमुखमुल्लसितश्रि ॥ ९३ ॥

लोके कोटिगुणितं कोटिसंख्यया आवृत्तं दायि दातृ अशीतिभागं गृह्णीयात् मासे वार्द्धुषिकः शते इति वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणाः परे इति कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहितेत्यादिस्मरणात् । इहलोके सामान्याधमर्णस्य देयवृद्धेः परिमाणमस्ति इदन्तु अपरिमितदायीत्यर्थः । आवश्यकाधमर्ण्ययोर्णिनिरिति अधमर्णे णिनिप्रत्ययः । अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेधात् द्वितीया । दानपात्रम् अर्थिरूपं सम्प्रदानपात्रम् अधमर्णं खातकं खादकं वा धनग्राहीति यावत् व्यस्तरूपकम् । उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकावुभावित्यमरः । सुकृतैः निजपुण्यबलैरिति भावः । यदि सम्भावनायाम् एति प्राप्नोति पुण्यप्रभावेण दाता तथाविधम् अधमर्णं लभते इति सम्भावयामीत्यर्थः । साधुर्यदि तथाविधं दानपात्रं सुकृतैः एति तदा असीदत् पारलौकिककुसीदं कर्त्तुम् अलमिति शेष इति केचिद् व्याचक्षते । अदातुः परत्र न किमपि लभ्यं दातुस्तु सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । प्राधीते शतसाहस्रमनन्तं वेदपारगे इति मनुवचनाद् यथायथं लाभाधिकार इति दानं सर्वथा श्रेयस्करमिति भावः ॥ ९२ ॥

एवमिति । स निषधानां जनपदानां पतिः नलः मुहूर्त्तम् अल्पकालम् एवमादिपूर्वोक्तरूपं विचिन्त्य समालोच्य हर्षात् तथाविधदानपात्रलाभजात् आनन्दादिति यावत् । अर्थिभिः

नास्ति जन्यजनकव्यतिभेदः
सत्यमन्नजनितो जनदेहः।
वीक्ष्य वः खलु तनूममृतादां
दृक् निमज्जनमुपैति सुधायाम् ॥ ९४ ॥

दुर्लभं दुष्प्रापम् उल्लसिता उल्लासिता श्रीः शोभा यत्र तथाभूतं प्रसन्नमित्यर्थः। शैषिकस्य कपो वैभाषिकत्वात् नपुंसकह्रस्वत्वम्। याच्यमानस्य दातुः मुखम् अवाप्य प्राप्य च प्रसन्नमुखो भूत्वेति यावत्। तान् देवान् इन्द्रादीन् अवोचत उक्तवान्। अर्थिदुर्लभमवाप्य सहर्षानिति पाठे उल्लसितश्रि उल्लासितशोभं सुप्रसन्नमित्यर्थः। अतएव अर्थिभिः याचकैर्दुर्लभं दुष्प्रापं दाता हि प्रायेण याच्यमानोऽन्तःकलुषित एव मुखविकृतिं करोति, न तु प्रसन्नमुखः प्रयच्छतीति दातुः प्रसन्नमुखत्वस्यार्थिनां प्रायेणादर्शनादिति भावः। याच्यमानस्य प्रार्थ्यमानस्य दातुरिति भावः। अत्र नलस्येति तात्पर्य्यम्। मुखम् अवाप्य प्राप्य दृष्ट्वेत्यर्थः। सहर्षान् फलसिद्धिसम्भावनया सानन्दान् तान् देवानित्यन्वयः॥ ९३ ॥

नास्तीति। जन्यजनकयोः कार्य्यकारणयोः व्यतिभेदः व्यतिक्रमः वैलक्षण्यं वा न अस्ति नैव विद्यते जन्यजनकयोरभेद इति यावत्। तथा जनानां देहः अद्यते खाद्यते यत् तदन्नं भक्ष्यं वस्त्वित्यर्थः। अदोऽन इति क्तप्रत्ययः। तेन अन्नेन जनितः उत्पादितः भुक्ताहारपरिणतिजन्य इत्यर्थः। सत्यम् उभयमपि यथार्थमेवेत्यर्थः। यतः अमृतम् अदन्तीति अमृतादः अमृतभुज इत्यर्थः अदः क्विप्। तेषां वः युष्माकं तनूं शरीरं वीक्ष्य दृक् मदीया दृष्टिः सुधायां निमज्जनम् उपैति

मत्तपः क्व नु ? तनु क्व फलं यत्
यूयमीक्षणपथं व्रजथेति ? ।
ईदृशान्यपि दधन्ति पुनर्नः
पूर्वपूरुषतपांसि जयन्ति ॥ ९५ ॥

प्राप्नोति सुधानिमज्जनसुखमनुभवतीत्यर्थः । उपैमीति पाठे सुधायां दृशोः मदीययोश्चक्षुषोर्निमज्जनम् उपैमि सुधामज्जन-सुखमनुभवामीत्यर्थः । जन्यजनकयोरभेदवादिमतेनोक्तमिदम् । यद्वा कारणगुणाः कार्य्यगुणमारभन्ते इति न्यायेन अमृतभुजां युष्माकम् अमृतपरिपुष्टतया अमृतमयत्वमेव तत्र दृष्टिव्यापारो-ऽमृतनिमज्जनसुखमुपैति युष्मामेवेति भावः । युष्मद्दर्शनात् परमानन्दमनुभवामीति तात्पर्य्यम् ॥ ९४ ॥

मत्तप इति । तनु अत्यल्पं मम तपः कठोरव्रतरूपं क्व ? यूयं देवा इति भावः । ईक्षणपथं दृष्टिपथं व्रजथ गच्छथ इति यत् एतत् फलं युष्मद्दर्शनलक्षणं महाफलमिति भावः क्व ? अत्यन्तासम्भवमेतयोरुभयोः सङ्गतमिति भावः । अल्पेन तपसा भवतां दर्शनं न लभ्यते इति भावः । तर्हि कथं त्वया प्राप्त-मित्यत्राह, ईदृशानीति । पुनः किन्तु ईदृशानि एवंप्रकाराणि महाफलानि अपि दधन्ति जनयन्तीत्यर्थः । पुष्णन्तीति यावत् नपुंसकस्येति नुमागमः । नः अस्माकं पूर्वपूरुषतपांसि पूर्वे पूरुषाः पित्रादयः तेषां तपांसि कठोरव्रतानि चान्द्रायणादीनि जयन्ति उत्कर्षेण वर्त्तन्ते, तत्फलमेतत् भवतां दर्शनमिति युज्यते । यदि नात्मनि पुत्रेषु न चेत् पुत्रेषु नप्तृषु । न त्वेव तु कृतो धर्मः कर्त्तुर्भवति निष्फल इति वचनादिति भावः । अत्र पूर्वार्द्धे स्वल्पतपोमहाफलतपसोः सङ्घटनात् विषमालङ्कार-

प्रत्यतिष्ठिपदिलां खलु देवीं
कर्म सर्वसहनव्रतजन्म ।
यूयमप्यहह पूजनमस्या
यन्निजैः सृजथ पादपयोजैः ॥ ८६ ॥
जीवितावधि किमप्यधिकं वा
यत् मनीषितमितो नरडिम्भात्

भेदः तदुक्तं दर्पणे । विरूपयोः सङ्घटना या च तद्विषमं मतमिति ॥ ८५ ॥

प्रत्यतिष्ठिपदिति । सर्वेषाम् असह्यानामिति भावः । मूत्रपुरीषादीनां सहनमेव व्रतं येन सा सर्वसहेत्युच्यते इति भावः । तस्मात् जन्म उत्पत्तिर्यस्य तत् कर्म्म कर्त्तृ सर्वसहनजनितं सुकृतमित्यर्थः । इलां पृथ्वीं देवीं प्रत्यतिष्ठिपत् खलु देवीति प्रतिष्ठां प्रापयदेवेत्यर्थः । तिष्ठते रिदिति णौ चङ् उपधाया इकारः । यद् यस्मात् यूयमपि पूज्या अपीति भावः । निजैः स्वीयैः पादा एव पयोजानि कमलानि तैः रूपकसमासः न तु उपमितिसमासः । साधारणधर्मस्य पूजनस्य उपमानकरणत्व एव मुख्यतया वर्त्तनादिति बोध्यम् । अस्याः इलायाः देव्याः स्थितेरित्यर्थः । पूजनम् अर्चनं सृजथ कुरुथ, अहह आश्चर्यम् अहहेत्यद्भुते खेदे हि हेतोरवधारणे इत्यमरः । तदत्र भवतामागमनं देव्या भूमेर्देवीत्वसिद्धये एव ममतु भवद्दर्शनजनितकृतार्थता आनुषङ्गिकीति भावः ॥ ८६ ॥

जीवितावधीति । जीवितम् अवधिर्यत्र यस्य वा तत् जीवितावधि जीवनपर्य्यन्तम् अधिकं वा ततोऽधिकं वा

तेन वश्चरणमर्चतु सोऽयं
ब्रूत वस्तु पुनरस्तु किमीदृक् ॥ ६७ ॥
एवमुक्तवति वीतविशङ्के
वीरसेनतनये विनयेन ।
वक्रभावविषमामथ शक्रः
कार्य्यकैतवगुरुर्गिरमूचे ॥ ६८ ॥

शिशोः सकाशात् मनीषितम् अभीप्सितं युष्माभिरिति शेषः । सोऽयं नरडिम्भः तेन मनीषितेन वस्तुना वः युष्माकं चरणं जातावेकवचनम् अर्चतु पूजयतु ईदृक् एतादृशं वस्तु किम् अस्तु ? किं भवतु ? सम्भावनायां लोट् ब्रूत कथयत । जीवितं जीवितादधिकमपि वस्तु यदि भवद्भिरहं याच्यते तदपि अहं बालोऽपि दातुमङ्गीकरोमि तत् मनीषितं स्फुटं वदथेति फलितार्थः ॥ ६७ ॥

इत्थं नलाभिप्रायश्रवणेन प्रफुल्लस्य इन्द्रस्य वागवसरमाह, एवमिति । वीरसेनस्य तनयः वीरसेनतनयः नल इत्यर्थः । तस्मिन् नले वीता विगता विशङ्का यस्य तथोक्ते देवानां सृष्टिरक्षकतया सौम्यत्वात् तत्सकाशे अमङ्गलशङ्कामकुर्वति इति भावः । अतएव विनयेन एवम् उक्तप्रकारेण उक्तवति सति अथानन्तरं कार्य्ये कर्त्तव्यार्थे यत् कैतवं चातुरी तत्र गुरुः दक्ष इत्यर्थः । यद्वा बृहस्पतिरित्यर्थः, तत्तुल्य इति यावत् । कर्त्तव्यकार्य्यसम्पादनाय यथेच्छचारीति भावः । शक्रः इन्द्रः वक्रभावेन प्रतिकूलाशयेन विषमां दारुणां यद्वा विषेण गरलेण सा उपमा यस्यास्तां गरलसमामित्यर्थः । गिरं वाचम् ऊचे

पाणिपीड़नमहं दमयन्त्याः
कामयेमहि महीमहिकांशो!।
दूत्यमत्र कुरु नः स्मरभीतिं
निर्जितस्मर! निरस्य चिरस्य॥ ६६॥

किमित्याह, पाणीति। मह्यां महिका हिमम् अंशुर्यस्याः तत्सम्बुद्धौ, हे महीमहिकांशो! भूतलचन्द्र! प्रालेयं महिका चाथेत्यमरः। वयं दमयन्त्याः पाणिपीड़नमहं परिणयमहोत्सवं कामयेमहि अभिलषेम। हे निर्जितस्मर! कामविजयिन्! जितेन्द्रियेति च गम्यते। एतेन तव कामाद्भयं नास्तीति सूचितम्। अतएव स्मरात् कामात् भीतिं भय चिरस्य चिराय चिराय चिररात्राय चिरस्याद्याश्चिरार्थका इत्यमरः। निरस्य अपनीय स्मरः त्वां न पीड़यितुं शक्ष्यतीति मत्वेति भावः। अत्रास्मिन् विषये दमयन्त्याः पाणिपीड़नमहे अस्माकं दूतस्य भावः कर्म वा दूत्यं तत् तस्य भावकर्मणीति यत्प्रत्ययः। कुरु। त्वं सौन्दर्य्येण जितकामः अथच स्वयं जितेन्द्रियस्तद् दमयन्ती-विरहमगणयन् यथा चास्माकमन्यतमं सा वृणुयात् तथा यतस्वेति फलितार्थः। हे निर्जितस्मर! भीतिम् अस्माभिः दत्ताभिः सम्पातात् भयमित्यर्थः स्मर भावय, यदि अस्मद्वाक्यं न शृणोषि तदा त्वां वयमभिशपाम इति भावः। इति वार्थः। यद्वा, हे निर्जितस्मर! अत्र विषये नोऽस्माकं दूत्यं कुरु, तथा चिरस्य स्मरभीतिं कामाद् भयं निरस्य दूरीकुरु अस्मत्कृपया ते कामजवेदना न वाधिष्यते इति भावः। महीमहिकांशो इत्यनेन तव चन्द्रवत् सर्वेषां तापापनोदनत्वमाह्लादकत्वञ्च

आसते शतमधिक्षिति भूपाः
तोयराशिरसि ते खलु कूपाः ।
किं ग्रहा दिवि न जाग्रति ते ते ?
भास्वतस्तु कतमस्तुलयास्ते ? ॥ १०० ॥
विश्वदृश्वनयना वयमेव
त्वद्गुणाम्बुधिमगाधमवेमः ।

तथाच त्वम् अनेन दौत्येन अस्मान् कामसन्तप्तान् शीतलय आनन्दय चेति गम्यते ॥ ६६ ॥

नन्वन्येऽपि बहवो राजानः क्षितौ विद्यन्ते, कथं तान् विहाय मामेवेदं याचध्वे इत्यत्राह, आसते इति । अधिक्षिति क्षितौ विभक्त्यर्थेऽव्ययीभावः । शतं शतसंख्याः भूपाः राजानः आसते विद्यन्ते, त्वं तोयराशिः समुद्रः गाम्भीर्य्यादिमहत्त्व-प्रतिपादकगुणयोगादिति भावः । ते अन्ये भूपाः कूपाः खलु क्षुद्राशया इति भावः । भूपत्वगुणसाम्येऽपि तेषां तव च महदन्तरमिति भावः । तथाहि दिवि अन्तरीक्षे ते ते ग्रहाः सोमादयः किं न जाग्रति ? न दीप्यन्ते ? अपितु जाग्रत्येवेत्यर्थः । तु किन्तु कतमः तेषां मध्ये कः इत्यर्थः । भास्वतः सूर्य्यस्य तुलया साम्येन आस्ते ? तिष्ठति ? न कोऽपीत्यर्थः । जलाशयेषु समुद्र इव ज्योतिःषु सूर्य्य इव त्वं राजसु राजसे इति सर्वान् विहाय त्वमेव याचितः। याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामेति भावः । यथा अपरे ग्रहाः सूर्य्यस्य समा न, तथान्ये भूपाः न त्वत्समाना इति साधर्म्येण विम्बानुविम्बप्रतीतेर्दृष्टान्तालङ्कारः तदुक्तं दर्पणे । दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिविम्बनमिति ॥ १०० ॥

त्वामिहैव विनिवेश्य रहस्ये
निर्वृतिं न हि लभेमहि सर्वे ? ॥ १०१ ॥
शुद्धवंशजनितोऽपि गुणस्य
स्थानतामनुभवन्नपि शक्रः।
क्षेप्तुमेनमृजुमाशु सपक्षं
सायकं धनुरिवाजनि वक्रः ॥ १०२ ॥

विश्वेति। विश्वं पश्यन्तीति विश्वदृश्वानि जगदवलोककानि दृशेः क्वनिप्। नयनानि येषां ते सर्वज्ञा इति भावः। एव वयम् अगाधम् अतलस्पर्शम् अनन्तमित्यर्थः। अगाधमतलस्पर्शमित्यमरः। तव गुणाम्बुधिं दयादाक्षिण्यादिगुणराशिमिति भावः। अवेमः जानीमः इणो लोटिरूपम्। अत एव सर्वे वयम् इहास्मिन् रहस्ये गोप्ये विषये दमयन्तीविवाहदूत्ये इति भावः। त्वामिव न त्वन्यमिति एवशब्दव्यवच्छेदः। विनिवेश्य नियुज्य निर्वृतिं सुखं न हि नैव लभेमहि ? इति काकुः लभेमह्येवेत्यर्थः। त्वामिहैव विनिवेश्येत्यत्र त्वामिहैवमनिवेश्येति पाठे एवंप्रकारेण दूतत्वेनेत्यर्थः। त्वाम् अनिवेश्य अनियुज्य निर्वृत्तिं न हि लभेमहीति सरल एवार्थः। अत्र विश्वदृश्वनयना इति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदीरितमिति तल्लक्षणात् ॥ १०१ ॥

शुद्धेति। शक्रः इन्द्रः शुद्धः पवित्रः घुणाद्यनुपहतश्च वंशः कुलं वेणुश्च तस्मात् जनितः उत्पादितः महामुनेः कश्यपस्य सुतोऽपीत्यर्थः। निर्दोषवेणुनिर्मितश्चापि गुणस्य दयादाक्षिण्यादेः शिञ्जिन्याश्च मौर्वी ज्या शिञ्जिनीगुण इत्यमरः। स्थानताम् आश्रयत्वम् अनुभवन्नपि स्वयं गुणाकरस्य अकर्त्तव्य-

तेन तेन वचसैव मघोनः
स स्म वेद कपटं पटुरुच्चैः ।
आचरत्तदुचितामथ वाणीम्
आर्जवं हि कुटिलेषु न नीतिः ॥ १०३ ॥

भिदं सरलवञ्चनमिति जानन्नपीति भावः । नलस्य गुणाकरत्वमवगच्छन्नपि वा मौर्वीसंयुतोऽपि च धनुः सायकमिव शरमिव धनुःशब्दोऽत्र पुंलिङ्गः । तथा चाथास्त्रियां धनुश्चापाविव्यमरः । ऋजुं सरलम् अकुटिलाशयमित्यर्थः । सपत्नम् इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीरिति अष्टानां लोकपालानां वपुर्धारयते इति च वचनाभ्यां स्वांशभूततया विविधयत्नेन च तर्पणेन मित्रभूतं पत्रसहितञ्च पत्रं वाहनपत्रयोरित्यमरः । एनं नलं वेद्धुं मोक्तुञ्च आशु शीघ्रं वक्रः कुटिलाशयः नतकोटितया वक्राकृतिश्च अजनि अभवत् । अत्र प्रकृताप्रकृतश्लेषेणानुप्राणिता उपमेति द्वयोरङ्गाङ्गिभावेन सङ्करः ॥ १०२ ॥

इत्थमिन्द्रस्य दुरभिसन्धिमवगम्य नलस्तद् योग्यमेव वचनमुपक्रमते तेनेति । उच्चैरतिशयेन पटुः भावावबोधचतुर इति भावः । स नलः तेन तेन पूर्वोक्तेन वचसैव पाणिपीडनमहं दमयन्त्या इत्यादिवाक्येनैव मघोन इन्द्रस्य कपटं चातुरीं वेद स्म ज्ञातवान् । अथ तद्वेदनानन्तरं तदुचितां तस्य कपटस्य योग्यां वाणीं वाचम् आचरत् उवाचेत्यर्थः । स्वयमेव तथैव कपटोक्तिं प्रयुक्तवानिति यावत् । ननु देवेषु मनुष्यस्य कापट्यप्रयोगो न युक्त इत्यत्राह, आर्जवमिति । हि यतः कुटिलेषु चातुरीपरेषु जनेषु आर्जवं सारल्यम् अकौटिल्यमिति यावत् ।

सेयमुच्चतरता दुरितानाम्
अन्यजन्मनि मयैव कृतानाम्।
युष्मदीयमपि या महिमानं
जेतुमिच्छति कथापथपारम्॥ १०४॥
वित्त चित्तमखिलस्य न कुर्य्यां
धुर्य्यकार्य्यपरिपन्थि तु मौनम्।

न नीतिः, सरले सरलं कुर्य्यात् शठे शाठ्यं समाचरेदिति वचनात् न नीतिशास्त्राभिमतमिति भावः। तथाच व्रजन्ति ते मूढ़धियः पराभवं भवन्ति मायाविषु ये न मायिन इति भारविः। तादृशानाचरणे महाननर्थपातः स्यादिति भावः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ १०३॥

किमित्याह, सेयमिति। अन्यत् जन्म अन्यजन्म तस्मिन् जननान्तरे इत्यर्थः। मयैव न तु मत्पूर्वैरिति भावः। कृतानां दुरितानां पापानां सा इयम् उच्चतरता महत्ता, या दुरितोच्चतरता कथापथपारं वाक्पथातीतं वक्तुमशक्यमिति यावत् युष्माकम् अयं युष्मदीयः तं युष्मत्सम्बन्धिनमित्यर्थः। महिमानं माहात्म्यं प्रभुत्वमिति यावत्। जेतुं पराभवितुम् इच्छति युष्मदाज्ञां लङ्घयितुमभिलषतीत्यर्थः। भवदाज्ञापालनं सुकृत-फलं मम तु तादृशं सुकृतं नास्ति प्रत्युत पापराशिरेवास्ति, येन भवतां महिमापि नाद्रियते इति निष्कर्षः। नाहं भवदा-देशमनुसरामीति तात्पर्य्यम्॥ १०४॥

ननु प्रतिषेधाचरात् मौनमेव वरं तत् कथं तथा नाचरित-मित्यत्राह, चित्तेति। हे देवाः! यूयम् अखिलस्य सर्वस्य प्राणिनः चित्तं वित्त जानीत अन्तर्य्यामित्वादिति भावः। नाहं

ह्रीगिरास्तु वरमस्तु पुनर्मा
स्वीकृतैव परवागपरास्ता ॥ १०५ ॥
यन्मती विमलदर्पणिकायां
संमुखस्थमखिलं खलु तत्त्वम्।
तेऽपि किं वितरथेहृशमाज्ञां
या न यस्य सदृशी वितरीतुम्? ॥ १०६ ॥

युष्मदादेशं पालयामीति भवद्भिर्ज्ञातमिति भावः, तथापि धूर्य्यस्य साधनीयस्य इष्टस्य कार्य्यस्य दमयन्तीपरिणयलक्षणस्य परिपन्थि विरोधि मौनन्तु तूष्णीम्भावन्तु न कुर्य्यां तूष्णीम्भावे अनीप्सितस्यापि कार्य्यस्य अभिमतत्वेन निश्चयस्य अप्रतिषिद्धं परमतमनुमतं भवतीति न्यायसिद्धत्वात्। गिरा वचसा परिहारोक्त्येति यावत्। ह्रीर्लज्जा अस्तु भवतु वरम् अनीप्सित-कार्य्ये प्रतिषेधवचनं लज्जावहमपि अनभिमतविषये अभिमत-सूचकात् मौनात् साध्वित्यर्थः। देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक्प्रिय इत्यमरः। अपरास्ता अप्रतिषिद्धा परस्य वाक् वचनं पुनः मा स्वीकृतैव अस्तु अङ्गीकृता माभूदित्यर्थः तस्मात् युष्मदादेशं न अनुवर्त्ते इति स्पष्टं ब्रवीमि इति तात्पर्य्यम्॥१०५॥

यदिति। येषां युष्माकं मती बुद्धावेव विमला निर्मला दर्पण एव दर्पणिका स्वार्थे ष्णप्रत्ययः। क्वचित् स्वार्थिकाप्रत्ययाश्च लिङ्गवचनान्यतिक्रम्य वर्त्तन्ते इति स्त्रीलिङ्गता। तस्यां निर्मलादर्शे इत्यर्थः। अखिलं सर्वं तत्त्वं प्रमेयं वस्त्वित्यर्थः। सम्मुखे तिष्ठतीति सम्मुखस्थं खलु प्रत्यक्षमेवेत्यर्थः। सर्वसाक्षित्वादिति भावः। तेऽपि सर्वान्तर्यामिनोऽपि यूयं या यस्य

यामि यामिह वरीतुमहो ! त-
द्दूततान्तु करवाणि कथं वः ? ।
ईदृशां न महतां वत जाता
वञ्चने मम तृणस्य घृणापि ? ॥ १०७ ॥
उद्भ्रमामि विरहात् मुहुरस्याः
मोहमेमि च मुहूर्त्तमहं यः ।

मम वितरीतुं दातुं न सदृशी न योग्या तत्कामुकत्वात् ममेति भावः। ताम् ईदृशम् उक्तप्रकारां त्यदादिष्वित्यादिना दृशेः क्विन्प्रत्ययः। आज्ञां भैमीविवाहार्थम् अस्मद्दौत्यं कुर्वित्यादेशं किं कथं वितरथ ? दत्थ ? नोचितमिदम् एतदर्थं आज्ञादानमिति भावः ॥ १०६ ॥

साम्प्रतं तादृगादेशस्यायोग्यतामष्टभिर्दर्शयति, यामीत्यादिभिः। इहास्मिन् समये यां दमयन्तीं वरीतुं लब्धुमिति यावत् वृतोवेति दीर्घः। यामि गच्छामि, अहो ! कष्टं वः युष्माकं तस्यां दूततान्तु दूत्यन्तु कथं करवाणि ? ईदृशां महामहिमभाजां महतां प्रभूणां युष्माकमिति शेषः। तृणस्य तृणवदतिक्षुद्रस्य मम वञ्चने प्रतारणे विषये घृणापि करुणापि जुगुप्सापि वा न जाता वर्तेति खेदे। घृणा जुगुप्सा कृपयोरिति मेदिनी। महतां परवञ्चनं सर्वथा नोचितं तत्र यदि महत्कार्य्यं विना परवञ्चनं भवति तदा तदपि महतां न युज्यते इति नीतिः। अहन्तु नितरां क्षुद्रः भवतां दयार्हः, तन्मयि ईदृक् प्रतारणं न युज्यते भवतामिति भावः ॥ १०७ ॥

उद्भ्रमामीति। योऽहम् अस्या भैम्या विरहात् वियो-

ब्रूत वः प्रभवितास्मि रहस्यं
रक्षितुं स कथमीदृगवस्थः ? ॥ १०८ ॥
यां मनोरथमयीं हृदि कृत्वा
यः श्वसिम्यथ कथं स तदग्रे ।
भावगुप्तिमवलम्बितुमीशे ?
दुर्जया हि विषया विदुषापि ॥ १०९ ॥

गात् मुहुः पुनः पुनः उद्भ्रमामि उत्भ्रान्तो भवामि उन्मादावा-मीत्यर्थः। मुहूर्त्तं व्याप्य मोहं मूर्च्छाम् एमि प्राप्नोमि च क्षणे क्षणे मुह्यामीत्यर्थः। ईदृशी इत्थंरूपा अवस्था यस्य तथाभूतः सोऽहं वो युष्माकं रहस्यं गोप्यमर्थं दमयन्तीपरि-णयरूपमित्यर्थः। रक्षितुं साधयितुमिति भावः। कथं केन प्रकारेण प्रभवितास्मि ? प्रभुर्भविष्यामीत्यर्थः। भुवो लुटि रूपं ब्रूत कथयत। ईदृगवस्थायां भवदाज्ञापालनं मम शक्यं न वेति यूयमेव वदतेत्यर्थः। यद्वा रक्षितुं गोपयितुं कथं प्रभ-वितास्मि उन्माददशायां रहस्यं प्रकाशतां गतं मामव्यामभि-लाषाशौचप्रवृत्तिमुद्घोषयत् भवतो जनसमाजे हास्यास्पदतां नेष्यति मोहदशायाञ्च रहस्यं स्मृतिपथात् भ्रश्यतीति कथमस्य गोपनसम्भव इति भावः ॥ १०८ ॥

यामिति। योऽहं यां मनोरथमयीं सङ्कल्पात्मिकां भैमीं हृदि कृत्वा हृदये निधाय श्वसिमि प्राणिमि जीवामीत्यर्थः। अथ दौत्यस्वीकारान्तरं सोऽहं तस्याः साक्षात् पुरोवर्त्तिन्या इत्यर्थः। अग्रे साक्षात्कारे कथं केन प्रकारेण भावानां स्तम्भ-स्वेदादिसात्त्विकविकाराणां गुप्तिं गोपनं संवरणमित्यर्थः।

यामिकाननुपमृद्य च मादृक्
तां निरीक्षितुमपि क्षमते कः?।
रक्षिलक्षजयचण्डचरित्रे
पुंसि विश्वसिति कुत्र कुमारी?॥ ११०॥

अवलम्बितुम् आश्रयितुम् ईशे प्रभवामि? नैव ईशे इत्यर्थः। यस्याः सङ्कल्पेन जीवामि तस्या दर्शने अवश्यमेव मम मदनविकारः सम्भविष्यतीति भावः। ननु तव वशित्वात् कथं तथा सम्भव इत्यत्राह, दुर्जया इति। हि यतः विदुषा पण्डितेनापि विषयाः रूपादयः भोग्याः दुर्जयाः जेतुमशक्या इत्यर्थः। बलवानिन्द्रियग्रामो विद्वांसमपि कर्षतीति भावः। तस्मादात्ममात्र कार्य्ये भवद्भिर्नियोज्य इति तात्पर्य्यम्। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ १०९॥

ननु प्रथममेव तावत् तत्र गमनमपि अस्माभिर्दुष्करं सत्यपि कथञ्चिन्निष्ठुरभावेन गमने अविश्वासात् कार्य्यसिद्धेर्व्याघातस्तेत्यत्राह, यामिकानिति। अहमिव दृश्यते इति क्विन्नेति चार्थः। मादृक् मद्विधः कः क्षत्रिय इति भावः। यामान् प्रहरान् रक्षन्तीति यामिकाः प्रहरिणः रक्षन्तीति ठक्प्रत्ययः। तान् अनुपमृद्य अहत्वा तां भैमीं निरीक्षितुं द्रष्टुम् अपि सम्भाषितुं किं पुनरित्यपिशब्दार्थः क्षमते? शक्नोति? न कोऽपीत्यर्थः। रक्षिजनसुरक्षितान्तःपुरत्वादिति भावः। ननु तथैव क्रियतामित्यत्राह, कुमारी मुग्धा अप्रौढ़ा नारी रक्षिणां प्रहरिणां लक्षाणि लक्षसंख्यकानि तेषां जयेन उपमर्दनेन चण्डं दारुणं चरित्रं यस्य तथाभूते क्कच पुंसि पुरुषे विश्वसिति? नैव विश्वसितीत्यर्थः। तथाच

आदधीचि किल दातृकृतार्घं
प्राणमात्रपणसीम यशो यत्।
आददे कथमहं प्रियया तत्
प्राणतः शतगुणेन पणेन ॥ १११ ॥

अविश्वासिनः कथा कुत्रापि नाद्रियते तत्सर्व एव प्रयासो विफलो भवेदिति भावः। अत्र रचितलघेति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ११० ॥

ननु दधीच्यादिभिर्मुनिभिः परार्थे प्राणा अपि दत्ताः त्वमेकां स्त्रियं दातुं नेच्छसीति कथमित्यत्राह, आदधीचीति। यत् यशः आदधीचि दधीचिमुनिमारभ्य प्राणमात्रं जीवितमेव पणस्य सीमा अवधिर्यस्मिन् तद् यथा तथा दातृभिर्वदान्यैः कृतः निर्द्धारितः अर्घः मूल्यं यस्य तत्। मूल्ये पूजाविधावर्घ इत्यमरः। केवलेन प्राणरूपमूल्यदानेन यद् यशो लभ्यते इति भावः। अहं प्राणतः जीवनात् शतगुणेन पणेन मूल्येन प्रियया दमयन्त्या तद् यशः कथम् आददे गृह्णामि? क्रीणामीत्यर्थः। नैव कथञ्चिदाददे इत्यर्थः। अल्पमूल्यलभ्यं वस्तु बहुना मूल्येन क्रीतं क्रेतारं बालिशयतीति भावः। तस्मात् मया प्राणा अपि दातुं शक्यन्ते दधीचिवत् न तु ततोऽभ्यधिका दमयन्तीति वृथा प्रयासो भवतामत्रेति भावः। पुरा किल वृत्रासुरं हन्तुमक्षमेण देवेन्द्रेणाभ्यर्थितो दधीचिः प्राणान् जहौ। ततस्तद्देहकङ्कालेन वज्रं निर्माय तेन वज्रेण वृत्रासुरो निहत इति पुराणकथात्रानुसन्धेया। अत्र प्राणैर्यशसो विनिमयात् परिवृत्तिरलङ्कारः तदुक्तं दर्पणे। परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेदिति ॥ १११ ॥

अर्थना मयि भवद्भिरिवास्यै
कर्त्तुमर्हति मयापि भवत्सु।
भीमजार्थपरयाचनचाटौ
यूयमेव गुरवः करणीयाः॥ ११२॥
अर्थिताः प्रथमतो दमयन्तीं
यूयमन्वहमुपास्य मया यत्।
स्त्री न चेत् व्यतियतामपि तद् वः
सा ममापि सुतरां न तदस्तु॥ ११३॥

अर्थनेति। अस्यै भैम्यै इदमर्थमित्यर्थः। मयि विषये मत्समीपे वा भवद्भिरिव युष्माभिरिव मयापि भवत्सु विषये भवतां समीपे वा अर्थना याच्ञा तल्लब्धये इति भावः। कर्त्तुम् अर्हति युज्यते इत्यर्थः। ननु भवता न कदापि कुत्र याच्यते तत् कथमत्रार्थनेत्यत्राह, भीमजेति। भीमजा दमयन्ती तदर्थं भीमजार्थं परेषु याचनचाटुः प्रार्थनारूपा दीनोक्तिः। तत्र विषये यूयमेव महान्त एवेति भावः। गुरवः आचार्य्याः करणीयाः मयेति शेषः। महद्भिर्भवद्भिर्यदि याचना क्रियते तदा मया क्षुद्रेण कथं सा न क्रियते? अत्र भवन्त एव उपदेष्टारः भवतां समीपे एव मया याचनव्यापारः शिक्ष्यते इति भावः। महान्त एव पथप्रदर्शका भवन्ति अन्ये च तमनुसरन्ति प्रतिनियतमिवेति तात्पर्य्यम्॥ ११२॥

ननु प्रथममेवास्माभिः प्रार्थितम् अस्मद्दृष्टान्तेन तव प्रार्थनमनुचितमेवेत्याह, अर्थिता इति। यत् मया अह्नि अह्नि अन्वहं प्रतिदिनमित्यर्थः। वीप्सार्थेऽव्ययीभावः, अनश्चेत्यव्ययी-

कुण्डिनेन्द्रसुतया किल पूर्वं
मां वरीतुमुररीकृतमास्ते ।
व्रीड़मेष्यति परं मयि दृष्टे
स्वीकरिष्यति न सा खलु युष्मान् ॥ ११४ ॥

भावसमासान्तश्च् । यूयम् उपास्य आराध्य प्रथमतः प्रागेव दमयन्तीम् अर्थिताः प्रार्थिताः । प्रतिदिनं दमयन्तीलाभाय देवानाराधयामीति भावः । अर्थयतेर्दुहादित्वादप्रधाने कर्मणि क्तप्रत्ययः । तत् मत्कर्त्तृकं प्रथमप्रार्थनं व्यतियतां व्यतिक्रम्य वर्त्तमानानाम् इणो लटः शत्रादेशः । वः युष्माकं ह्रीर्लज्जा चेत् यदि न भवतीति शेषः । तत् तदा ममापि सा ह्रीः भवत्-प्रार्थनाव्यतिक्रमजनितेति भावः । सुतराम् अतएव न अस्तु न भवतु । महतां यदि उक्तप्रार्थनापूरणाकरणे लज्जा न स्यात् तदा भक्तस्यापि तत्प्रार्थनाया अपूरणे लज्जा का ? महतोऽनुसृत्य प्रवर्त्तन्ते हि इतरे इति भावः ॥ ११३ ॥

अथ कथञ्चित् मया दौत्याङ्गीकारेऽपि सा युष्मान् न वरिष्यते इत्याह, कुण्डिनेति । कुण्डिनेन्द्रस्य भीमस्य सुतया दमयन्त्या न लोकेत्यादिना निष्ठायोगे षष्ठीप्रतिषेधात् कर्त्तरि तृतीया । मां वरीतुं परिणेतुं पूर्वम् उररीकृतम् अङ्गीकृतम् आस्ते किलेति प्रसिद्धौ । तया मद्वरणम् अङ्गीकृतमिति प्रसिद्धि-रित्यर्थः भावे क्तप्रत्ययः । उररीकृतमित्यस्य इच्छार्थत्वेन वरीतुमिति समानकर्त्तृकेषु तुमुनिति तुमुन्प्रत्ययः । सा तु मयि दृष्टे साक्षात्कृते सति परमत्यर्थं केवलं वा व्रीड़ं लज्जाम् एष्यति प्राप्स्यति, प्रागनुरक्ततया सहसा साक्षाद्दर्शनेन मदन-विकारावेशात् लज्जिता भविष्यतीत्यर्थः । युष्मान् न खलु नैव

तत् प्रसीदत विधत्त न खेदं
दूत्यमत्यसदृशं हि ममेदम् ।
हास्यतैव सुलभा न तु साध्यं
तद्विधित्सुभिरनौपयिकेन ॥ ११५ ॥

ईदृशानि गदितानि तदानीम्
आकलय्य स नलस्य बलारिः ।

स्वीकरिष्यति नैव वरणीयत्वेनाङ्गीकरिष्यतीत्यर्थः । तस्माद् वृथा प्रयासे भवद्भिर्नाहं नियोज्य इति फलितार्थः ॥ ११४ ॥

उपसंहरति, तदिति । हि यस्मात् मम तत्कामुकस्येति भावः । इदं दूत्यम् अतिशयेन असदृशम् अयोग्यं तत् तस्मात् हे देवाः! यूयं प्रसीदत प्रसन्ना भवत खेदं मत्कर्त्तृकाज्ञा-हेलनजं दुःखं न विधत्त न कुरुत । औपयिकं युक्तियुक्तं युक्त-मौपयिकं लभ्यमित्यमरः । न औपयिकम् अनौपयिकं तेन अयुक्तरूपेणेत्यर्थः । उपायात् ह्रस्वत्वञ्चेति स्वार्थे ठक् ह्रस्वश्च । तत् दूत्यं विधित्सुभिः विधातुमिच्छुभिः दूतकार्य्ये मां नियोक्तु-मिच्छुभिरित्यर्थः । हास्यतैव जनसमाजे हास्यास्पदत्वमेव सुलभा सुप्रापा साध्यं प्रयोजनन्तु भैमीलाभरूपमिति भावः । न सुलभमिति लिङ्गव्यत्ययेनान्वयः ॥ ११५ ॥

अथेन्द्रवाक्यमुपक्रमते, ईदृशानीति । स बलो नामासुरः तस्य अरिः बलारिः इन्द्रः बलारातिः शचीपतिरित्यमरः । नलस्य ईदृशानि एवंरूपाणि चातुर्य्ययुक्तानीति भावः । गदि-तानि वचनानि आकलय्य आकर्ण्य तदानीं तस्मिन् समये स्वमनुगच्छन्तीति स्वानुगाः स्वानुगामिनः अग्निवरुणयमा इत्यर्थः । तेषाम् आननानि मुखानि तेषां विलोकनं पश्यन्तु

शंसति स्म किमपि स्मयमानः
स्वानुगाननविलोकनलोलः ॥ ११६ ॥

नाभ्यधायि नृपते ! भवतेदं
रोहिणीरमणवंशभवेन ।
लज्जते न रसना तव वाम्यात्
अर्थिषु स्वयमुरीकृतकाम्या ? ॥ १७ ॥

भवन्तः मानवस्यास्य वचनचातुरीमिति भावव्यञ्जकं निरीक्षणं यद्वा कोऽभिप्रायो भवतामस्य वाग्भङ्गिष्विति जिज्ञासयैवेति भावः। तत्र लोलः अभिलाषी सन् किमपि अनिर्वचनीयम् अपूर्वाशयसूचकमिति भावः। किमपीति कर्मणोऽध्याहार्यस्य वचनस्य विशेषणं वा स्मयमानः मन्दं हसन् शंसति स्म कथयामास ॥ ११६ ॥

किन्तदित्याह, नेति। हे नृपते ! राजन् ! नल ! भवता त्वया रोहिणीरमणश्चन्द्रः तस्य वंशः कुलं तस्माद् भवः उत्पत्तिर्यस्य तेन यद्वा तस्माद् भवति उत्पद्यते इति तेन चन्द्रवंशीयेनेव सतेत्यर्थः। इदं सेयमुच्चतरेत्यादि वचनजातं न अभ्यधायि नोक्तं चन्द्रवंश्या हि अङ्गीकृतं न कदापि त्यजन्ति त्वया तु तत् त्यक्तमतश्चन्द्रवंशोचितं तवैतद् वाक्यं नेत्यर्थः। अर्थिषु याचकेषु अस्मासु इति भावः विषये अस्मत्समीपे वा स्वयम् आत्मना उरीकृतं जीवितावधि किमप्यधिकं चेत्यादिना अङ्गीकृतं काम्यम् अस्मन्मनोरथपूरणमिति भावः। यया सा तव रस्यते आस्वाद्यते अनयेति रसना जिह्वा वाम्यात् प्रातिकूल्यात् न लज्जते ? अपि तु लज्जते एवेत्यर्थः। अथच रोहिणी स्त्रीगवी तस्या रमणः वृष इत्यर्थः। तद्वंशभवेनेव बलीवर्देने-

भङ्गुरं न वितथं न कथं वा
जीवलोकमवलोकयसीमम्?।
येन धर्मयशसी परिहातुं
धीरहो वलति धीर! तवापि ॥ ११८ ॥
कः कुलेऽजनि जगन्मुकुटे वः
प्रार्थकेप्सितमपूरि न येन?।

वेत्यर्थः। इदं न अभ्यधायि? नोक्तम्? अपितु वृषेणेव उक्तमित्यर्थः। तस्मात् त्वं वृष इव निर्विवेक इति ध्वन्यते। रोहिणीरमणो बलभद्रः स तु केवलं सुरापानात् मत्त एवासीत् तद्वंशभवस्तु सुतरां मत्त एव भवति तथाच मत्तेनैव भवता न अभ्यधायि? अपितु मत्तेनैव अभ्यधायीति भवान् मत्त इति च ध्वन्यते। रोहिणीरमणवंशभवेनेत्यत्र रोहिणीरमणवंशभुवेति पाठेऽपि स एवार्थः॥ ११७॥

साम्प्रतं विषयनिन्दया स्वमते राजानं प्रवर्त्तयति, भङ्गुरमिति। हे धीर! धैर्य्यशालिन्! कार्य्याकार्य्यविचारकुशल इत्यर्थः। त्वम् इमं जीवलोकं संसारम् अवत्यप्राणिजातमित्यर्थः। भङ्गुरं स्वयमेव विनश्वरं कथं न अवलोकयसि? न पश्यसि? कथं वा वितथं स्वप्नोपमत्वात् अकिञ्चित्करमित्यर्थः न अवलोकयसीत्यनुषङ्गः। येन अवलोकनेन अज्ञानेनेति भावः। तवापि धर्माधर्मज्ञानिनोऽपीति भावः। धीः मतिः धर्मयशसी पुण्यकीर्त्ती अविनश्वरे अवितथे चेति भावः। परिहातुं परित्यक्तुं वलति चलति प्रवर्त्तते इत्यर्थः चलतीति पाठान्तरम्। अहो विनश्वरविषयवासनया अविनश्वरतुल्यावहेलनं भवादृशां पुण्यश्लोकानामपि दृश्यते इत्याश्चर्य्यमित्यर्थः॥ ११८॥

इन्दुरादिरजनिष्ट कलङ्की
कष्टमत्र स भवानपि माभूत् ॥ ११९ ॥
यापदृष्टिरपि या मुखमुद्रा
याचमानमनु या च न तुष्टिः।
त्वादृशस्य सकलः स कलङ्कः
शीतभासि शशकः परमङ्कः ॥ १२० ॥

त्वया कलङ्कित्वं न गृह्यतामित्याशयेनाह, क इति। जगतां मुकुटं शिरोभूषणं तस्मिन् जगतां शिरोभूषणभूते वः युष्माकं कुले वंशे येन प्रार्थकानाम् अर्थिनाम् ईप्सित मनोरथः न अपूरि न पूरितं स कः अजनि जातः ? न कोऽपि तथाविधोऽजायतेत्यर्थः। दीपजनेत्यादिना कर्त्तरि लुङ् चिण् प्रत्ययः। आदिः युष्माकम् आदिपुरुष इत्यर्थः। इन्दुश्चन्द्रः कलङ्की कलङ्कवान् अथच मृगाङ्क इत्यर्थः अजनिष्ट जातः, कष्टम् अत्र संसारे भवानपि स कलङ्की माभूत् न भवतु। कलङ्कीति संज्ञा केवलं भवतामादिपुरुषस्यैव, अन्ये तद्वंश्याः अकलङ्का एव तस्मात्त्वयापि तथा कार्य्यकरणात् तथैव व्यपदेशो भवेत् किन्तु तन्न भवत्विति तात्पर्य्यम्। चन्द्रस्य कलङ्कित्वं गुरोर्बृहस्पतेः पत्नीहरणाज्जातमिति पुराणवार्त्ता ॥११९॥

सम्प्रति विचारे तु त्वमेव कलङ्की न तु तवादिपुरुषः शशाङ्क इत्याह, येति। त्वमिव दृश्यते इति त्वादृशः तस्य त्वद्विधस्येति यावत् याचमानम् अर्थिनम् अनु प्रति या अपदृष्टिः विरुद्धदर्शनं या मुखमुद्रा तूष्णीभावः, या च न तुष्टिः असन्तोष इत्यर्थः। सः सकलः समग्रः कलङ्कः, अपयशः, शीता भासः किरणा यस्य तस्मिन् शीतरश्मौ चन्द्रे शशकः मृग-

नाक्षराणि पठता किमपाठि
विस्मृतः किमथवा पठितोऽपि ?।
इत्थमर्थिजनसंशयदोला-
खेलनं खलु चकार नकारः ॥ १२१ ॥

विशेषः परं केवलम् अङ्कः चिह्नं चन्द्रस्तु शशचिह्नतया कलङ्कीत्युच्यते न वस्तुतः कलङ्की, त्वन्तु अर्थिजनान् अभीष्टदाने प्रतिश्रुत्य पश्चात् तत्प्रत्याख्यानात् वास्तवकलङ्कवानिति भावः ॥ १२० ॥

साम्प्रतं स्तुत्या स्वेष्टसिद्धौ प्रवर्त्तयति, नेति। अक्षराणि अकारादीनि मातृकाक्षराणि पठता अभ्यस्यता भवता शैशवे इति शेषः। सता नकारः निषेधार्थको नेति वर्णः किं न अपाठि ? अथवा पठितोऽपि अभ्यस्तोऽपि विस्मृतः किम् ? इत्थम् एवंप्रकारेण नकारः अर्थिजनस्य याचकजनस्य संशयः अपठितो विस्मृतो वेत्युभयकोटिकः सन्देह एव दोला हिन्दोलनं तया खेलनं क्रीड़नं चकार खलु अर्थिजनेत्यत्रार्थिचयेति च पाठे स एवार्थः। भवता प्राक् कदापि अर्थिजनेषु प्रतिषेधाक्षरं न प्रयुक्तं तेनार्थिनस्तव निषेधवाचिनो नाक्षरस्य पाठविस्मरणयोः संशय आसीत्। इदानीमीदृक् प्रतिषेधाक्षरेण अस्मान् विफलमनोरथान् कर्त्तुं न युक्तं तवेति भावः। अत्र प्रकृते पाठप्रतिषेधेन अपठितविस्मृतयोः संशयात् सन्देहालङ्कारः। तेन चार्थिजनस्य तादृशसंशयासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः तदनयोरङ्गाङ्गि भावेन सङ्करः। उक्तञ्च दर्पणे। सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थित इति सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ॥ १२१ ॥

अब्रवीत्तमनलः क्व नलेदं
लब्धमुज्झसि यशः शशिकल्पम् ? ।
कल्पवृक्षपतिमर्थिनमेनं
नाप कोऽपि शतमन्युमिहान्यः ॥ १२२ ॥
न व्यहन्यत कदापि मुदं यः
स्वःसदामुपनयन्नभिलाषः ।

साम्प्रतं तत्प्रोत्साहनाय श्लोकद्वयेन अग्निर्वदति, अब्रवीदिति। अनलः अग्निः तं नलम् अब्रवीत्, हे नल ! इदं शशिकल्पं चन्द्रवदुज्ज्वलमित्यर्थः। लब्धं हस्तागतं यशः क्व कुत्र जने उज्झसि ? त्यजसि ? यदि त्वया एतत् दौत्यं नाङ्गीक्रियते तदा अनेनान्योऽभ्यर्थनीयः तेन एतत्स्वीकारे एतादृशं यशस्तद्गामी भविष्यति, त्वन्तु वञ्चित एव स्यात् तस्मात् नैतत् त्याज्यमिति भावः। किं तद् यश इत्यताह, कल्पेति इह अस्मिन् लोके जगति अन्यः त्वद्भिन्नः कोऽपि जनः कल्पवृक्षपतिं कल्पतरुस्वामिनम् इन्द्रम्। अभीष्टदप्रभुमिति भावः। यद्वा कल्पवृक्षसकाशे यत् अनेन प्रार्थ्यते तत् तत्क्षणं लभ्यते न कुत्रचित् अर्थनाय गम्यते तथाविधमिति भावः। एनं शतं मन्यवो यज्ञा यस्य तं शताश्वमेधयाजिनमित्यर्थः। मन्युर्दैन्ये क्रतौ क्रुधीत्यमरः। शताश्वमेधयागेन लब्धेन्द्रपदं अर्थिनं याचकं न आप न प्राप्तवान् त्वम् एतादृशार्थिजनसत्कारजनितम् अन्यदुर्लभं यशो लभस्व नैनं प्रत्याख्याहीति भावः। कल्पवृक्षपतिम् इति अनेन यद्यसौ कल्पवृक्षसकाशे दमयन्तीं प्रार्थ्यते तदा सापि अस्मै कल्पवृक्षेण दास्यते तत्तव तस्यामभिलाषो वृथैव स्यादिति च गम्यते ॥ १२२ ॥

तत्पदे त्वदभिषेककृतान्नः

स त्यजत्वसमतामदमद्य ॥ १२३ ॥

अब्रवीदथ यम स्तमहृष्टं

वीरसेनकुलदीप ! तमस्त्वाम् ।

यत्किमप्यभिबुभूषति तत् किं

चन्द्रवंशवसतेः सदृशं ते ? ॥ १२४ ॥

नेति। स्वः स्वर्गे सीदन्तीति स्वःसदः स्वर्गवासिनो देवा इत्यर्थः। तेषाम् अस्माकमिति शेषः, योऽभिलाषः मुदम् आनन्दम् उपनयन् जनयन् अभिलषितार्थस्य अभिलाषसमकालमेवोपस्थापनादिति भावः। कदापि न व्यहन्यत न विहतः देवा यदैव यमर्थम् अभिकाङ्क्षन्ति सोऽर्थस्तत्क्षणमेव उपतिष्ठते इति भावः। तत्पदे तस्य अभिलाषस्य स्थाने तदधिकारे इत्यर्थः। पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः। तव अभिषेकः त्वदभिषेकः तं कुर्वन्तीति त्वदभिषेककृतः तेषां त्वां स्थापयतामित्यर्थः। नोऽस्माकं सम्बन्धी सः अभिलाषः अद्य इदानीम् असमता असाधारण्यं तया मदः अहमेव देवानामिष्टार्थसाधकः नान्य इत्येवंरूपो गर्वः तं त्यजतु। अद्यप्रभृति देवाः स्वार्थसाधने स्वयमेव समर्था इत्यहङ्कारं मुञ्चत्विति भावः॥ १२३ ॥

अथ यमस्तं प्रोत्साहयति, चतुर्भिरब्रवीदित्यादिभिः। अथ वह्निवचनानन्तर यमः अहृष्टम् असन्तुष्टं विरक्तमिति यावत् दौत्याङ्गीकारे इति भावः। तं नलम् अब्रवीत्, हे वीरसेनकुलदीप ! वीरसेनवंशोज्ज्वलकर ! किमपि अनिर्वचनीयं तमः मोहः अविवेकित्वमिति भावः। दमयन्त्यलाभजन्यः

रोहणः किमपि यः कठिनानां
कामधेनुरपि या पशुरेव ।
नैनयोरपि वृथाऽभवदर्थी
हा विधित्सुरसि वत्स ! किमेतत्? ॥ १२५ ॥

शोको वा। तमोध्वान्ते गुणे शोके क्लीवं वा ना विधुन्तुदे इति मेदिनी। यत् त्वाम् अभिबुभूषति अभिभवितुमिच्छति तत् अभिभवनं चन्द्रवंशे वसति स्थितिर्यस्य तथाविधस्य चन्द्रवंशसम्भूतस्येति यावत्। ते तव सदृशम् अनुरूपं किम्? चन्द्रवंशीया हि प्राणानपि परित्यज्य अर्थिमनोरथान् पूरयन्ति तद्वंशीयस्य भवतः सामान्यस्य स्त्रीरूपार्थस्य कृते एतादृशार्थिजनप्रत्याख्यानं नैव युक्तमिति भावः। अथच तमसा अन्धकारेण चन्द्रतेजसोऽभिभवो न युज्यते इति तमसा राहुणा चन्द्राभिभवो युज्यत एवेति च गम्यते ॥ १२४ ॥

रोहण इति। यो रोहणस्तदाख्योऽद्रिः रत्नप्रभवो वैदूर्यगिरिरित्यर्थः। कठिनानां कठिनपदार्थानां मध्ये किमपि अनिर्वचनीयः कठिनतम इति भावः। या कामधेनुरपि पशुरेव गौरेव जाड्यमान्द्यादिगुणयोगात् गोपदवाच्यैवेत्यर्थः। अर्थी याचको जनः एनयोः पाषाणपशुरूपयोरपि द्वितीयाटौस्वेन इति इदम्शब्दस्यैतच्छब्दस्य वा अन्वादेशे एनादेशः। एतयोरिति पाठान्तरम्। सकाशे वृथा विफलः न अभवत्। अपि तु सफल एव भवतीत्यर्थः। अर्थिनो रत्नप्रभवात् पाषाणमयात् अद्रेरपि कामधेनोः पशोरपि अभीष्टं लभन्ते स च सा च कमपि अर्थिनं न प्रत्याचष्टे इति भावः। हे वत्स! हा इति खेदे, एतत किं विधित्सुः? विधातुमिच्छुरसि? एतादृग् महा-

याचितश्चिरयति क्व नु धीरः ?
प्राणने क्षणमपि प्रतिभूः कः ? ।
शंसति द्विनयनी दृढनिद्रां
द्राङ्निमेषमिषघूर्णनपूर्णा ॥ १२६ ॥
अभ्रपुष्पमपि दित्सति शीतं
सार्थिना विमुखता यदभाजि ।

नपि त्वम् अर्थिप्रत्याख्यानेन पशुपाषाणाभ्यामपि निकृष्टो भवितुमिच्छसि किम् ? इत्यर्थः ॥ १२५ ॥

याचित इति । धीरस्ति यस्येति धीरः बुद्धिमान् जनः याचितः प्रार्थितः सन् क्व कुत्र नु वितर्के चिरयति विलम्बते ? न कुत्रापि प्रदेशे कोऽपि जनः किमपि याचितः सन् विलम्बते इत्यर्थः । याचनोत्तरकालमेव ददातीति भावः । ननु विलम्बे का हानिरित्यत्राह, प्राणने इति क्षणमपि प्राणने जीवने विषये क प्रतिभूः लग्नकः ? न कोऽपीत्यर्थः, जीवनस्थितौ न कोऽपि विश्वास इति भावः । ननु कथमाशु मरणशङ्केत्यत्राह द्राक् झटिति द्राग् झटित्यञ्जसाह्नायेत्यमरः । निमेषमिषेण पक्ष्मपातव्याजेन यत् घूर्णनम् अक्षितारांभ्रमणं तेन पूर्णा परिव्रता द्वयोर्नयनयोः समाहारः द्विनयनी नयनद्वयं दृढनिद्रां दीर्घनिद्रां मरणमित्यर्थः । शंसति सूचयति, नयननिमेषवत् जीवनं क्षणिकमिति भावः । अतएव श्वः कार्य्यमद्य कर्त्तव्यं पूर्वाह्णे चापराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतमिति वचनम् । अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ १२६ ॥

अभ्रेति । अर्थिना जलार्थिनेत्यर्थः । स्तोककस्य चातकस्य

स्तोककस्य खलु चञ्चुपुटेन
म्लानिरुल्लसति तत् घनसंघे ॥ १२७ ॥
ऊचिवाननुचितमक्षरमेनं
पाशपाणिरपि पाणिमुदस्य ।
कीर्त्तिरेव भवतः प्रियदाराः
दाननीरझरमौक्तिकहाराः ॥ १२८ ॥

दार्वाघाटोऽथ सारङ्गः स्तोककश्चातकः समा इत्यमरः । चञ्चुपुटेन चञ्चुस्त्रोटिरुभे स्त्रियावित्यमरः । सा प्रसिद्धा विमुखता वैमुख्यं याचनमात्रेण जलालाभादिति भावः । विः पक्षी तस्य मुखं तस्य भावस्तत्ता च यत् यस्मात् अभाजि प्राप्ता तत्तस्मात् याचनमात्रेण जलाप्रदानादित्यर्थः । शीतं शीतलम् अभ्रपुष्पम् उदकं मेघपुष्पं घनरस इत्यमरः । आकाशपुष्पम् अतिदुर्लभं वस्तु च गम्यते । दित्सति दातुमिच्छत्यपि इच्छायां सत्यामपि विलम्बं कुर्वतीति भावः । घनसङ्घे मेघवृन्दे म्लानिः मलिनत्व दुर्यशश्चेति गम्यते उल्लसति उद्भासते । मेघेषु यः कालिमा दृश्यते तस्य केवलं चातकानाम् अर्थिनाम् इष्टार्थस्य जलस्य विलम्बेन दानं हेतुरिति भावः । तस्मात् तया अस्मन्मनोरथोऽचिरादेव पूरणीयः विलम्बे तवैव दुर्यशसः प्रसङ्ग इति तात्पर्य्यम् ॥ १२७ ॥

अथ नवभिर्वरुणो राजानं प्रोत्साहयति, ऊचिवानित्यादिभिः । पाशः पाणौ यस्य सः पाशपाणिर्वरुणः अपि प्रचेता वरुणः पाशीत्यमरः । पाणिं हस्तम् उदस्य उत्क्षिप्य एनं नलम् उचितं युक्तम् अक्षरं वचनम् ऊचिवान् उवाच । किमि-

चर्म वर्म किल यस्य न भेद्यं
यस्य वज्रमयमस्थि च तौ चेत् ।
स्थायिनाविह न कर्णदधीचौ
तन्न धर्ममवधीरय धीर ! ॥ १२९ ॥

त्याह, हे नल ! दाने दानकृत्ये यत् नीरम् उत्सर्गार्थं जलं तस्य भरः प्रवाह एव मौक्तिकहारः मुक्तामाला यस्याः सा कीर्त्तिरेव भवतः तव भवतामिति पाठान्तरम् । प्रियाः प्रियतमा दाराः कलत्रं दाराः पुंभूम्नीत्यमरः । तस्मात् कीर्त्तिरेव त्वया साधनीया न तु सामान्यस्त्रीनिबन्धना अपकीर्त्तिरिति भावः । पाशपाणिः इत्यनेन आज्ञाहेलने पाशास्त्रेण बन्धनं लप्स्यसे इति ध्वन्यते ॥ १२८ ॥

चर्मेति । हे धीर ! सुविवेचक ! यस्य कर्णस्य चर्म गात्रत्वक् वर्म किल कवचमिति प्रसिद्धमिति भावः वार्त्तासम्भाव्ययोः किलेत्यमरः । न भेद्यं दुश्छेद्यमिति यावत् । यस्य च दधीचेः अस्थि वज्रमयं कुलिशमयम् अच्छेद्यमिति भावः । तौ कर्णश्च दधीचिश्च कर्णदधीचौ इह जगति न स्थायिनौ चेत् मरणधर्मिणाविव यदीत्यर्थः । कर्णः उत्पत्स्यमानः न चिरं स्थास्यति दधीचिश्च उत्पन्नः न चिरं स्थित इति यावत् । कर्णस्य द्वापरयुगीयत्वात् दधीचेश्च सत्ययुगीयत्वादिति भावः । केचित्तु द्वापरयुगोत्पत्स्यमानस्य कर्णस्य कीर्त्तनमत्र कल्पभेदादविरुद्धमित्याचक्षते । तत्तस्मात् धर्मं न अवधीरय नावजानीहि धर्म एव चिरस्थायी न तु पुत्रकलत्रादीति मत्वा अर्थिनोऽस्मान् मा प्रत्याख्याहि तेन ते चिरस्थायी धर्मो भविष्यतीति भावः ॥ १२९ ॥

अद्य यावदपि येन निबद्धौ
न प्रभू विचलितुं बलिविन्ध्यौ ।
आस्थिताविततथतागुणपाशः
त्वादृशेन विदुषा दुरपासः ॥ १३० ॥

अद्येति । येन सत्यसन्धत्वरूपेण पाशेन निबद्धौ संयमितौ बलिश्च विन्ध्यश्च तौ बलिविन्ध्यौ वैरोचनिविन्ध्याचलौ अद्य यावदपि अद्यापि विचलितुं तत्पाशबन्धनात् आत्मानं निर्मोक्तुं न प्रभू न समर्थौ, अपितु यावत्कालम् अङ्गीकृतं पालयन्तौ तिष्ठत इत्यर्थः । विदुषा विज्ञेन त्वमिव दृश्यते इति त्वादृक् तेन त्वद्विधेन तादृशेति पाठे ताविव बलिविन्ध्याविव दृश्यते इति तादृक् तेन तथाविधेन बलिविन्ध्यसदृशेनेति भावः । जनेन आस्थितस्य अङ्गीकृतस्य जीवितावधि किमप्यधिकं वेति प्रागुक्तस्य आश्रुतेति पाठेऽपि आश्रुतस्य अङ्गीकृतस्येत्येवार्थः । अवितथता सत्यता एव गुणः उत्कृष्टधर्मः स एव पाशः बन्धनरज्जुः दुःखेन अपास्यते इति दुरपासः दुश्छेद्यः, अङ्गीकृतं सुकृतिनः परिपालयन्तीति शिष्टवचनात् साधवः कदापि अङ्गीकृतपालने पराङ्मुखा न भवन्ति तत्र बलिविन्ध्ययोरसुरपाषाणयोरपि उन्मार्गगामित्वेन अचेतनत्वेन च सम्भावित-तद्वैमुख्ययोरपि दृष्टान्तेन त्वं कदापि अङ्गीकृतं न जहीहि प्रत्युत परिपालयेति तात्पर्य्यम् । पुरा बलिर्दैत्यराजः प्रतिश्रुत-त्रिपदीपरिमितभूमिदानाय वामनाय त्रिलोकाधिपत्यं दत्त्वा पातालमगमत् । विन्ध्यश्च मेरुजिगीषया स्वावयवस्य अभ्युत्थानेन सूर्य्यगतिरोधं कुर्वन् देवैः सूर्य्यालोकं विना सृष्टिर्नश्येदिति विभ्यद्भिः अभ्यर्थितेन अगस्त्येन महर्षिणा यावदहं

प्रेयसी जितसुधांशुमुखश्रीः
या न मुञ्चति दिगन्तगतापि।
भङ्गिसङ्गमकुरङ्गदृगर्थे
कः कदर्थयति तामपि कीर्त्तिम्? ॥ १३१ ॥

दक्षिणस्या दिशः नागमिष्यामि तावत् त्वया इत्थमेव प्रणतेन स्थातव्यमित्यभिहितः शिष्यतया प्रणतस्तथैवाचरिष्यामीति प्रतिज्ञाय गुरोराज्ञां पालयन् अद्यापि तिष्ठतीति पुराणवार्त्ता अत्र अनुसन्धेया ॥ १३० ॥

प्रेयसीति। प्रेयसी अतिप्रीतिकरी जिता परिभूता सुधांशुमुखानां चन्द्रादीनां श्रीः शोभा धावल्यकान्तिर्यया तादृशी अतिशुभ्रेत्यर्थः। यशसि धवलता वर्ण्यते हासकीर्त्त्योरिति कविसमयसिद्धेरिति भावः। अन्यत्र जितः न्यक्कृतः सुधांशुश्चन्द्रो यया तादृशी मुखस्य श्रीः यस्याः सा इन्दुसुन्दरमुखीत्यर्थः या कीर्त्तिः यशः यशः कीर्त्तिः समज्ञा चेत्यमरः। दिगन्तेषु गता प्राप्तापि न मुञ्चति न त्यजति। सङ्गीतत्वेन कीर्त्तेः सम्बन्धात्यागादिति भावः। तां तथाविधामपि चिरस्थायिनीमपीति भावः। कीर्त्तिं को जनः भङ्गो विद्यते अस्येति भङ्गी भङ्गुर इत्यर्थः। सङ्गमः सङ्गतिर्यस्याः तथाभूता विनश्वरसङ्गशालिनीत्यर्थः या कुरङ्गदृक् मृगाक्षी नारी यद्वा कुत्सितो लोकमोहनत्वात् कपटः रङ्गः विलासः ययोस्तादृश्यौ दृशौ नयने यस्याः तथाविधा दर्शनेनैव विमोहिनीति यावत्। या नारी तदर्थे तन्निमित्तं तादर्थ्येऽव्ययीभावः। कुत्सितोऽर्थः कदर्थः कोस्तत्पुरुषेऽचीति कुशब्दस्य कदादेशः तं करोतीति कदर्थयति? अवमन्यते? न कोऽपीत्यर्थः। क्षणविनश्वरवस्तुनः कृते स्थायिवस्तुनः परि-

यान् वरं प्रति परेऽर्थयितारः
तेऽपि यं वयमहो स पुनस्त्वम्।
नैव नः खलु मनोरथमात्रं
शूर! पूरय दिशोऽपि यशोभिः॥ १३२॥
अर्थितां त्वयि गतेषु सुरेषु
म्लानदानजनितोरुयशःश्रीः।

त्यागो न युक्त इति भावः। तस्मात् अङ्गीकृतार्थपालनात् महतीं कीर्त्तिं रक्षेति तात्पर्य्यम्। अत्र कीर्त्तिप्रिययोरुपमानोपमेयत्वस्य गम्यमानत्वेनोपमानस्याधिक्यात् उपमेयस्यान्यूनत्वात् व्यतिरेकालङ्कारो व्यज्यते॥ १३१॥

यानिति। हे शूर! दानशौण्ड! परे अन्ये जनाः वरम् इष्टलाभं प्रति उद्दिश्येति भावः। यान् अस्मान् अर्थयितारः प्रार्थयितारः ताच्छील्ये तृन्प्रत्ययः। न लोकेत्यादिना षष्ठीप्रतिषेधात अस्मानिति द्वितीया। वरमित्यत्र परमिति पाठे परं केवलं यान् प्रति अर्थयितारः न तु ये कमपि कदाचित् अर्थयितार इति भावः। तेऽपि अपरैः मनोरथं प्रार्थ्यमाना अपीति भावः वयं यं त्वाम् अर्थयितारः प्रार्थयितारः स्मः अहो आश्चर्य्यं स त्वं पुनः नोऽस्माकं मनोरथमात्रं केवलम् अस्मन्मनोरथं नैव, यशोभिः दिशोऽपि पूरय खलु, सफलयैवेत्यर्थः अस्मन्मनोरथं पूरयता त्वया लोकपाला अपि ते याचका इति दिगन्तव्यापिनी कीर्त्तिः सृज्यतामिति। अत्र एकस्मिन् देवानां मनोरथे पूर्य्यमाणे तदनुषङ्गेन वस्त्वन्तरकीर्त्तेरागमात् समाधिरलङ्कारः। समाधिः सुकरे कार्य्ये दैवात् वस्त्वन्तरागमादिति दर्पणोक्तेः॥ १३२॥

अद्य पाण्डु गगनं सुरशाखी
केवलेन कुसुमेन विधत्ताम् ॥ १३३ ॥
प्रवसते भरतार्ज्जुनवैण्यवत्
स्मृतिधृतोऽपि नल! त्वमभीष्टदः।
स्वगमनाफलतां यदि शङ्कसे
तदफलं निखिलं खलु मङ्गलम् ॥ १३४ ॥

अर्थितामिति। सुरशाखी देवतरुः कल्पतरुरित्यर्थः सुरेषु देवेषु अस्मासु त्वयि विषये त्वत्समीपे अर्थितां याचकतां गतेषु प्राप्तेषु सत्सु म्लाना मालिन्यं प्राप्ता क्षीणेत्यर्थः दानेन जनिता उरुर्महती यशसः श्रीः शोभा यस्य तथोक्तः सन् केवलेन दानसाहचर्य्यविगमात् असहायेन कुसुमेन पुष्पेण अद्य इदानीं गगनम् आकाशं पाण्डु श्वेतम् उज्ज्वलमित्यर्थः विधत्तां प्राक् दानजनितकीर्त्तिभिः कुसुमैश्च गगनं श्वेतम् अकरोत् अधुना त्वया अस्मन्मनोरथपूरणात् तदीयार्थिजनाभावात् दानकीर्त्तेरपहरणेन केवलकुसुमेनैव गगनं श्वेतं करोतु इति तात्पर्य्यम्। अत्र सुरतरोर्नलस्य च उभयोरुपमानोपमेयत्वस्य गम्यमानत्वे उपमानस्य न्यूनतायां व्यतिरेकोऽलङ्कारो व्यज्यते। तथाचाद्य त्वम् अस्मन्मनोरथं पूरयित्वा कल्पतरुमतिशय्य वर्त्तस्वेति तात्पर्य्यम् ॥ १३३ ॥

नन्वेवं स्वयात्रावैफल्यं स्यादित्यत्राह, प्रवसते इति। हे नल! त्वं स्मृत्या धृतः गृहीतः स्मरणविषयीकृतः सन् भरतः शाकुन्तलेयः दुष्मन्तपुत्रः अर्ज्जुनः कार्त्तवीर्य्यः वेणस्यापत्यं पुमान् वैण्यः पृथुः ते भरतार्ज्जुनवैण्याः तैस्तुल्यं तद्वत् तेन तुल्यं क्रिया चेद्वतिरिति वतिप्रत्ययः। प्रवसते प्रवासं गच्छते

इष्टिं नः प्रति ते प्रतिश्रुतिरभूत् या या सुराह्लादिनी
धर्मार्था सृज तां श्रुतिप्रतिभटीकृत्यान्विताख्यापदाम्।

जनाय अभीष्टं वाञ्छितार्थं ददातीति अभीष्टदः इष्टार्थप्रदो भवसीति शेषः। तथाचोक्तं वैण्यं पृथुञ्चार्जुनहैहयञ्च शाकुन्तलेयं भरतं नलञ्च। एतान् भुवं यः स्मरति प्रयाणे तस्यार्थसिद्धिः पुनरागमश्चेति। त्वम् एवम्भूत इति भावः। यदि स्वस्य आत्मनः गमनस्य दौत्यकार्य्यमुद्दिश्य प्रयाणस्य अफलतां निष्फलत्वं शङ्कसे भावयसि, तत् तदा निखिलं सर्वं मङ्गलं शुभशकुनं भरतादिस्मरणम् अफलं खलु निष्फलमेवेत्यर्थः। यदा स्वस्य स्मरणादन्येषां कार्य्यसिद्धिर्भवति तदा स्वस्य स्वयं मङ्गलमयस्य कार्य्यसिद्धिर्दण्डापूपन्यायसिद्धेति नात्र शङ्का त्वया कार्य्येति भावः। द्रुतविलम्बितं वृत्तं, द्रुतविलम्बितमाह नभौ भरौ इति तल्लक्षणात्॥ १२४॥

इष्टिमिति। नोऽस्माकम् इष्टिम् इच्छां दमयन्त्यभिलाषमिति यावत् यागञ्च इष्टिर्यागेच्छयोरित्यमरः। यजेरिष्टञ्च स्त्रियां क्तिन्। वचि स्वपीत्यादिना यजेः सम्प्रसारणम्। व्रश्चादिना षत्वं शेषं समानम् इच्छेति इष्टेः क्तिन् प्रत्ययापवाद इति काशिका। तथापि प्रयोगबाहुल्यात् साधुत्वं द्रष्टव्यम्। प्रति विषयीकृत्येत्यर्थः। सुरान् देवान् आह्लादयतीति सुराह्लादिनी अस्मदानन्दविधायिनीत्यर्थः स्वराह्लादिनीति पाठे स्वरैः अभिलाषपूरणसूचकध्वनिविशेषैः उदात्तादिभिश्च आह्लादिनी अस्माकं श्रोतृणाञ्चेति शेषः। धर्मः सुकृतम् अर्थोऽभिधेयं प्रयोजनञ्च यस्याः तथोक्ता ते तव या या प्रतिश्रुतिः जीवितावधि किमप्यधिकं वेति प्रागुक्ता प्रतिज्ञा अङ्गीकार इति यावत् अभूत् तां प्रतिश्रुतिं श्रुतेः वेदस्य अप्रतिभटां प्रति-

**त्वत्कीर्त्तिः पुनती पुनस्त्रिभुवनं शुभ्राद्वयादेशनात्**
**द्रव्याणां शितिपीतलोहितहरिन्नामान्वयं लुम्पतु १३५**

भटां कृत्वेति प्रतिभटीकृत्य प्रतिवीरीकृत्येत्यर्थः वेदसदृशी-कृत्येति यावत् वेदवत् सत्यस्वरूपां कृत्वेति तात्पर्य्यम् अभूततद्-भावे च्विप्रत्ययः। अन्वितानि योगयुक्तानि आख्यापदानि नामा-क्षराणि यस्याः तादृशीं प्रतिश्रुतिः श्रुतिसदृशीति अनुगतार्थां सत्यामिति यावत् कुरु। स्वकृतप्रतिज्ञां पालयेति तात्पर्य्यम्। एवं सति तव यशसा जगत् पूरितं भविष्यतीत्याह त्वत्कीर्त्ति-रिति। तव कीर्त्तिः यशः पुनः त्रयाणां भुवनानां समाहारः त्रिभुवनं भुवनत्रयं समाहारद्विगोरेकवचनं पात्रादित्वात् नपुं-सकत्वम्। पुनती पूतं कुर्वती विशदयन्तीत्यर्थः सती पुनातेः शतरि ङीप्। द्रव्याणां पृथिव्यादीनां क्षित्यप्तेजोमरुद्व्योम-काला दिग्देहिनो मनः द्रव्याणीति भाषापरिच्छेदः। शुभ्रः शुक्लो गुणः। गुणे शुक्लादयः पुंसीत्यमरः। तेन अद्वयस्य अभेदस्य आदेशनात् प्रापणात् सर्ववस्तूनां स्वान् स्वान् गुणान् लोहित-पीतादीन् निरस्य शुभ्रीकरणादिति भावः। शितिर्मेचकः शिती धवलमेचकावित्यमरः। पीतः हरिद्राभवर्णविशेषः लोहितः रक्तः हरित् मरकतसदृशवर्णविशेषः तेषां नामानि वाचक-शब्दः तेषाम् अन्वयः सम्बन्धः सत्तामिति यावत् लुम्पतु नाश-यतु। सर्वेषामेव श्वेतीकरणात् वर्णान्तराणामभावोऽस्त्विति भावः। एतेन सर्वव्यापिनी ते कीर्त्तिर्भविष्यतीति तात्पर्य्यम्। धर्मप्रतिपादिनी त्रिभुवनपाविनी श्रुतिरपि अद्वैतं स्वच्छस्वरूपं ब्रह्म तस्य ज्ञानात् अजामेकां लोहितशुक्लकृष्णामित्यादि श्रुत्युक्तां मायां नाशयतीति ध्वन्यते। अत्र नीलादिवस्तूनां स्वगुणत्यागेन कीर्त्तिरूपस्य केवलश्वेतगुणस्य ग्रहणात् तद्गुणालङ्कारः। तदुक्तं

यं प्रासूत सहस्रपादुदभवत्पादेन खञ्जः कथं
स च्छायातनयः सुतः किल पितुः सादृश्यमन्विष्यति ।
एतस्योत्तरमद्य नः समजनि त्वत्तेजसां लङ्घने
साहस्रैरपि पङ्गुरङ्घ्रिभिरभिव्यक्तीभवन् भानुमान् १३६

दर्पणे, तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृतिरिति । अभूत् याया सुराह्लादिनी इत्यत्र अभूत् याद्या सुराह्लादिनी इति पाठान्तरम् । शार्दूलविक्रीक्रिड़ितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितमिति तल्लक्षणात् ॥ १३५ ॥

यमिति । सहस्रं पादाः चरणाः रश्मयश्च यस्य स सहस्रपात् सहस्ररश्मिः सूर्य्यः पादा रश्म्यङ्घ्रितुर्य्यांशा इत्यमरः । संख्यासु पूर्वस्येति समासान्तोऽन्तलोपः । यं शनैश्चरं प्रासूत उत्पादितवान् स छायायाः तदाख्यायाः सूर्य्यपत्न्याः तनयः पुत्रः छाया सूर्य्यप्रियेत्यमरः । शनैश्चरः मन्दः शनिः पङ्गुकालौ छायापुत्रोऽसितश्च स इत्यमरः । कथं पादेन खञ्जः विकलः पङ्गुरित्यर्थः । उदभवत् ? उत्पन्नः ? येनाङ्गविकार इति तृतीया । किलेति हेतौ किल यतः सुतः पुत्रः पितुः सादृश्यं समरूपत्वम् अन्विष्यति प्राप्नोति । कारणगुणाः कार्य्यगुणमारभन्ते इति न्यायादिति भावः । ननु सूर्य्यस्य खञ्जत्वे तत्पुत्रस्य शनैश्चरस्य तथैव खञ्जत्वं युक्तं किन्त्वस्माभिः सूर्य्यस्य तथात्वं नाधिगतमित्यत्राह, एतस्येति । एतस्य अस्मत्संशयस्येत्यर्थः । अद्य तव तेजसां प्रतापानां लङ्घने अतिक्रमणे साहस्रैरपि सहस्रसंख्यैरपि अणिति मत्वर्थीयोऽण्प्रत्ययः । अङ्घ्रिभिः चरणैः पङ्गुः गतिशक्तिहीनः खञ्ज इति यावत् पूर्ववत् तृतीया । अनभिव्यक्तोऽभिव्यक्तो भवन् अभिव्यक्तीभवन् प्रागव्यक्त इदानीं व्यक्तः

इत्याकर्ण्य क्षितीशस्त्रिदशपरिषदस्तागिरश्चाटुगर्भा
वैदर्भीकामुकोऽपि प्रसभविनिहितं दौत्यभारं बभार।
अङ्गीकारं गतेऽस्मिन्नमरपरिवृढ़ः सम्भृतानन्दमूचे
भूयादन्तर्द्धिसिद्धे रनुविहितभवच्चित्तता यत्र कुत्र १३७

मन्नित्यर्थः अभूततद्भावे च्विप्रत्ययः। भानवः करा विद्यन्ते-ऽस्येति भानुमान् सूर्य्यः भानुः करो मरीचिः स्त्रीत्यमरः। नो-ऽस्माकम् उत्तरं निर्णयः समजनिः सञ्जातः जनेः कर्त्तरि लुङ् दीपजनेत्यादिना चिनि इणो लुक्। तव तेजोलङ्घने उद्यतः सूर्य्यः पादेन विकलो जातः, तदुत्पन्नस्य शनैश्चरस्य सुतरां पितृगुणप्राप्तेरावश्यकत्वात् खञ्जत्वं युज्यते इतीदानीमस्माकं प्रागुत्पन्नस्य संशयस्य छेदो जात इति भावः। सूर्य्यस्त्वत्प्रतापं लङ्घयितुं क्ृतप्रतिज्ञोऽपि तदक्षमतया अक्ृतप्रतिज्ञः त्वन्तु प्रति-ज्ञापालनात् सूर्य्यादपि अधिकतेजाः प्रतिभासीति फलितार्थः। तदत्र उपमानात् सूर्य्यादुपमेयस्य नलस्याधिक्याद् व्यतिरेकाल-ङ्कारो व्यज्यते। किञ्चात्र सूर्य्यस्य अपङ्गोः पङ्गुत्वासम्बन्धेऽपि तत्-सम्बन्धोक्तेरतिशयोक्तिः, सा च शनैश्चरस्य पङ्गुत्वहेतुत्वेनोत्प्रेक्ष्यते इत्यनयोरङ्गाङ्गिभावेन सङ्करः। शार्दूलविक्रीड़ितं वृत्तम्॥१३६॥

इतीति। क्षितेः पृथिव्या ईशः क्षितीशः भूपतिर्नलः इति इत्येवंरूपाः त्रिदशपरिषदः देववृन्दस्य चाटुगर्भाः प्रियोक्ति-पूर्णा इति यावत्। ताः प्रागुक्ताः गिरः वाचः आकर्ण्य श्रुत्वा वैदर्भीकामुकः भैमीलोलुपः अपि लषपतेत्यादिना कमेरुक्-प्रत्ययः। अतएव न लोकेत्यादिना षष्ठीप्रतिषेधात् मधुपिपासु-वद् द्वितीया समासः। प्रसभेन बलेन विनिहितम् आरोपितं देवैरिति शेषः दौत्यमेव भारः दौत्यभारः तम् अनिच्छया

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तस्य श्रीविजयप्रशस्तिरचनातातस्य नव्ये महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽगमत्पञ्चमः॥१३८॥

गृहीतत्वात् भारवत् क्लेशावहमिति भावः । बभार करिष्यामि वो वचनमित्युक्ता जग्राह । अथ अस्मिन् नले अङ्गीकारं गते गृहीतभारे इत्यर्थः । सति अमराणां देवानां परिवृढः पतिरिन्द्रः सम्भृतः समुपचितः आनन्दो यस्मिन् कर्मणि तद् यथा तथा सानन्दं यथा तथेत्यर्थः ऊचे उक्तवान्, हे नल ! यत्र कुत्र यस्मिन् कस्मिन्नपि प्रदेशे अन्तर्धिसिद्धेः अन्तर्धानशक्तेः अनुविहितम् अनुसृतं भवतः चित्तं मानसं यया तस्या भावः । अनुविहितभवच्चित्तता त्वदिच्छानुसारित्वं भूयात् यत्र यत्र तवेच्छा वर्त्तते तत्रैव तदनुसारिणी तव तिरोधानशक्तिर्भवत्वित्यर्थः, तिरस्करिणी-विद्या ते स्फुरत्विति भावः। एतेन यामिकाननुपसृत्येति प्रागुक्ताशङ्कानिरासः । स्रग्धरावृत्तं म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् १३७

श्रीहर्षमिति । श्रीविजयप्रशस्तिर्नाम सन्दर्भविशेषः तस्य रचना प्रणयनं तस्याः तातः जनकः तातस्तु जनकः पितेत्यमरः । तस्य तदाख्यग्रन्थप्रणेतुरित्यर्थः । नव्ये अभिनवे । नैषधीयेत्यत्र वैरसेनीति पाठे वीरसेनो नाम भूपतिः तस्यापत्यं पुमान् वैरसेनिर्नलः तस्य चरितं तस्मिन् । पञ्चमः पञ्चानां पूरणः । अगमत् समाप्तिं गतः ॥ १३८ ॥

इति श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्य-विरचिता
नैषधचरितस्य पञ्चमसर्गव्याख्या समाप्ता ।

## षष्ठः सर्गः ।

दूत्याय दैत्यारिपतेः प्रवृत्तो द्विषां निषेद्धा निषधप्रधानः ।
स भीमभूमीपतिराजधानीं लक्षीचकाराथ रयस्यदस्य ॥ १ ॥

---

अथ नलस्य दौत्येन विदर्भनगरीप्रस्थानं वर्णयति, दूत्यायेति। अथ दौत्यस्वीकारानन्तरं द्विषां शत्रूणां निषेद्धा निवारकः निवारणक्षम इत्यर्थः। एतेनास्य स्वकर्त्तव्यव्याघातकारिभ्यो भयं नास्तीति सूचितं निषधानां जनपदानां प्रधानः श्रेष्ठः अधिप इति यावत् प्रधानमिति पाठान्तरं, तन्मते प्रधानशब्दोऽजहल्लिङ्गतया क्लीव एव वर्त्तते न तु पुंसि स्त्रियां वा, तदसौ पुंलिङ्गादिविशेषणं न दोषमावहतीति बोध्यम्। स नलः दैत्यानाम् अरयोः देवाः तेषां पतिरिन्द्रः तस्य दूत्याय दौत्यं कर्त्तुमित्यर्थः। दूतस्य भावकर्मणोरिति यप्रत्ययः। प्रवृत्तः उद्यतः सन् यद्यपि अग्न्यादीनामपि तथैव दौत्यं तथापि दैत्यारिपतेरिति प्राधान्येन निर्देशः प्रधानेन व्यपदेशा भवन्तीति न्यायादिति भावः। भीमभूमीपतेः भीमनरेन्द्रस्य राजधानी कुण्डिननगरी तां रयस्यदस्य रथवेगस्य रयस्य द्रुतगतेरिति यावत् रंहस्तरसी तु रयः स्यद इत्यमरः। लक्षीचकार लक्ष्यं कृतवान् विदर्भनगरीं प्रति प्रस्थितवानित्यर्थः। रयस्यदस्येत्यनेन अनीप्सितत्वेऽपि तथा कार्य्यस्य अङ्गीकृतस्यावश्यपालनीयत्वात् तत्र सत्वरता उचितेति सूच्यते। अस्मिन् सर्गे इन्द्रवज्रा उपेन्द्रवज्रा तयोरुपजातिश्च वृत्तानि यथायथं निवेशितानि तेषां लक्षणानि उक्तानि छन्दोमञ्जर्य्यां यथा। स्यादिन्द्रवज्रा यदि तौ जगौ ग इति उपेन्द्रवज्रा प्रथमे लघौ सेति अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति च ॥१॥

भैम्या समं नाजगणद्वियोगं स दूतधर्मे स्थिरधीरधीशः ।
पयोधिपाने मुनिरन्तरायं दुर्वारमप्यौर्वमिवौर्वशेयः ॥ २ ॥
नलप्रणालीमिलदम्बुजाक्षी-संवादपीयूषपिपासवस्ते ।

---

इदानीं भैमीवियोगदुःखमस्य हृदयं न व्यथयति स्मेत्याह, भैम्येति। अधीशः प्रभुः वशीति भावः स नलः अतएव दूतस्य धर्मः दूतधर्मः परार्थप्रवृत्तिरूप इति भावः । तत्र स्थिरा निश्चला धीर्मतिर्यस्य स स्थिरधीः पालयाम्येवाङ्गीकृतमिति निश्चल-मतिरित्यर्थः। सन् उर्वश्या अपत्यं पुमान् औरर्वशेयः उर्वशी-तनयः मुनिः अगस्त्यः औरर्वशेयः कुम्भयोनिरगस्त्यो विन्ध्यकूटन इति हलायुधः। पयोधेः समुद्रस्य पाने अङ्गीकृते इति भावः दुर्वारं वारयितुमशक्यमित्यर्थः, दुर्धर्षमिति यावत्। अपि और्वं वड़वाग्निमिव और्वस्तु वाड़वो वड़वानल इत्यमरः। भैम्या दमयन्त्या समं सह साकं सत्रा समं सहेत्यमरः। वियोगं विच्छेदम् अन्तरायं विघ्नं न अजगणत् न गणयामास। विघ्नत्वेन न मन्यतेत्यर्थः। सत्यपि महति भैमीवियोगलक्षणे अन्तराये प्रतिज्ञातार्थपालने दृढ़मतिः अभवदिति भावः। उरु अधिकम् अश्नातीति उर्वशी बहुभोजिनी नारी तस्याः पुत्रस्य सागर-सदृशबहुद्रव्यस्य भोजनं युक्तमिति च ध्वन्यते। पुरा मित्रा-वरुणयोर्देवयोस्तपस्यतोः सन्निधौ सञ्चरन्त्या उर्वश्या रूपं विलोकयतोरिन्द्रियक्षोभात् रेतश्चस्कन्द। तस्य च रेतसः कियानंशस्तत्र स्थिते जलकुम्भे पपात तस्माज्जातो मुनिः कुम्भ-सम्भवनामा अगस्त्यः स च पयोधिपाने मात्रा उर्वश्या वरुण-भयाद्रक्षितश्चेति पुराणकथात्रानुसन्धेया। उपमालङ्कारः ॥ २ ॥

तेऽपि देवास्तत्प्रतीक्षया तत्रैव स्थिता इत्याह, नलेति।

तदध्ववीक्षार्थमिवानिमेषा देशस्य तस्याभरणीबभूवुः ॥ ३ ॥
तां कुण्डिनाख्यापदमात्रगुप्तामिन्द्रस्य भूमेरमरावतीं सः ।
मनोरथः सिद्धिमिव क्षणेन रथस्तदीयः पुरमाससाद ॥ ४ ॥

---

ते देवा इन्द्रादयः नल एव प्रणाली जलनिर्गममार्गः तया मिलत् सङ्गच्छत् आगच्छदित्यर्थः, शीघ्रमेव आगमिष्यदित्यर्थः। वर्त्तमानसामीप्ये लटः शत्रादेशः। यत् अम्बुजाक्ष्याः पङ्कजनेत्रायाः दमयन्त्या इति भावः, संवाद एव पीयूषं रहस्यालापामृतमित्यर्थः। पिपासवः पातुमिच्छवः मधुपिपासुवद् द्वितीया समासः। तस्य नलस्य अध्वा पन्थाः तस्य वीक्षार्थमिव दर्शनार्थमिव नास्ति निमिषो येषां ते अनिमिषाः निमिषरहिताः सन्तः निर्निमिषचक्षुषा तन्मार्गं पश्यन्तः सन्त इत्यर्थः। तस्य देशस्य यस्मिन् देशे नलेन सङ्गताः तस्य देशस्येत्यर्थः। अनाभरणानि आभरणानि बभूवुः आभरणी-बभूवुः अभूततद्भावे च्विप्रत्ययः। अलङ्कारभूताः आसन् नलागमनपर्य्यन्तं तत्रैव अतिष्ठन्निति भावः। अत्र नले प्रणाल्याः संवादे पीयूषस्य स्वेषु च आभरणानामारोपाद् रूपकं तथा देवानां स्वतोऽनिमिषत्वेऽपि तदध्ववीक्षार्थत्वेन उत्प्रेक्षणादुत्प्रेक्षा इत्यनयोः संसृष्टिः॥३॥

अथास्य क्षणमात्रेण कुण्डिनपुरप्राप्तिमाह, तामिति। तस्य अयं तदीयः नलसम्बन्धीत्यर्थः स रथः मनोरथः मनसोऽभिलाषः सिद्धिमिव कार्य्यसाफल्यमिव मनसा यमभिप्रेतं जनाः कामयन्ते तमेवाभिलषितं सङ्कल्परूपं तत्क्षणादेव मनोगत्या प्राप्नुवन्तीति भावः। यद्वा मनोरथः अभिलाषः सिद्धजनानामिति शेषः। सिद्धिमिव साफल्यमिव कुण्डिनमिति यत् आख्यापदं नामाक्षरं तदेव कुण्डिनाख्यापदमात्रं तेन

भैमीपदस्पर्शकृतार्थरथ्या सेयं पुरीत्युत्कलिकाकुलस्ताम् ।
नृपो निपीय क्षणमीक्षणाभ्यां भृशं निशश्वास सुरैः क्षताशः ॥ ५

स्विद्यत्प्रमोदाश्रुलवेन वामं रोमाञ्चभृत्पक्ष्मभिरस्य चक्षुः ।
अन्यत्पुनः कम्प्रमपि स्फुरत् तत्तस्याः पुरः प्राप नवोपभोगम् ॥ ६

---

गुप्ता रक्षिता गोपितेत्यर्थः। तां कुण्डिनेति नाम्ना छन्नस्थितामिति भावः। अमरा विद्यन्ते अस्यामित्यमरावती तां तत्कल्पामिति भावः। भूमेरिन्द्रस्य भूपतेर्भीमस्य पुरं नगरीं क्षणेन आससाद प्राप। उत्प्रेक्षालङ्कारः ॥ ४ ॥

तत्र प्राप्तस्य नलस्य भैमीस्मरणाद् व्याकुलतामाह, भैमीति। सुरैः देवैः क्षता अपहृता आशा भैमीं प्रति आशा यस्य स तथोक्तः नृपः नलः भैम्या दमयन्त्याः पदस्पर्शेन कृतार्था सफलकामा रथ्या मार्गः यस्याः सा दमयन्तीपदस्पर्शेन मनोहारिणीत्यर्थः। सा इयं पुरी कुण्डिननगरी इति उत्कलिकया उत्कण्ठया आकुलः क्षुब्धः सन् ईक्षणाभ्यां नेत्राभ्यां क्षणं निपीय सतृष्णं दृष्ट्वेत्यर्थः। भृशम् अतिमात्रम् आयतं वा निशश्वास निश्वसितवान् इत्यर्थः। चिरमनोरथो मे नष्ट इति दुःखादिति भावः। अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ५ ॥

अथ अस्य पुरीदर्शनात् चक्षुषोः सत्त्वोदयजनितभावान् व्यनक्ति स्विद्यदिति। अस्य नलस्य वामं दक्षिणेतरं चक्षुः प्रमोदेन आनन्देन यः अश्रुलवः वाष्पविन्दुः आनन्दाश्रुलेश इत्यर्थः तेन स्विद्यत् स्वेदाख्यं सात्त्विकं भावं प्राप्नुवत् तथा पक्ष्मभिः नेत्रलोमभिः उन्मिषद्भिरिति भावः। रोमाञ्चं बिभर्त्तीति तद्भृत् रोमाञ्चाख्यमपरं सात्त्विकं भावं गच्छत् सत् किञ्चान्यत् तत् दक्षिणं चक्षुरित्यर्थः पुनः स्फुरत् स्फुरणं भजदित्यर्थः।

रथादसौ सारथिना सनाथाद्राजाऽवतीर्य्याशु पुरं विवेश।

---

अतएव कम्प्रमपि कम्परूपसात्त्विकभावं प्राप्नुवत् सत् तस्याः पुरः कुण्डिननगर्य्याः नवः नूतनः उपभोगः प्रथमदर्शनरूपसङ्गमः तं प्राप लेभे। अन्योऽपि प्रवासादागतः पुरुषः कामिन्या नवसङ्गमेन स्वेदादिसात्त्विकभावान् भजते। सात्त्विकाश्चोक्ता दर्पणकारेण, विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्त्तिताः। स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मता इति। पुंसां वामचक्षुषः पक्ष्मोद्भेदेन अश्रूद्गमः दक्षिणस्य च चक्षुषः स्फुरणं भविष्यन्मङ्गलं सूचयतीति निमित्तज्ञाः। अन्ये तु वामं चक्षुः पक्ष्मभिः रोमाञ्चभृत् विकस्वरमपि प्रमोदाश्रुलवेन स्विद्यत् सत् न वा नैव तस्याः पुरः उपभोगं प्रथमदर्शनजन्यसुखसङ्गं प्राप साश्रुत्वात् दर्शनक्रियायाः व्याघातादिति भावः अन्यत् पुनः दक्षिणन्तु स्फुरत् अतएव कम्प्रं कम्पनशीलं सत् तस्याः पुरः नवोपभोगं प्राप अभिनवदर्शनजसुखसङ्गं प्राप इति नवोपभोगमित्यस्य पदच्छेदाच्छेदाभ्यां व्याचक्षते। स्फुरत्तदित्यत्र स्फुरत्त्वादिति पाठे स्फुरतो भावः स्फुरत्त्वं तस्मात् स्फुरणशीलत्वादित्यर्थः। स्फुरद्वेति पाठान्तरे वा शब्द एवार्थः। तथाच स्फुरदेवेत्यर्थः। स्फुरत्तु इति पाठो न समीचीनः पुनः शब्दोपादानेनैव तुशब्दार्थस्य गतार्थत्वादिति। अत्र प्रस्तुते नलचक्षुषि नायकस्य प्रस्तुतायाञ्च पुर्य्यां नायिकायाः नवसङ्गमव्यवहारारोपात् समकार्य्यविषयिणी समासोक्तिरलङ्कारः। समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति तल्लक्षणात्॥ ६॥

अस्य पुरप्रवेशमाह, रथादिति। असौ राजा नलः सार-

निर्गम्य विम्बादिव भानवीयात् सौधाकरं मण्डलमंशुसङ्घः॥७॥
चित्रं तदा कुण्डिनवेशिनः सा नलस्य मूर्त्तिर्ववृते न दृश्या।
बभूव तच्चित्रतरं तथापि विश्वैकदृश्यैव यदस्य मूर्त्तिः॥८॥

---

थिना सूतेन सनाथात् सहितात् अधिष्ठितादित्यर्थः। रथात् अवतीर्य्य अवरुह्य अंशुसङ्घः किरणसमूहः भानोरिदं भानवीयं सौरमित्यर्थः। तस्मात् विम्बात् सूर्य्यमण्डलादित्यर्थः निर्गम्य निष्क्रम्य सुधाकरस्य इदं सौधाकरं चान्द्रमसं मण्डलमिव चन्द्रविम्बमिव आशु शीघ्रं पुरं कुण्डिननगरीं विवेश प्रविष्टवान्। सन्ध्यायां रवेर्मयूखाः शशिनि जड़पिण्डभूते संक्रान्ता नैशं तमो निरस्यन्तीति ज्योतिर्विदः तथाचोक्तं सिद्धान्तशिरोशिरोमणिकृता भास्कराचार्य्येण। तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति। तदितरदिशि बालाकुन्तलश्यामलश्रीर्घट इव निजमूर्त्तिच्छाययैवातपस्थ इति। अत्रोपमालङ्कारः। तेन च राज्ञो नलस्य प्रवेशेन पुरस्य चन्द्रवत् समुज्ज्वलता जाता इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः। सारथिना सनाथादित्यनेन रथे सारथिं संस्थाप्य एकाकिनः स्वस्य गमनं ध्वन्यते॥ ७॥

पुरप्रवेशमात्रेणास्य देवेन्द्रवरप्रभावाददृश्यतामाह, चित्रमिति। तदा तस्मिन् काले कुण्डिनं विशतीति कुण्डिनवेशी तस्य कुण्डिननगरीं प्रविष्टस्येत्यर्थः। नलस्य सा मूर्त्तिः या चक्षुर्ग्राह्येति भावः, यत् दृश्या चक्षुर्ग्राह्या न ववृते न बभूव तत् चित्रम् एतावन्तं कालं चक्षुर्ग्राह्या स्थिता अधुना तु कथमकस्मात्तथा अदृश्या जातेति आश्चर्य्यमित्यर्थः। अथच विश्वस्यापि दृश्या रमणीया न ववृते इति यत् तच्चित्रम्। दृश्यं

जनैर्विदग्धैर्भवनैश्च मुग्धैः पदे पदे विस्मयकल्पवल्लीम्।
विगाहमाना पुरमस्य दृष्टिरथाददे राजकुलातिथित्वम् ॥६॥
हेलां दधौ रक्षिजनेऽस्त्रसज्ञे लीनश्चरामीति हृदा ललज्जे।
द्रक्ष्यामि भैमीमिति सन्तुतोष दूत्यं विचिन्त्य स्वमसौ शुशोच १

---

दर्शनयोग्ये स्याद्रमणीयेऽपि चेष्यते इति बलः। तथापि अदृश्यत्वेऽपि अस्य नलस्य मूर्त्तिः यत् विश्वेषां सर्वेषां जनानाम् एका मुख्या एके मुख्यान्यकेवला इत्यमरः। दृश्यैव चक्षुर्ग्राह्यैव अथच रमणीयैव बभूव तत् चित्रतरम्। अदृश्यस्य विश्वजनदर्शनीयत्वमत्याश्चर्य्यमेव भवतीत्यर्थः। अतएव विरोधालङ्कारः देवेन्द्रवरप्राप्त्या तु तत्परिहारः॥ ८॥

अथास्य राजपुरीदर्शनमाह, जनैरिति। विदग्धैः विद्वद्भिः जनैः मुग्धैः सुन्दरैः मनोमोहनकारिभिरित्यर्थः। मुग्धः सुन्दरमूढ़योरिति विश्वः। भवनैः प्रासादैश्च पदे पदे प्रतिपादक्षेपमित्यर्थः। विस्मयस्य आश्चर्य्यस्य चमत्कारस्य कल्पवल्लीं कल्पलताम् अतिविस्मयावहामिति यावत् पुरं कुण्डिननगरीं विगाहमाना प्रविशन्ती अवलोकयन्तीति यावत् अस्य नलस्य दृष्टिः अथानन्तरं राजकुलस्य राजभवनस्य अतिथित्वम् आददे प्राप। नलः राजभवनं दृष्टवानित्यर्थः। कुलं जनपदे गोत्रे स्वाजातीयगणेष्वपि। भवने च तनौ क्लीवमिति मेदिनी। अत्र विस्मयकल्पवल्लीमिति राजकुलातिथिरिति च रूपकमलङ्कारः॥ ६॥

अत्र प्रवेशे चास्य भावविशेषानाह, हेलामिति। असौ नलः अस्त्रैः असिचर्मादिभिः सज्ञा यस्य तादृशे अस्त्रसन्नाहवति इत्यर्थः। रक्षिजने प्रहरिवीरपुरुषवर्गे हेलाम् अवज्ञां दधौ

अथोपकार्य्याममरेन्द्रकार्य्यात् कक्षासु रक्षाधिकृतैरदृष्टः ।
भैमीं दिदृक्षुर्बहु दिक्षु चक्षुर्दिशन्नसौ तामविशत् विशङ्कः ॥११॥

---

किमेते क्षुद्रा मम करिष्यन्तीति न्यक्कारं दधारेति गर्वोक्तिः । लीनः चौरवत् अदृश्यः सन् चरामीति विचरणं करोमीति हृदा मनसा ललज्जे ममेदृशं भीतजनवददृश्यचारित्वं घृणाकरमिति धिगेति भावः लज्जितवान् । भैमीं द्रक्ष्यामि अद्य दमयन्तीं विलोकयिष्यामीति धियेति शेषः सन्तुतोष सन्तोषमवाप । ततश्च स्वं स्वकीयं दूतस्य भावः कर्मणोरिति यप्रत्ययः । विचिन्त्य आलोच्य शुशोच दुःखितवानित्यर्थः, निर्वेदोऽत्र सञ्चारिभावः । अत्रानेकासु क्रियासु एकस्य कर्तृकारकत्वात् दीपकभेदः तदुक्तं दर्पणे । अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेदिति । किञ्चात्र गर्वलज्जाहर्षनिर्वेदानां बहूनां समावेशाद् भावशबलता ज्ञेया । तदुक्तं दर्पणे । रसभावौ तदाभासौ भावस्य प्रशमोदयौ । सन्धिः शबलता चेति सर्वेऽपि रसनाद्रसाः । सञ्चारिणः प्रधानानि देवादिविषया रतिः । उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते । इति ॥ १० ॥

अथेति । अथानन्तरम् असौ नलः अमरेन्द्राणां देवप्रवराणाम् इन्द्रादीनां कार्य्यात् प्रयोजनात् हेतोः कक्षासु हर्म्यप्रकोष्ठेषु कक्षा प्रकोष्ठे हर्म्यादेरित्यमरः । रक्षायाम् अधिकृतैः नियुक्तैः द्वारपालैरिति शेषः अदृष्टः देवेन्द्रवरप्रभावादनिरीक्षितः अतएव विगता शङ्का भयं यस्य स विशङ्कः निर्भयः सन् भैमीं दमयन्तीं दिदृक्षुः द्रष्टुमिच्छुः अतएव दिक्षु सर्वास्विति भावः चक्षुः दिशन् व्यापारयन् ताम् उपकार्य्यां राजसदनम् उपकार्य्या राजसद्मेति विश्वः । अविशत् प्रविष्टवान् ॥ ११ ॥

अयं क इत्यन्यनिवारकाणां गिरा विभुर्द्वारि विभुज्य कण्ठम् ।
दृशं दधौ विस्मयनिस्तरङ्गां स लङ्घितायामपि राजसिंहः ॥१२
अन्तःपुरान्तः स विलोक्य बालां काञ्चित्समालब्धुमसंवृतोरुम् ।
निमीलिताक्षः परया भ्रमन्त्या सङ्घट्टमासाद्य चमच्चकार ॥१३

---

अयमिति। विभुः प्रभावशाली राजा सिंह इव राजसिंहः राजश्रेष्ठ इत्यर्थः उपमितसमासः। स नलः अयं जनः कः इति अन्यस्य स्वभिन्नस्य जनस्य निवारकाणां मा याहीति प्रतिषेधतां रक्षिणामिति शेषः। गिरा वाचा हेतुना कण्ठं विभुज्य किमहमेभिर्दृष्टः अहमेवं निवार्य्य इति शङ्कया संशयेन ग्रीवां वक्रीकृत्येति भावः। लङ्घितायामपि अतिक्रान्तायामपि द्वारि द्वारदेशे विस्मयेन देवेन्द्रवरप्रभावेऽपि कथमेवमिति चमत्कारधियेति भावः निस्तरङ्गां निश्चलां दृशं दृष्टिं दधौ निहितवान्। सिंहोपमानेन अस्य निर्भयत्वं सूचितम्। लोकानाम् अल्पेषु अपि शब्दादिषु कर्णपथं प्रविष्टेषु ग्रीवाभङ्गेन दर्शनं प्रकृतिसिद्धमिति स्वभावोक्तिरलङ्कारः तदुक्तं दर्पणे। स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनमिति ॥ १२ ॥

अन्तरिति। स नलः अन्तःपुरस्य अन्तर्मध्ये अन्तःपुरान्तः अव्ययमेतत्। समालब्धुं कुङ्कुमादिभिः रञ्जयितुमिति यावत् असंवृतौ अनाच्छादितौ ऊरू यस्याः यया वा तां प्रकटितोरुदेशामित्यर्थः। काञ्चित् बालां नवयौवनां नारीं विलोक्य निमीलिते तादृक् पराङ्गनादर्शनस्य पापजनकत्वात् मुद्रिते अक्षिणी येन तथोक्तः सन् भ्रमन्त्या इतस्ततः सञ्चरन्त्या परया अन्यया स्त्रिया सङ्घट्टं प्रतिघातं समासङ्गं वा आसाद्य प्राप्य चमच्चकार। मया अन्यस्यां दिशि निहितदृष्ट्या एतस्या मध्यमि-

अनादिसर्गस्रजि वानुभूता चित्रेषु वा भीमसुता नलेन ।
जातैव किंवा जितशम्बरस्य सा शाम्बरीशिल्पमलक्षि दिक्षु १४
अलीकभैमीशतदर्शनाद्य तस्यान्यकन्यास्वरसो रसाय ।

---

धिमागच्छन्त्याः सहसा मद्गात्रेषु संश्लेषः प्रमादान्नातिक्रान्तः इदमतीव अयुक्तं कृतमिति चकितो बभूवेत्यर्थः ॥ १३ ॥

अनादीति । नास्ति आदिर्यस्याः सा अनादिः प्रवाहरूपत्वान्निरवधिरित्यर्थः या सर्गस्रक् सृष्टिमाला सृष्टिप्रवाह इत्यर्थः तस्यां क्वचित् जननान्तरे वेत्यर्थः । चित्रेषु आलेख्येषु वा अनुभूता परिचिता जितः शम्बरो दैत्यभेदो येन स जितशम्बरः शम्बरासुरं जितवतः कामस्येत्यर्थः शम्बरस्य इयं शाम्बरी मायेत्यर्थः । स्यान्माया शाम्बरीत्यमरः । तस्याः शिल्पं सृष्टिः जातैव वा सा भीमसुता दमयन्ती नलेन दिक्षु सर्वास्विति शेषः किम् अलक्षि ? किं लक्ष्यते स्म ? कर्मणि लुङ् । जन्मान्तरानुभूतस्य दर्शनं सर्वथैवासम्भवं मृत्युरत्यन्तविस्मृतिरिति वचनेन मरणस्यातीव विस्मारकत्वात् तत्कथं पूर्वानुभूतिरिति पक्षान्तरकीर्त्तनं चित्रेष्विति, चित्रदर्शनानुभूतत्वञ्च नैवात्र हेतुः तद्गताया अचेतनतायाः सर्वदिक्षु सञ्चाराभावादिति तृतीयपक्षकीर्त्तनं शाम्बरीसृष्टिरिति अस्याश्च मायारूपत्वात् भ्रमविषयिणी अनुभूतिर्युज्यते तदत्रालीकभैमीसाक्षात्कारे पूर्वजन्मानुभवो वा चित्रानुभवो वा मदनमायाबलं वा हेतुरिति हेतूत्प्रेक्षा । एतेन तन्मयतारूप-विप्रलम्भदशा सूचिता । अत्र कस्यचित् कवेरयं श्लोकश्च सङ्गच्छते यथा । सङ्गमविरह-विकल्पे वरमिह विरहो न सङ्गमस्तस्याः । सङ्गे सैव यदैका त्रिभुवनमपि तन्मयं विरहे इति ॥ १४ ॥

अलीकेति । अन्याः भैमीभिन्नाः कन्या अप्सरस इव अन्य-

भैमीभ्रमस्यैव ततः प्रसादात् भैमीभ्रमस्तेन न तास्वलम्भि १५
भैमीनिराशे हृदि मन्मथेन दत्तस्वहस्तात् विरहात् विहस्तः।
स तामलीकामवलोक्य तत्र क्षणादपश्यन् व्यषदत् विबुद्धः॥१६

---

कन्याप्सरसः उपमितसमासः। अप्सरसां समाः तत्रत्याः दमयन्तीसहचारिण्यः कन्यका इत्यर्थः। अलीकभैमीशतदर्शनात् अलीकस्य मिथ्याभूतस्य पूर्वोक्तरीत्या भ्रमविषयीभूतस्येत्यर्थः। भैमीशतस्य दर्शनात् हेतोः तस्य नलस्य रसाय प्रीतये न बभूवुरिति शेषः। तासामलीकभैमीशतादपि निकृष्टत्वादिति भावः। अलीकभैमीसहदर्शनादिति पाठान्तरम्। ननु देवाङ्गनासारूप्यात् कथं तासु भैमीभ्रमो जातस्तत्राह, भैमीति। ततः तस्य सार्वविभक्तिकस्तसिः भैमीभ्रमस्यैव इयमेव भैमी इत्याकारायाः सादृश्यहेतुकाया भ्रान्तेरेव प्रसादात् प्रभावात् तेन नलेन तासु कन्यकासु भैमीभ्रमः इयमेव भैमी इत्याकारा भ्रान्तिः न अलम्भि न प्राप्तः। दूतद्विजवन्दिमुखात् आलेख्यदर्शनाच्च भैम्या यादृशम् अङ्गसौष्ठवसौन्दर्य्यादि श्रुतम् अनुभूतञ्च तासु कन्यकासु तदभावादिति भावः॥ १५॥

भैमीति। स नलः भैम्यां नास्ति आशा यस्य तस्मिन् दैवैर्विहतभैमीप्रत्याशे इत्यर्थः। हृदि चित्ते मन्मथेन कामेन दत्तः स्वहस्तः निजहस्तावलम्बनं यस्मै तथाभूतात् भैमीनिराशतया विषमभावेन स्थितात् पश्चात् कामेन समुत्तेजितादिति भावः। विरहात् विहस्तः व्याकुलः विहस्तव्याकुलौ समावित्यमरः। अतएव तत्रान्तःपुरे ताम् अलीकां भ्रमविषयिणीम् अवलोक्य क्षणात् विबुद्धः भ्रमापगमात् सञ्जातबोधः सन् अपश्यन् अनवलोकयन् तामित्यनुषङ्गः व्यषदत् विषादमलभत सदेर्लुङि ङित्वात् च्लेरङादेशः। येन हस्तो दत्तस्तस्यैव हस्तापगमाद्

प्रियां विकल्पोपहृतां स यावद्दिगीशसन्देशमजल्पदल्पम्।
अदृश्यवाग्भीषितभूरिभीरुभवो रवस्तावदचेतयत्तम्॥ १७॥
पश्यन् स तस्मिन् मरुतापि तन्व्या स्तनौ परिस्रष्टुमिवात्तवस्त्रौ
अत्यान्तपश्चान्तमृगाङ्कमास्यं दधार तिर्य्यग्वलितं विलक्षः॥१८

---

विहस्तता युक्ता अत्र तु कामेन हस्तो दत्तः नलस्तु विहस्तो जात इति कार्य्यकारणयोर्भिन्नदेशत्वादसङ्गतिरलङ्कारः तदुक्तं दर्पणे। कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिरिति॥ १६॥

प्रियामिति। स नलः विकल्पेन भ्रमेण उपहृताम् अनुभूताम् इयमेव सा भैमीति निश्चितामिति यावत्। प्रियां दमयन्तीं यावत्, दिगीशानां दिक्पालानाम् इन्द्रादीनां सन्देशं त्वमिन्द्रादिभिरेवमेवमुक्तेति वाचिकं सन्देशवाक् वाचिकं स्यादित्यमरः। अल्पं किञ्चिन्मात्रम् अजल्पत् अकथयत्, तावत् अदृश्या अशरीरिणी या वाक् तया भीषिताः किमयमलक्ष्यभूतो भूतादिर्जल्पतीति त्रासिता भूरयः बह्वः भीरवः भयशीलाः स्त्रियः ताभ्यः भवः उत्पत्तिर्यस्य तथाभूतो रवः कोलाहलः तं नलम् अचेतयत् चेतनां प्रापयत्। तथाभूतानां स्त्रीणां कलकलेन भ्रमनिरासात् तूष्णींबभूवेति भावः। चेततेर्भौवादिकात् णिजन्ताल्लङ्॥ १७॥

पश्यन्निति। स नलस्तस्मिन्नन्तःपुरे मरुतापि वायुना अचेतनेनापीति भावः। अथच देवेनापि मरुतौ पवनामरावित्यमरः। परिस्रष्टुं संस्रष्टुं विमर्दयितुमिव आत्तं गृहीतम् अपनीतमित्यर्थः। वस्त्रं याभ्यां तादृशौ अपसारितावरणाविति यावत् तन्व्याः कस्याश्चित् सुन्दर्य्याः स्तनौ कुचौ पश्यन् अवलोकयन् विलक्षः लज्जितः कुण्ठित इत्यर्थः, सन् तादृश्या

अन्तःपुरे विस्तृतवागुरेऽपि बालावलीनां बलितैर्गुणौघैः।
न कालसारं हरिणं तदक्षिद्वयं प्रभुर्बद्धुमभून्मनोभूः ॥ १८॥

---

दर्शनस्य पापजनकत्वादिति भावः। अक्षान्तः असोढः पश्चान्तस्य पौर्णमास्याः मृगाङ्कः चन्द्रः अथच सकलङ्क इति ध्वनिः। येन तादृशं सकलङ्कत्वमेव निष्कलङ्कस्यास्य अक्षान्तौ हेतुरिति भावः। आस्यं मुखं तिर्य्यग्वलितं तिरश्चालितं साचीकृतमित्यर्थः, दधार मुखं वक्रीचकारेत्यर्थः। दधारेत्यत्र बभारेति वा पाठः। प्रच्छन्नकामुकसम्भोगश्चन्द्रतिरोधाने एव युज्यते नो चेत् तस्य प्रच्छन्नत्वव्याघात इति। एतेनास्य तादृग्दर्शनेऽपि न चित्तविकृतिरित्यतीव वशित्वमिति च ध्वन्यते ॥ १८ ॥

अन्तःपुर इति। मनोभूः कामः अन्तःपुरे बालावलीनां तरुणीसङ्घानां लोमनिचयानाञ्च बलितैः प्रसृतैः विस्तृतैरित्यर्थः। गुणानां सौन्दर्य्यादीनां ओघैः समूहैः रज्जुसमूहैश्च विस्तृता प्रसारिता वागुरा बन्धनोपायविशेषः वागुरा मृगबन्धनीत्यमरः। यस्मिन् तथाभूतेऽपि तत्तत्समासक्तिहेतावपीति भावः। तस्य नलस्य कालसारं कालः कृष्णवर्णः तारारूप इति भावः सारः श्रेष्ठांशः मध्यभाग इत्यर्थः। यस्य तत् सारो बले स्थिरांशे चेत्यमरः। हरिणम् अभितः पाण्डरम् अक्षिद्वयं नयनयुगलं कालसारं कृष्णसाराख्यं हरिणं मृगं बद्धुम् आसञ्जयितुं निरोद्धुञ्च प्रभुः समर्थः नाभूत्। अन्तःपुरचारिणीनां तादृग्विभ्रमसौन्दर्य्यादिदर्शनेनापि तस्य न कोऽपि विकारः समजायतेति भावः। एतेनास्य जितेन्द्रियत्वं ध्वन्यते। अत्र गुणादिषु रज्जुत्वादिरूपणं शाब्दं मनोभुवि मृगयुत्वरूपणम् आर्थमित्येकदेशविवर्त्तिरूपकं तदुक्तं दर्पणे। यत्र कस्यचिदार्थ-

दोर्मूलमालोक्य कचं रुरुत्सोस्ततः कुचौ तावनुलेपयन्त्याः।
नाभीमथैष श्लथवाससोऽनु मिमील दिक्षु क्रमकृष्टचक्षुः॥२०॥
मीलन्न शेकेऽभिमुखागताभ्यां धर्त्तुं निपीड्य स्तनसान्तराभ्याम्
स्त्राङ्गान्यपेतो विजगौ स पश्यन् पुमङ्गसङ्गोत्पुलके ततस्ते॥२१

त्वमेकदेशविवर्त्ति तदिति। किञ्च बन्धनहेतावपि बन्धनायोगात् विशेषोक्तिरलङ्कारः तदनयोरङ्गाङ्गिभावेन सङ्करः॥ १८॥

दोरिति। एष नलः दिक्षु पुरःपार्श्वादिषु क्रमेण कृष्टे निहिते चक्षुषी येन तथोक्तः सन् कचं केशं कचः केशः शिरोरुह इत्यमरः। रुरुत्सोः रोद्धुमिच्छोः बन्धुमिच्छोरित्यर्थः। कस्याश्चित् तरुण्या इति शेषः। दोर्मूलं भुजामूलम् आलोक्य दृष्ट्वा ततोऽनन्तरं कुचौ स्तनौ अनुलेपयन्त्या चन्दनादिनेति भावः। कस्याश्चित् तौ कुचौ आलोक्य अथानन्तरं श्लथे शिथिलीभूते वाससी यस्याः तथाभूतायाः स्रस्तवसनाया इत्यर्थः। कस्याश्चित् नाभीम् आलोक्य अनु पश्चात् मिमील मीलितनयनोऽभूदित्यर्थः। यत्र दृष्टिर्निधीयते तत्रैव तथा विकृतदर्शनमिति पापभीत्या नेत्रनिमीलनं कृतवानिति भावः॥ २०॥

मीलन्निति। मीलन् नेत्रनिमीलनं कुर्वन् स नलः अभिमुखम् अन्योन्यस्येति भावः। आगताभ्यां स्तनाभ्यां हेतुभूताभ्याम् अन्तरं व्यवधानं तत्सहिताभ्यां काभ्याश्चित् तरुणीभ्यां निपीड्य वक्षसा गाढ़माश्लिष्य धर्त्तुं ग्रहीतुं न शेके न शक्यते स्म। उभयोरत्युच्चस्तनावेव तथा धारणप्रतिबन्धौ जाताविति भावः। ततः अनन्तरं स नलः अपेतः ततः स्त्रीद्वयमध्यादपसृतः सन् पुंसः पुरुषस्य अङ्गसङ्गेन उद्गतानि

निमीलनस्पष्टविलोकनाभ्यां कदर्थितस्ताः कलयन् कटाक्षैः।
स रागदर्शीव भृशं ललज्जे स्वतःसतां ह्रीः परतोऽपि गुर्वी॥२२

पुलकानि रोमाञ्चा ययोस्तथाभूते ते स्त्रियौ पश्यन् अवलोकयन् स्वाङ्गानि निजगात्राणि विजगौ धिङ् मेऽङ्गानि यैः परस्त्रीस्पर्शपातकं मे जनितमिति धिया निनिन्देत्यर्थः। प्राञ्चस्तु ततः स नलः अपेतः अपसृतः सन् स्वाङ्गानि पश्यन् परस्त्रीस्पर्शदूषितानि इति भावः। विजगौ अन्तःपुरस्त्रीस्पर्शदोषाद् विजगर्ह। ते पुनः स्त्रियौ पुंसः अङ्गसङ्गेन उत्पुलके जाते इति शेष इति व्याचक्षते। अत्र पूर्वार्द्धे स्तनसान्तराभ्यामिति पदार्थस्य धारणाशक्तौ हेतुत्वात्। द्वितीयार्द्धे पुमङ्गसङ्गोत्पुलके पश्यन्निति वाक्यार्थस्य स्वाङ्गगर्हणहेतुत्वात् काव्यलिङ्गमलङ्कारः। तदुक्तं दर्पणे। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति॥ २१॥

निमीलनेति। निमीलनं चक्षुषोर्मुद्रणं स्पष्टं विलोकनं दर्शनं ताभ्यां कदर्थितः उद्वेजितः निमीलने सङ्घट्टनं स्पष्टविलोकने अदर्शनीयपरस्त्रीस्तनादिदर्शनमित्युभयथैव विरक्तीकृत इत्यर्थः। स नलः ताः स्त्रियः कटाक्षैः अपाङ्गदर्शनैः ईषत्सङ्कुचितैः नयनैः इति भावः। कलयन् अवलोकयन् रागेण अनुरागेण पश्यतीति रागदर्शी स इव सकाम इवेत्यर्थः। भृशम् अत्यर्थं ललज्जे हा किमिदमापतितं निमीलने प्रागुक्तसङ्घट्टनदोषः, स्पष्टविलोकने अदर्शनीय परस्त्रीस्तनादिदर्शनदोषः कटाक्षे च कामित्वानुभूतिरिति अतीव कुण्ठिततामवापेति भावः। नन्वप्रकाशेऽर्थे लज्जायाः कोऽवसर इत्यत आह, सतां साधूनां स्वतः आत्मनः सकाशात् ह्रीर्लज्जा परतो-

रोमाञ्चिताङ्गीमनु तत्कटाक्षैर्भ्रान्तेन कान्तेन रतेर्विसृष्टः।
मोघः शरौघः कुसुमानि नाभूत् तद्धैर्य्यपूजां प्रति पर्य्यवस्यन्॥२३

ऽपि परस्मादपि गुर्वी महती भवति, अकामादकार्य्यकरणेऽपि परतोऽपेक्ष्य स्वतो लज्जा समधिका सतां भवतीति निष्कर्षः। अत्र रागदर्शीवेति उत्प्रेक्षा। सामान्येन विशेषसमर्थनरूपार्थान्तरन्यासेन संसृज्यते इत्यनयोः संसृष्टिः॥ २२॥

रोमाञ्चिताङ्गीमिति। रोमाञ्चितानि पुलकितानि पुंसः स्वस्याङ्गसङ्गादिति भावः। अङ्गानि यस्याः तां तथाभूताम् अनु प्रतीत्यर्थः, अनुलक्ष्येति यावत् अनुयोगे द्वितीया। तस्य नलस्य कटाक्षैः पूर्वोक्तहेतोः अकामतोऽपाङ्गवीक्षणैरित्यर्थः। भ्रान्तेन नलोऽयमनुरागादेव एनां कटाक्षैर्निरीक्षते इति भ्रान्तिमता रतेः कान्तेन कामेन विसृष्टः प्रयुक्तः नलं प्रतीति भावः। कुसुमानि शरौघः शरसमूहः तस्य नलस्य धैर्य्यपूजां धीरोऽयं नलः पूजामर्हतीति धैर्य्यहेतुकां पूजां प्रति पर्य्यवस्यन् परिणमन् उपयोगं प्राप्नुवन् मोघः विफलः नाभूत् अपितु सफल एवाभूदित्यर्थः। मुख्यप्रयोजनस्य नलधैर्य्यच्युतिकरणस्याभावे तदानुषङ्गिक-तदीयधैर्य्यातिशयस्य पूजारूपप्रयोजननिर्वाहादिति भावः। शत्रोरपि गुणाः पूज्या इति वचनात्। अत्र नलधैर्य्यध्वंसाय प्रयुक्तस्य कुसुमरूपशरनिकरस्य तद्धैर्य्यभञ्जनन्तु दूरे आस्तां प्रत्युत तत्पूजनमपीति आरब्धवैफल्यानर्थोत्पत्तिरूपविषमालङ्कारभेदः। तदुक्तं दर्पणे। गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये। यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः। विरूपयोः सङ्घटना या च तद्विषमं मतमिति। तदानीं कामेन नितरां व्यथितोऽपि नलो न धैर्य्यं तत्याजेति तात्पर्य्यम्॥ २३॥

हित्वैकवर्त्मैवमिह भ्रमन्त्याः स्पर्शः स्त्रियाः सुत्यज इत्यवेत्य।
चतुष्पथस्याभरणं बभूव लोकावलोकाय सतां स दीपः॥२४॥

---

हित्वेति। सतां साधूनां दीपः उज्ज्वलकरः सुजनप्रवर इत्यर्थः। स नलः सतां विद्यमानानां वस्तूनामिति शेषः, दीपयति प्रकाशयतीति दीपः आलोकश्च इहान्तःपुरे एवम् इत्थं प्राग्वदित्यर्थः। भ्रमन्त्याः सञ्चरन्त्याः स्त्रियाः स्पर्शः एकं वर्त्म मार्गम् एकपदीमित्यर्थः। हित्वा त्यक्त्वा हित्वैव वर्त्मैकमिति एकमभिन्नं वर्त्म हित्वैव त्यक्त्वैवेत्यर्थः। सुत्यजः सुपरिहार्य्यः यद्यहमत्र सङ्कीर्णमेकमेव मार्गमाश्रित्य तिष्ठामि तदा तथाविधपरनारीस्पर्शदोषः पदे पदे सङ्घटेत एतत्परित्यागेन अन्यत्र स्थितौ नैष दोषः भविष्यति इति भावः। इति अवेत्य मत्वा लोकानाम् अन्तःपुरचारिजनानां कर्मभूतानाम् अन्यत्र साधारणलोकानाञ्च कर्त्तृभूतानाम् अवलोकाय दर्शनाय चतुर्णां पथां समाहारः चतुष्पथं तद्धितार्थेत्यादिना समाहारे द्विगुः। ऋक्पूरित्यादिना समासान्तः पथः सङ्ख्या व्ययादिति नपुंसकत्वम्। तस्य आभरणम् अलङ्कार' बभूव स्वावस्थानेन चतुष्पथमलङ्कृतवानित्यर्थः। संकीर्णे मार्गे स्त्रीसंस्पर्शादिदोषपरिहाराय असङ्कीर्णे अन्तःपुरवर्त्तिनि चतुष्पथे स्थित्वा समन्तात् सर्वानन्तःपुरचरानद्राक्षीदिति भावः। अत्र द्वितीयार्द्धे प्रस्तुतस्य नलस्य अप्रस्तुतस्य प्रदीपस्य च एकधर्माभिसम्बन्धात् दीपकं चतुष्पथस्याभरणमिति रूपकञ्च दीप इत्यर्थश्लेषेणानुप्राणितमित्येषामङ्गाङ्गिभावेन सङ्करः। तदुक्तं दर्पणकारेण। रूपकं रूपितारोपाद् विषये निरपह्नवे इति· अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते इति। शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनमिति॥ २४॥

उद्वर्त्तयन्त्या हृदये निपत्य नृपस्य दृष्टिर्न्यवृतद् द्रुतेव ।
वियोगिवैरात् कुचयोर्नखाङ्कैरर्द्धेन्दुलीलैर्गलहस्तितेव ॥ २५ ॥
तन्वीमुखं द्रागधिगत्य चन्द्रं वियोगिनस्तस्य निमीलिताभ्याम्
द्वयं दृढ़ीयः कृतमीक्षणाभ्यां तदिन्दुता च स्वसरोजता च ॥

उद्वर्त्तयन्त्या इति। नृपस्य नलस्य दृष्टिः उद्वर्त्तयन्त्याः गात्र विलेपनेन अलङ्कुर्वन्त्याः कस्याश्चित् हृदये वक्षसि निपत्य अर्द्धेन्दुः अर्द्धचन्द्रः तस्य लीलेव लीला विलासो येषां तैः अर्द्धेन्दुलीलैः अर्द्धचन्द्राकारैरित्यर्थः कुचयोः स्तनयोः नखाङ्कैः नख-क्षतचिह्नैरित्यर्थः। कर्त्तृभूतैः वियोगिषु विरहिषु वैरात् विद्वेषात् चन्द्रस्य विरहोद्दीपकत्वात् तदर्द्धखण्डाकृतिनखाङ्कस्य तथैव विरहोद्दीपकत्वमिति भावः। गले हस्तः गलहस्तः स जातोऽस्या इति गलहस्तिता सेव हस्तेन गले गृहीत्वा ताड़ितेवेत्यर्थः। द्रुता त्वरिता एव न्यवृतत् तद्दर्शनजपाप-भयात् निवृत्तेत्यर्थः। अर्द्धेन्दुश्चन्द्रशकले गलहस्तनखाङ्कयो-रिति विश्वः। प्राञ्चस्तु गले हस्तः गलहस्तः तद्वत् कृता गल-हस्तिता। मत्वन्तात् तत्करोतीति णिचि णाविष्टवद्भावे विन्मतोर्लुकि कर्मणि क्त इति साधयामासुः। अत्रोत्प्रेक्षा-लङ्कारः। यथा लोके कोऽपि केनचिद् गले हस्तेन गृहीत्वा ताड़ितो निवर्त्तते तद्वत् अर्द्धचन्द्राकृतिनखाङ्कनिराकृता नल-दृष्टिः सहसैव पापभयात् न्यवर्त्तिष्टेति पर्य्यवसितोऽर्थः ॥ २५ ॥

वियोगिन इति। वियोगिनः विरहिणः तस्य नलस्य ईक्षणाभ्यां नेत्राभ्यां द्राक् झटिति द्राग् झटित्यञ्जसाह्नायेत्य-मरः। तन्व्याः कस्याश्चित् कृशाङ्ग्याः मुखम् एव चन्द्रम् अधिगत्य प्राप्य दृष्ट्वेत्यर्थः। निमीलिताभ्याम् अदृश्यं खलु पर-

चतुष्पथे तं विनिमीलिताक्षं चतुर्दिगेताः सुखमग्रहीष्यन्।
संघट्य तस्मिन् भृशभीनिवृत्तास्ता एव तद्वर्त्म न चेददास्यन्॥२७

संघट्टयन्त्यास्तरसात्मभूषाहीराङ्कुरप्रोतदुकूलहारी।
ह्रिया नितम्बं परिधाप्य तन्व्यास्तत्पापसन्तापमवाप भूपः॥२८

---

कलत्रमिति पापभियेति भावः। मुद्रिताभ्यां सदृग्भ्यां तस्य तन्वी-मुखस्य इन्दुता चन्द्रत्वञ्च स्वस्य आत्मनः सरोजता पद्मत्वञ्च द्वयं द्रढीयः दृढतरं कृतं चन्द्रोदये पद्मस्यैव सङ्कोचः न तु अन्यस्य तथा चन्द्रोदये एव पद्मस्य सङ्कोचः न तु अन्योदये इत्युभयथैव मुखस्य चन्द्रत्वम् आत्मनश्च पद्मत्वं निश्चितमिति भावः। अत्र मुखं चन्द्रमिति व्यस्तरूपकेण द्वयं द्रढीयः कृतमिति व्यञ्जका-प्रयोगात् प्रतीयमानया उत्प्रेक्षया सङ्कीर्य्यते॥ २६॥

नन्वेतादृशाङ्गसङ्गेऽपि ताभिः कथमसौ न गृह्यते इत्यत्राह चतुष्पथे इति। चतुष्पथे तस्मिन् नले सङ्घट्य अभिहत्य आ-धारत्वविवक्षया सप्तमी। भृशया अतिमात्रया भिया किमिदं स्पृष्टमिति जातयेति भावः। निवृत्ताः परावृत्ताः सत्यः ता एव नार्य्यः चेद् यदि तस्य नलस्य वर्त्म पन्थानं न अदास्यन् तदा चतसृभ्यः दिग्भ्यः एताः आगताः सत्यः आङ्पूर्वादिणः कर्त्तरि क्तः उत्तरपदस्य समासः। चतुष्पथे विनिमीलिते अक्षिणी यस्य तं मुद्रितनेत्रमित्यर्थः। नलं सुखमक्लेशेन अग्रहीष्यन्। यदि ताः सङ्घर्षमासाद्यापि भृतशङ्कया न पलायिता अभवि-ष्यन् तदा अवश्यमेव तमग्रहीष्यन्निति फलितार्थः। क्रिया-ऽनिष्पत्तौ लृङ्॥ २७॥

सङ्घट्टयन्त्या इति। भुवं पातीति भूपो भूपतिर्नलः तरसा वेगेन त्वरयेत्यर्थः। सङ्घट्टयन्त्याः सङ्घर्षं प्राप्नुवत्याः कस्याश्चित्

हतः कयाचित् पथि कन्दुकेन संघट्य भिन्नः करजैः कयापि ।
कयाचनाक्तः कुचकुङ्कुमेन सम्भुक्तकल्पः स बभूव ताभिः ॥२९॥
छायामयः प्रैक्षि कयापि हारे निजे न गच्छन्नथ नेक्ष्यमाणः ।
तच्चित्तयान्तर्निरचायि चारु स्वस्यैव तन्व्या हृदयं प्रविष्टः ॥३०

तन्व्याः आत्मनो नलस्येति शेषः भूषासु अलङ्कारेषु ये हीरा वज्रमणयः तेषाम् अङ्कुरेषु अग्रभागेषु प्रोतं संलग्नं दुकूलं पट्टवसनं हरति आकर्षतीति तथोक्तः सन् तस्या नितम्बं कटिपश्चाद्भागं दिशा परिधाप्य दिगम्बरीकृत्य विवसनं विधायेत्यर्थः। तत्पापेन परस्त्रीवस्त्रहरणजनितेनेति भावः। सन्तापं न खलु मया हीरकाङ्कुरप्रोतमस्या वसनमाकर्षता सम्यक् कृतं येनेयम् आकर्षणेन विवसना जाता विवसनादर्शनं तत्करणञ्च अतीव पापावहमिति धिया खेदमित्यर्थः अवाप प्राप। दुकूलवसनञ्च स्वल्पाकर्षणेनैव विश्लथबन्धनं भवतीति तच्छब्दोपादानं बोध्यम् ॥ २८ ॥

हत इति। स नलः पथि मार्गे कयाचित् नार्य्या कन्दुकेन वर्त्तुलाकारक्रीड़नकद्रव्येण अन्योद्देशेन क्षिप्तेनेति भावः हतः ताड़ितः, कयापि स्त्रिया सङ्घट्य सङ्घर्षमासाद्य करजैः नखैः भिन्नः विक्षतः अज्ञानात् नखक्षतचिह्नैरलङ्कृत इति भावः। कयाचन कामिन्या कुचकुङ्कुमेन आक्तः लिप्तः अज्ञानात् वक्षसा समाश्लेषादिति भावः। अतएव ताभिः रमणीभिः सम्भुक्तकल्पः सम्यक् भुक्तप्रायः ईषदूने कल्पप्रत्ययः। ग्राम्यधर्माभावादीषदूनत्वमिति भावः। बभूव ॥ २९ ॥

छायेति। स नलः कयापि तन्व्या निजे हारे मुक्तामये इति भावः। छायामयः प्रतिबिम्बस्वरूपः छाया सूर्य्यप्रिया

तच्छायसौन्दर्य्यनिपीतधैर्य्याः प्रत्येकमालिङ्गदमूः रतीशः ।
रतिप्रतिद्वन्द्वितमासु नूनं नामूषु निर्णीतरतिः कथञ्चित् ॥३

कान्तिः प्रतिविम्बमनातप इत्यमरः । प्रैक्षि दृष्टः ईक्षतेः कर्मणि लुङ् । अथ गच्छन् ततोऽपसरन् अतएव नेक्ष्यमाणः तथा छायामयत्वेन अदृश्यमान इत्यर्थः । सन् स नलः चित्ते मनसि यस्याः सा तया तच्चित्तया तथाभूतया सत्या स्वस्यैव आत्मन एव हृदयं प्रविष्टः इति अन्तर्मनसि चारु सम्यग् यथा तथा निरचायि निश्चितः । तच्चिन्तयेति पाठे तस्य छायामयस्य चिन्तया अधुनैव कोऽपि युवा द्वारे दृष्टः सः सद्य एव क्व गत इत्येवं भावनया स्वस्यैव हृदयं प्रविष्ट इति अन्तर्मनसि निरचायीति योजना । एतेनास्य द्वारादपक्रम्य अन्यत्र गमनं हृदयात्तु न तथेति मनोहराकृतिविशेषोऽस्य व्यनक्ति ॥ ३० ॥

तच्छायेति । रतीशः रतिपतिः कामः तस्य छाया तच्छायं मणिकुट्टिमद्वारादिगतं तत्प्रतिविम्बमित्यर्थः । विभाषा सेना-सुरेत्यादिना नपुंसकत्वम् । तस्य सौन्दर्य्येण निपीतं निःशेषेण पीतं हृतमित्यर्थः, धैर्य्यं यासां ताः अमूः तरुणीः प्रत्येकम् एकामेकाम् आलिङ्गत् आश्लिष्टवान् सर्वा अपि कामावेशवशा आसन् इति भावः । ननु रतीशस्य रतीतरस्त्रीष्वासक्तिरित्य-त्रोत्प्रेक्षते रतीति रतेः। प्रतिद्वन्द्वितमासु प्रतिस्पर्द्धिनीष्वित्यर्थः । अतिशयेन तत्सदृशीष्विति भावः । अमूषु मध्ये कथञ्चित् केनापि प्रकारेण निर्णीता इयमेव रतिरिति निश्चिता रतिः स्वपत्नी येन तथाभूतः नाभूत् नूनम् इयमेव मे रतिर्नान्येति निश्चेतुमशक्तोऽभूदिसित्युत्प्रेक्षा । एकां रतिमिति आलिङ्गन् अपरां दृष्ट्वा इयमेव रतिर्न पूर्वभुक्तेति मन्यमानस्तामालिङ्गन्

तस्मादद्दश्यादपि नातिबिभ्युस्तच्छायरूपाहितमोहलोलाः ।
मन्यन्त एवाहृतमन्मथाज्ञाः प्राणानपि स्वान् सुदृशस्तृणानि ३२
जागर्त्ति तच्छायदृशां पुरा यः स्पृष्टे च तस्मिन्विससर्प कम्पः ।
द्रुतं द्रुते तत्पदशब्दभीत्या स्वहस्तितस्वारदृशां परं सः ॥३३॥

ततोऽपरामपि तथैव मत्वा आलिङ्गन् इत्थं सर्वा एवालिङ्गित-वानित्यर्थः । नो चेत् कथं सर्वा एवालिङ्गेदिति भावः ॥ ३१ ॥

तस्मादिति । सुदृशः सुनयना नार्य्यः तस्य छाया तच्छायं तत्प्रतिबिम्बं तस्य रूपेण सौन्दर्य्येण आहितः जनितः मोहः वैचित्त्यम् । मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः । घूर्णना गात्रपतनभ्रमणादर्शनादिकृदिति लक्षणात् । यासां तथोक्ताः अतएव लोलाः सतृष्णाः सत्यः लोलश्चलसतृष्णयोरिति कोषः । अदृश्यात् अदृष्टिविषयीभूतादपि भूतादिशङ्कया भीतिहेतो-रपीति भावः । तस्मात् छायारूपात् नलात् न अतिबिभ्युः अतिशयेन भयं न प्रापुरित्यर्थः । तथाहि आहृता मन्मथस्य आज्ञा याभिः तथाविधाः कामवशंवदा इत्यर्थः । नार्य्यः स्वान् प्राणानपि तृणानि एव मन्यन्ते गणयन्ति कामपरतन्त्राणां प्राणान् तृणीकुर्वतीनां कुतो भयमिति भावः । मन्यकर्मण्य-नादरे इति चतुर्थ्या वैभाषिकत्वात् द्वितीया । शृङ्गारो भया-नकस्य विरोधीति तत्प्रादुर्भावे कथं भयानकः स्थानं प्राप्नो-तीति तात्पर्य्यम् । तथाच दर्पणः । आद्यः करुणवीभत्सरौद्र-वीरभयानकैः । भयानकेन करुणेनापि हास्यो विरोधभागिति ॥ ३२ ॥

जागर्त्तीति । पुरा पूर्वं तस्य छाया तच्छायं तत्प्रतिबिम्ब-मित्यर्थः, तत् पश्यन्तीति तच्छायदृशः तासां तत्प्रतिबिम्ब-

उल्लास्यतां स्पृष्टनलाङ्गमङ्गं तासां नलच्छायपिबापि दृष्टिः ।
अश्मैव रत्यास्तदनर्त्ति पत्या छेदेऽप्यबोधं यदहर्षि लोम ॥३४॥

दर्शिनीनामित्यर्थः क्विप् चेति क्विप् । चारुदृशां सुदृशां युवतीनां यः कम्पः सत्त्वोद्रेकजनित इति भावः, जागर्त्ति तिष्ठतीत्यर्थः । ततस्तस्मिन् नले स्पृष्टे सङ्घृष्टे समाश्लिष्टे सतीत्यर्थः । यश्च कम्पः विससर्प प्रससार ववृधे इत्यर्थः । दर्शनापेक्षया स्पर्शनस्याधिक्येन सत्त्वोद्रेकजनकत्वादिति भावः । स कम्पः द्रुतं शीघ्रं द्रुते अपसृते परस्त्रीस्पर्शजपापभयादिति भावः । सति तस्य नलस्य पदशब्दात् भीतिर्भयं तया कर्त्तृभूतया परमतिशयेन स्वहस्तवान् कृतः स्वहस्तितः दत्तहस्तावलम्ब इति यावत् । अतिप्रवृद्धिं नीतः शृङ्गारनिरासेन भयानकस्य प्रादुर्भावादिति भावः । तल्लक्षणञ्च दर्पणेनोक्तं यथा । भयानको भयस्थायिभावः कालाधिदैवतः । स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः । यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम् । चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः । अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणम् । प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः । जुगुप्सा वेगसम्मोहसन्त्रासग्लानिदीनताः । शङ्कापस्मारसम्भ्रान्तिमृत्य्वाद्या व्यभिचारिण इति । मत्वन्तात् तत् करोतीति णिचि णाविष्टवद्भावे विन्मतोर्लुकि कर्मणि क्तप्रत्ययः ॥ ३३ ॥

उल्लास्यतामिति । रत्याः पत्या कामेन स्पृष्टं नलस्य अङ्गं येन तादृशं तासां नारीणाम् अङ्गम् उल्लास्यताम् उल्लासं नीयताम् उत्पूर्वाल्लासयतेः कर्मणि लोट् । तथा नलस्य छाया नलच्छायं नलप्रतिविम्बं तत् पिबतीति तत् पिबा अतिलक्षणया तत्प्रतिविम्बदर्शिनीत्यर्थः, पाघ्रादिना शप्रत्ययः ।

यस्मिन्नलस्पृष्टकमेत्य हृष्टा भूयोऽपि तं देशमगात् मृगाक्षी।
निपत्य तत्रास्य धरारजःस्थे पदे प्रसीदेति शनैरवादीत्॥३५॥

पित्रादेशश्च। तासां दृष्टिरपि उन्नास्यतामित्यनुषङ्गः। नैतच्चित्रं तयोश्चेतनत्वादिति भावः। किन्तु छेदेऽपि कर्त्तनेऽपि अबोधम् अहमनेन छिद्ये इति बोधरहितम् अचेतनमिति भावः। लोम यत् अहर्षि हर्षितं तासां रोमाञ्चो जात इति भावः, हृषेर्ण्यन्तात् कर्मणि लुङ्। तत् अश्मैव पाषाण एव अनर्त्ति नर्त्तितः नृत्यतेर्ण्यन्तात् कर्मणि लुङ्। अचेतनस्य नर्त्तनं पाषाणनर्त्तनेन तुल्यमिति भावः। असाध्यसाधनकारी काम इति तात्पर्य्यम्। अत्र रोमहर्षणकरणं पाषाणनर्त्तनमित्यसम्भवेन अनयोर्विम्बप्रतिविम्बप्रत्यायनाद् निदर्शनालङ्कारः। तदुक्तं दर्पणे। सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शनेति। अयमप्यपरो रोमाञ्चरूपः सात्त्विकभाव उक्तः॥ ३४॥

यस्मिन्निति। मृगाक्षी मृगनयना काचित् यस्मिन् देशे नलस्य स्पृष्टकं स्पर्शविशेषं तदाख्यमालिङ्गनविशेषमित्यर्थः तदुक्तं रतिरहस्ये। यद् योषितः सम्मुखमागताया अन्यापदेशाद् व्रजतो नरस्य। गात्रेण गात्रं घटते तदेतदालिङ्गनं स्पृष्टकमाहुरार्य्या इति। एत्य प्राप्य हृष्टा प्रफुल्ला हृष्टलोमा वा भूयोऽपि पुनरपि तं देशम् अगात् जगाम तदालिङ्गनाशयेति भावः। किन्तु तत्र देशे अस्य नलस्य धरायाः भूमेः रजसि रेणौ तिष्ठतीति तथाभूते पदे पदचिह्ने निपत्य पतित्वा प्रसीद प्रसन्नो भव दर्शनदानादिना मामनुगृह्णाणेति यावत् इति इत्थं शनैः मन्दं मन्दं न तु उच्चैः परपुरुषसङ्गलोभप्रकाशभियेति भावः अवादीत् उवाच॥ ३५॥

भ्रमन्नमुष्यामुपकारिकायां व्यायस्य भैमीविरहात् क्रशीयान्।
असौ मुहुः सौधपरम्पराणामाधत्त विश्रान्तिमुपत्यकासु॥३६॥
उल्लिख्य हंसेन दले नलिन्यास्तस्मै यथादर्शि तथैव भैमी।
तेनाभिलिख्योपहृतस्वहारा कस्या न दृष्टाऽजनि विस्मयाय॥३७

प्रसन्निति। भैम्या दमयन्त्या विरहात् वियोगात् क्रशीयान् अतिशयेन कृशः अतएव असौ नलः अमुष्याम् उपकारिकायां राजान्तःपुरे भ्रमन् पर्यटन् व्यायस्य व्यायासं कृत्वेत्यर्थः अङ्गचालनरूपं परिश्रमं कृत्वेति यावत्। मुहुः पुनः पुनः सौधपरम्पराणां प्रासादपङ्क्तीनाम् उपत्यकासु आसन्नभूमिषु एतेन सौधानां पर्वतसाम्यं गम्यते। तेन उपत्यकाद्रेरासन्ना भूमिरित्यभिधानेऽपि अत्र सामान्यासन्नभूमिपरता। उपाधिभ्यां त्यकन्नासन्नारूढयोरिति त्यकन्प्रत्ययः। अस्य च संज्ञाशब्दत्वात् कात्पूर्वस्येकाराभावः। विश्रान्तिं विश्रामं व्यधत्त कृतवान्। अतिकृशस्यान्तःपुरभ्रमणेऽपि आयासं स्यात् तेन च पुनः पुनर्विश्रान्तिरावश्यकीति भावः। तत्र क्रशीयानिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ ३६॥

अथ विश्रामसमये भैमीप्रतिकृतिलिखनेन अस्य चित्तविनोदं श्लोकद्वयेनाह, उल्लिख्येत्यादिना। हंसेन प्रागुक्तदूतेनेति भावः। नलिन्याः पद्मिन्या दले पलाशे उल्लिख्य चित्रयित्वा यथा यादृशी तस्मै नलाय प्रदर्शि दर्शिता, तेन नलेन तथैव अभिलिख्य भूमौ चित्रयित्वा उपहृतः उपहारीकृतः अर्पित इत्यर्थः स्वस्य हारः कण्ठमाल्यं यस्यै तथाभूता कण्ठार्पितनिजहारेत्यर्थः दृष्टा सती कस्या अन्तःपुरचारिण्याः तरुण्याः विस्मयाय चमत्काराय न अजनि? अपितु सर्वस्या एव। केनेयं राज-

कौमारगन्धीनि निवारयन्ती वृत्तानि रोमावलिवेत्रचिह्ना ।
सालिख्य तेनैच्यत यौवनीय-द्वाःस्थामवस्थां परिचेतुकामा ३८

पश्याः पुरन्ध्रीः प्रति सान्द्रचन्द्ररजःकृतक्रीड़कुमारचक्रे ।
चित्राणि चक्रेऽध्वनि चक्रवर्त्तिचिह्नं तदङ्घ्रिप्रतिमासु चक्रम्॥३९

नन्दिनी दमयन्ती चित्रिता अस्याः कण्ठे हारश्च दत्त इति विस्मयापन्ना जातेत्यर्थः । दमयन्तीरूपचित्रकरणेन नलः तदानीम् अन्तःकरणविनोदं कृतवान् इति भावः ॥ ३७ ॥

कौमारेति । तेन नलेन यौवनस्य इयं यौवनीया वृद्धाच्छः । सा चासौ द्वाश्चेति यौवनीयद्वाः यौवनसम्बन्धिद्वारमित्यर्थः । स्त्रीद्वार्द्वारमित्यमरः । तस्यां तिष्ठतीति यौवनीयद्वाःस्था तां खरवसानयोरिति रेफस्य विसर्जनीये तस्य सत्वम् । अवस्थां यौवनदौवारिकदशामिति यावत् यौवनप्रवेशावस्थामिति फलितार्थः । परिचेतुम् अभ्यसितुं कामो यस्याः सा यौवनदशायां प्रवेशार्थिनीति भावः । अतएव रोमावलिरेव लोमराजिरेव वेत्रचिह्नं दौवारिकधार्य्यमाणवेत्रदण्डलक्षणमित्यर्थः । यस्याः तथाभूता कौमारगन्धो येषु अस्तीति कौमारगन्धीनि शैशवसम्पृक्तानीत्यर्थः । वृत्तानि चरितानि चापलादीनीत्यर्थः । निवारयन्ती शैशवमतिक्रम्य यौवनदशां प्रविशन्तीति भावः सा एवम्भूता भैमी आलिख्य चित्रयित्वा ऐच्यत दृष्टा चित्तविनोदनार्थं भ्रान्तिनिरासार्थञ्च चित्रीकृता भैमी दृष्टा इति भावः ईक्षतेः कर्मणि लङ् । अत्र तथाविधायां भैम्यां द्वाररक्षिण्या आरोपात् रूपकमलङ्कारः तदुक्तं दर्पणे। रूपकं रूपितारोपाद् विषये निरपह्नवे इति ॥ ३८ ॥

पश्या इति । सान्द्रेषु निविड़ेषु घनेष्वित्यर्थः चन्द्ररजःसु कर्पूरधूलिषु अथ कर्पूरमस्त्रियां घनसारश्चन्द्रसंज्ञ इत्यमरः ।

तारुण्यपुण्यामवलोकयन्त्यो रन्योन्यमेणेक्षणयोरभिख्याम्।
मध्ये मुहूर्त्तं स बभूव गच्छन्नाकस्मिकाच्छादनविस्मयाय॥४०
पुरःस्थितस्य क्वचिदस्य भूषारत्नेषु नार्य्यः प्रतिबिम्बितानि।

---

सान्द्रैः चन्द्ररजोभिर्वा कृता क्रीड़ा खेला येन तादृशं कुमारचक्रं बालकनिवहः यत्र तस्मिन् अध्वनि पथि राजशिशूनां सामान्ये पार्थिवरजसि क्रीड़नमनुचितमिति चन्द्ररज इत्युक्तम्। तस्य नलस्य अङ्घ्रिप्रतिमासु चरणप्रतिबिम्बेषु चक्रवर्त्तिनः सार्वभौमस्य चिह्नं लक्षणं चक्रं चक्राकृतिरेखेत्यर्थः। कर्त्तृ पश्यन्तीति पश्याः पश्यतेः पाघ्रेत्यादिना शप्रत्यये पश्यादेशः। अवलोकयन्तीरित्यर्थः पुरन्ध्रीः प्राचीनाः स्त्रीरित्यर्थः। तासां विवेचकत्वात् न तु बालास्तासां तथा ज्ञानाभावादिति भावः। स्यात्तु कुटुम्बिनी पुरन्ध्रीत्यमरः। प्रति उद्दिश्येत्यर्थः चित्राणि आश्चर्य्याणि चक्रे कृतवत् तास्तद्दर्शनेन कथमत्र बालक्रीड़ाभूमौ चक्रवर्त्तिलक्षणं चक्रं दृश्यते केनात्र चक्रवर्त्तिना सञ्चरितमिति विस्मयाकृष्टा बभुवुरिति भावः॥ ३९॥

तारुण्येति। तारुण्येन यौवनेन पुण्यां मनोहारिणीं पुण्यं मनोज्ञ इति विश्वः अभिख्यां शोभाम् अभिख्या नाम शोभयोरित्यमरः। अन्योन्यं परस्परम् अवलोकयन्त्योः पश्यन्त्योः एणेक्षणयोः मृगदृशोः पथि गच्छन्त्योरिति भावः। मध्ये गच्छन् स नलः मुहूर्त्तं क्षणम् आकस्मिकेन अकस्माद् भवेन आच्छादनेन व्यवधानेन यो विस्मयः चमत्कारबुद्धिः तस्मै बभूव कथमयमकस्मात् अन्योन्यशोभादर्शनव्याघात इति विस्मयं जनयामास। अत्र व्यवधानहेतोरभावेऽपि व्यवधानज्ञानात् विभावनालङ्कारः। तदुक्तं दर्पणे। विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते इति॥ ४०॥

व्योमन्यदृश्येषु निजान्यपश्यन् विस्मित्य विस्मित्य सहस्रकृत्वः ४१
तस्मिन् विषज्यार्द्धपथान्निवृत्तं तदङ्गरागच्छुरितं निरीक्ष्य ।
विस्मेरतामापुरपि स्मरन्त्यः क्षिप्तं मिथः कन्दुकमिन्दुमुख्यः ४२

पुर इति । नार्य्यः अन्तःपुरतरुण्यः क्वचित् प्रदेशे पुरोऽग्रे स्थितस्य तिष्ठतः अस्य नलस्य अदृश्येषु दर्शनपथाविषयेषु भूषारत्नेषु भूषणमणिषु निजानि स्वीयानि प्रतिविम्बितानि व्योम्नि आकाशे शून्ये इति भावः । विस्मित्य विस्मित्य पुनः पुनर्विस्मयं प्राप्येत्यर्थः । आभीक्ष्ण्ये द्विर्भावः सहस्रकृत्वः सहस्रवारम् अपश्यन् प्रतिविम्बं हि निर्मलेषु वस्तुषु स्फटिकादिषु पतति न त्वाकाशे निरवलम्बे देशे, अस्माकन्तु कथमेतत् दृश्यते इति पुनः पुनः साश्चर्य्यं दृष्टवत्य इत्यर्थः । अत्रापि प्राग्वत् अकारणकार्य्योत्पत्तेर्विभावनालङ्कारः ॥ ४१ ॥

तस्मिन्निति । इन्दुरिव मुखं यासां ता इन्दुमुख्यः चन्द्रवदना नार्य्यः मिथः अन्योन्यं मिथोऽन्योन्यरहस्यपीत्यमरः । प्रतीति शेषः क्षिप्तं प्रेषितं किन्तु तस्मिन् नले विषज्य लगित्वा अर्द्धः पन्था अर्द्धपथः विशेषणसमासे समासान्तः । अर्द्धं नपुंसकमित्येकदेशिसमास इति केचित् । तत्र तु समांशो निर्वन्ध एव अत्र तु तथात्वनिश्चये प्रमाणाभावात् तदुपेक्ष्यम् । तस्मात् निवृत्तं परावृत्तं तस्य अङ्गरागेण चन्दनादिना छुरितं व्याप्तं कन्दुकं वर्त्तुलाकारं क्रीड़नद्रव्यं निरीक्ष्य दृष्ट्वा स्मरन्त्यः अनङ्गरागच्छुरितं ध्यायन्त्य इत्यर्थः । कथमेतदिति सन्दिहानाः सत्य इति भावः । विस्मेरतां विस्मयम् आपुः प्राप्तवत्यः । नमिकम्पीत्यादिना रप्रत्ययः । अत्रापि पूर्ववदकारणाङ्गरागच्छुरितत्वरूपकार्य्योत्पत्तेर्विभावनालङ्कारः ॥ ४२ ॥

पुंसि स्वभर्त्तृव्यतिरिक्तभूते भूत्वाप्यनीक्षानियमव्रतिन्यः।
छायासु रूपं भुवि वीक्ष्य तस्य फलं दृशोरानशिरे महिष्यः॥४३॥
विलोक्य तच्छायमतर्कि ताभिः पतिं प्रति स्वं वसुधापि धत्ते।
यथा वयं किं मदनं तथैनं त्रिनेत्रनेत्रानलकीलनीलम्?॥४४॥

---

पुंसीति। महिष्यः राजपत्न्यः स्वभर्त्ता निजपतिर्भीमनरेन्द्रः तद्व्यतिरिक्तभूतः तदितरः तस्मिन् पुंसि अनीक्षा अदर्शनं सैव नियमः सङ्कल्पः स एव व्रतम् अवश्यपालनीयं कर्म तद्वत्यः परपुरुषदर्शनाभावरूपं पातिव्रत्यं दधाना इत्यर्थः भूत्वापि भुवि मणिबद्धकुट्टिमभूमौ तस्य नलस्य रूपं सौन्दर्य्यं प्रतिबिम्बितमिति भावः। वीक्ष्य दृष्ट्वा दृशोः नेत्रयोः फलम् आनशिरे प्राप्ताः। सुन्दरवस्तुदर्शनेन नयनप्रीतिः प्रतिबिम्बस्य च पुरुषत्वाभावात् पातिव्रत्यनियमाभङ्गश्च तासां जात इति भावः। अत आदेरित्यभ्यासदीर्घः। अश्नोतेश्चेति नुडागमः॥४३

विलोक्येति। ताभिः महिषीभिः राजदारैः तस्य नलस्य छाया तच्छायं तत्प्रतिबिम्बमित्यर्थः। विलोक्य दृष्ट्वा यथा वयं स्वं पतिं स्वामिनं भीमं प्रति मदनं कामं दध्महे इति शेषः तथा वसुधापि पृथिव्यपि स्वं पतिं भीमं प्रति एनं त्रिनेत्रस्य हरस्य यः नेत्रानलः नयनाग्निः तस्य कीलेन ज्वालया वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियामित्यमरः। नीलः श्यामः तं कामं धत्ते किमिति अतर्कि तर्कितम्। अस्माकं मनसि यथा पतिं प्रति कामो वर्त्तते तथा पृथिव्या अपि हृदि मूर्त्तिमान् कामोऽयं विलसति कथमन्यथा ईदृशी छाया अस्यां दृश्यते इति उत्प्रेक्षितमित्यर्थः। अत्र नलच्छाये वसुधायाः पतिं प्रति मदनोत्प्रेक्षणमिति उत्प्रेक्षालङ्कारः। तच्छाये

रूपं प्रतिच्छायिकयोपनीत मालोकि ताभिर्यदि नाम कामम्।
तथापि नालोकि तदस्य रूपं हारिद्रभङ्गाय वितीर्णभङ्गम् ४५

भवन्नदृश्यः प्रतिविम्बदेह-व्यूहं वितन्वन् मणिकुट्टिमेषु।
पुरं परस्य प्रविशन् वियोगी योगीव चित्रं स रराज राजा॥४६॥

मदनविभ्रमस्तासां तस्मिंस्तु किमुच्यते इति भावः॥ ४४ ॥

रूपमिति। ताभिः राजमहिषीभिः प्रतिच्छाया एव प्रतिच्छायिका स्वार्थे कः, कात्पूर्वस्येकारः तयैव प्रतिच्छायिकया छायारूपप्रतिकृत्येत्यर्थः। उपनीतम् उपस्थापितं रूपं सौन्दर्य्यं स्वरूपं वा यदि नाम यद्यपि कामं सम्यक् आलोकि दृष्टं तथापि हारिद्रभङ्गाय सुवर्णखण्डाय हरिद्राच्छेदाय वा हरिद्रारक्ते हारिद्रं सुवर्णेऽपि तथेष्यते इति। भङ्गस्तरङ्गे रुग्भेदे भङ्गो जयविपर्य्यये। भङ्गः खण्डेऽपि चाख्यात इति च विश्वः। वितीर्णः दत्तः भङ्गः पराजयः येन तथाभूतम् अतिगौरमित्यर्थः तत् प्रसिद्धम् अस्य नलस्य रूपं वर्णः न आलोकि न दृष्टम् अत्र रूपमालोकि रूपं नालोकीति विरोधालङ्कारः अर्थभेदात्तु तत्परिहारः। तद्दर्शने ताः कथमिवाभविष्यन्निति न जाने इति भावः॥ ४५ ॥

भवन्निति। वियोगी प्रियाविच्छेदवान् अयोगी च स राजा नलः अदृश्यः देववरप्रभावात् अदर्शनतां गतः भवन् तथा मणिकुट्टिमेषु मणिमयबद्धभूमिषु प्रतिविम्बदेहानां व्यूहं समूहं वितन्वन् विस्तारयन् तथा परस्य पुरं नगरं गृहोपरिगृहं वा देहञ्च प्रविशन् पुरं पाटलिपुत्रे स्याद् गृहोपरिगृहे पुरम्। पुरं पुरि शरीरे चेति विश्वः। योगीव अणिमादिसिद्धो मुनिरिव चित्रम् आश्चर्य्यं रराज शुशुभे। यथा योगी अणि-

पुमानिवास्पर्शि मया भ्रमन्त्या छाया मया पुंस इव व्यलोकि ।
ब्रुवन्निवातर्कि मयापि कश्चिदिति स्म स स्त्रैणगिरः शृणोति॥४७॥
अम्बां प्रणत्योपनता नताङ्गी नलेन भैमी पथि योगमाप ।
स भ्रान्तिभैमीं विविचे न ताञ्च सा तञ्च नादृश्यतया ददर्श॥४८॥

मादिसिद्धिवशात् अदृश्यो भवति, कदाचित् कायव्यूहं तनोति परशरीरञ्च प्रविशति विषयेभ्यः वियुक्तश्च भवति तद्वदयं तथा कुर्वन् आश्चर्यं राजते स्म। यच्च वियोगी अपि योगीव रराजेति तच्चित्रमिति ध्वन्यते। अतएव विरोधालङ्कारः तदुत्थापितेयमुपमेत्यनयोरङ्गाङ्गिभावेन सङ्करः॥ ४६ ॥

पुमानिति। स नलः भ्रमन्त्या सञ्चरन्त्या मया पुमानिव पुरुष इव कश्चिदिति शेषः अस्पर्शि स्पृष्टः, मया पुंस इव पुरुषस्येव छाया प्रतिबिम्बं व्यलोकि दृष्टा, मया कश्चित् पुमानिति शेषः ब्रुवन्निव किमपि जल्पन्निव अतर्कि उत्प्रेक्षितः सर्वत्र कर्मणि लुङ्। इत्येवं रूपाः स्त्रीणां समूहः स्त्रैणं तस्य गिरः वाचः यद्वा स्त्रीषु भवाः स्त्रैण्यः ताः गिरः स्त्रीपुंसाभ्यां नञ्स्नञावित्यादिना भवाद्यर्थेषु नञ्प्रत्ययः। शृणोति स्म शुश्राव। लट् स्मे इति भूते लट्॥ ४७ ॥

अथ भैम्या सह पथि नलस्य सङ्गतावपि परस्परं तद्ज्ञानाभावमाह, अम्बामिति। नताङ्गी यौवनभरेणानतावयवा भैमी अम्बां मातरम् अम्बा सवित्री जननी च मातेति हलायुधः। प्रणम्य अभिवन्द्य उपनता प्रतिनिवृत्ता पथि नलेन योगं सङ्गम् आप प्राप्तवती। किन्तु स नलः भ्रान्तिभैमीं तन्मयतारूपकामदशया उपस्थापितां सङ्कल्परूपामिति यावत् भैमीं ताञ्च तात्त्विकीं भैमीञ्च न विविचे न विवेक्तु

प्रसूप्रसादाधिगता प्रसूनमाला नलोस्योद्भ्रमवीक्षितस्य ।
क्षिप्तापि कण्ठाय तयोपकण्ठस्थितं तमालम्बत सत्यमेव ॥४९॥
स्रग्वासनादृष्टजनप्रसादः सत्येयमित्यद्भुतमाप भूपः ।
क्षिप्तामदृश्यत्वमिताञ्च माला मालोक्य तां विस्मयते स्म बाला ५०

---

अशाकेत्यर्थः । पुनः पुनर्भ्रान्तिभैम्या विप्रलब्धतया तां सत्यामपि भ्रान्तिभैमी एषा, तात्त्विकी वेति संशयादिति भावः । सा च भैमी तं नलम् अदृश्यतया दर्शनाविषयतया न ददर्श नावलोकितवतीत्यर्थः ॥ ४८ ॥

प्रस्विति । प्रसूः माता जनयित्री प्रसूर्मातेत्यमरः । तस्याः प्रसादेन अनुकम्पया अधिगता प्राप्ता प्रसूनमाला पुष्पमाला तया दमयन्त्या उद्भ्रमवीक्षितस्य भ्रान्तिदृष्टस्य पुनः पुनः तन्मयतारूपकामदशया प्रतिक्षणमलीकदृष्टस्येति भावः। नलस्य कण्ठाय कण्ठमुद्दिश्येत्यर्थः, क्षिप्तापि उपकण्ठे अन्तिके उपकण्ठान्तिकाभ्यर्णेत्यमरः । स्थितं सत्यं तथ्यं तं नलमेव आलम्बत प्राप ॥ ४९ ॥

स्रगिति । भूपो भूपतिर्नलः वासनया निरन्तरसङ्कल्पेन दृष्टस्य जनस्य भ्रान्तिभैम्या इत्यर्थः । प्रसादः अनुग्रहः इयं स्रक् माला सत्या इति अद्भुतम् आश्चर्यम् आप अलीकदृष्टया क्षिप्ता माला अलीकैव भवति इयन्तु तथ्येति कथमेतदिति विस्मयं प्राप्तवान् । बाला भैमी च क्षिप्ताम् आत्मनेति शेषः, तां मालाम् अदृश्यत्वमितां देववरप्रभावात् नलगात्रस्पर्शमात्रेणैव दर्शनाविषयतां गतामित्यर्थः । आलोक्य दृष्ट्वा विस्मयते स्म किमेतत् क्षिप्ता मया माला कथमनुपद एव अदर्शनतां गतेति विस्मिता अभवत् ॥ ५० ॥

अन्योन्यमन्यत्ववदीक्षमाणौ परस्परेणाध्युषितेऽपि देशे ।
आलिङ्गितालीकपरस्परान्तस्तथ्यं मिथस्तौ परिषस्वजाते ॥५१॥
स्पर्शं तमस्याधिगतापि भैमी मेने पुनर्भ्रान्तिमदर्शनेन ।
नृपः स पश्यन्नपि तामुदीतस्तम्भो न धर्त्तुं सहसा शशाक ५२

अन्योन्यमिति। तौ भैमीनलौ परस्परेण अध्युषिते तत्त्वतोऽधिष्ठिते देशे प्रदेशे एकस्मिन्नेव भूमिभागे इति भावः। अन्योन्यं परस्परम् अन्यत्ववत् अन्यस्थानस्थिताविव इह मनोरथोपस्थापिताविवेति यावत् ईक्षमाणौ पश्यन्तौ सन्तौ आलिङ्गितम् अलीकपरस्परं सङ्कल्परूपमन्योन्यमिति अन्तः अन्तःकरणं यस्मिन् कर्मणि तद् यथा तथा अव्ययोत्तरपदो बहुव्रीहिरव्ययम्। मिथः परस्परं तथ्यं यथार्थमेव परिषस्वजाते आलिङ्गितवन्तौ। उपसर्गात् सुनोतीत्यादिना षत्वम्। उभौ सत्यमालिङ्गितावपि परस्परेण निरन्तरसङ्कल्पमयतत्तत्स्वरूपप्रतारितत्वात् अतथ्यमेव मन्यमानौ तस्थतुरिति भावः॥ ५१ ॥

स्पर्शमिति। भैमी दमयन्ती अस्य नलस्य तं स्पर्शम् अधिगतापि प्राप्तापि अदर्शनेन दर्शनविषयत्वेन पुनः भ्रान्तिं भ्रमोऽयं मे इति भावं मेने विवेचितवती अतस्तद्धारणे न प्रयत्न इति भावः। स नृपः पश्यन्नपि साक्षात् कुर्वन्नपि उदीतः उद्गतः स्तम्भः सत्त्वोदयजनितनिश्चेष्टत्वलक्षणो भावः यस्य तथाभूतः अतएव तां भैमीं सहसा धर्त्तुं ग्रहीतुं न शशाक न शक्तोऽभूदित्यर्थः। स्पर्शजनितसुखातिशयेन सत्त्वोद्रेकात् निश्चेष्टशरीरः कथं धर्त्तुं शक्नुयादिति भावः। उदीतेति ईङ्गताविति दीर्घेण धातुना निष्पन्नम्। अत्र पूर्वार्द्धे अदर्शनेनेति पदार्थस्य भ्रान्तिमाने हेतुत्वात् उत्तरार्द्धे च उदीतस्तम्भ

स्पर्शातिहर्षादृतसत्यमत्या प्रवृत्त्य मिथ्यामतिलब्धबाधौ ।
पुनर्मिथस्तथ्यमपि स्पृशन्तौ न श्रद्दधाते पथि तौ विमुग्धौ ॥५३॥
सर्वत्र संवाद्यमबाधमानौ रूपश्रियातिथ्यकरं परं तौ ।
न शेकतुः केलिरसात् विरन्तु मलीकमालोक्य परस्परन्तु॥५४

---

इति पदार्थस्य धारणाशक्तेर्हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गद्वयं तदुक्तं दर्पणे। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति ॥ ५२ ॥

स्पर्शेति। तौ भैमीनलौ पथि मार्गे स्पर्शेन यः अतिहर्षः निरतिशयानन्दः तेन आदृता तदन्यथानुपपत्त्या आदरेण स्वीकृतया सत्यमत्या सत्योऽयं स्पर्शः अलीकस्येदृक्सुखजननादर्शनादिति निश्चितबुद्ध्या प्रवृत्त्य पुनरपि स्पर्शादौ जातप्रवृत्तीभूत्वा पुनः मिथ्यामत्या स्पर्श एष मिथ्येति बुद्ध्या लब्धा बाधा याभ्यां तथाभूतौ यतोऽयं भ्रमः पुनः पुनः प्रतारयति ततो नैतत् सत्यमिति निश्चिन्वानावित्यर्थः। तथ्यं स्पृशन्तावपि विमुग्धौ स्पर्शसुखातिशयेन मोहं गतौ अतएव न श्रद्दधाते न विश्वसितवन्तौ श्रत्पूर्वाद्दधातेर्लिटि तङ् श्रच्छब्दस्य अदन्तरोरुपसङ्ख्यानमित्युपसर्गत्वाद्धातोः प्राक् प्रयोगः। अत्र विमुग्धाविति पदार्थस्य श्रद्धाया अनुत्पत्तेर्हेतुत्वात् काव्यलिङ्गमलङ्कारः ॥ ५३ ॥

इत्थमलीकभ्रमविषयत्वेऽपि परस्परस्य तदानीं तत्रापि सत्यवद्भावातिशयं दर्शयति, सर्वत्रेति। तौ भैमीनलौ रूपश्रिया सौन्दर्य्यशोभया सर्वत्र सर्वेषु अवयवेष्वित्यर्थः। संवाद्यं संवादनीयम् अनुकरणार्हमिति यावत् परम् अत्यन्तम् आतिथ्यकरं मिथः सत्कारकृदित्यर्थः। अलीकन्तु मिथ्याभूतमपि

परस्परस्पर्शरसोर्मिसेकात् तयोः क्षणं चेतसि विप्रलम्भः।
स्नेहातिदानादिव दीपिकार्चिर्निमिष्य किञ्चित् द्विगुणं दिदीपे ५५

वेश्माप सा धैर्य्यवियोगयोगाद् बोधञ्च मोहञ्च मुहुर्दधाना।
पुनः पुनस्तत्र पुरः स पश्यन् बभ्राम तां सुभ्रुवमुद्भ्रमेण॥५६॥

प्राक्संस्कारवशात् तथात्वेन प्रतीयमानमपीति भावः। आलोक्य सत्यत्वेनेति यावत् केलिरसात् दर्शनस्पर्शनादिक्रीड़ानुरागात् विरन्तुं निवर्त्तितुं न शेकतुः न शक्तौ बभूवतुः प्रत्युत अलीकेनापि परस्परेण सत्यतया प्रतीयमानेन रन्तुमभिलषितवन्ताविति भावः॥ ५४॥

परस्परेति। तयोर्भैमीनलयोः चेतसि चित्ते स्थित इति शेषः विप्रलम्भः अन्योन्यविरहः परस्परस्य स्पर्शः तेन यो रसः सुखातिशयः तस्य ऊर्मिभिः तरङ्गैः प्रवाहैरित्यर्थः। सेकात् सेचनात् सङ्गादिति भावः। स्नेहस्य तैलस्य अतिदानात् दीपस्य अर्चिरिव शिखेव अर्चिर्हेतिः शिखा स्त्रियामित्यमरः। किञ्चिदीषत् निमिष्य निमील्य ईषत् सङ्कुच्येत्यर्थः। द्वौ गुणौ आवृत्तौ यस्मिन् तद् यथा तथा अधिकमिति भावः दिदीपे जज्वाल। अतितैलसेकेन क्षणं निर्वाणप्रायो दीपः समनन्तरमेव यथा अधिकं ज्वलति तथा तेन परस्परस्पर्शसुखेन क्षणं प्रशमितोऽपि विरहः समनन्तरमेव भृशमुद्दीपित इति भावः। उपमालङ्कारः॥ ५५॥

वेश्मेति। सा भैमी धैर्य्यं धीरत्वं वियोगः विच्छेदः तयोर्योगात् सद्भावात् मुहुः पुनः पुनः बोधञ्च ज्ञानञ्च मोहञ्च मूर्च्छाञ्च धैर्य्यवशात् बोधं वियोगवशात् मोहमिति भावः। दधाना धारयन्ती सती वेश्म भवनं स्वं कुमारीगृहमिति

पद्भ्यां नृपः सञ्चरमाण एष चिरं परिभ्रम्य कथङ्कथञ्चित् ।
विदर्भराजप्रभवानिवासं प्रासादमभ्रङ्कषमाससाद ॥ ५७ ॥
सखीश्रतानां सरसैर्विलासैः स्मरावरोधभ्रममावहन्तीम् ।

भावः आप प्राप्तवती । स नलस्तत्र अन्तःपुरे तां सुभ्रुवं सुन्दरीं भैमीं स्वगृहगतामपीति शेषः उद्भ्रमेण उच्चैर्भ्रान्त्या पुनः पुनः पश्यन् बभ्राम चचार तत्प्राप्त्याशयेति भावः । अतएवात्र चपलतारूपः सञ्चारिभाव उक्तः तदुक्तं दर्पणे । मात्सर्य्यद्वेष-रागादेश्चापल्यं त्वनवस्थितिः । तत्र भर्त्सनपारुष्य स्वच्छन्द-गमनादय इति ॥ ५६ ॥

अथास्य भैम्याः प्रासादप्राप्तिमाह, पद्भ्यामिति । एष नृपः पद्भ्यां सञ्चरमाणः पर्य्यटन् समस्तृतीयादिति तृतीया-योगे आत्मनेपदम् । चिरं परिभ्रम्य कथं कथञ्चित् अतिकष्टेन विदर्भाणां राजा विदर्भराजः राजाहः सखिभ्यष्टजिति टच्-प्रत्ययः भीम इत्यर्थः । प्रभवः कारणं यस्याः तस्याः दमयन्त्या इत्यर्थः, निवासं वासभवनं विदर्भराजप्रभवाभिराममिति पाठे विदर्भराजप्रभवया दमयन्त्या तदधिष्ठानेनेति भावः । अभि-रामं मनोहरमित्यर्थः । अभ्रं कषतीति अभ्रङ्कषम् अत्युन्नत-मिति भावः, सर्वकूलाभ्रकरीषेषु कष इति खच्प्रत्ययः । मुमागमः । प्रसीदन्ति मनांसि अस्मिन्निति प्रासादः अधि-करणे घञ्प्रत्ययः । तं सौधमित्यर्थः आससाद प्राप । ५७ ॥

अथ तस्याः सभावलोकनमाह, सखीति । स नलः तस्य प्रासादस्य प्रतोल्यां रथ्यायां रथ्या प्रतोली विशिखेत्यमरः । प्राङ्गणे वा या मणिवेदिका मणिनिबद्धपरिष्कृतप्रदेशः तस्यां सखीशतानां सहचरीसङ्घानां सरसैः रसवद्भिः अनुरागव्यञ्जकै-

विलोकयामास सभां स भैम्यास्तस्य प्रतोलीमणिवेदिकायाम् ५८
कण्ठः किमस्याः पिकवेणुवीणास्तिस्रोजिताः सूचयति त्रिरेखः
इत्यन्तरस्सूयत यत्र काचिन्नलेन बाला कलमालपन्ती ॥५९॥
एतं नलं तं दमयन्ति! पश्य त्यजार्त्तिमित्यालिकुलप्रबोधान् ।

---

रिति भावः विलासैः यौवने सत्त्वोदयजनितैः भावविशेषैः तथा-चोक्तं दर्पणेन । यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् । विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिनेति । स्मरस्य कामस्य योऽवरोधः अन्तःपुरं तस्य भ्रमः भ्रान्तिः ताम् अतस्मिन् तद्बुद्धिमिति यावत् आवहन्तीं जनयन्तीं सखीनां रतितुल्य-त्वात्तथा भ्रम इति भावः । भैम्याः सभाम् आस्थानीं विलोकयामास ददर्श ॥ ५८ ॥

इतःपरं चतुर्दशभिः कुलकेन सभां वर्णयति, कण्ठ इति । यत्र सभायां कलं मधुरम् आलपन्ती जल्पन्ती कापि बाला मुग्धा दमयन्तीसखी नलेन तिस्रो रेखाः अस्य सन्तीति त्रिरेखो रेखात्रयालङ्कृतः अस्याः कण्ठः तिस्रः पिकवेणुवीणाः जिताः स्वरास्तेन पराभूताः सूचयति किम् इति अन्तः अन्तः-करणे अस्तूयत स्तुता रेखाणां तिसृणामेकया पिका जिताः, द्वितीयया वेणवः वंशीवाद्यानि जिताः तृतीयया वीणाः जिता इति ज्ञापयति किमिति मनसि प्रशंसामनीयतेति फलितार्थः। सभायां कस्याश्चित् सख्या मधुरस्वरं श्रुत्वा नलोऽतितरां प्रीतो बभूवेति तात्पर्य्यम् । अत्र पिकादित्रयविजयसूचकत्वोत्प्रेक्षा-हेतुत्वात् काव्यलिङ्गानुप्राणिता उत्प्रेक्षेति अनयोरङ्गाङ्गिभावेन सङ्करः ॥ ५९ ॥

एतमिति । यत्र सभायां स नलः हे दमयन्ति! एतम्

श्रुत्वा स नारीकरवर्त्तिशारी-मुखात् स्वमाशङ्कत यत्र दृष्टम् ॥ ६०
यत्रैकयालीकनलीकृतालो-कण्ठे मृषाभीमभवीभवन्त्या ।
तद्दृक्पथे दौहृदिकोपनीता शालीनमाधायि मधूकमाला ॥ ६१

उपस्थितम् आगतं वा तं यदर्थे एवं क्लिश्नासीति नलं पश्य अवलोकय आर्त्तिं पीड़ां दुःखं त्यज इत्येवरूपान् आलिकुलस्य सखीसमूहस्य प्रबोधान् प्रबोध्यते एभिरिति प्रबोधाः तान् करणे घञ्प्रत्ययः। आश्वासवचनानि नार्य्याः कस्याश्चित् स्त्रियाः करे हस्ते वर्त्तते इति नारीकरवर्त्तिनी सा चासौ शारी पक्षिणीविशेषश्चेति तस्या मुखात् श्रुत्वा आकर्ण्य स्वमात्मानं स्वस्वरूपमित्यर्थः दृष्टम् आशङ्कत नलं पश्येति निर्देशात् किमहमेताभिर्दृष्टः, कथमन्यथा शारिका एवं वक्तीति आशङ्कितवान्। यदा यदा भैमी नितरां वियोगविधुरा मोहं गतवती, तदा तत्सखीभिस्तत्प्रबोधाय सखि! नलोऽयमागत इति मिथ्यावादेन कथञ्चित् मोहापनयं कुर्वति शारिका सर्वदा तच्छ्रवणेन अभ्यासात् कदाचित् कदाचित् तदेव जल्पति स्म । नलस्य तत्तदजानतस्तदानीं तद्वाक्यमाकर्ण्य स्वस्य दर्शनशङ्का सुतरामेव जातेति भावः ॥ ६० ॥

यत्रेति। यत्र सभायां तस्य अदृश्यतया सञ्चरतः नलस्य दृशोः पन्था दृक्पथः तस्मिन् तद्दृष्टिमार्गे इत्यर्थः मृषा अलीका भीमभवा मृषाभीमभवा मिथ्या भैमी इत्यर्थः अतया तया भवन्त्या मृषाभीमभवीभवन्त्या अभूततद्भावे च्विप्रत्ययः। आरोपितभैमीरूपधारिण्येत्यर्थः। एकया कयाचित् सख्या अलीकः नलः अलीकनलः असः स कृता अलीकनलीकृता आरोपितनलरूपीकृतेत्यर्थः अत्रापि च्विप्रत्ययः। या आली

चन्द्राभमाभ्रं तिलकं दधाना तद्दन्निजास्येन्दुकृतानुबिम्बम्।
सखीमुखे चन्द्रसखे ससर्ज चन्द्रानवस्थामिव कापि यत्र॥६२॥

---

सखी तस्याः कण्ठे दौहदिकया दोहदम् अभिलाषः स एव दौहदिका तया स्वार्थे कन्प्रत्ययः। कुतूहलेनेत्यर्थः यद्वा दोहदं वृक्षाणां प्रसवहेतुभूतं जलसेकादिकं वेत्तीति दौहदिका मालिनी तया उपनीता उपस्थापिता केचित्तु दौहदिका धात्री तया उपनीतेत्याहुः। मधूकमाला मधूकाख्यकुसुममाला शालीनं लज्जामन्थरं यथा तथा आधायि अर्पिता दधातेः कर्मणि लुङ्। आतो युक् चिण्कृतोरिति युगागमः। भैमीविनोदार्थं सखीभिस्तथा क्रीड़ा कृतेति भावः। एतेन अस्या नलप्राप्तौ विलम्बासहत्वं सूचितम्॥ ६१॥

चन्द्राभमिति। यत्र सभायां कापि सखी चन्द्राभं चन्द्रसदृशम् आभ्रम् अभ्रं नाम स्वच्छवस्तुविशेषः तद्विकारं तिलकं चन्द्रसखे चन्द्रानुकारिणीत्यर्थः। सखीमुखे अन्यस्याः सख्या मुखे तद्वत् अभ्रतिलकवत् यत् निजं स्वीयम् आस्यं मुखम् एव इन्दुश्चन्द्रः तेन कृतम् अनुबिम्बं प्रतिबिम्बं यस्मिन् कर्मणि तद् यथा तथा दधाना विरचयन्ती सती चन्द्रस्य अनवस्थां दुरवस्थामित्यर्थः। यद् वा आनन्त्यम् अथवा आनन्त्यात् अबहुमानमिति यावत्। ससर्जेव कृतवती इवेति उत्प्रेक्षा। सखीमुखानां तल्ललाटाभरणानाञ्च चन्द्रतुल्यत्वात् चन्द्राणां बाहुल्यं बहुलेषु च वस्तुषु सौलभ्यात् अनादरश्च भवतीति भावः। अथवा अत्र तिलकनिष्पत्तौ स्वच्छद्रव्यतया परस्पराभिमुखावस्थितदर्पणवत् इतरेतराभ्रतिलकसंक्रान्तेतरेतरतिलकचन्द्रपरम्परानन्त्यात् अनवस्था तथा तिलकक्रियानिष्पत्तिश्चेति चित्रमिति भावः॥ ६२॥

दलोदरे काञ्चनकेतकस्य क्षणात् मसीभावुकवर्णलेखम् ।
तस्यैव यत्र स्वमनङ्गलेखं लिलेख भैमी नखलेखनीभिः ॥६३॥
विलेखितुं भीमभुवो लिपीषु सख्यातिविख्यातिभृतापि यत्र ।
अशाकि लीलाकमलं न पाणि रपारि कर्णोत्पलमस्ति नैव॥६४

---

दलेति। यत्र सभायां भैमी दमयन्ती काञ्चनकेतकस्य स्वर्णकेतकीकुसुमस्य दलोदरे पत्राभ्यन्तरे नखा एव लेखन्यः ताभिः करणैः तस्यैव नलस्यैव कृते इति शेषः। क्षणात् लेखनक्षण एवेत्यर्थः मसीभावुका मसीलिखिता इव श्यामीभवन्त्य इत्यर्थः। वर्णरेखा अक्षराणां रचना यस्मिन् तत् तथाभूतं केतकीपुष्पेषु नखादिलेखास्तत्क्षणमेव श्यामताम् आपद्यन्ते इति प्रसिद्धिः। स्वं स्वकीयम् अनङ्गलेखं कामजनितभावव्यञ्जकलिपिमित्यर्थः लिलेख लिखितवतीत्यर्थः। विरहिणीभिः कान्तं प्रति स्वाभिलाषव्यञ्जकलिपिः प्रेष्यते इति प्रसिद्धिः॥ ६३ ॥

विलेखितुमिति। यत्र सभायां लिपीषु चित्रकर्मसु कृदिकारादक्तिन इति वा ङीप् वक्तव्यः। अतिशयेन विख्यातिः विशेषेण ख्यातिः तां बिभर्त्तीति तया भृतः क्विप्। अतिनिपुणयेत्यर्थः। सख्या भीमभुवः दमयन्त्या लीलाकमलं क्रीड़ापद्मं विलेखितुं विशेषेण चित्रयितुमित्यर्थः। पर्य्याप्तिवचनेष्वलमर्थेषु तुमुन्प्रत्ययः। अशाकि शक्तं कर्मणि लुङ्। पाणिः करः न अशाकि, कर्णोत्पलम् अवतंसनीलोत्पलं विलेखितुम् अपारि पारितम् अस्ति नेवन्तु नैव अपारि। अत्रापि कर्मणि लुङ्। चित्रकर्मकुशलाः लौकिकमेव वस्तु यथायथं चित्रयितुं शक्नुवन्ति न तु अलौकिकं भैम्याः पाणिर्नेत्रञ्च निरुपमत्वात्

भैमीमुपावीणयदेत्य यत्र कलिप्रियस्य प्रियशिष्यवर्गः ।
गन्धर्ववध्वः स्वरमध्वरीण-तत्कण्ठनालैकधुरीणवीणः ॥६५॥
नावा स्मरः किं हरभीतिगुप्ते पयोधरे खेलति कुम्भएव ।
इत्यर्द्धचन्द्राभनखाङ्कचुम्बि-कुचा सखी यत्र सखीभिरूचे॥६६॥

---

अलौकिकमेव तत्कथं चिन्तयितुं शक्यते इति भावः। एतेन पाणिरस्याः कमलादपि तथा नेत्रं नीलोत्पलादपि मनोज्ञमित्युपमानादुपमेयस्याधिक्यप्रतिपादनात् व्यतिरेको व्यज्यते॥६४॥

भैमीमिति। यत्र सभायां गन्धर्वाणां बध्वः गन्धर्वबध्वः गन्धर्वयोषित एव कलिप्रियस्य कलहप्रियस्य प्रियकलहस्य नारदस्येत्यर्थः वा प्रियस्येति बहुब्रीहौ प्रियस्य परनिपातः। नारदाय रोचते कलह इति वैयाकरणाः। प्रियः शिष्यवर्गः छात्रसमूहः एत्य आगत्य स्वरमधुना स्वरामृतेन अरीणम् अक्षीणं पूर्णमिति यावत् ल्वादिभ्यश्चेति निष्ठानत्वे णत्वम्। यत् तस्याः भैम्याः कण्ठनालं तेन सह एकां धुरं वहन्तीत्येकधुराः सदृश्य इत्यर्थः एकधुराल्लुक् चेति खप्रत्ययः। वीणाः यस्य तथोक्तः सन् भैमीं दमयन्तीम् उपावीणयत् वीणया उपागायत् वीणास्वरेण दमयन्तीगुणान् अकीर्त्तयदित्यर्थः सत्यापपाशेत्यादिना णिचि लङ्। गन्धर्वदाराः नारदेन सुशिच्चिता अतएव तस्यातिप्रिया अपि वीणास्वनादपि दमयन्त्याः स्वनो मधुर इति मन्वानाः तत्संवादार्थं तत्सकाशमागत्य तां वीणया तुष्टुवुरिति भावः। कण्ठनालेति नालपदोपादानात् स्वरे च मध्वारोपात् दमयन्तीमुखस्य कमलत्वं कण्ठस्य च तन्नालत्वं तन्निःसृतभाषितस्य च मधुत्वं व्यज्यते॥६५॥

नावेति। यत्र सभायाम् अर्द्धचन्द्रश्चन्द्रार्द्धं तस्येव आभा

स्मराशुगीभूय विदर्भसुभ्रू-वक्षो यदक्षोभि खलु प्रसूनैः।
स्रजं सृजन्त्या तदशोधि तेषु यत्नैकया सूचिशिखां निखाय ६७

यस्य तादृशः अर्द्धचन्द्राकार इत्यर्थ इत्यर्थः। यो नखाङ्कः नखक्षतचिह्नं चुम्बति स्पृशतीति तथाभूतः कुचः स्तनः यस्याः तथाभूता सखी कापीति शेषः सखीभिरन्याभिरिति शेषः, हे सखि! स्मरः कामः हरात् शम्भोः या भीतिः दाहभयमित्यर्थः तस्मात् गोपायति आत्मानमिति शेषः हरभीतिगुप् हरभीतेः परित्राणार्थीत्यर्थः सन् गुपः क्विप् ते तव पयसां जलानां क्षीराणाञ्च धरः पयोधरः स्तनः तस्मिन् पयः स्यात् क्षीरनीरयोरिति कोषः। कुम्भ एव कलश एव नावा नौकया खेलति किम्? यथा दाहपरिहारार्थी जलाशये नौकया विचरन् दाहदुःखमपनयति तथा कामः शिवनयनानलदह्यमानदेहः तद्दाहशान्त्यर्थं तव स्तनरूपजलाधारे नखाङ्करूपनौकया विहरतीवेति ऊचे उक्ता सपरिहासमिति शेषः। हरभीतिगुप्तः इति सविसर्गपाठे हरभीत्या गुप्तः गुप्त्यर्थं सुखमवस्थातुमिति भाव। सामान्ये षष्ठीति केचित्। तादृशं नखक्षतचिह्नं कामोद्दीपकमिति भावः। अत्र व्यस्तरूपकेणानुप्राणिता उत्प्रेक्षालङ्कारः॥ ६६॥

स्मरेति। यत्र सभायाम् एकया सख्या प्रसूनैः पुष्पैः स्मरस्य कामस्य आशुगीभूय शरीभूय विदर्भसुभ्रुवः दमयन्त्याः वक्षः हृदयम् अक्षोभि क्षुभितम् इति यत् तत् हृदयक्षोभणरूपं वैरमिति भावः। तेषु प्रसूनेषु सूचिशिखां सूच्यग्रं निखाय आरोप्य सूच्यग्रेण तानि विद्धेत्यर्थः। स्रजं मालां सृजन्त्या ग्रथ्नन्त्या सत्या अशोधि निर्यातितं खलूत्प्रेक्षायाम्। सूच्यग्रेण कुसुमवेधनं कृत्वा दमयन्तीहृदयवेधनवैरं निर्यातितमिवेत्यर्थः।

यत्रावदत्तामतिभीय भैमी त्यज त्यजेदं सखि! साहसिक्यम्।
त्वमेव क्वत्वा मदनाय दत्से बाणान् प्रसूनानि गुणेन सज्जान्॥६८
आलिख्य सख्याः कुचपत्रभङ्गीमध्ये सुमध्या मकरीं करेण।
यत्रालपत्तामिदमालि! यानं मन्ये त्वदेकावलिनाकनद्याः॥६९

---

हृदयवेधिनां तदनुरूपशासनं युक्तमेवेति भावः। काचित् मालां गुम्फयामासेति फलितार्थः॥ ६७॥

यत्रेति। यत्र सभायां भैमी दमयन्ती अतिभीय अतिशयेन भयं प्राप्य तां मालारचयित्रीं सखीम् अवदत् उवाच, हे सखि। इदं सहसा प्रवर्त्तते इति साहसिकः अविमृष्यकारीत्यर्थः। ओजः सहोऽम्भसा वर्त्तते इति ठक्। तस्य कर्म्म साहसिक्यं ब्राह्मणादित्वात् ष्यञ्प्रत्ययः। मालाग्रन्थनरूपमिति भावः त्यज त्यज वीप्सायां द्विरुक्तिः। त्वमेव प्रसूनानि पुष्पाणि बाणान् गुणेन सूत्रेण मौर्व्या च सज्जान् संयुक्तान् क्वत्वा मदनाय कामाय दत्से ददासि। त्वं मत्सखी भूत्वा मद्वैरिणः कामस्य साहाय्यं करोषीति महानयं ते अनयः यतः कुसुममालां दृष्ट्वा मौर्वीसंसक्तकामबाणपरम्परां मन्यमाना बिभेमीति भावः॥ ६८॥

आलिख्येति। यत्र सभायां कापि सुमध्या सखी सख्याः कस्याश्चित् कुचयोः स्तनयोः पत्रभङ्गीनां पत्रावलीनां मध्ये मकरीं जलजन्तुविशेषस्त्रियं करेण हस्तेन आलिख्य चित्रयित्वा तां सखीम् आलपत् अब्रवीत् सपरिहासमिति शेषः। हे आलि! सखि! इदं मकरीलक्षणमिति भावः तव एकावलिर्हारविशेषः एकावल्येकयष्टिकेत्यमरः। सैव नाकनदी मन्दाकिनी गङ्गेति यावत् तस्याः यानं वाहनं गङ्गा मकरवाहिनीति प्रसिद्धेः।

तामेव सा यत्र जगाद भूयः पयोधियादः कुचकुम्भयोस्ते ।
सेयं स्थिता तावकहृच्छयाङ्क-प्रियाऽस्तु विस्तारयशःप्रशस्तिः॥७०॥
शारीं चरन्तीं सखि! मारयैता मित्यक्षदाये कथिते कयापि।
यत्र स्वघातभ्रमभीरुशारी-काकूत्थसाकूतहसः स जज्ञे ॥७१॥

---

मन्ये सम्भावयामि। इदमित्यत्र इयमिति पाठे इयं मकरी त्वदेकावलिनाकनद्या यानमिति मन्ये इति त्यध्याहारेण व्याख्येयम्। रूपकालङ्कारेणोत्प्रेक्षालङ्कारः सङ्कीर्य्यते ॥ ६९ ॥

तामिति। यत्र सभायां सा पूर्वोक्ता पत्रभङ्गीरचयित्री कापि तामेव सखीं भूयः पुनः जगाद उक्तवती, हे सखि! ते तव कुचकुम्भयोः स्थिता पयोधियादः समुद्रजलजन्तुभेदः तव अयं तावकः त्वन्निष्ठ इत्यर्थः। यो हृदि शेते इति हृच्छयः कामः तस्य अङ्कः ध्वजः तस्य प्रिया सेयं मकरी विस्तारयशसः तयोः कुचयोरेव परिणाहकीर्त्तेः प्रशस्तिः प्रशंसासूचिका वर्णावलिः अस्तु भवतु। तव कुचयोरतीव विस्तृतिर्यतः तादृशं महाजलनिधिं परित्यज्य मकरीऽत्र निवसतीति भावः। मकरध्वजः कामस्तव हृदि वर्त्तते ततश्च मकर्य्या अपि मकरस्य स्वप्रियस्य अनुसरणं युज्यते इति तव हृदयस्थितकुचे मकरीचिह्नं दृश्यते इति परिहासोक्तिरिति भावः। अत्र पयोधियाद इति व्यस्तरूपकम् ॥ ७० ॥

शारीमिति। यत्र सभायां स नलः कयापि सख्या, हे सखि! एतां चरन्तीं शारीम् अक्षोपकरणभूतगुलिकामित्यर्थः। तदाख्यां पक्षिणीञ्च शारिरक्षोपकरणे तथा शकुनिकान्तरे इति विश्वः। मारय प्रहरेति अक्षदाये अक्षाणां पाशकानाम् अक्षास्तु देवनाः पाशकाश्च ते इत्यमरः। दायः दानं प्रक्षेप-

भैमीसमीपे स निरीक्ष्य यत्र ताम्बूलजाम्बूनदहंसलक्ष्मीम् ।
कृतप्रियादूत्यमहोपकार-मरालमोहद्रढ़िमानमूहे ॥ ७२ ॥
तस्मिन्नियं सेति सखीसमाजे नलस्य सन्देहमथ व्युदस्यन् ।
अपृष्ट एव स्फुटमाचचक्षे स एव रूपातिशयः स्वयं ताम् ॥७३॥

---

विशेषः तस्मिन् दायो दाने यौतकादिधने हृत्ते च पैतृके इति वैजयन्ती। कथिते सति स्वघातः स्वस्य आत्मनः घातः मारणं तत्र यो भ्रमः तेन भीरुः भयशीला या शारी शारिका पक्षिणी तस्या काक्वा विकृतस्वरेण दैन्योक्त्या मा मां जहीत्येवंरूपयेति भावः। काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरित्यमरः। उत्तिष्ठतीति उत्थः साकूतो साभिप्रायः हसो हास्यं यस्य तथाभूतः जज्ञे बभूव स्वनहसोर्वेति विकल्पादप्रत्ययः॥७१

भैमीति। यत्र सभायां स नलः भैम्या दमयन्त्याः समीपे ताम्बूलस्य जाम्बूनदहंसः सौवर्णहंसः तदाकारताम्बूलपात्रमित्यर्थः। तस्य लक्ष्मीं श्रियं निरीक्ष्य दृष्ट्वा कृतं प्रियाया भैम्या दूतमेव महान् उपकारः येन तस्मिन् मराले हंसे मोहस्य भ्रमस्य दृढस्य भावः द्रढ़िमा तं दार्ढ्यमित्यर्थः रऋतो हलादेर्लघोरित्यृकारस्य रेफादेशः। ऊहे वहति स्म वहेः कर्त्तरि लिटि तङ्। वचिस्वपीत्यादिना सम्प्रसारणम्। अत्र भ्रान्तिमानलङ्कारः तदुक्तं दर्पणे। साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति ॥ ७२ ॥

अथास्य नलस्य तासु दमयन्तीनिर्णयमाह, तस्मिन्निति। अथ सभाविलोकनानन्तरं तस्मिन् सखीनां समाजे संसदि इयं सा भैमी इति नलस्य सन्देहम् इयं किम् इयं वा इत्येवंरूपं व्युदस्यन् निराकुर्वन् सः प्रसिद्धः रूपातिशय एव

भैमीविनोदाय मुदा सखीभिस्तदाकृतीनां भुवि कल्पितानाम्।
नातर्कि मध्ये स्फुटमप्युदीतं तस्यानुविम्बं मणिवेदिकायाम् ७४
हुताशकीनाशजलेशदूती र्निराकरिष्णोः कृतकाकुयाञ्चाः ।

---

सौन्दर्य्यातिरेक एव अपृष्ट एव अननुयुक्त एव स्वयम् आत्मनैव तां दमयन्तीं सैवेयमिति स्फुटं स्पष्टम् आचचक्षे आख्यातवान्। प्रथमं नलस्य सखीसमूहेषु इयमियं वा दमयन्तीति संशयो जातः पश्चात् अलौकिकसौन्दर्य्यशालिनीं कामपि दृष्ट्वा इयमेव सेति निश्चय आसीदिति भावः। व्युदस्यन्नित्यत्र व्युदस्येति पाठे व्युदस्य निराकृत्येत्यर्थः॥ ७३॥

ननु अदृष्टस्यापि नलस्य पतितप्रतिविम्बदर्शनात्तासां कथं न सम्भ्रमो जातस्तत्राह, भैमीति। भैम्या दमयन्त्या विनोदाय सन्तोषाय मुदा कौतुकेन सखीभिः भुवि भूतले कल्पितानां रचितानां तस्य नलस्य आकृतीनां प्रतिकृतीनां मध्ये मणि-वेदिकायां रत्ननिबद्धपरिष्कृतभूमौ स्फुटं स्पष्टम् उदीतमपि उद्गतमपि प्रतिफलितमपीत्यर्थः। तस्य नलस्य अनुविम्बं प्रतिविम्बं न अतर्कि न तर्कितं स्वरचितप्रतिकृतिसाम्यात् पृथक्त्वेन न ज्ञातमिति यावत्। ताभिरिति शेषः। अतएवात्र सामान्यालङ्कारः तदुक्तं दर्पणे। सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैरिति। तेन च भ्रान्तिमानलङ्कारो व्यज्यते इत्य-लङ्कारेणालङ्कारध्वनिः। केचित्त्वत्र मीलितालङ्कारमाचख्युः तन्न समीचीनं मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरो-धानात् अस्य तु तुल्यगुणेन तुल्यगुणतिरोधानविषयत्वाच्च। अत्र समेन प्रतिकृतिगुणेन समस्य प्रतिविम्बस्य तिरोधान-मिति॥ ७४॥

भैम्या वचोभिः स निजां तदाशां न्यवर्त्तयद्दूरमपि प्रयाताम्॥७५॥
विज्ञप्तिमन्तः सभयः स भैम्यां मध्येसभं वासवसम्भलीयाम् ।
सम्भावयामास भृशं कृशाश स्तदालिवृन्दैरभिनन्द्यमानाम्॥७६॥

अथाग्न्यादिभिः प्रेषितासु दूतीषु भैम्या वैमत्यं दृष्ट्वा नलस्य तदाशा पुनरुज्जीवितेत्याह, हुताशेति। कृता काकुभिर्दीनवचोभिः याच्ञा स्वस्वप्रभुविषयिणी प्रार्थना याभिः तथाभूताः हुतमश्नातीति हुताशोऽग्निः, कीनाशो यमः जलानामीशो जलेशः 'जलाधिपो वरुण इत्यर्थः। तेषां दूत्यः ताः निराकरिष्णोः निराकुर्वत्याः भैम्याः दमयन्त्याः अलङ्कञित्यादिना इष्णुच्प्रत्ययः। न लोकेत्यादिना षष्ठीनिषेधाद् द्वितीया। वचोभिः वचनैः न तेषु मे रुचिरित्येवरूपैरित्यर्थः स नलः दूरमपि प्रयातां गताम् इन्द्रादिकपटवचसा विनष्टप्रायामिति भावः। दूरदेशगताञ्च निजां स्वीयामाशां दमयन्तीतृष्णां न्यवर्त्तयत् निवर्त्तयामास। दौत्याङ्गीकारात् परित्यक्तामपि भैमीप्रत्याशां पुनर्मनसि चकारेत्यर्थः॥ ७५॥

पुनश्च देवेन्द्रदूतीविज्ञापनश्रवणेनास्य उज्जीविता आशा क्षीणा जातेत्यत्राह, विज्ञप्तिमिति। स नलः सभाया मध्ये मध्येसभं पारे मध्ये षष्ठ्या वेति अव्ययीभावे नपुंसकह्रस्वत्वम्। तदालिवृन्दैः तस्या भैम्याः सखीसङ्घैः अभिनन्द्यमानां श्लाघ्यमानां वासवसम्भलीयाम् इन्द्रदूतीसम्बन्धिनीं कुट्टनी सम्भली समेत्यमरः। भैम्यां दमयन्त्यां विषये तत्समीपे वा विज्ञप्तिं विज्ञापनाम् इन्द्रस्त्वामेवमेवं वक्तीत्येवंरूपामित्यर्थः। भृशमतिशयेन कृशा क्षीणा आशा यस्य तथोक्तः अतएव सभयः सन् सम्भावयामास दमयन्ती इन्द्रगौरवात् एतां प्रार्थनामङ्गीकरिष्यतीति

लिपिर्न दैवी सुपठा भुवीति तुभ्यं मयि प्रेषितवाचिकस्य।
इन्द्रस्य दूत्यां रचय प्रसादं विज्ञापयन्त्यामवधानदानम्॥७७॥
सलीलमालिङ्गनयोपपीड़मनामयं पृच्छति वासवस्त्वाम्।
शेषस्त्वदाश्लेषकथापनिद्रैस्तद्रोमभिः सन्दिदिशे भवत्यै॥७८॥

सम्भावितवान्। सम्भालयामासेति पाठे सम्भालयामास शुश्रावेत्यर्थः॥ ७६॥

अथेन्द्रदूतीविज्ञापनमनुवदति, लिपिरिति। देवस्य इयं दैवी देवसम्बन्धिनी लिपिः भुवि भूतले न सुपठा न सुखेन पठितुं शक्या भूवासिभिरिति शेषः। ईषद्दुरित्यादिना खल्प्रत्ययः। इति हेतोः तुभ्यं प्रेषितं वाचिकं व्याहृता वाक् सन्देशवचनमित्यर्थः सन्देशवाग् वाचिकं स्यादित्यमरः। वाचो व्याहृतार्थायामिति ठक्। येन तथोक्तस्य सन्दिष्टवत इत्यर्थः। इन्द्रस्य दूत्यां सन्देशहारिण्यां स्यात् सन्देशहरो दूत इत्यमरः। मयि विज्ञापयन्त्यां निवेदयन्त्यां सत्याम् अवधानस्य मनोनिवेशस्य दानमेव प्रसादम् अनुग्रहं रचय कुरु, अवहिता इन्द्रवाक्यं शृणु इत्यर्थः॥ ७७

सलीलमिति। हे राजपुत्रि! वासवः इन्द्रः वासवो वृत्रहा वृषेत्यमरः। सलीलं सविलासम् आलिङ्गनया आलिङ्गनेन आङ्पूर्वाल्लिङ्गते श्चौरादिकात् ण्यासश्रन्थो युच्। उपपीड़म् उपपीड्य गाढ़माश्लिष्येत्यर्थः। सप्तम्याञ्चोपपीड़मित्यत्र चकारात् तृतीयोपपदे णमुल्प्रत्ययः। तृतीयाप्रभृतीनन्यतरस्यामिति विकल्पादसमासः। अनामयं आमयस्य रोगस्य अभावः अनामयं तत् आरोग्यमित्यर्थः। पृच्छति ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्। वैश्यं क्षेमं तथा पृच्छेच्छूद्रमा-

य: प्रेर्य्यमाणोऽपि हृदा मघोन स्त्वदर्थनायां ह्रियमापदागः ।
स्वयंवरस्थानजुषस्त्वमस्य बधान कण्ठं वरणस्रजातु ॥७९॥
नैनं त्यज क्षीरधिमन्थनाद्यै रस्यानुजायोद्गमिताऽमरैः श्रीः ।

---

सेव्यमेव चेति मनुस्मरणात् । दमयन्त्याः क्षत्रियजातीयत्वेन तथा प्रश्नः । श्लेषः कार्य्यस्येति श्लेषः तव आश्लेषकथया आलिङ्गनप्रसङ्गेन अपगता निद्रा येषां तैः विनिद्रैरित्यर्थः हृषितैरिति भावः । तस्य इन्द्रस्य रोमभिः भवत्यै तुभ्यं सन्दिदिशे सन्दिष्टः कर्मणि लिट् । तवालिङ्गनस्मरणजनितसत्त्वोद्रेकात् समुदितरोमाञ्चतया त्वयि नितरां सतृष्णोऽसौ जात इति निवेदितमित्यर्थः ॥ ७८ ॥

य इति । हे भैमि ! मघोन इन्द्रस्य यः कण्ठः तव अर्थनायां विषये हृदा चित्तेन प्रेर्य्यमाणोऽपि दमयन्तीं प्रार्थयेति नियुज्यमानोऽपि ह्रियं लज्जामेव आगः अपराधम् आगोऽपराधो मन्तुश्चेत्यमरः । आपत् प्राप प्रभोश्चित्तस्य नियोगमवमत्य स्वयं त्वदर्थनायां कुण्ठितो भूत्वा मत्प्रेरणरूपमपराधं कृतवानित्यर्थः । त्वं स्वयंवरस्थानजुषः स्वयंवरक्षेत्रोपस्थितस्य अस्य इन्द्रस्य तं कण्ठम् आगतमपराधिनमिति भावः । वरणस्रजा तु वरणमालिकयैव तुरेवार्थः । बधान बन्धनदण्डं प्रापयेत्यर्थः तादृगपराधिनो बन्धनदण्ड एव समुचित इति भावः । तथाच देवेन्द्रस्त्वां प्रति नितरामनुरक्तो मन्मुखेन त्वां प्रसादं याचते तदस्य मनोरथपूरणं तव सर्वथा कर्त्तव्यमिति भावः । वरणस्रजातु इत्यत्र वरणस्रजाशु इति पाठे वरणस्रजा आशु शीघ्रं बधान इत्यन्वयः । अत्रानुकूलालङ्कारः । अनुकूलं प्रातिकूल्यमानुकूल्यानुबन्धि चेदिति लक्षणात् ॥ ७९ ॥

अस्मै विमथ्येक्षुरसोदमन्यां श्राम्यन्तु नोत्थापयितुं श्रियं ते ८०
लोकस्रजि द्यौर्दिवि आदितेया अप्यादितेयेषु महान् महेन्द्रः ।
किङ्कर्त्तुमर्थी यदि सोऽपि रागाज्जागर्त्ति कक्षा किमतः परापि ८१

नैनमिति । हे भैमि ! एनम् इन्द्रं न त्यज न जहीहि, अङ्गीकुरु इत्यर्थः यैः अमरैः अस्य इन्द्रस्य अनुजाय उपेन्द्राय नारायणाय इत्यर्थः तादर्थ्ये चतुर्थी। क्षीराणि धीयन्तेऽस्मिन्निति क्षीरधिः क्षीरसागरः क्षीरे कर्मण्यधिकरणे चेति किप्रत्ययः । तस्य मन्थनात् विलोड़नात् ल्यब्लोपे पञ्चमी । क्षीरधिमन्थनं कृत्वेत्यर्थः मन्थेर्भौवादिकस्येदित्वान्नुमागमः । श्रीः लक्ष्मीः उद्गमिता उत्थापिता, ते अमराः अस्मै इन्द्राय तादर्थ्ये चतुर्थी । इक्षुरसोदम् इक्षुरसोदधिं विमथ्य विलोड्य अन्याम् अपरां श्रियम् उत्थापयितुं न श्राम्यन्तु न परिश्रमं कुर्वन्तु, क्षीरसमुद्रं निर्मथ्य देवा उपेन्द्राय लक्ष्मीं ददुः । ततोऽपि ज्येष्ठत्वात् पूज्याय इन्द्राय लक्ष्म्या अपि उत्कृष्टां नारीं दातुं क्षीरसमुद्रादपि मधुरतरमिक्षुसागरं विलोड़यितुं मा प्रयासं कुर्वन्त्विति यावत् । त्वन्तु लक्ष्म्या अपि उत्कृष्टेति त्वत्प्राप्त्या ते कृतार्था भवन्त्विति भावः । तथाच देवेषु दयां प्रकाश्य तदधिपतिमिन्द्रं वृणुष्वेति तात्पर्य्यम् । अत्रामराणां लक्ष्मीतोऽप्युत्तमकामिन्युत्पादनप्रयासासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ ८० ॥

लोकेति । हे भैमि ! लोकस्रजि जगन्मालायां लोकेषु त्रिष्वित्यर्थः । द्यौः स्वर्गः महतीति लिङ्गव्यत्ययेनान्वयः । एतेन तव स्वर्गपरित्यागेन भूतलस्थितिर्न युक्तेति भावः । दिवि स्वर्गे च अदितेरपत्यानि पुमांसः आदितेयाः देवाः आदितेया

पदं शतेनाप मखैर्यदिन्द्र स्तस्मै स ते याचनचाटुकारः।
कुरु प्रसादं तदलङ्कुरुष्व स्वीकारकृद्भ्रूनटनश्रमेण॥ ८२॥

दिविषदो देवा इत्यमरः। महान्त इति वचनव्यत्ययेनान्वयः। एतेन स्वर्गवासिनां देवयोनिगन्धर्वविद्याधरादीनां निकृष्टतया परित्यागः सूचितः। आदितेयेषु देवेषु अपि महेन्द्रः महान् सर्वदेवाधिपतित्वात् श्रेष्ठ इत्यर्थः। एतेन अग्न्यादीनां देवानामर्थनाया निरासः सूचितः। सोऽपि देवेन्द्रोऽपि रागात् अनुरागात् किङ्कर्त्तुं किङ्करीभवितुं सेवितुमित्यर्थः अर्थी प्रार्थिकः यदि, किं शब्दस्यास्य च आदिषु पतितस्य निपातत्वाद्धेतोः प्राक् प्रयोगः। अर्थयतेरिच्छार्थत्वात् समानकर्त्तृकेषु तुमुन्। तर्हि अत अस्मात् देवेन्द्रसेव्यत्वात् परा महती कक्षा स्पर्द्धास्थानं कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे। स्पर्द्धापदे ना दोर्मूले कच्छवीरुत्तृणेऽपि चेति मेदिनी। जागर्त्ति अपि किम्? नैव जागर्त्ति? इत्यर्थः। तादृशी सौभाग्यदशा नैव विद्यते? इत्यर्थः। एतेन तव सदृशी रमणी न वर्त्तते या ईदृशं सौभाग्यमर्हतीति भावः। तस्मात् सर्वथा देवेन्द्रं वृणुष्वेति भावः। अत्र लोकादीनामुत्तरोत्तरस्य उत्कर्षोक्तिः सारो नामालङ्कारः तदुक्तं दर्पणे। उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते इति॥ ८१॥

पदमिति। हे दमयन्ति! इन्द्रः शतेन मखैः अश्वमेधैर्यज्ञैरित्यर्थः। यत् पदम् इन्द्रत्वलक्षणम् आप लब्धवान् तस्मै पदाय तत्पदं दातुमित्यर्थः। स इन्द्रः ते तव याचने प्रार्थनायां चाटुकारः प्रियवचनकृत् भवतीति शेषः। नशब्दश्लोकेत्यादिना टच्प्रत्ययनिषेधात् कर्म्मणि अण्। तत्पदं तुभ्यं दातुं प्रियोक्तिभिस्त्वां याचते इति भावः। अतः प्रसादम् अनुग्रहं कुरु, तत्

मन्दाकिनीनन्दनयोर्विहारे देवे भवेद्देवरि माधवे वा ।
श्रेयः श्रियां यातरि यत्र सख्यां तच्चेतसा भाविनि! भावयस्व ८३

ऐन्द्रं पदम् अस्वं स्वं कुर्वन् व्यापारः स्वीकारः तं करोतीति स्वीकारकृत् स्वीकारव्यञ्जक इत्यर्थः । यो भ्रूनटनश्रमः भ्रूविक्षेपप्रयासः तेन करणेन अलङ्कुरु विभूषय । यज्ञशतपरिश्रमलब्धम् इन्द्रपदं भ्रूभङ्गेन स्वीकुरु इत्यर्थः । इन्द्रं पतित्वेन अनुगृह्य स्वर्गाधिपत्यसुखं लभस्वेति भावः ॥ ८२ ॥

मन्दाकिनीति । भावयतीति भाविनी तत्सम्बुद्धौ । हे भाविनि! विचारनिपुणे! मन्दाकिनी स्वर्गगङ्गा नन्दनं देवोद्यानं तयोः विहारे मन्दाकिनीजलविहारे नन्दनकाननकेलौ चेत्यर्थः । दीव्यतीति देवः तस्मिन् मा लक्ष्मीः तस्या धवः पतिः माधवः तस्मिन् उपेन्द्रे इत्यर्थः वा देवरे भर्त्तृभ्रातरि सति यतत इति याता तस्यां यातरि देवरभार्य्यायां श्रियां लक्ष्मीदेव्यां सख्यां सत्याञ्च श्यालाः स्युर्भ्रातरः पत्नयाः स्वामिनो देवृदेवराविति भार्य्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परमिति चामरः । देवे ऋरित्यत्र ऋण्प्रत्ययः यातेर्वृद्धिश्चेति तृन्प्रत्ययः । यत् श्रेयः कल्याणं भवेत् सम्भवतीति शेषः, चेतसा चित्तेन तत् भावयस्व विचारय । देवेन्द्रवरणे तव मन्दाकिनीजलक्रीड़ा नन्दनवनविहारः देवरस्य नारायणस्य साचिव्यं देवरपत्नी लक्ष्मीः सहचरी भविष्यति तदेतादृशमन्यदुर्लभं सौभाग्यं न हातव्यं प्रत्युत विचार्य्य देवेन्द्रमेव वृणीष्वेति भावः । अत्र एकस्यापि मन्दाकिनीविहारस्य इन्द्रवरणरूपकार्य्यसाधकत्वे खले कपोतिकान्यायेन नन्दनविहारादीनामपरेषां तत्साधकत्वेन पुनरुपादानात् समुच्चयालङ्कारः । तदुक्तं दर्पणे । समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके । खले कपोतिका-

रज्यस्व राज्ये जगतामितीन्द्राद् याञ्चाप्रतिष्ठां लभसे त्वमेव।
लघूकृतस्त्वं बलियाचनेन यत्प्राप्तये वामनमामनन्ति ॥८४॥

न्यायात् तत्कारः स्यात् परोऽपि चेत्। गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये इति। प्राञ्चस्तु मन्दाकिनीनन्दनविहारक्रिययोर्माधवदेवरत्नश्रीयाद्दत्वरूपगुणयोश्च सामस्त्ये यौगपद्यात् समुच्चयालङ्कारः गुणक्रियायौगपद्यं समुच्चय इति लक्षणादित्याहुः ॥ ८३ ॥

रज्यस्वेति। हे भैमि! जगतां स्वर्गमर्त्यपातालानां राज्ये आधिपत्ये रज्यस्व अनुरक्ता भव त्रिलोकीराज्यं कुर्वाणा सुखीभवेत्यर्थः। प्रार्थनायां लोट् रञ्जेः स्वरितत्वादात्मनेपदम्। इत्येवंरूपां याञ्चाप्रतिष्ठां प्रार्थनागौरवम् इन्द्रात् त्वमेव नान्येति भावः। लभसे लब्धुमर्हसीत्यर्थः। न चैतत् त्रैलोक्यराज्यं तुच्छमित्याह, लघ्विति। यस्य त्रिलोकीराज्यस्य प्राप्तये लाभाय बलेर्विरोचनसुतात् दैत्येन्द्रात् याचनेन भिक्षया लघूकृतः खर्वीकृतः अवमानास्पदीकृतश्च स्व आत्मा येन तं नारायणमिति शेषः वामनं ह्रस्वकायं लघुञ्च आमनन्ति कीर्त्तयन्ति पुराविद इति शेषः। याञ्चालाघवमेव तस्य वामनत्वबीजमिति भावः। पुरा भगवता नारायणेन स्वलाघवमङ्गीकृत्यापि यत् त्रैलोक्यराज्यं भिक्षित्वा इन्द्राय दत्तं, त्वया प्रार्थनां विना देवेन्द्रात् तत् लभ्यते किमतःपरं भाग्यवत्त्वमिति भावः। तदत्राभिधेयार्थरूपवस्तुना विष्णुमपि स्वमहिम्ना अतिशेषे इति वस्तुध्वनिः। प्राञ्चस्तु व्यतिरेकेण दृष्टान्तालङ्कार इत्याहुः। वस्तुतस्तु त्वं याञ्चाप्रतिष्ठां लभसे, विष्णुस्तु याञ्चालाघवं लभते स्मेति व्यतिरेकालङ्कारो व्यज्यते इति पूर्वोक्तेन वस्तुनालङ्कारध्वनिः ॥ ८४ ॥

यानेव देवान्नमसि त्रिकालं न तत्कृतघ्नीकृतिरौचिती ते।
प्रसीद तानप्यनृणान् विधातुं पतिष्यतस्त्वत्पदयोस्त्रिसन्ध्यम्॥८५॥
इत्युक्तवत्या निहितादरेण भैम्या गृहीता मघवत्प्रसादः।
स्रक् पारिजातस्य ऋते नलाशां वासैरशेषामपुपूरदाशाम्॥८६॥

---

यानिति। हे भैमि! त्रयः काला यस्मिन् कर्मणि तत् त्रिकालं त्रिसन्ध्यमित्यर्थः क्रियाविशेषणं त्रयाणां कालानां समाहारः त्रिकालं तत् अत्यन्तसंयोगे द्वितीया। यान् एव देवान् इन्द्रादीन् नमसि नमस्करोषि, तेषां देवानां कृतं घ्नन्तीति कृतघ्नाः कृतोपकारावमानिन इत्यर्थः अतेषां तेषां कृतिः कृतघ्नीकृतिः कृतघ्नीकरणं ते तव औचिती न, देवान् अकृतघ्नान् कर्त्तुं तव न युक्तमित्यर्थः। तिसृणां सन्ध्यानां समाहारः त्रिसन्ध्यं सन्ध्यात्रयेऽपीत्यर्थः। अत्रापि अत्यन्तसंयोगे द्वितीया। वा टाबन्त इति नपुंसकत्वम्। तव पदयोः पतिष्यतः त्वां नमस्करिष्यत इत्यर्थः तान् देवान् अपि अनृणान् प्रतिप्रणामस्वीकारेण त्वत्प्रणतिग्रहणरूपऋणनिर्मुक्तान् विधातुं कर्त्तुं प्रसीद प्रसन्ना भव। त्वया एतावन्तं कालं देवाः प्रणामेनार्चिताः सम्प्रति ते तदृणबद्धाः प्रतिप्रणामेन त्वयि कृतज्ञतां दर्शयितुमभिलषन्ति तदिन्द्रमहिषी भूत्वा तेषां प्रणामं त्रिसन्ध्यमाप्नुहि इति भावः॥ ८५॥

इतीति। इति इत्येवमुक्तवत्या इन्द्रदूत्या आदरेण गौरवातिशयेन निहिता समर्पिता मघवत इन्द्रस्य प्रसादः अनुग्रह इति धिया न तु तस्मिन् अनुरागमधियेति भावः। भैम्या दमयन्त्या गृहीता पारिजातस्य स्रक् माला नलस्य आशां स्वप्राप्तिप्रत्याशामिति यावत्। ऋते विना तद्ग्रहणेन तस्य विपरीत-

आर्य्ये! विचार्य्यालमिहेति कापि योग्यं सखि! स्यादिति काचनापि
ओङ्कार एवोत्तरमस्तु वस्तु माङ्गल्यमत्रेति च काप्यवोचत् ॥८७॥

---

शङ्काया जातत्वादिति भावः। यद्यपि अन्यारादितरर्त्ते इत्यादिना ऋते शब्दयोगात् पञ्चम्येव युक्ता तथापि मतान्तरे द्वितीयाप्यस्तीत्याहुः। तथाच फलति पुरुषाराधनम् ऋते इत्यादिप्रयोगश्च। अशेषां समग्राम् आशां दिशं सर्वा अपि दिश इत्यर्थः जातावेकवचनम्। दूत्यादीनामिन्द्रपक्षीयाणां तृष्णाञ्च आशा तृष्णा दिशोरपीति विश्वः। वासैः सौरभैः दमयन्त्याम् आश्रयणैश्च वासो गृहेऽप्यवस्थाने सौरभेऽपि च कथ्यते इति विश्वः। अपुपूरत् पूरयामास पूरपूरणे इति चौरादिकाल्लुङ्। तस्या ग्लोपित्वात् नाग्लोपिशास्वृदितामित्युपधाह्रस्वनिषेधः। अभ्यासह्रस्वत्वञ्च। भैम्या आदरेण माला गृहीतेति इयमिन्द्रेऽनुरक्ता जातेति नलस्य तत्प्राप्त्याशा विनष्टा। इन्द्रदूत्यादीनाञ्च आशा सफला जाता, दिशश्च सौरभेण परिपूरितेति निष्कर्षः ॥ ८६ ॥

अथ सखीनां कासाञ्चित् तद्वाक्ये सम्मतिदानमाह, आर्य्ये इति। हे आर्य्ये! मान्ये! भैमि! इह अस्मिन् विषये देवेन्द्रवरणे इत्यर्थः विचार्य्य अलं विचारो न कार्य्यः अविचार्य्यैव इन्द्रं वृणुष्वेत्यर्थ इति कापि सखी अवोचत् उक्तवती निषेधेऽलं खलु युक्त्वाक्त्वेति ततो युच्। सखि! भैमि! इदम् इन्द्रवरणं योग्यं तव अनुरूपं स्यादिति काचन सखी अवोचत्। कापि अपरा सखी अत्र अस्मिन् विषये ओङ्कार एव अङ्गीकार एव मङ्गलाय हितं माङ्गल्यं मङ्गलजनकम् उत्तरं वस्तु अस्तु भवतु ओमित्युच्चार्य्य अङ्गीकारं कुरु इत्यर्थः इति अवोचत्। ओमित्यक्षरस्य मङ्गलसूचकत्वमुक्तं यथा। ओङ्कारश्चाथशब्दश्च

अनाश्रवा वः किमहं कदापि ? वक्तुं विशेषः परमस्ति शेषः ।
इतीरिते भीमजया न दूती मालिङ्गदालीश्च मुदामियत्ता ॥८८
भैमीञ्च दूत्यञ्च न किञ्चिदाप मिति स्वयं भावयतो नलस्य ।
आलोकमात्रात् यदि तन्मुखेन्दो रभून्न भिन्नं हृदयारविन्दम् ८९

---

द्वावितौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ इति ॥ ८७ ॥

भैम्यास्तत्रोत्तरमाह अनाश्रवेति । हे सख्यः ! अहं कदापि वः युष्माकम् अनाश्रवा अवचनकारिणी किम् ? सर्वदैव युष्माकं वचनं करोमीति भावः वचने स्थित आश्रव इत्यमरः । परं किन्तु वक्तुं विशेषः शेषोऽस्ति, वक्तव्यमत्र विशेषतः कश्चित् अस्तीत्यर्थः भीमजया दमयन्त्या इति इत्थम् ईरिते उक्ते सति मुदां हर्षाणाम् इयत्ता परिमितता दूतीम् इन्द्रसन्देशहारिणीम् आलीः सखीश्च न आलिङ्गत् न अस्पृशत् अपितु अपरिमिततैव आलिङ्गदित्यर्थः । अनाश्रवा वः किमहं कदापीत्यनेन अस्माकमुक्तौ कृताङ्गीकारा एव इयं कश्चित् विशेषो वक्तव्यः अस्ति इत्यनेन अत्र वस्तुनि केनचित् नियमेन वर्त्तितव्यं वा किमप्यन्यदभिलषितम् एतत्प्रसङ्गेन साधयितव्यमित्याशयमस्याः सुसम्वाद्यं मन्यमानास्ता महान्तमानन्दमविन्दन्तेति भावः॥८८

नलस्य तदानीन्तनीं चिन्तामाह, भैमीमिति । अहं भैमीञ्च दूत्यञ्च एतयोः किञ्चित् अन्यतरमित्यर्थः न आपं न प्राप्तवानस्मि आप्नोतेर्लुङि मिप् । स्त्रीरत्नलाभः चिरकाङ्क्षितो मम माभूत् परोपकारोऽपि दौत्यकरणेन न सिद्धः इन्द्रदूत्या एव तत्समाहितत्वादिति भावः । इति इत्थम् आत्मनि भावयतः चिन्तयतः नलस्य हृदयमेव अरविन्दं पद्मं तस्या भैम्या मुख-

ईषत्स्मितक्षालितसृक्कभागा दृक्संज्ञया वारिततत्सदालिः ।
स्रजा नमस्कृत्य तयैव शक्रं तां भीमभूरुत्तरयाम्बभूव ॥९०॥

---

मेव इन्दुः चन्द्रः तस्य आलोकमात्रात् दर्शनमात्रात् प्रकाश-मात्राच्च आलोकौ दर्शनोद्द्योताविव्यमरः। भिन्नं विदीर्णं विकसितञ्च नाभूत् यदि ? नाभूत् किम् ? अपितु अनया विश्वास्य हतमस्मीति विदीर्णमेवाभूत् इत्यर्थः। इन्दुप्रकाशात् अरविन्दविकाश इति विरोधालङ्कारोऽपि ध्वन्यते। यद्वा नलस्य हृदयारविन्दं चित्तकमलं तस्या मुखेन्दोः मुखचन्द्रस्य आलोक-मात्रात् केवलात् दर्शनादित्यर्थः। तथाविधहृद्विकासकानन्द जनकादिति भावः। यदि भिन्नं विदीर्णं नाभूत् तद्दर्शनादेव हृदयविकाशो जातः क्वात्र विदारणकथेति भावः चन्द्रदर्शने कमलविकासः कविसमयासिद्धतया दूषणीय इति वाच्यं तस्य गगनोदितचन्द्रविषयत्वेन सिद्धाश्रितत्वात् एतस्य च मुख-चन्द्रस्य तद्विलक्षणत्वादिति दिक्। अत्र रूपकालङ्कारः ॥८९॥

अथ इन्द्रदूतीवचनमनङ्गीकुर्वत्या भैम्या वचनमुपक्रमते ईषदिति। भीमभूः दमयन्ती ईषत्स्मितेन मन्दहासेन क्षा-लितौ धौतौ सृक्कणी ओष्ठप्रान्ताविव भागौ यया तथोक्ता प्रान्तावोष्ठस्य सृक्कणी इत्यमरः। दृक्संज्ञयैव नयनेङ्गिते-नैव सञ्ज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचनेत्यमरः। वारिताः निषिद्धाः तास्ताः पूर्वोक्तम् आर्य्ये विचार्य्यालमिति विरुद्धं प्रवर्त्तयन्त्य इति भावः आलयः सख्यः यया तथाभूता च सती तयैव स्रजा पारिजातमालया सहैव वृद्धो यूनेति सूत्रकार-प्रयोगादेव ज्ञापकात् सहार्थाप्रयोगेऽपि सहार्थे द्योत्ये तृतीया। शक्रम् इन्द्रं नमस्कृत्य मालां शक्रञ्च प्रणम्येत्यर्थः। तामिन्द्र-दूतीम् उत्तरयाम्बभूव उत्तरमाचष्टे। तदाचष्ट इति णिच् ॥९०॥

स्तुतौ मघोनस्त्यज साहसिक्यं वक्तुं कियत्तं यदि वेद वेदः ।
वृथोत्तरं साक्षिणि हृत्सु नृणामज्ञातविज्ञापि ममापि तस्मिन् ९१
आज्ञां तदीयामनु कस्य नाम नकारपारुष्यमुपैति जिह्वा ? ।
अह्ना तु तां मूर्ध्नि निधाय मालां बालापराध्यामि विशेषवाग्भिः ९२

---

स्तुताविति । हे दूति ! मघोनः इन्द्रस्य स्तुतौ प्रशंसायां विषये सहसा प्रवर्त्तते इति साहसिकः अविमृष्यकारीत्यर्थः । तस्य भावः साहसिक्यं चापल्यमिति यावत् त्यज तस्य स्तवविषये तव सामर्थ्यं नास्तीति भावः । तम् इन्द्रं वक्तुं निर्णेतुमित्यर्थः । वेदः श्रुतिः यदि कियत् किञ्चित् वेद जानाति न तु अन्य इति शेषः । अचिन्त्यमहिमानं तं श्रुतिरपि सम्यग् वर्णयितुं न शक्नोति अन्येषां तद्गुणकीर्त्तने का शक्तिरिति तस्य स्तुतेर्विरम्यतामिति भावः । ननु स्तुतिरस्तु तत्सन्देशस्य किमुत्तरं तत्राह, वृथेति । नृणां मानवानां हृत्सु अन्तःकरणेषु साक्षिणि साक्षाद्द्रष्टरि साक्षाद्द्रष्टरि संज्ञायामिति इनिप्रत्ययः । सर्वान्तर्यामिनीत्यर्थः । तस्मिन् मघोनि इन्द्रे अज्ञातारं विज्ञापयतीति अज्ञातविज्ञापि अज्ञबोधकरमित्यर्थः । मम उत्तरमपि वृथा निष्फलमित्यर्थः । न हि सर्वज्ञे सर्वान्तर्यामिनि जने हृद्गतो भावो निवेद्यते तेषां स्वयमेव तज्ज्ञानादिति भावः । अहं नलमेव वरिष्यामि नान्यमिति देवेन्द्रो जानात्येव तत्कथं पुनर्वचसा तद् विज्ञाप्यते इति तात्पर्य्यम् ॥ ९१ ॥

तथापि विनयप्रदर्शनाय किञ्चिदुत्तरं ददामीत्याह, आज्ञामिति । तस्य इयं तदीया ताम् आज्ञाम् इन्द्रादेशमित्यर्थः । अनु प्रति अनुलक्ष्येति यावत् अनुयोगे द्वितीया । कस्य जनस्य नाम सम्भावनायां जिह्वा नकार एव पारुष्यं

तपःफलत्वेन हरेः कृपेयमिमं तपस्येव जनं नियुङ्क्ते।
भवत्युपायं प्रति हि प्रवृत्तावुपेयमाधुर्य्यमधैर्य्यसज्जि ॥ ८२ ॥

यद्वा नकारेण न करोमीति प्रतिषेधाक्षरेण पारुष्यम् अवाध्यत्वमिति भावः। उपैति ? प्राप्नोति ? न कोऽपि तस्य आज्ञां लङ्घयितुं साहसिका भवतीति सम्भावयामीत्यर्थः। तु किन्तु बाला शिशुरहं प्रह्वा नम्रा विनीतेत्यर्थः। सती ताम् आज्ञामेव मालां मूर्ध्नि शिरसि निधाय धृत्वा विशेषवाग्भिः विशेषवचनैः वक्ष्यमाणरूपैः अपराध्यामि अपराधिनी भवामि बालकापराधो महद्भिर्न गण्यते तस्मादयं मेऽपराधः सोढ़व्य इति भावः ॥८२॥

तप इति। तपसः इन्द्रोपासनारूपस्य व्रतस्य पूर्वजन्मकृतस्येति भावः। फलत्वेन परिणतेति शेषः इयं हरेरिन्द्रस्य कृपा अनुकम्पा मत्परिजिघृक्षारूपेति भावः। इमं जनं मामिति भावः। तपस्येव इन्द्राराधनव्रते एव पुनः नियुङ्क्ते प्रेरयति यतस्तत्तपसा ईदृशं फलं लब्धं ततः पुनरपि तत्तपसा फलान्तरं लभ्यते इत्याशया पुनरपि तत्तपसि प्रवर्त्तयितुं मां त्वरयतीति निष्कर्षः। स्वराद्यन्तोपसृष्टादिति वक्तव्यादात्मनेपदम्। ननु तपसः फले प्राप्ते पुनस्तदर्थं कथं प्रवृत्तिरित्यत्राह, भवतीति। हि यतः उपेयस्य उपायलभ्यस्य वस्तुनः माधुर्य्यं मधुरत्वम् उत्कर्ष इति यावत् उपायं प्रति प्रवृत्तौ स्वसाधनं प्रति प्रवर्त्तने विषये अधैर्य्यं सज्जयतीति अधैर्य्यसज्जि अधैर्य्यकारणमित्यर्थः। भवति अधैर्य्यकारीति पाठे स एवार्थः सहजः। धैर्य्यं नाशयतीति भावः। एकेन तपसा तादृशी देवेन्द्रकृपा प्राप्ता, ततः पुनरपरेण अस्मिन् जन्मनि कृतेन इति शेषः। तदीयेन तपसा अन्यत् फलं लप्स्ये इति प्रत्याशा धैर्य्यं विनाश्य पुनः

शुश्रूषिताहे तदहं तमेव पतिं मुदेऽपि व्रतसम्पदेऽपि ।
विशेषलेशोऽयमदेवदेहमंशागतन्तु चितिभृत्तयेह ॥ ८४ ॥
अश्रौषमिन्द्रादरिणी गिरस्ते सती व्रतातिप्रतिलोमतीव्राः ।
त्वं प्रागहं प्रादिषि नामराय किं नाम तस्मै मनसा नराय ॥८५॥

प्रवर्त्तयति नलप्राप्त्यर्थं पुनस्तपश्चरणमेव युक्तमिदानीमिति भावः । श्रेयसि केन तृप्यते इति भावः ॥ ८३ ॥

ननु किं तत् फलान्तरं येन पुनस्तपसि प्रवृत्तिरित्यत्राह । तत्तस्मात् अहं तमेव इन्द्रमेव चितिभृत्तया पृथ्वीपालत्वेन पृथिवीपालनव्याजेनेति भावः इह मर्त्त्यलोके अंशेन आगतं यद्वा इह कस्मिंश्चित् राजनि अंशागतम् अष्टानां लोकपालानां वपुर्धारयते नृप इति स्मरणादिति भावः । अतएव अदेवदेहं दिव्यदेहवर्जितं मानुषरूपमित्यर्थः । मुदेऽपि प्रीतये च व्रतसम्पदेऽपि पातिव्रत्यलक्षणव्रतरक्षणाय चेत्यर्थः । शुश्रूषिताहे सेविष्ये परिचरिष्यामि इति यावत् । शुश्रूषा श्रोतुमिच्छायां परिचर्य्याविधानयोरिति विश्वः । ज्ञाश्रुस्मृदृशां सन इति शृणोतेः सन्नन्तात् तङि लुटि टेरेत्वेह एतीति तासः सकारस्य हकारः । अयं विशेषलेशः एतावानेव अल्पीयान् भेद इत्यर्थः । मम नलपरिचर्य्यायाम् इन्द्रपरिचर्य्या सिद्धा तस्य तदंशसम्भूतत्वात् । नल एव मनसा मया पतित्वेन वृत इति तस्य साक्षात्परिचरणन्तु पातिव्रत्यभङ्गभिया परित्यक्तमेवेति बालचापलं सोढव्यमिति निष्कर्षः ॥ ८४ ॥

ननु अनूढायास्ते कथं पातिव्रत्यभङ्ग इत्यत्राह, अश्रौषमिति । हे दूति ! व्रतस्य पातिव्रत्यलक्षणस्य अतिशयेन अत्यर्थं प्रतिलोमाः प्रतिकूलाः अतएव तीव्राः अतिदुःश्रवा इत्यर्थः । ते

तस्मिन् विमृश्यैव वृते हृदैषा मैन्द्री दया मामनुतापिकाऽभूत्।
निर्वातुकामं भवसम्भवानां धीरं सुखानामवधीरणेव ॥ ९६ ॥

---

तव गिरः वाचः इन्द्रानुरागप्रवर्त्तिनीरिति भावः। इन्द्रे आदरो विद्यतेऽस्या इति इन्द्रादरिणी इन्द्रो देवराजः परं पूज्यः तत् सन्देशवचसः अश्रवणे देवावमानना स्यादिति तत्र आदरवती सती अश्रौषं श्रुतवती अस्मि न तु अनुरागादिति भावः। शृणोतेर्लुङि मिप्। सतीव्रततातिप्रतिलोमतीव्राः इत्येकपदत्वे सतीव्रतस्य पातिव्रत्यस्य अतिप्रतिलोमा अतएव तीव्राः पतिव्रतायाः परपुरुषप्रशंसावादश्रवणस्य अनौचित्यादिति भावः। इन्द्रादरिणीः इति सविसर्गपाठे इन्द्रे आदरः अनुरागः विद्यते आभिरिति इन्द्रादरिणीः इन्द्रानुरागवर्द्धिनीरित्यर्थः। गिरः इत्यस्य विशेषणम्। ननु तर्हि कथं तमेव पतिं शुश्रूषिताहे इत्युक्तं तत्राह, स्वमिति। अहं प्राक् पूर्वम् अमराय देवरूपाय तस्मै इन्द्राय स्वमात्मानं न प्रादिषि न दत्तवती अस्मि, किं नाम किन्तु नराय नररूपिणे रलयोरैक्यात् नलरूपिणे इति भावः। तस्मै इन्द्राय मनसा हृदयेन प्रादिषि ददातेर्लुङि तङ्। स्थाघ्वोरिच्चेति इकारः। तस्मात् साक्षात् इन्द्रवरणे मम पातिव्रत्यलोपः स्यादिति भावः ॥ ९५ ॥

तस्मिन्निति। तस्मिन् नले हृदा हृदयेन विमृश्यैव विचार्य्यैव न तु अविमृश्यकारित्वदोषोऽत्रेति भावः। वृते इदमेव समीचीनमिति निश्चित्यैव कृतवरणे सतीत्यर्थः। एषा इन्द्रस्य इयम् ऐन्द्री इन्द्रसम्बन्धिनी दया मत्परिग्रहेच्छारूपेति भावः। भवे संसारे सम्भवो येषां तथाभूतानां सुखानाम् आपातरमणीयाणां परिणामविरसानां स्रक्चन्दनवनिताद्युपभोगजनितानामिति भावः। अवधीरणा अवहेलनं निर्वातुं मोक्तुं कामो

वर्षेषु यद्भारतमार्य्यधुर्य्याः स्तुवन्ति गार्हस्थ्यमिवाश्रमेषु।
तत्रास्मि पत्युर्वरिवस्ययेह शर्मोर्मिकिर्मीरितधर्मलिप्सुः ॥८७॥

---

यस्य तं निर्वातुकामं मुमुक्षुमित्यर्थः धीरं धैर्य्यशालिनं यद्वा धीरस्त्यस्येति धीरः विवेकवान् तमिव माम् अनुतापयतीति अनुतापिका हा किमिदं कृतम् अविचार्य्यैव एतदनुष्ठितमिति पश्चात्तापजननी मा भूत् न भवतु। अकेनोर्भविष्यदाधमर्ण्ययो-रिति षष्ठीनिषेधात् कर्मणि द्वितीया। यथा मुमुक्षुः विषय-सुखपरित्यागेन ब्रह्मानन्दलाभात् परां निर्वृतिं लभते तथा अहं देवेन्द्रवरणजन्यं सुखं पातिव्रत्यभङ्गेन आपातरमणीयं परि-णामविषोपमं मन्वाना तत्र अनुतापरहिता नलप्राप्तिसुखाशया परां निर्वृतिमनुभवामीति निष्कर्षः। उपमालङ्कारः॥ ८६ ॥

ननु विसृष्यैव वृत इत्युक्तं तत्र कः तत्प्रकार इत्यत्राह, श्लोकचतुष्टयेन वर्षेष्वित्यादिना। आर्य्येषु साधुषु धुरं वहन्तीति धुर्य्याः धुरन्धराः आर्य्यश्रेष्ठाः इत्यर्थः। आश्रमेषु ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये। आश्रमोऽस्त्रीत्यमरोक्तेषु चतुर्षु मध्ये गार्हस्थ्यमिव गृहस्थाश्रममिव। (यथा वायुं समाश्रित्य वर्त्तन्ते सर्वजन्तवः। तथा गृहस्थमाश्रित्य वर्त्तन्ते सर्व आश्रमाः। यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम्। गृहस्थेनैव धार्य्यन्ते तस्मात् श्रेष्ठाश्रमी गृही। इति मनुः। वर्षेषु इलावृतादिषु नवसु यो वायं द्वीपः कुवलयकमलकोशाभ्यन्तरकोशो नियुतयोजन-विशालः समवर्त्तुलो यथा पुष्करपत्रम्। यस्मिन्नव वर्षाणि नवयोजनसहस्रायामानि अष्टभिर्मर्य्यादागिरिभिः सुविभक्तानि भवन्ति। एषां मध्ये इलावृतं नामाभ्यन्तरवर्षं यस्य नाभ्या-मवस्थितः सौवर्णः कुलगिरिराजो मेरुरिति श्रीमद्भागवतम्। मध्ये यद् भारतं वर्षं स्तुवन्ति प्रशंसन्ति पुण्यभूमित्वादिति

स्वर्गे सतां शर्म परं न धर्मा भवन्ति भूमाविह तच्च ते च।
शक्या मखेनापि मुदोऽमराणां कथं विहाय द्वयमेकमीहे ॥९८॥

---

भाव: तथाच स्मृति:। गायन्ति देवा: किमु गीतकाले जातास्तु ये भारतभूमिभागे। स्वर्गापवर्गास्पदमार्गभूते भवन्ति ते नो पुरुषा: स्वधाभुज इति। तत्र तस्मिन् इह भारते वर्षे पत्यु: प्राणेश्वरस्य वरिवस्यया शुश्रूषया वरिवस्या तु शुश्रूषेत्यमर:। वरिवस्यते: क्यजन्तादप्रत्ययादित्यकारप्रत्यय:। शर्मोर्मिभि: सुखप्रवाहै: शर्मशातसुखानि चेत्यमर:। किर्म्मीरितं चित्रितं चित्रं किर्म्मीर कल्माष शवलैताश्च कर्वुर इत्यमर:। तत्सम्बन्ध-मिति भाव: धर्मं सुकृतं लिप्सु: लब्धुमिच्छु: अस्मि, अस्मिन् भारते वर्षे स्थिता पतिशुश्रूषया ऐहिकं पारलौकिकञ्च सुखं भोक्तुमिच्छामीति फलितार्थ: ॥ ९७ ॥

ननु स्वर्गेऽपि सुखं धर्मश्च स्यादित्यत्राह, स्वर्ग इति। स्वर्गे सतां वर्त्तमानानां स्वर्गवासिनामित्यर्थ:। शर्म्म सुखं परं केवलं धर्मा: सुकृतानि न भवन्ति तस्य भोगभूमित्वादिति भाव:। इह अस्यां भूमौ पृथिव्यां तच्च शर्म्म च ते च धर्माश्च सम्भवन्ति कर्मभूमित्वादिति भाव:। किञ्च मखेन यज्ञेन अमराणां सर्वेषामेव देवानामित्यर्थ:। न केवलमिन्द्रस्येति भाव:। मुद: प्रीतय: शक्या: सम्पाद्या:, इन्द्रवरणे केवलं तत्प्रीतिर्न तु सर्वेषाममराणां नले वृते तु सस्त्रीको धर्ममाचरेदिति यज्ञादि-कर्मणां सपत्नीककर्त्तृत्वश्रुतेस्तत्फलांशेन मदीयेन सर्वेषामेव देवानां प्रीति: स्यादिति भाव:। अत: द्वयं शर्म सुकृतसामान्यं विशेषेण इष्टिञ्च विहाय त्यक्त्वा एकं केवलं शर्म सुखमात्र-मित्यर्थ: कथम् ईहे कथमिच्छामि नैतद् विवेकवतां युक्तमिति

साधोरपि स्वः खलु गामिताधो गामी स तु स्वर्गमितः प्रयाणे ।
इत्यायती चिन्तयतो हृदि द्वे द्वयोरुदर्कः किमु शर्करे न? ९९
प्रक्षीण एवायुषि कर्मकृष्टे नरान्न तिष्ठत्युपतिष्ठते यः ।

भावः । तस्मात् नल एव यत् मनसा वृतः तत् समीचीनं कृतमिति तात्पर्य्यम् ॥ ९८ ॥

भूलोक एव श्रेयानित्यत्राह, साधोरिति । साधोरपि सुकृतिनोऽपि स्वः स्वर्गात् अधोगामिता अधःपातिता खलु निश्चितम् । अमुत्र कर्मचितो लोकः क्षीयते इत्यादिश्रुतेः । ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्य लोकं विशन्तीति गीतावाक्याच्च । स साधुः सुकृती जनः इतोऽस्मात् भूलोकात् प्रयाणे प्रस्थिती तु स्वर्गं गामी स्वर्गं गमिष्यतीत्यर्थः । अनिर्वच-नीयानि सप्त स्वः क्रमेण गच्छति पुण्यकृदित्यादिश्रुतेः । भवि-ष्यति गम्यादय इति गामिशब्दस्य भविष्यदर्थता । अकेनोरिति षष्ठीनिषेधात् कर्मणि द्वितीया। इति इत्येवंरूपे आयती उत्तर-कालफले इति भावः । उत्तरः काल आयतिरित्यमरः । हृदि मनसि चिन्तयतः विवेचयतः जनस्येति शेषः । द्वयोः स्वर्ग-भूलोकयोः उदर्कः उत्तरं फलम् उदर्कः फलमुत्तरमित्यमरः । द्वे शर्करे किमु न ? अपितु द्विविधे शर्करे एवेत्यर्थः । प्रथमस्य स्वर्गस्य उत्तरफलं शर्करापदवाच्यं कर्परांशरूपम् अतिनिकृष्टं द्वितीयस्य भूलोकस्य उत्तरफलं खण्डविकृतिरूपमतिमधुरं फलमिति भावः । शर्कराखण्डविकृतावुपले कर्परांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि चेति मेदिनी । तस्मा-दुभयोरुत्तरफलवैषम्यात् भूलोकः स्वर्गलोकात् श्रेयानिति मन्ये इति भावः ॥ ९९ ॥

बुभुक्षते नाकमपथ्यकल्पं धीरस्तमापातसुखोन्मुखं कः? ॥१००

इतीन्द्रदूत्यां प्रतिवाचमर्हे प्रत्युह्य सैषाभिदधे वयस्याः।
किञ्चिद्विवक्षोल्लसदोष्ठलक्ष्मी-जितापनिद्रद्दलपङ्कजास्याः ॥१०१

सर्वथा स्वर्गस्य अनुपादेयत्वं दर्शयन्नाह, प्रक्षीण इति। यः नाकः कर्मणा क्लृप्तं कर्मक्लृप्तं कर्मार्जितं तस्मिन् आयुषि जीवनकाले प्रक्षीणे एव प्रकर्षेण क्षयं गते एव नरान् मनुष्यान् उपतिष्ठते सङ्गच्छते, आयुषि तिष्ठति विद्यमाने सति न नरानुपतिष्ठते इत्यनुषङ्गः। उपाद्देवपूजेत्यादिना सङ्गतिकरणे तङ्। जीवतां स्वर्गगमनस्य पाण्डवं युधिष्ठिरम् ऋते अदृष्टचरत्वादिति भावः। यद्वा आयुषि स्वर्गभोगार्थ-निरूपिते समये इत्यर्थः प्रक्षीणे सति नरान् स्वर्गतानिति शेषः न उपतिष्ठते न सङ्गच्छते प्रत्युत स्वतो भ्रंशयतीति भावः, तिष्ठति तथाविधे आयुषि विद्यमाने सति न उपतिष्ठते सङ्गच्छते न स्वर्वृत्तिसुखं ददातीति भावः। अतः धीरः सुधीः विवेचक इत्यर्थः को जनः आपाते प्रारम्भे एव न तु परिणामे सुखोन्मुखं सुखदानपरम् अतएव अपथ्यकल्पम् अपथ्याद्दीष-दूनम् ईषदूने कल्पप्रत्ययः। अहितकरान्नसदृशमित्यर्थः तं नाकं कं सुखं न कम् अकं दुःखं, नास्ति अकं दुःखं यत्र स नाकः स्वर्गः तं निरवच्छिन्नसुखनिलयमिति भावः। बुभुक्षते भोक्तुमिच्छति न कोऽपीत्यर्थः। तस्मात् नल एव मया वरणीयो न देवेन्द्र इति तात्पर्य्यम् ॥ १०० ॥

अथ सखीनामिन्द्रानुकूल्ये वर्त्तमानानां विवक्षामिव अवधार्य्य इन्द्रदूतीं प्रति प्रत्युत्तरदानमसमाप्यापि ताः एव प्रति भैम्या वचनमनुवदति इतीति। सैषा भैमी इन्द्रदूत्यां विषये तत्-

**अनादिधाविस्वपरम्पराया हेतुस्रजः स्रोतसि वेश्वरे वा ।**
**आयत्तधीरेष जनस्तदार्य्याः! किमीदृशः पर्य्यनुयुज्य कार्य्यः॥१०२**

समीपे वा इति इत्थंरूपां प्रतिवाचं प्रत्युत्तरवचनम् अर्द्धे अर्द्धोक्तौ प्रत्युह्य विघ्नितां कृत्वा असमाप्यैवेत्यर्थः विघ्नोऽन्तरायः प्रत्यूह इत्यमरः। उपसर्गात् ह्रस्व ऊहतेरिति ह्रस्वः। किञ्चिद्विवक्षया इन्द्रानुकूलं किमपि वक्तुमिच्छया उल्लसतोः स्फुरतोः ओष्ठयोः लक्ष्म्या शोभया जितं न्यक्कृतम् अपनिद्रद्दलं विकसत्पत्रं यत् पङ्कजं पद्मं तदिव आस्यं मुखं यासां ताः वयस्याः सखीः अपपूर्वात् निद्रातेः शतृप्रत्ययः। अभिदधे उक्तवती अभिपूर्वाद्धाधातोः कर्त्तरि लिटःए। इन्द्रदूतीं प्रति प्रत्युत्तरं विहाय इन्द्रानुकूल्ये वर्त्तमानाः सखीर्विवक्षूः अग्रत एव बुद्ध्वा निवारयामासेति भावः। किञ्चिद्विवक्षेति विशेषणेन सखीनामपि पद्मिनीत्वं सूचितं किमुत स्वस्याः इति भावः॥ १०१ ॥

किमित्याह अनादीति। एष जनः मल्लक्षणः सर्वो जनः नास्ति आदिर्यत्र तत् यथा तथा धाविनी प्रवहन्ती या स्वपरम्परा स्वदेहश्रेणी जीवात्मश्रेणी वा तस्याः हेतूनां हेतुभूतानां पुनः पुनरावृत्तिकारणानामित्यर्थः अदृष्टानामित्यर्थः। स्रजः मालायाः संहतेरित्यर्थः स्रोतसि प्रवाहे वा ईश्वरे सर्वनियन्तरि परमात्मनि वा। एष एव कारयितेति श्रुतेः। आयत्ता अधीना धीर्यस्य तादृशः प्राक्तनशुभाशुभकर्मजनितादृष्टाधीनः ईश्वराधीनो वा भवतीत्यर्थः। निरीश्वरसेश्वरवादिभेदात् पक्षद्वयोक्तिः। तत् तस्मात् हे आर्य्याः! मान्याः! सख्यः! यद्वा आर्य्या! विवेकवत्यः! सख्यः!। ईदृशः पराधीनो जनः पर्य्यनुयुज्य किमिवमविमृश्य करोषि इत्येवमाक्षिप्य किं कार्य्यः? किं कारयितुं शक्यः? न किमपीत्यर्थः। कारयते रचो यत्। अदृष्टम्

नित्यं नियत्या परवत्यशेषे कः संविदानोऽप्यनुयोगयोग्यः ।
अचेतना सा च न वाचमर्हेत् वक्ता तु वक्तृश्रमकर्म भुङ्क्ते १०२

ईश्वरो वा यथा नियोजयति जनस्तथैव करोति न कस्यापि क्वापि प्रभुत्वमस्तीति भावः। तथाचोक्तं जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः। त्वया हृषीकेश! हृदिस्थितेन यथा नियुक्तोऽस्मि तथा करोमि इति। अन्यच्च। किं करोतु नरः प्राज्ञः प्रेर्य्यमाणः स्वकर्मभिरिति। अपिच किं करोतु सुधीरस्मिन् ईश्वराज्ञावशंवद इति च। अनादिधावीत्यत्र अनादिधारीति पाठे अनादि आदिराहित्यं धरतीति अनादिधारिणी आदिरहितेत्यर्थः या स्वपरम्परा तस्याः इत्यर्थः। अनादिधाविस्वपरम्परायाः इत्यत्र अनादिधा-विश्वपरम्परायाः इति तालव्यशकारवत् पाठे अनादिं दधातीति अनादिधा या विश्वपरम्परा सृष्टिश्रेणी तस्याः इत्यर्थः। तस्मात् देवेन्द्रवरणानङ्गीकारविषये पराधीनायां मयि न किमपि युष्माभिर्वाच्यमिति तात्पर्य्यम् ॥ १०२ ॥

नियतिपारवश्यमेव द्रढ़यति नित्यमिति। अशेषे अखिले जगति नित्यं सततं नियत्या दैवेन। दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिरित्यमरः। परवति पराधीने सति परतन्त्रः पराधीन इत्यमरः। संविदानोऽपि विद्वानपि। समोगमृच्छीत्यादिना विदेरात्मनेपदम्। कः जनः अनुयोगयोग्यः किमेवं क्रियते इत्याक्षेपार्हः? अपितु न कोऽपीत्यर्थः विदुषामपि तस्या अलङ्घ्यत्वादिति भावः। ननु सैव नियतिः पर्य्यनुयोज्या इत्यत्राह अचेतनेति। सा च नियतिः अचेतना चैतन्यरहिता अतएव वाचं पर्य्यनुयोगवचनं न अर्हेत् न अधिकुर्य्यात् न पर्य्यनुयोगं श्रोतुं शक्नुयादित्यर्थः। वक्ता तु तत्पर्य्यनुयोगकर्त्ता तु वक्तृस्य

क्रमेलकं निन्दति कोमलेच्छुः क्रमेलकः कण्टकलम्पटस्तम् ।
प्रीतौ तयोरिष्टभुजोः समायां मध्यस्थता नैकतरोपहासः ॥१०४

---

वदनस्य श्रमः परिश्रमः स एव क्रियते इति कर्म फलमित्यर्थः भुङ्क्ते। तादृशे वचनं मुखक्लेशमात्रं न तु अन्यत् किमपि फलमादधातीति भावः। तस्मात् वृथाश्रमम् अकृत्वा तूष्णीं स्थीयताम्। अहं दैवप्रचोदिता नलमेव वरिष्यामि न अपरमिति तात्पर्य्यम् ॥ १०३ ॥

ननु देवेन्द्रपरित्यागेन नलग्रहणं केवलं लोकहास्यायेत्यत आह, क्रमेलकमिति। इच्छतीति इच्छुः कोमलं मृदु वस्तु इच्छुः कोमलेच्छुः मृदुवस्त्वाहारीत्यर्थः अश्वगवादिः। न लोकेत्यादिना षष्ठीनिषेधात् मधु पिपासुवत् द्वितीयासमासः। क्रमेलकम् उष्ट्रं कठिनवस्त्वाहारिणमिति शेषः। उष्ट्रः क्रमेलक इत्यमरः। निन्दति। कण्टकेषु लम्पटः लुब्धः कण्टकप्रियः इत्यर्थः। लोलुपं लोलुभं लोलं लालसं लम्पटं विदुरिति हलायुधः। क्रमेलकः तं कोमलेच्छुम् अश्वगवादिं निन्दति इति अनुषङ्गः। इष्टं स्वं स्वं प्रियं भुञ्जाते इति इष्टभुजोः स्वस्वप्रियवस्त्वाहारिणोः इत्यर्थः तयोः क्रमेलककोमलेच्छ्वोः प्रीतौ तृप्तौ समायां तुल्यायां क्रमेलकस्य कण्टकभोजने या तृप्तिः, कोमलेच्छोर्मृदुवस्तुभक्षणे तादृशी एव तृप्तिरिति भावः। एकतरस्य क्रमेलकस्य कोमलेच्छोर्वा उपहासः न मध्यस्थता न माध्यस्थ्यं न अपक्षपातित्वमित्यर्थः। एवमवस्थायामेकतरोपहासे पक्षपातितया उपहासकर्त्ता स्वयमेव उपहास्यो भवतीति भावः। तस्मात् यस्य यत्र तृप्तिः तेन तत्रैव प्रवर्त्तितव्यं न तत्र कश्चिदुपहासावसरः लोकानां भिन्नरुचित्वादिति तात्पर्य्यम् ॥ १०४ ॥

गुणा हरन्तोऽपि हरेर्नरं मे न रोचमानं परिहारयन्ति ।
न लोकमालोकयथापवर्गात्त्रिवर्गमर्वाञ्चममुञ्चमानम्?॥१०५॥
आकीटमाकैटभवैरि तुल्यः स्वाभीष्टलाभात् कृतकृत्यभावः ।
भिन्नस्पृहाणां प्रति चार्थमर्थं द्विष्टत्वमिष्टत्वमपव्यवस्थम्॥१०६॥

ननु नलापेक्षया गुणाधिके देवेन्द्रे अरुचिः नैव युक्तेत्यत्राह, गुणा इति। हरन्तः अपि मन इति शेषः। मनोहारिणोऽपीत्यर्थः हरेः इन्द्रस्य गुणाः महिमान इत्यर्थः। मे मह्यं रुच्यर्थानां प्रीयमाण इति चतुर्थी। रोचमानं मम मनोहरन्तमिति यावत् नरं मानवं रलयोरैक्यात् नलमित्यर्थः। न परिहारयन्ति न परित्याजयन्ति। एतमर्थमर्थान्तरेण दृढ़यति, नेति। अपवर्गात् मोक्षात् अर्वाञ्चं निकृष्टं त्रिवर्गं धर्म्मकामार्थान् त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैरित्यमरः। अमुञ्चमानम् अत्यजन्तं लोकं जनं न आलोकयथ न पश्यथ यूयमिति शेषः। यथा लोकः परमनिर्वृतिहेतुभूतं निर्वाणमनिच्छन् धर्मकामार्थरूपं त्रिवर्गं सेवते तथाहं देवेन्द्रं परित्यज्य नलमेवाभिलषामि। गुणानपेक्षिणी रुचिरेव मां नलं वरीतुं प्रवर्त्तयतीति भावः। अत्र दृष्टान्तालङ्कारः तदुक्तं दर्पणे। दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति॥ १०५॥

यत् यस्मै रोचते तेनैव तस्य कृतकृत्यता, नात्र कश्चिद् वचनावसर इत्याह, आकीटमिति। आकीटं कीटात् आरभ्य आकैटभवैरि विष्णुपर्य्यन्तम् उभयत्र मर्य्यादायामाङ् योगेऽव्ययीभावः। सर्वेषां स्वाभीष्टलाभात् स्वं स्वमभिलषितं प्राप्येत्यर्थः कृतकृत्यभावः कृतार्थता तुल्यः समः। कीटो यथा स्वाभिलषितं प्राप्य आत्मानं कृतार्थं मन्यते विष्णुरपि तथा नात्र

अध्वाग्रजाग्रन्निभृतापदम्बुर्बन्धुर्यदि स्यात् प्रतिबन्धुमर्हः।
जोषं जनः कार्य्यविदस्तु वस्तु पृच्छ्या निजेच्छा पदवीं मुदस्तु१०७

---

कृतकृत्यतायां कश्चिद् विशेषोऽस्तीति भावः। तर्हि देवेन्द्रलाभे तव कृतार्थता न कुत इत्यत्राह भिन्नेति। भिन्ना स्पृहा येषां तेषां भिन्नस्पृहाणां भिन्नरुचीनाम् इत्यर्थः। जनानाम् अर्थमर्थं प्रति द्विष्टत्वम् अरुचिकरत्वम् इष्टत्वं रुचिकरत्वञ्च एतद् द्वयम् अपगता व्यवस्था यस्य तत् अपव्यवस्थं व्यवस्था रहितं नियमरहितमित्यर्थः यदेकस्मै रोचते तदन्यस्मै न रोचते नात्र काचिद् व्यवस्थितिः तस्मात् नललाभादेव मम कृतार्थता नेन्द्रलाभादिति निष्कर्षः॥ १०६॥

ननु असमीक्ष्यकारितया प्रवृत्तो जनः सुहृद्भिः निवारणीय इत्यत्राह, अध्वेति। अग्रश्चासौ अध्वा चेति अग्राध्वा समानाधिकरणसमासः। अतएव हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदादिति वामनः। तस्मिन् पुरोवर्त्तिनि पथीत्यर्थः। जाग्रत् प्रत्यक्षवत् स्फुरन्नित्यर्थः। आपदेव अम्बुः कूपः यस्य तादृशः। पुंस्येवान्धुः प्रहिः कूप इत्यमरः। बन्धुः सुहृत् यदि स्यात् भवेत् कश्चिदिति शेषः, स बन्धुः प्रतिबन्धुम् एतस्मान्नलानुरागात् निवारयितुमिति यावत् अर्हः योग्यः भवतीति शेषः। अनेन पथा मा गच्छ, यदि गच्छसि तदा कूपे पतिष्यसि एतन्मया प्रत्यक्षमिव दृश्यते इत्थं केनचित् सुहृदा आवेदिते तस्मिन् पथि न गन्तव्यं प्रकृते नाहं तादृशी कुमार्गगामिनी येनैवं युष्माभिर्निवारणीया भवामि। अहन्तु हितकरमेव विमृश्य नले अनुरागिणी जाता तदत्र भवतीनां न निवारणावसर इति भावः। ननु इन्द्रपरित्यागेन तव नलग्रहणे कार्य्याकार्य्यविवेकवताम् अस्माकं तूष्णीमवस्थानं न युक्तमित्यत्राह, जोषमिति।

इत्थं प्रतीपोक्तिमतिं सखीनां विलुप्य पाण्डित्यबलेन बाला ।
अपि श्रुतस्वर्पतिमन्त्रिसूक्तिं दूतीं बभाषेऽद्भुतलोलमौलिम् १०८

परेतभर्त्तुर्मनसेव दूतीं नभस्वतेवानिलसख्यभाजः ।
त्रिस्रोतसेवाम्बुपतेस्तदाशु स्थिरास्थमायातवतीं निरास्थम् १०९

---

कार्य्यं वेत्तीति कार्य्यवित् कार्य्यज्ञो जनः अत्र विषये जोषं तूष्णीम् अस्तु भवतु तूष्णीमर्थे सुखे जोषमित्यमरः। न कोऽपि कार्य्यज्ञत्वाभिमानी मां निवारयतु इति भावः। तर्हि कुतस्ते कार्य्यविवेक इत्यत्राह, वस्त्विति। निजेच्छैव स्वरुचिरेव मुदः सुखस्य श्रेयस इत्यर्थः। पदवीं पन्थानं वस्तु पृच्छ्या अनुयोज्या, किं शुभं किमशुभं वस्तु इत्यत्र स्वरुचिरेव प्रवृत्तिनिवृत्ति-कारिणी नान्या काचिदिति भावः। प्रच्छेर्द्विकर्मकत्वादप्रधाने कर्मणि ऋहलोर्ण्यत्। अध्वाग्रजाग्रन्निभृतापदस्तुम् इति च पाठान्तरम् ॥ १०७ ॥

इत्थं सखीनां प्रतिकूलवर्त्तित्वं निषिध्य पुनः इन्द्रदूतीं प्रति-वक्ति इत्थमिति। बाला मुग्धा भैमी इत्यमनेन प्रकारेण सखीनां प्रतीपोक्तिमतिं प्रतिकूलवचनविषयिणीं बुद्धिं पाण्डित्यबलेन विद्याप्रभावेण विलुप्य निरस्य श्रुताः स्वर्पतेरिन्द्रस्य मन्त्रिणः बृहस्पतेः सूक्तयः सुभाषितानि यया ताम् अपि अहरादीनां पत्यादिषु इति रेफादेशः। दूतीम् अद्भुतेन अहो बालाया अस्या बृहस्पतेरिव वचसि प्रागल्भ्यमिति विस्मयेन लोलः चलः मौलिः शिरो यस्याः तथाभूतां शिरःकम्पयन्तीमित्यर्थः कृत्वेति शेषः बभाषे उक्तवती ॥ १०८ ॥

किमित्याह परेतेति। मनसेव चित्तेनेव नभस्वतेव वायु-नेव त्रिस्रोतसेव गङ्गयेव यथाक्रमं वाहनेनेति भावः। स्थिरा

भूयोऽर्थमेनं यदि मां त्वमात्थ तदा पदावालभसे मघोनः ।
सतीव्रतैस्तीव्रमिमन्तु मन्तुमन्तर्वरं वज्रिणि मार्जितास्मि ॥ ११०

दृढ़ा अवश्यमेव प्रभुकार्य्यं साधयिष्यामीति निश्चितेत्यर्थः । आस्था अभिनिवेशः यत्र तद् यथा तथा आयातवतीम् आगतां कार्य्यगौरवात् अतिद्रुतमुपस्थितामिति भावः । परेतभर्त्तुः यमस्य अनिलेन सख्यं भजते इति अनिलसख्यभाक् ढात् भज-सहविन्निति विन्प्रत्ययः । तस्य अग्नेरित्यर्थः तथा अम्बुपतेः जलाधिपस्य दूतीं मनसेव वाहनेन द्रुतमागतवतीं यमस्य दूतीं वायुनेव वाहनेन द्रुतमागतवतीम् अग्नेर्दूतीं मन्दाकिनी-स्रोतसेव वाहनेन द्रुतमागतवतीं वरुणस्य दूतीमित्यर्थः । तदा आगमनक्षण एव आशु शीघ्रं निरास्थं निराकृतवती अस्मि । अस्यति-ख्याति-वक्तिभ्यो ङिति अस्यतेर्लुङि च्लेरङादेशः । अस्यतेः स्थुगिति स्थुगागमः । न केवलं त्वामहं निराकरोमि पूर्वं यमादीनां दूत्योऽपि आगता एव मया निराकृताः केवलम् इन्द्रगौरवात् त्वया सह बहुक्षणमालापः क्रियते इति भावः । अत्र यमादीनां प्रीत्यर्थं ता दूत्यस्तथाविधवाहनेन अतिद्रुत-मानीता इवेत्युत्प्रेक्षार्थः । यद्वा स्थिरा निश्चला आस्था अभि-निवेशः नलवरणे इति भावः । यस्मिन् कर्मणि तद् यथा तथा निरास्थमितिक्रियापदस्य विशेषणम् । तदाशु इत्यत्र त्वदाशु इति वकारवत्पाठे त्वत् त्वत्तः ल्यब्लोपे पञ्चमी । त्वामपेक्ष्य इत्यर्थः आशु शीघ्रम् आयातवतीमित्यन्वयः ॥ १०९ ॥

भूय इति । हे दूति ! त्वं भूयः पुनः एनम् अर्थम् इन्द्रं वृणीष्व इत्येवं रूपमित्यर्थः । यदि आत्थ ब्रवीषि ब्रुवः पञ्चाना-मादित आहो ब्रुव इति सिपस्थलादेशः । इकारस्य थकारादेशः । तदा मघोनः इन्द्रस्य पदौ चरणौ पदङ्घ्रिश्चरण इत्यमरः ।

इत्थं पुनर्वागवकाशनाशात् महेन्द्रदूत्यामपयातवत्याम् ।
विवेश लोलं हृदयं नलस्य जीवः पुनः क्षीवमिव प्रबोधः ॥१११

आलभसे द्रक्ष्यसि एवं शपथदानात् त्वया भूयो नैव वक्तव्यम् इति भावः। ननु तर्हि इन्द्रे अपराधिनी भवसि इत्यत्राह सतीति। वज्रिणि वज्रधरे एतेन अस्य अपराधिनं प्रति तीक्ष्णदण्डत्वं सूचितम्। इन्द्रे अन्तः आन्तरं तीव्रं दारुणम् इमं मन्तुम् अपराधन्तु स्वावज्ञारूपमिति भावः। सतीव्रतैः पतिव्रतानियमैः वरं मार्जितास्मि अपनेष्यामि आगोपराधो मन्तुश्चेत्यमरः। मृजेर्लुटि उदित्त्वाद्विकल्पेनेड्भावः। पतिव्रताधर्मप्रीतो भगवान् सर्वान्तर्यामी अवश्यमेव माम् अस्मात् अपराधात् रक्षिष्यतीति भावः। अन्तरितिपदस्य सतीव्रतैः इत्यनेन अनुषङ्गे अन्तःस्थितैः अकपटैरिति भावः सतीव्रतैः यद्वा अन्तः अन्तरात्मनि इन्द्रेण दृश्यमानैः सतीव्रतैः हेतुभिः तस्य सर्वान्तर्यामित्वादिति भावः। अथवा अन्तर्वरं नलम् अन्तः वर्त्तमाने इति शेषः वज्रिणि अंशरूपेण नलदेहमाश्रिते इन्द्रे इत्यर्थः। ततश्च नलतुष्टौ तदन्तर्वर्त्ती इन्द्रोऽपि सुतरां तुष्टो ममापराधं न ग्रहीष्यतीति भावः॥ ११० ॥

अथापयातायामिन्द्रदूत्यां पुनर्नलस्य दमयन्तीप्रत्याशामाह इत्थमिति। इत्थमनेन प्रकारेण पुनः वाचाम् अवकाशस्य नाशात् निवृत्तेः इन्द्रदूत्याम् अपयातायाम् अपगतायां सत्यां नलस्य जीवः अन्तरात्मा प्रबोधः प्रकृष्टो विवेकः क्षीवमिव मत्तमिव मत्ते शौण्डोत्कट क्षीवा इत्यमरः। क्षीबृ मदे इति धातोः कर्त्तरि क्तः। अनुपसर्गात् फुल्लक्षीव कृशोल्लाघा इति निपातनात् साधुः। लोलं चञ्चलं भैमीच्च इत्यश्च म

श्रवणपुटयुगेन स्वेन साधूपनीतं
दिगधिपकृपयास्मादीदृशः सन्निधानात् ।
अलभत मधु बालारागवागुत्थमित्थं
निषधजनपदेन्द्रः पातुमानन्दसान्द्रः ॥ ११२ ॥

किञ्चिदापमिति चिन्ताकुलमित्यर्थः। हृदयं पुनः विवेश प्रविष्टवान्। यथा मत्तावस्थायां प्रबोधो मत्तं जनं परित्यजति पश्चात्तदवस्थायामतीतायाम् आश्रयति तद्वत् प्राक् चलाचलं नलहृदयं तदीयजीवः प्रफुल्लः सुस्थिरतां निनायेति परमार्थः। उपमालङ्कारः ॥ १११ ॥

श्रवणेति। निषधानां जनपदानाम् इन्द्रो नलः दिशामधिपाः दिगधिपाः इन्द्रादयः तेषां कृपया वरदानजनिततिरोधानशक्त्येति भावः। अस्मात् प्राप्तात् ईदृशः एवप्रकारात् स्वप्रकाशरूपादिति भावः। सन्निधानात्। संविधानादिति पाठे दूतत्वादृश्यत्वलक्षणात् सङ्घटनादित्यर्थः। स्वेन निजेन श्रवणपुटयुगेन श्रोत्रेन्द्रियरूपपात्रयुगलेन साधु यथा तथा उपनीतम् उपगतं बालाया भैम्या रागवाग्भ्यः अनुरागव्यञ्जकवचोभ्यः उत्तिष्ठति स्रवतीति तदुत्थं मधु वागमृतमित्यर्थः। आनन्देन सान्द्रः सान्द्रानन्दः सन्नित्यर्थः। पातुम् अलभत अवकाशमिति शेषः। भैमीवचनामृतं सानन्दः सादरमतितृष्णया पीतवानित्यर्थः। शकधृषेत्यादिना तुमुन्प्रत्ययः। प्राक् हंसादिमुखेन दमयन्तीवचनामृतं श्रुतवान् इदानीं देवप्रसादात् साक्षात् तदमृतपानं कृतवानिति निष्कर्षः। मालिनीवृत्तं ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ११२ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
षष्ठः खण्डनखण्डतोऽपि सहजात् क्षोदक्षमे तन्महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥ ११३ ॥

## सप्तमः सर्गः।

अथ प्रियासादनशीलनादौ मनोरथः पल्लवितश्चिरं यः।
विलोकनेनैव स राजपुत्र्याः पत्या भुवः पूर्णवदभ्यमानि ॥१॥

---

श्रीहर्षमिति। सहजात् सहोदरात् एककर्त्तृकात् इत्यर्थः। खण्डनखण्डतः खण्डनखण्डनामकाद् ग्रन्थात् खण्डनखण्डं नाम ग्रन्थम् अयं कविः कृतवानित्यस्य तत् सहजत्वमिति भावः। यद्वा खण्डन नामको ग्रन्थ एव खण्डः इक्षुविकारः स्यात् खण्डः शकले चेक्षुविकारमणिदोषयोरिति विश्वः। तस्मात् अपि क्षोदक्षमे विमर्दसहे विचारसहे इत्यर्थः। नलस्य चरिते षण्णां पूरणः षष्ठः सर्गः व्यगलत् समाप्तिं गतः अन्यत् प्राग्व्याख्यातम् ॥ ११३ ॥

इति श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्य-विरचिता
नैषधचरितस्य षष्ठसर्गव्याख्या समाप्ता।

अथेन्द्रदूत्या निराकरणेन मयि एव अनुरक्ता भैमीति निश्चितमतिः सानन्दं तस्याः प्रत्यङ्गेषु क्रमेण दृष्टिं निक्षिप्य वर्णयितुमुपक्रमते अथेति। अथेन्द्रदूतीनिर्गमनानन्तरं भुवः पत्या पृथिवीपालेन नलेन पतिः समास एवेति नियमात् संज्ञा-

प्रतिप्रतीकं प्रथमं प्रियायामथान्तरानन्दसुधासमुद्रे ।
ततः प्रमोदाश्रुपरम्परायां ममज्जतुस्तस्य दृशौ नृपस्य ॥ २ ॥
ब्रह्माद्वयस्यान्वभवत् प्रमोदं रोमाग्र एवाग्रनिरीक्षितेऽस्याः ।
यथोचितीत्थं तदशेषदृष्टावथ स्मराद्वैतमुदं तथासौ ॥ ३ ॥

---

भावात् तत्कार्य्याभावः। प्रियाया भैम्या आसादनं प्राप्तिः ततस्तस्य शीलनं परिचयः तदादौ तत्प्रभृतिषु व्यापारेष्वित्यर्थः आदिपदेन तत्सम्भोगादिग्रहणम्। यो मनोरथः अभिलाषः चिरं पल्लवोऽस्य जात इति पल्लवितः सञ्जातपल्लवः आसीदिति शेषः। राजपुत्त्राः दमयन्त्या विलोकनेनैव दर्शनेनैव पूर्णवत् सफलवत् अभ्यमानि मानितः। अन्वमानीति पाठे स एवार्थः। मन्यतेः कर्मणि लुङ्। अस्मिन् सर्गेऽपि पूर्ववदुपजातिवृत्तम् ॥१

अथास्य चक्षुःप्रीतिं क्रमेणाह, प्रतीति। तस्य नृपस्य नलस्य दृशौ नेत्रे प्रथमं प्रियायां दमयन्त्यां तत्रापि प्रतिप्रतीकं प्रत्यङ्गम् अङ्गं प्रतीकोऽवयव इत्यमरः। अथानन्तरम् अन्तः अन्तरात्मनि आनन्द एव सुधासमुद्रः तस्मिन् ततः प्रमोदाश्रुपरम्परायाम् आनन्दवाष्पस्रोतसि ममज्जतुः निमग्ने बभूवतुः प्रथमं नृपस्तां प्रत्यङ्गं ददर्श तदनन्तरं तद्दर्शनफलमानन्दमनुबभूव ततश्च आनन्दवाष्पाकुलनयनो बभूवेति निष्कर्षः। तदत्र पर्य्यायालङ्कारभेदः दृग्रूपस्यैकस्याधेयस्य प्रियाप्रत्यङ्गाद्यनेकाधारत्वकथनात् तदुक्तम्। क्रमेणैकमनेकस्मिन्नाधारे वर्त्तते यदि। एकस्मिन्नथवानेकं पर्य्यायालङ्कृतिर्द्विधेति ॥ २ ॥

ब्रह्मेति। असौ नलः अस्या भैम्याः रोमाग्रे एव रोमाग्रमात्रे एव अग्रे प्रथमतः निरीक्षिते दृष्टे सति यथा ब्रह्मैव अद्वयम् अद्वितीयं वस्तु एकमेवाद्वितीयं ब्रह्मेति श्रुतेः। तस्य

वेलामतिक्रम्य पृथुं मुखेन्दोरालोकपीयूषरसेन तस्याः ।
नलस्य रागाम्बुनिधौ विवृद्धे तुङ्गौ कुचावाश्रयति स्म दृष्टिः ॥४॥

---

प्रमोदं साक्षात्कारजनित परमानन्दमित्यर्थः। अन्वभवत् अनुभूतवान् आनन्दस्य ब्रह्माभेदेऽपि उपचाराद् भेदव्यपदेशः। अथ तेषां रोम्णाम् अशेषदृष्टौ साकल्यदर्शने सति द्वयोर्भावो द्विता सैव द्वैतं प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः। तद्रहितमद्वैतं स्मरः काम एव अद्वैतं वस्तु तस्य मुद् आनन्दः तां तथा अन्वभवत् इत्थम् एवंरूपम् औचितौ उचितम्। रोमाग्रमात्रदर्शने ब्रह्मानन्दः समग्रदर्शने कामानन्द इति कथनात् ब्रह्मानन्दात् कामानन्दो महानिति, प्रतीयते। अस्या रोमदर्शने तथास्य कामाविशजनितप्रमोदो जातः यत् ब्रह्मसाक्षात्कारजनितपरमानन्दस्तदानीं तस्यातीव तुच्छवत् प्रतिभाति स्मेति तात्पर्य्यम्। अत्र ब्रह्मानन्दस्मरानन्दयोः एकस्मिन् नले क्रमेण वर्त्तनादेकस्मिन्नथवानेकमिति द्वितीयपर्य्यायभेदः। लक्षणमुक्तं प्राक् ॥ ३ ॥

वेलामिति। नलस्य दृष्टिः तस्या भैम्याः मुखेन्दोर्मुखचन्द्रस्य आलोकः दर्शनम् उद्योतश्च आलोकौ दर्शनोद्द्योतावित्यमरः। स एव पीयूषम् अमृतं तस्य रसेन स्वादेन राग एव अम्बुनिधिः समुद्रः तस्मिन् पृथुं महतीं वेलां समयं मर्य्यादाञ्च अब्ध्यम्बुविकृतौ वेला कालमर्य्यादयोरपीत्यमरः। अतिक्रम्य विवृद्धे विशेषेण वृद्धिं गते इत्यर्थः सति तुङ्गौ उन्नतौ कुचौ स्तनौ आश्रयति स्म अवललम्बे। यद्वा मुखेन्दोरालोकपीयूषरसेन विवृद्धे रागाम्बुनिधौ पृथुं महतीं वेलां कालमतिक्रम्य तुङ्गौ कुचौ आश्रयति स्म। मुखचन्द्रदर्शने अनुरागातिरेकात् दीर्घकालं दृष्ट्वा पश्चात् कुचयोः पपातेति

मग्ना सुधायां किमु तन्मुखेन्दोर्लग्ना स्थिता तत्कुचयोः किमन्तः
चिरेण तन्मध्यममुञ्चतास्य दृष्टिः कृशीयः स्खलनात् भिया नु ॥५

---

फलितार्थः। अत्र चन्द्रोदये समुद्रद्वयी तत्र मग्नस्य उन्नत-स्थानाश्रयरूपव्यवहारप्रतीतेस्तुल्यकार्य्यनिबन्धना समासोक्ति-रलङ्कारः तदुक्तं दर्पणे। समासोक्तिः समैर्यत्र कार्य्यलिङ्ग-विशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति। सा च मुखेन्दोरिति रागाम्बुनिधाविति च रूपकाभ्यामनु-प्राणितेत्यनयोः सङ्करः। तेन चाब्धिमज्जनभयादिवेत्युत्प्रेक्षा व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः। आश्रयतः स्म दृष्टी इति पाठे दृष्टी द्वे नेत्रे द्वौ तुङ्गौ कुचौ आश्रयतः स्मेत्यर्थः। अयमेव समीचीनः पाठः द्वयोरुन्नतस्थानयोर्द्वयोरेवाश्रयणस्य युक्तत्वा-दिति सुधीभिर्विभाव्यम् ॥ ४ ॥

मग्नेति। अस्य नलस्य दृष्टिः तस्याः दमयन्त्याः मुखमेव इन्दुश्चन्द्रः तस्य सुधायां मग्ना किम्? दीर्घकालं चकोरीव तत्सुधां पपाविति भावः। तथा तस्याः कुचयोः स्तनयोरन्तः अभ्यन्तरे लग्ना संसक्ता सती स्थिता किम्? दीर्घकालं स्तनौ ददर्शेति भावः। कृशीयः अतिशयेन कृशमित्यर्थः। तस्या भैम्या मध्यं कटिदेशं चिरेण बहुविलम्बेन स्खलनात् पतनात् भिया नु भयेन किम्। अमुञ्चत यदि अहम् एतन्मध्यं त्यक्ष्यामि तदा मध्यस्य अतिक्षीणत्वात् सद्य एव पतिष्यामि इति भयेनैव चिरं कटिदेशे स्थित्वा कटिदेशं तत्याजेत्यर्थः। अतिमनोज्ञमस्याः क्षीणं मध्यं बहुक्षणं ददर्श इत्यर्थः। यद्वा यद्यहमेतस्याः अति-कृशं मध्यं दीर्घकालमाश्रयामि तदा चिरं मद्भारसहनाक्षम-तया असौ मध्यः स्वयं पतेत् सुतरां माञ्च पातयेदिति भयेनैव तम् अमुञ्चतेत्यर्थः अत्रोत्प्रेक्षाणां तिसृणां संसृष्टिः ॥ ५ ॥

प्रियाङ्गपान्था कुचयोर्निपत्य विवृत्य लोला नलदृक् भ्रमन्ती ।
बभौतमां तन्मृगनाभिलेपतमःसमासादितदिग्भ्रमेव ॥ ६ ॥
विभ्रम्य तच्चारुनितम्बचक्रे दूतस्य दृक् तस्य खलु स्खलन्ती ।
स्थिरा चिरादास्त तदूरुरम्भास्तम्भावुपश्लिष्य करेण गाढ़म् ॥७

---

प्रियेति। प्रियाङ्गेषु पन्थानं गच्छतीति पान्था नित्यपथिका पुनः पुनः सञ्चारिणीति भावः। पथो नित्यमिति पथो णप्रत्ययः पन्थादेशश्च। लोला सतृष्णा लोलश्चलसतृष्णयोरित्यमरः। नलस्य दृक् दृष्टिः कुचयोः स्तनयोः निपत्य विवृत्य पुनरावृत्य निवृत्य निवृत्येति पाठे अन्यावयवेषु गत्वापि तयोरेव अतिमनोहरत्वात् पुनःपुनः आवृत्येत्यर्थः भ्रमन्ती पर्य्यटन्ती सञ्चरन्तीति यावत्। तयोः कुचयोर्यो मृगनाभिलेपः कस्तूरिकाप्रलेपः स एव कृष्णवर्णत्वात् तमः अन्धकारः तेन समासादितः प्राप्तः दिग्भ्रमः दिङ्मोहः इयं दिक् गम्या इयमगम्या इति ज्ञानराहित्यमिति भावः यया तादृशीव बभौतमाम् अतिशयेन भाति स्म। उत्प्रेक्षालङ्कारः। यथा दिग्भ्रान्तः पथिकः समन्तात् भ्रमन् निवृत्य निवृत्य पूर्वगतं स्थानं पुनः पुनरेति तथा अस्य दृष्टिः सर्वावयवेषु सञ्चरन्ती अपि पुनः पुनः कुचावेव सतृष्णा समाश्रयति स्मेति भावः ॥ ६ ॥

विभ्राम्येति। तस्य दूतस्य नलस्य दृक् दृष्टिः तस्या दमयन्त्याः चारु मनोहरं यत् नितम्ब एव चक्रं तस्मिन् विभ्रम्य विशेषेण भ्रमित्वा विभ्रमं विलासं प्राप्य च स्खलन्ती खलु भ्रमणातिरेकात् पतन्तीवेत्यर्थः। तस्या भैम्या ऊरू एव रम्भास्तम्भौ कदलीकाण्डौ करेण अंशुना हस्तेन च बलिहस्तांशवः करा इत्यमरः। गाढ़ं दृढ़म् उपाश्लिष्य आलिङ्ग्य स्थिरा निश्चला

वासः परं नेत्रमहं न नेत्रं किमु ? त्वमालिङ्गय तन्मयापि ।
उरोनितम्बोरु कुरु प्रसादमितीव सा तत्पदयोः पपात ॥८॥

---

सती चिरात् आस्त उपविष्टा आसीलँङ् । नलो भैम्या नितम्बं चिरं दृष्ट्वा ततस्तदूरू प्रति तथैव स्थिरदृष्टिः अभवदिति भावः। अत्र समेन कार्य्येण प्रस्तुतायां दृशि चक्रभ्रमणकारिण्या बालिकाया अप्रस्तुताया व्यवहारसमारोपात् समासोक्तिः । सा च स्खलन्ती खलु इत्युत्प्रेक्षया समुत्थापिता इत्यनयोः सङ्करः ॥७

वास इति । वासः वसनं परं केवलं नेत्रं नेत्रपदप्रतिपाद्यम् आच्छादनमित्यर्थः अहं नेत्रं न किमु ? नैव नेत्रमस्मि किम् ? इत्यर्थः । अहमपि नेत्रपदप्रतिपाद्यमेवेत्यर्थः। नेत्रं पथि गुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषीति मेदिनी । तत्तस्मात् नेत्रत्वाविशेषादित्यर्थः त्वं मया अपि नेत्रेणेति भावः । उरश्च नितम्बश्च ऊरू च तत् उरोनितम्बोरु प्राण्यङ्गत्वात् द्वन्द्वे कवद्भावः । आलिङ्गय आश्लेषय । यथा नेत्रपदप्रतिपाद्येन वस्त्रेण वक्षस्थलं नितम्बम् ऊरू च आलिङ्गयसि तथा मयापि नेत्रपदप्रतिपाद्येन तत्तदङ्गमालिङ्गयेत्यर्थः । वसनमपसार्य्य तानि अङ्गानि प्रदर्शयेति भावः । प्रसादं तत्तदङ्गालिङ्गनदानरूपम् अनुग्रहं कुरु इतीव इत्थं धियेवेत्युत्प्रेक्षा सा नलदृष्टिः तस्याः भैम्याः पदयोः चरणयोः पपात। तच्चरणौ ददर्शेति भावः। अत्र प्रस्तुतायां दृशि श्लेषमहिम्ना अप्रस्तुतायाः कस्याश्चित् सजातीयाया उत्कृष्टपदारूढाया दर्शनेन जनिततत्प्राप्तिप्रत्याशया तत्प्रभुचरणपतनरूपव्यवहारसमारोपात् समासोक्तिः । पूर्ववत् सा इतीवेत्युत्प्रेक्षया संसृज्यते इत्यनयोः संसृष्टिः ॥ ८ ॥

दृशोर्यथाकाममथोपहृत्य स प्रेयसीमालिकुलञ्च तस्याः।
इदं प्रमोदाद्भुतसम्भृतेन महीमहेन्द्रो मनसा जगाद ॥ ९ ॥
पदे विधातुर्यदि मन्मथो वा ममाभिषिच्येत मनोरथो वा।
तदा घटेतापि न वा तदेतत् प्रतिप्रतीकाद्भुतरूपशिल्पम् ॥१०॥

---

दृशोरिति। अथ अनन्तरं स महीमहेन्द्रो राजेन्द्रो नलः दृशोः नयनयोः प्रेयसीम् अतिप्रीतिकरीं भैमीं तस्याः प्रेयस्याः आलिकुलं सखीवर्गञ्च यथाकामं यथेच्छं निर्बाधमिति भावः उपहृत्य उपायनीकृत्य सम्यक् निरीक्ष्येत्यर्थः। प्रमोदेन हर्षेण अद्भुतेन च विस्मयेन च सम्भृतं पूर्णं तेन मनसा इदं वक्ष्यमाणं जगाद उवाच आन्दोलयामासेत्यर्थः ॥ ९ ॥

किमित्याह पादे इति। विधातुः स्रष्टुः प्रजापतेः पदे अधिकारे सृष्टिव्यापारे इति यावत्। पदं व्यवसितत्राणस्थानसिद्धान्तवस्तुष्वित्यमरः। मन्मथः कामो वा मम मनोरथो अभिलाषो वा अभिषिच्येत यदि नियुज्येत चेत् सृष्टिकार्य्याधिकारं कामः प्राप्नोति अहं वा प्राप्नोमि यदीत्यर्थः। तदा तत् प्रसिद्धम् एतत् पुरो दृश्यमानं प्रतिप्रतीकं प्रत्यङ्गमेव अद्भुतरूपम् आश्चर्य्यरूपं जगद्विलक्षणमिति भावः। शिल्पं सृष्टिः अङ्गं प्रतीकोऽवयव इत्यमरः। घटेतापि निष्पद्येतापि न वा घटेत न वा निष्पद्येतेत्यर्थः। कन्दर्पेण तथा मम मनसापि एतद्रूपं निर्मातुं न शक्यते किमुत विधातृहस्तेन, तस्मात् विधातृसृष्टिव्यतिरिक्ता विलक्षणा इयं रूपसृष्टिरिति भावः। अत्र भैमीरूपनिर्माणस्य विधातृसम्बन्धेऽपि तदसम्बन्धोक्तेस्तथा मन्मथाद्यसम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेरतिशयोक्तिभेदौ। तदुक्तं दर्पणे, सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ॥ १० ॥

तरङ्गिणी भूमिभृतः प्रभूता जानामि शृङ्गाररसस्य सेयम्।
लावण्यपूरोऽजनि यौवनेन यस्यां तथोच्चैःस्तनता घनेन ॥११॥

---

तरङ्गिणीति। सा इयं दमयन्ती भूमिं बिभर्त्ति पालयति धरति वेति भूमिभृत् क्विप्प्रत्ययः। तस्मात् भूमिभृतः भीमनरेन्द्रात् इत्यर्थः अन्यत्र पर्वतात्। महीध्रे शिखरि क्ष्माभृदहार्य्यधरपर्वता इत्यमरः। भुवः प्रभव इत्यपादानात् पञ्चमी। प्रभूता उद्भूता शृङ्गाररसस्य। शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः। उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते इत्युक्तलक्षणस्य अन्यत्र शृङ्गं पर्वतशिखरं तस्मात् आरः गमनं निःसरणमित्यर्थः यस्य तथाविधो यो रसः जलं तस्य। रसः स्वादे जले वीर्य्ये शृङ्गारादाविति हेमचन्द्रः। तरङ्गः उद्रेकः विद्यते अस्या इति तरङ्गिणी अन्यत्र ऊर्म्मिशालिनी नदीत्यर्थः जानामि मन्ये उत्प्रेक्षालङ्कारः वाक्यार्थः कर्म। तथाहि यस्यां तरङ्गिण्यां भैम्यां तथा तादृशी उच्चैःस्तनता उन्नतकुचत्वं तया घनं निविड़ं पूर्णमित्यर्थः। तेन यौवनेन तारुण्येन अन्यत्र उच्चैर्यथा तथा स्तनता गर्जता स्तनशब्दे इति धातोर्भौवादिकाच्छतृः शत्रादेशः। घनेन मेघेन। घनो मेघे मूर्त्तिगुणे त्रिषु मूर्त्ते निरन्तरे इत्यमरः। लावण्यस्य। मुक्ताफलेषु छायायाः तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इत्युक्तलक्षणस्य पूरः अतिशयः अन्यत्र लावण्यमिव पूरः जलप्रवाहः पूरो जलप्रवाहे स्यादिति विश्वः। अजनि जनितः। दमयन्त्या, उन्नकुचतया यौवने समधिकसौन्दर्य्यं कामरसोद्रेकश्च जात इति भावः। अत्र श्लेषमहिम्ना दमयन्त्यां तरङ्गिणीत्वारोपात् रूपकालङ्कारः स च श्लेषेणोत्थापित इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ११ ॥

अस्यां वपुर्व्यूहविधानविद्यां किं द्योतयामास नवामवाप्ताम्?।
प्रत्यङ्गसङ्गस्फुटलब्धभूमा लावण्यसीमा यदिमामुपास्ते ॥१२॥
जम्बालजालात् किमकर्षि? जम्बूनद्या न हारिद्रनिभप्रभेयम्।
अप्यङ्गयुग्मस्य न सङ्कचिह्नमुन्नीयते दन्तुरता यदत्र ॥ १३ ॥

---

अस्यामिति। सामर्थ्यात् ब्रह्मेति कर्तृपदाध्याहारेण व्याख्यातव्यः। ब्रह्मा अवाप्तां कुतश्चित् प्राप्तां नवां नूतनाम् अपूर्वाम् इत्यर्थः वपुर्व्यूहस्य शरीरसंस्थानस्य विधानविद्यां निर्माणकौशलम् अस्यां दमयन्त्यां द्योतयामास किम्? प्रकाशयामास किम्? इति वितर्कः। यत् यस्मात् प्रत्यङ्गसङ्गेन प्रत्यवयवव्याप्त्या स्फुटं स्पष्टं लब्धः भूमा विस्तारो यया तादृशी लावण्यस्य सीमा परा काष्ठा इमां दमयन्तीम् उपास्ते सेवते आश्रित्य तिष्ठतीत्यर्थः। यद्वा प्रत्यङ्गसङ्गस्फुटलब्धभूमा प्रत्यवयवाश्लेषेण स्पष्टावभासमानविस्तारा लावण्यसीमा कर्त्री अस्यां दमयन्त्याम् अवाप्तां कुतोऽप्यधिगतां नवाम् अपूर्वां वपुर्व्यूहविधानविद्यां शरीरसंस्थाने विधानस्य स्वसन्निवेशस्य विद्यां कौशलं द्योतयामास किम्? इत्युत्प्रेक्षा। यत् यस्मात् इमां दमयन्तीम् उपास्ते सेवते आश्रयति। अपिच तथाविधा लावण्यसीमा इमां दमयन्तीम् उपास्ते सेवते दासीवत् परिचरतीत्यर्थः इति यत् तत् सेवनम् अस्यां दमयन्त्याम् अवाप्तां प्राप्तां नवाम् अपूर्वां वपुर्व्यूहे शरीरसंस्थाने विधानस्य स्वसन्निवेशस्य विद्यां ज्ञानं कौशलमिति भावः। द्योतयामास किं? प्रकटयामास इव इति वा अर्थः। सर्वथा जगद्विलक्षणा इयं लावण्यसृष्टिरपूर्वा च इति निकर्षः॥ १२ ॥

जम्बालेति। हरिद्रया रक्तं हारिद्रं हरिद्रारञ्जितं वस्तु

**सत्येव साम्ये सदृशादशेषात् गुणान्तरेणोच्चकषे यदङ्गैः ।**
**अस्यास्ततः स्यात्तुलनापि नाम ? वस्तु त्वमीषामुपमावमानः १४**

---

इत्यर्थः सुवर्णं वा तन्निभा तत्सदृशी प्रभा यस्याः तथोक्ता सेयं दमयन्ती जम्बूनद्याः मेरुपार्श्ववर्त्तिन्याः कस्याश्चित् वाहिन्या इत्यर्थः जम्बूफलरसजातनद्या इति वा। जम्बालजालात् पङ्कराशेः जाम्बूनदमयत्वात्तस्य इति भावः। निषद्वरस्तु जम्बालः पङ्कोऽस्त्री सादकर्दमावित्यमरः। न अकर्षि किम् ? न कृष्टा किम् ? अपि सुवर्णकर्दमादाकृष्टा इव इत्यर्थः। यत् यस्मात् अत्र अस्यां भैम्याम् अङ्गयुग्मस्य अवयवद्वयस्य हस्तपादादेः सङ्गचिह्नं सन्धानचिह्नं दन्तुरता उन्नतानतत्वमपि न उन्नीयते न अनुभूयते। पङ्कादाकृष्टस्य पङ्कमयत्वात् तदङ्गेषु सर्वेषु निम्नोन्नतता सन्धानचिह्नञ्च न संलक्ष्यते इति भावः। इयन्तु सुवर्णवर्णा मृदङ्गीति तथा उत्प्रेक्षिता इति तात्पर्य्यम् ॥ १३ ॥

सत्येवेति। यत् यस्मात् अस्या दमयन्त्या अङ्गैः मुखादिभिः कर्त्तृभिः साम्ये सादृश्ये वर्त्तुलत्वादिनेति भावः। सत्येव विद्यमाने एव अशेषात् समग्रात् सदृशात् सादृश्येन अभिमतात् वस्तुनः चन्द्रादेरिति भावः। पञ्चमीविभक्ते इति पञ्चमी। गुणान्तरेण केनापि गुणविशेषेण आह्लादकत्वनिष्कलङ्कत्वादिना उच्चकषे उत्कृष्टैरभावीत्यर्थः। उत्कर्षः प्राप्त इति यावत् भावे लिट्। ततस्तस्मात् उत्कृष्टत्वाद्धेतोरित्यर्थः अमीषाम् अङ्गानां तुलना अपि नाम स्यात् ? इति काकुः। तुलना स्यात् किम् ? नामेति सम्भावनायां तुलना न सम्भाव्यते एवेत्यर्थः। वस्तु तु परमार्थस्तु अमीषाम् अङ्गानाम् उपमा सादृश्यम् अवमानः तिरस्कारः। उत्कृष्टानाम् अतथाविधैः तुलनम् अवमाननम् एवेति यावत्। केचित्तु उपमा उपमेयत्वकल्पनम् अवमानः

पुराकृतिस्त्रैणमिमां विधातुमभूत् विधातुः खलु हस्तलेखः ।
येयं भवद्भाविपुरन्ध्रिसृष्टिः सास्यै यशस्तज्जयजं प्रदातुम् ॥१५॥

---

तिरस्कार इत्याहुः । निकृष्टस्य उत्कृष्टेन तुलनं तस्य निकृष्टस्य स्तुत्यर्थम् उत्कृष्टस्य निकृष्टेन तुलनं तस्य अवमानकरमित्यस्याः अङ्गानाम् उत्कृष्टानां तुलना नैव विद्यते इति भावः ॥ १४ ॥

पुरेति । पुरा पूर्वं कृतिः सृष्टिः पुराकृतिः पूर्वसृष्टिः तत्र यत् स्त्रीणां समूहः स्त्रैणं यद्वा पुरा पूर्वं कृतिः सृष्टिः यस्य तत् पुराकृति, पूर्वसृष्टमित्यर्थः तच्च तत् स्त्रैणञ्चेति पुराकृति-स्त्रैणम् इमां दमयन्तीं विधातुं निर्मातुं विधातुः ब्रह्मणः हस्त-लेखः हस्तस्य निर्माणकौशलार्थं यल्लिख्यते स हस्तलेखः हस्ताभ्यास इत्यर्थः । हस्ताभ्यासाय लिखनं हस्तलेखः स इष्यते इति बलः । अभूत् खलूत्प्रेक्षायाम् । एतज्जन्मतः प्राक् रम्भादि-सुरसुन्दरीणां निर्माणेन ब्रह्मणा ताभ्योऽप्यतिसुन्दरीं दमयन्तीं निर्मातुं हस्तस्य निर्माणकौशलशिक्षार्थमभ्यास इव कृत इत्यर्थः । ननु प्राग्भवानां स्त्रीणां निर्माणस्य हस्ताभ्यासप्रयो-जनकत्वमस्तु अधुनातनीनां भाविनीनाञ्च कथं सृष्टिरित्यत्राह येयमिति । या इयं भवन्तीनां वर्त्तमानानां भाविनीनां भवि-ष्यन्तीनां पुरन्ध्रीणां स्त्रीणां सृष्टिः निर्माणं यद्वा भवन्ती वर्त्त-माना भाविनी भविष्यन्ती च पुरन्ध्रिसृष्टिः स्त्रीनिर्मितिः, सा अस्यै भैम्यै तासां पुरन्ध्रीणां जयात् जायते इति तज्जयजं यशः दातुं न तु अन्यत् किमपि कर्त्तुमिति भावः । यशो हि अन्या-पेक्षया उत्कर्षसाधनी प्रशंसा, तच्च तदभावे कथं स्यादिति पर्य्यालोच्य विधाता वर्त्तमानाः भाविनीश्च स्त्रियः सृजति स्रक्ष्यतीवेति भावः । कालत्रयेऽपि भैमीसदृशी सुन्दरी नास्ति अतः भैम्या एवातिसुन्दरीत्वं गम्यते । अत्र दातुमिति व्यञ्जका-

भव्यानि हानीरगुरेतदङ्गाद् यथा यथानर्त्ति तथा तथा तैः ।
तस्याधिकस्योपमयोपमाता दाता प्रतिष्ठां खलु तेभ्य एव ॥१६
नास्पर्शि दृष्टापि विमोहिकेयं दोषैरशेषैः स्वभियेति मन्ये ।

---

प्रयोगात् प्रतीयमाना फलोत्प्रेक्षा । पुरन्ध्रिशब्दो ह्रस्वान्तश्च दृश्यते ॥ १५ ॥

भव्यानीति । भव्यानि रमणीयानि वस्तूनि चन्द्रपद्मादीनि एतस्या भैम्या अङ्गात् मुखाद्यवयवात् यथा यथा हानीः अपकर्षान् पराजयजनितानिति भावः । ग्लाम्लाहातेः निर्वन्नाव्य इति जहातेः स्त्रियां निप्रत्ययः । क्तिनोऽपवादः । अगुः प्रापुः । इणोगा लुङीति गादेशे गातिस्थेत्यादिना सिचो लुक् । आत इति झेर्जुषादेशः । तथा तथा तैः भव्यैः वस्तुभिः अनर्त्ति नृत्यं कृतम् । ननु हानौ कुतो हर्ष इत्यत्राह तस्येति । उपमाता उपमानकर्त्ता कविः मातेः माङो वा तृच्प्रत्ययः । तस्य अधिकस्य उत्कृष्टस्य भैम्या अङ्गस्य उपमया उपमानीकरणेन यद्वा उपायान्तराभावात् तेषां भव्यानामेव उपमानीकरणेन तेभ्यः भव्येभ्यः चन्द्रपद्मादिभ्यः एव चतुर्थी । प्रतिष्ठां गौरवं दाता दास्यति ददातेः लुट् । यथा कथञ्चित् भैम्यङ्गानां प्रशंसायां तुल्यकक्षाणामप्राप्तौ कदाचित् चन्द्रः भैमीमुखमिवेति उपमेयत्वेन कदाचिच्च भैमीमुखं चन्द्र इवेति उपमानत्वेन कविप्रमादात् चन्द्रादीनां प्रतिष्ठालाभः पराभवोऽप्युत्तमतो हि कीर्त्तये इति भावः । अत्र उत्तरार्द्धस्य पूर्वार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १६ ॥

नेति । दृष्टापि दृष्टिविषयतां गतापि किमुत स्पृष्टा सम्भापिता सहवासं नीतेति च इत्यपिशब्दार्थः । इयं भैमी विमोह-

अन्यासु तैराकुलितस्तदस्यां वसत्यसापत्न्यसुखी गुणौघः॥१७॥
औज्झि प्रियाङ्गैर्घृणयेव रुक्षा न वारिदुर्गात्तु वराटकस्य।
न कण्टकैरावरणाच्च कान्तिर्धूलीभृता काञ्चनकेतकस्य॥१८॥

---

यति कामावेशेन विमुग्धं करोति मूर्च्छयति चेति विमोहिका मोहकारिणी मूर्च्छाविधायिनी च अतएव अशेषैः समस्तैः दोषैः हिंसादिभिरिति भावः। स्वभिया मोहयिष्यतीत्यात्मभीत्या न अस्पर्शि न स्पृष्टा इति मन्ये संभावयामि। तत्तस्मात् अस्यां दोषस्पर्शराहित्येन तत् स्पर्शभयाभावादित्यर्थः अन्यासु अपरासु स्त्रीषु तैः दोषैः आकुलितः उत्पीड़ितः गुणानां शीलसौन्दर्यादीनाम् ओघः समूहः अस्यां भैम्याम् असापत्न्येन शत्रुराहित्येन सुखी सन् वसति। अन्यासु गुणदोषाः संवलिताः सन्ति अस्यान्तु गुणा एव सन्ति न दोषा इति भावः। दृश्यते च लोकः सबाधस्थानं त्यक्त्वा निर्बाधेषु सुखी वसतीति। अयञ्च प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिरित्यस्यापवादः। अत्र च अशेषैरित्यनन्तरम् अपि शब्दोऽध्याहार्य्यः ततश्च अशेषैरपि दोषैर्नास्पर्शीत्यर्थः अशेषैर्दोषैर्नास्पर्शीत्युक्ते कियद्भिः दोषैरस्पर्शीति विरुद्धा प्रतीतिः प्रसज्येत इति बोध्यम्। उत्प्रेक्षालङ्कारः॥ १७॥

औज्झीति। प्रियाया भैम्या अङ्गैः अवयवैः अङ्गं प्रतीकोऽवयव इत्यमरः। वराटकस्य पद्मवीजकोषस्य वीजकोषो वराटक इत्यमरः। रुक्षा परुषा अस्निग्धेत्यर्थः तीक्ष्णेति भावः। कान्तिः घृणयेव रौक्ष्यजुगुप्सयेव औज्झि परित्यक्ता उज्झ विसर्गे इत्यस्मात् कर्मणि लुङ्। वारिदुर्गात्तु जलरूपदुर्गमाश्रयतया आक्रमितुमसामर्थ्यात् तु न औज्झीत्यन्वयः। अधि-

प्रत्यङ्गमस्यामभिकेन रक्षां कर्त्तुं मघोनेव निजास्त्रमस्ति ।
वज्रञ्च भूषामणिमूर्त्तिधारि नियोजितं तद्द्युतिकार्मुकञ्च॥१९॥

---

कस्य दुर्बलाक्रमणमनायासेनैव स्यात् तत्परित्यागस्तु स्वप्रयोजनराहित्येन कृपया वेति भावः । तथा काञ्चनकेतकस्य स्वर्णकेतकीकुसुमस्य कान्तिः धूलीभिः रजोभिः भृता पूर्णा अतएव घृणया मालिन्यजुगुप्सया इति भावः । औज्झि त्यक्ता कण्टकैः तीक्ष्णाग्रावयवविशेषैः क्षुद्रशत्रुभिश्च आवरणात् आकीर्णत्वात् रक्षितत्वाच्च न च नैव औज्झीत्यनुषङ्गः । पद्मबीजकोषस्य स्वर्णकेतककुसुमस्य च कान्तिः भैमीकायकान्तिसाम्यं न अर्हतीति भावः । अत्र उपमानात् वराटकात् काञ्चनकेतकाच्च उपमेयस्य भैम्यङ्गस्य आधिक्यात् व्यतिरेकालङ्कारो व्यज्यते ॥ १८ ॥

प्रत्यङ्गमिति । अस्यां दमयन्त्याम् अभिकामयते इत्यभिकः कामुकः तेन अभिकेन। कमः कामनोऽभिक इत्यमरः। अनुकाभिकाभीकः कमितेति निपातनात् साधुः । मघोना इन्द्रेण प्रत्यङ्गं प्रत्यवयवं रक्षां कर्त्तुं नियोजितं नियुज्य रक्षितमिव निजास्त्रं स्वायुधं वज्रं भूषामणीनां मूर्त्तिम् अलङ्काररत्नहीरकाणां मूर्त्तिं धरतीति तथोक्तं सत् तथा तेषां मणीनां द्युतय एव कार्मुकं स्वं धनुः इन्द्रधनुश्चेत्यर्थः अस्याः प्रत्यङ्गम् आवृत्य इति शेषः अस्ति वर्त्तते। प्रत्यङ्गमस्या अलङ्कारेषु ये हीरकाः सन्ति तेषाञ्च याः प्रभाः स्फुरन्ति ते एतत्कामुकेन देवेन्द्रेण एतस्या अङ्गानां दोषादिभ्यो रक्षणाय स्वनियोजितवज्रास्त्रस्य मूर्त्तय इव ताश्च शक्रचापा इव विराजन्ते इवेति उत्प्रेक्षार्थः । वज्रं स्यात् हीरके पवावित्यमरः । एतेन भैमीधृतानां मणीनां बहुमूल्यत्वम् अत्युत्कृष्टत्वञ्च गम्यते तथाचोक्तं

अस्याः सपक्षैकविधोः कचौघः स्थाने मुखस्योपरि वासमाप।
पक्षस्थतावद्बहुचन्द्रकोऽपि कलापिनां येन जितः कलापः॥२०

---

रत्नपरीक्षाशास्त्रे अकाले शक्रचापानामुदयस्तु यतो भवेत्।
असौ धन्यतरो ज्ञेयो बहुमूल्यो मणिः स्मृत इति॥ १९॥

इत्थं सामान्येन वितर्क्य अतःपरम् आसर्गसमाप्तेः भैम्याः केशादिनखान्तानि सर्वाणि अङ्गानि वर्णयति अस्या इत्यादि। अस्या भैम्याः कचानां केशानाम्। कचः केशः शिरोरुह इत्यमरः। ओघः समूहः सपक्षः सदृशः सुहृद्भूतश्च एकः केवलः विधुः चन्द्रः न तु अन्यत् कमलादिकमित्येकशब्दार्थः। यस्य तस्य सपक्षैकविधोः। तृतीयादिषु भाषितपुस्कं पुंवदिति वैकल्पिकः पुंवद्भावः। मुखस्य उपरि वासं स्थितिम् आप प्राप एतत् स्थाने युक्तम्। युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। कुत इत्याह पक्षेति। येन कचौघेन पक्षयोः गरुतोः तिष्ठन्तीति पक्षस्थाः पतत्रस्थिता इत्यर्थः। स्ववर्ग्याश्च सहायभूताश्चेति भावः। पक्षो मासार्द्धके पार्श्वगृहे साध्यविरोधयोः। केशादेः परतो वृन्दे वने सखिसहाययोः। कुल्लीरम्भे पतत्रे चेति मेदिनी। तावन्तः बहवः चन्द्रका मेचकाः। समौ चन्द्रकमेचकावित्यमरः। अथच चन्द्रा एव चन्द्रकाः शेषाद् विभाषेति कप्। यस्य सोऽपि तादृशबहुचन्द्रसहायोऽपीति भावः। कलापिनां मयूराणां मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्। कलापीचेत्यमरः। कलापः पिच्छभारः। कलापो भूषणे बर्हे इत्यमरः। जितः। यः अनेकचन्द्रसहायं मयूरकलापं जितवान् तस्य एकमात्रचन्द्रसहायस्य भैमीमुखस्य विजयेन तदुपर्य्यवस्थानं न चित्रमिति भावः। एतेन अस्याः केशपाशः मयूरपिच्छादपि मनोहारीति गम्यते॥ २०॥

अस्या यदास्येन पुरस्तिरश्च तिरस्कृतं शीतरुचान्धकारम्।
स्फुटं स्फुरद्भङ्गकचच्छलेन तदेव पश्चादिदमस्ति बद्धम्॥२१॥
अस्याः कचानां शिखिनश्च किं नु विधिं कलापौ विमतेरगाताम्
तेनाग्रमेभिः किमपूजि पुष्पैरभर्त्सि दत्त्वा स किमर्द्धचन्द्रम्॥२२

---

अस्या इति। अस्या भैम्या आस्येन वदनेन एव शीतरुचा शीतांशुना चन्द्रेण व्यस्तरूपकम्। यत् अन्धकारं तिमिरम्। अन्धकारोऽस्त्रियाम् ध्वान्तं तमिस्रं तिमिरं तम इत्यमरः। पुरः तिरश्च पार्श्वयोश्च तिरस्कृतम् अपसारितं तदेव तिरस्कृतमन्धकारमेव स्फुरन् द्योतमानः भङ्गः कौटिल्यं पराजयश्च येषां तेषां कचानां छलेन व्याजेन पश्चात् बद्धं संयतम् अस्तीति स्फुटमुत्प्रेक्षे। तिरस्कृतः पराजितश्च शत्रुः पश्चाद् बद्धः संरक्ष्यते इति प्रसिद्धिः। एतेन अतिकुटिलाः कृष्णाश्च अस्याः केशपाशा इति गम्यते॥ २१॥

अस्या इति। अस्याः भैम्याः कचानां केशानां शिखिनः मयूरस्य च कलापौ केशपाशबर्हभारावित्यर्थः। कलापो भूषणे बर्हे तूणीरे संहते कचे इत्यमरः। विमतेः विरुद्धमतेः परस्परविरोधाद्धेतोरित्यर्थः अहमेव उत्कृष्टः न त्वमिति सङ्घर्षाद्धेतोरिति यावत्। विधिं ब्रह्माणम् अगातां गतौ किन्नु? स्वतारतम्यं प्रष्टुमिति शेषः। इणो गा लुङीति साधुः। ब्रह्मण उभयोरेव सृष्टिकर्त्तृत्वेन उभयोर्गुणागुणयोर्ज्ञाने ब्रह्मण एव सामर्थ्यादिति भावः। तेन विधिना अयं भैम्याः केशपाशः एभिः पुरो दृश्यमानैः पुष्पैः किम् अपूजि? सत्कृतः किम्? स शिखिकलापः अर्द्धचन्द्रं चन्द्रकं गलहस्तञ्च दत्त्वा अभर्त्सि किम्? तिरस्कृतः किन्? तर्जन्यङ्गुष्ठविस्तारे गलहस्तार्द्ध-

केशान्धकारादथ दृश्यभालस्थलार्द्धचन्द्रा स्फुटमष्टमीयम्।
एतां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि साधु ॥२३
पुष्पं धनुः पुष्पशरस्य दाहे श्यामीभवत्केशरशेषमासीत्।

चन्द्रकाविति बलः। अर्द्धचन्द्रो बाणभेदे चन्द्रके च शिखण्डिनामिति धरणिश्च। विधिर्मध्यस्थः पूज्यस्पर्द्धारूपाहङ्कारदोषेण अपूज्यस्य कलापस्य तिरस्करणं समीचीनं मत्वा तथा दमयन्तीकेशस्य पूज्यतागुणं मत्वा च भैमीकेशकलापं पुष्पैः संपूज्य अलङ्कृतवान् शिखिकलापञ्च अर्द्धचन्द्रदानेन तिरस्कृत्य निराकृतवांश्च किम्? इत्युत्प्रेक्षा। योग्यं योग्येन युज्यते इति भावः ॥ २२ ॥

केशेति। केश एवान्धकारः तस्मात् अथ अनन्तरं दृश्यः मनोहर इत्यर्थः दर्शनीयश्च भालस्थलमेव ललाटभाग एव अर्द्धचन्द्रः यस्याः यस्यां वा सा इयं दमयन्ती अष्टमी कृष्णाष्टमी रात्रिः इत्यर्थः। अन्धकारानन्तरं चन्द्रोदयात् अत्र अष्टमी कृष्णाष्टमी एव बोद्धव्या शुक्लाष्टम्यान्तु चन्द्रोदयादनन्तरमन्धकारोदयश्च इति नात्र शुक्लाष्टमी। स्फुटमुत्प्रेक्षे। यत् यस्मात् मनोभुवा कामिन एतां दमयन्तीं कृष्णाष्टमीम् आसाद्य प्राप्य जगतां जयाय सिद्धिः साधु सम्यक् यथा तथा असाधि साधिता जगज्जयरूपं कार्य्यं साधितमित्यर्थः। यथा अन्योऽपि साधकः कृष्णाष्टमीं प्राप्य वशीकरणादिमन्त्रसिद्धिं साधयति तथा कामः एनां दमयन्तीं प्राप्य जगद्वशीकरणसिद्धिं लभते इति भावः। उक्तञ्च पितामहेन जयदा विजिगीषूणां यात्रायामष्टमी तिथिः। श्रवणेनापि रोहिण्या जययोगो विशेषत इति। अत्र रूपकेणानुप्राणिता उत्प्रेक्षालङ्कारः ॥२३॥

पुष्पमिति। पुष्पशरस्य कुसुमायुधस्य दाहे भस्मीकरणे

व्यधात् द्विधेशस्तदपि क्रुधा किं भैमीभ्रुवौ येन विधिर्व्यधत्त॥२४

भ्रूभ्यां प्रियाया भवता मनोभूचापेन चापे घनसारभावः।
निजां यदप्लोषदशामवेक्ष्य सम्प्रत्यनेनाधिकवीर्य्यताज्जि॥२५॥

पुष्पं पुष्पमयं तदीयं धनुः अश्यामाः श्यामा भवन्तः कालिमानमापद्यमाना इत्यर्थः केसराः किञ्जल्काः किञ्जल्कः केसरोऽस्त्रियामित्यमरः। एव शेषाः अवशिष्टांशा यस्य तथाभूतम् आसीत् तथा ईशः हरः तदपि श्यामीभवत् केशरमात्रमपि पुष्पं धनुः क्रुधा कामं प्रति क्रोधेन द्विधा व्यधात् द्विखण्डमकरोत् किम्? येन द्विधा विभक्तेन श्यामीभवत्केसरशेषेण पुष्पधनुषा विधिः ब्रह्मा भैम्या भ्रुवौ व्यधत्त रचितवान्। अतएवास्या भ्रुवोस्तथाविधकामधनुःपरिणामरूपत्वात् कामोद्दीपकत्वमिति भावः। भ्रुवोः अतिश्यामलपक्ष्मवत्त्वात् मध्यभग्नधनुराकारत्वाच्च इयमुत्प्रेक्षा॥ २४॥

भ्रूभ्यामिति। मनोभुवः कामस्य चापेन धनुषा प्रियाया भैम्या भ्रूभ्याम् उक्तप्रकारेण द्विखण्डीकृततया भ्रूयुगलेन भवता सता घनसारभावः दृढस्थिरांशत्वं कर्पूरत्वञ्च सारो बले स्थिरांशे च इति। अथ कर्पूरमस्त्रियां घनसारश्चन्द्रसंज्ञ इति चामरः। आपे प्राप्तः। आप्नोतेः कर्मणि लिट्। प्राक् पुष्पत्वदशायामस्य निःसारत्वं मृदुलत्वञ्च आसीत् इदानीम् अस्या भ्रूत्वप्राप्त्याससारत्वं दृढत्वञ्च जातमित्यर्थः। यद् यस्मात् सम्प्रति प्रियाया भ्रूत्वप्राप्तावित्यर्थः। अनेन कामधनुषा निजाम् अप्लोषदशाम् अदाहावस्थाम् अवेक्ष्य दृष्ट्वा अधिकवीर्य्यता अधिकसामर्थ्यम् आर्जि प्राप्ता। अर्जतेः कर्मणि लुङ्। वीर्य्यं पराक्रमे तेजसीति वैजयन्ती। एतद् भ्रूयुगम् अनङ्गमपि कामं

स्मारं धनुर्यद्विधुनोज्झितास्यामास्येन भूतेन च लक्ष्मलेखा।
एतद्भ्रुवौ जन्म तदाप युग्मं लीलाचलत्वोचितबालभावम् २६
इषुत्रयेणैव जगत्त्रयस्य विनिर्जयात् पुष्पमयाशुगेन।
शेषा द्विबाणी सफलीकृतेयं प्रियादृगम्भोजपदेऽभिषिच्य॥२७॥

---

साङ्गमिव समुत्तेजयतीति भावः। अत्रोत्प्रेक्षालङ्कारः। अनेन मनोभुवा अधिकवीर्य्यता अधिकपराक्रमत्वम् आर्जीति प्राचां व्याख्यानं न समीचीनम् अनेन इत्यस्य मनोभूचापेन प्रागुक्तेन परामर्शस्यैव युक्तत्वादिति सुधीभिर्भाव्यम्॥ २५॥

स्मारमिति। स्मरस्य इदं स्मारं धनुः दग्धं पूर्वोक्तरीत्या दग्धं कामधनुः अस्यां भैम्याम् आस्येन आस्यत्वं गतेन वक्त्र-भूतेनेत्यर्थः। विधुना चन्द्रेण उज्झिता लक्ष्मरेखा कलङ्करेखा च तद् युग्मं कामधनुश्चन्द्रकलङ्कयोः द्वयमित्यर्थः। कर्त्तृ। लीला-चलत्वयोः विलासचाञ्चल्ययोः उचितः अनुरूपः योग्य इत्यर्थः। बालभावः केशत्वम्। बालः कचः केशः शिरोरुह इत्यमरः। बवयोरभेदात् शैशवञ्च यस्मिन् तथोक्तम् एतस्या दमयन्त्या भ्रुवौ जन्म भ्रूयुगलरूपेणोत्पत्तिमित्यर्थः आप प्राप्तम्। एतस्या मुखमकलङ्कमहन्तु सकलङ्क इतीर्ष्ययेव स्वयं अस्या मुखं भवन् स्वकलङ्कमेकां भ्रुवमकरोत् कामश्च स्वं धनुर्दग्धमपरया भ्रुवा परिणतमकरोदिवेति वाक्यार्थः। अस्या मुखं भ्रुवा सकलङ्कः चन्द्रः कामोद्दीपकश्चेति भावः॥ २६॥

अथ नवभिरस्याः चक्षुषी वर्णयति इष्विति। पुष्पमया आशुगाः शराः यस्य तेन पञ्चशरेण कामेनेत्यर्थः कर्त्रा इषुत्रयेण शरत्रयेण एव जगतां त्रयस्य त्रिभुवनस्य उभयप्राप्तौ कर्मणीति षष्ठी। विनिर्जयात् विशेषेण वशीकरणात् शिष्यते इति शेषा

सेयं मृदुः कौसुमचापयष्टिः स्मरस्य मुष्टिग्रहणार्हमध्या।
तनोति नः श्रीमदपाङ्गमुक्तां मोहाय या दृष्टिशरौघवृष्टिम्॥२८

अवशिष्टा त्रिष्वप्यस्मिन् उपयुक्त इति वैजयन्त्यां शेषशब्दस्य विशेष्यलिङ्गता। द्वयं द्वयो वाणयोः समाहारः द्विवाणी वाण-द्वयं समाहारद्विगौ ङीप्। इयम् इति पुरोवर्त्तिनिर्देशः प्रियाया भैम्याः दृशोः नयनयोः एव अम्भोजयोः पङ्कजयोः पदे स्थाने अभिषिच्य स्थापयित्वा सफलीकृता सार्थकीकृता वाणस्य फलं परहृदयवेधनम् अनेन नेत्रयुगलेन तत्फलं साध्यते अतः प्रियानयनद्वयेन शेषशरद्वयेन प्रागुक्तशरत्रयवशीकृतस्यापि त्रिभुवनस्य पदे पदे हृदयवेधनात् चोभो जायतामितीव कामेन प्रियादृशोः शरद्वयाभिषेकः कृत इति भावः। कुसुम-शरस्य शराविव प्रियाया नयने, कथमन्यथा एतद्दर्शने अस्म-द्विधानां मनःचोभ इति तात्पर्य्यम्। उत्प्रेचालङ्कारः॥ २७॥

सेयमिति। मृदुः कोमलाङ्गी मुष्टिग्रहणम् अर्हतीति तादृशं हस्तेन ग्राह्यमित्यर्थः मध्यं कटिदेशः यस्याः तथोक्ता कृशमध्येत्यर्थः। सा इयं दमयन्ती स्मरस्य कामस्य कौसुमी कुसुममयी चापयष्टिः धनुर्दण्डः इत्युत्प्रेचा व्यञ्जकाभावात् गम्या। धनुर्यष्टिश्च कुसुममयत्वात् कोमला मुष्टिग्राह्यमध्या चेति साम्यमुत्प्रेचावीजम्। ननु चापयष्ट्या आकर्णकर्षणात् वाणवर्षणं क्रियते अस्यास्तु तत्कथमित्यत्राह तनोतीति। या इयं वः अस्माकं मोहाय हृदयचोभाय कामविकारायेत्यर्थः श्रीमतः शोभनात् अपाङ्गात् नेत्रप्रान्तात् मुक्तां दृष्टयः एव शरौघाः शरसमूहाः तेषां वृष्टिं तनोति विस्तारयति करोतीत्यर्थः। कामधनुर्मुक्ताः शरा इव एतस्याः कटाक्षाः युवजन-मनांसि मोहयन्तीति भावः॥ २८॥

आघूर्णितं पक्ष्मलमक्षिपद्मं प्रान्तद्युतिश्वैत्यजितामृतांशु ।
अस्या इवास्याश्चलदिन्द्रनीलगोलामलश्यामलतारतारम् ॥२९॥
कर्णोत्पलेनापि मुखं सनाथं लभेत नेत्रद्युतिनिर्जितेन ।
यद्येतदीयेन तदा कृतार्थौ स्वचक्षुषी किं कुरुते कुरङ्गी ॥३०॥

---

आघूर्णितमिति। आघूर्णितम् ईषद् घूर्णायमाणमित्यर्थः पक्ष्मलं प्रशस्तलोमयुक्तं सिध्मादिभ्यश्चेति अलच्। प्रान्तद्युतेः कनीनिकाप्रान्तकान्तेः श्वैत्येन शौक्ल्येन जितः अमृतांशुश्चन्द्रो येन तत् तथोक्तं तथा चलत् इन्द्रनीलगोलमिव नीलकान्तमणिगोलकमिव अमला निर्मला श्यामला तारा स्थूला तारा कनीनिका यत्र यस्य वा तत् अस्या भैम्याः अक्षिपद्मं नेत्रपङ्कजम् अस्या अक्षिपद्ममिव रामरावणयोर्युद्धं रामरावणयोरिवेतिवत् उपमारहितमित्यर्थः। अतएव अत्र अनन्वयालङ्कारः। तदुक्तं दर्पणकारेण। उपमानोपमेयत्वमेकस्यैव त्वनन्वय इति। किञ्च अक्षिपद्ममित्यत्र अक्षि एव पद्ममित्येकदेशविवर्त्तिरूपकं पक्ष्मलमित्यत्र कृष्णकेशररूपणस्य चलदिन्द्रनीलेत्यत्र भृङ्गवत् रूपणस्य च आर्थत्वात् तदुक्तं दर्पणे, यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तदिति। तदनयोः संसृष्टिः। अक्षिपद्ममित्यत्र अक्षियुग्ममिति प्रान्तद्युतीत्यत्र प्रांशुद्युतीति पाठान्तरम्। तत्र प्रांशुद्युतीति पृथक् पदं प्रांशुः अधिका द्युतिर्यस्य तत् प्रांशुद्युति अत्युज्ज्वलमित्यर्थः श्वैत्येन समन्तात् धावल्येन जितः अमृतांशुर्येन तत्। यद्वा प्रांशुरधिका द्युतिः कान्तिः श्वैत्यञ्च ताभ्यां जितः अमृतांशु येन तत्। अथवा प्रांशुः द्युतिर्यस्य तथोक्तं यत् श्वैत्यं तेन जितः अमृतांशुर्येन तत् ॥ २९ ॥

कर्णोत्पलेनेति। कुरङ्गी मृगी नेत्रद्युतिनिर्जितेन भैम्या

त्वचः समुत्तार्य्य दलानि रीत्या मोचात्वचः पञ्चषपाटनानाम् ।
सारैर्गृहीतैर्विधिरुत्पलौघादस्यामभूदीक्षणरूपशिल्पी ॥ ३१ ॥

---

नयनकान्तिपराजितेन एतदीयेन भैमीसम्बन्धिना कर्णोत्पलेन कर्णावतंसीकृतनीलोत्पलेनापि मुखं निजवदनं सनाथं सहितं नाथयुक्तञ्च लभेत यदि प्राप्नुयाच्चेत् ततस्तदा कृतार्थां चरितार्थां सती स्वचक्षुषी निजनयनयुगलं किं कुरुते कदर्थं करोति उपेक्षते इत्यर्थः। भैम्या नयनसाम्यं तावदास्तां तज्जितनीलोत्पलेनापि स्वसाम्यमलभमाने स्वचक्षुषी घृणया पश्यतीति भावः। भैमीनयनजितनीलोत्पलादपि मृगीनयनमपकृष्टमिति भावः। केचित्तु किं कुरुते न किमपि करोतीत्यर्थः वृथैव धारयतीति यावदिति व्याचक्षते ॥ ३० ॥

त्वच इति। विधिर्विधाता मोचात्वचः कदलीवल्कलात् रम्भा मोचांशुमत्फलेत्यमरः। पञ्च षड् वा पञ्चषाणि सङ्ख्ययाव्ययेत्यादिना बहुव्रीहिः। बहुव्रीहौ सङ्ख्येय इति समासान्तो डच्प्रत्ययः। तानि पाटनानि तक्षणानि तेषां रीत्या परीपाट्या त्वचः वहिर्वल्कलानि पञ्चषानीति शेषः। तथा उत्पलौघात् नीलोत्पलसमूहात् दलानि वाह्यपत्राणि पञ्चषाणि समुत्तार्य्य अपनीय गृहीतैः सारैः सितासितवर्णैः लावण्यनिर्माणोपकरणैरिति भावः। अस्यां दमयन्त्याम् ईक्षणयोः नयनयोः यत् रूपम् अभितः श्वैत्यलक्षणं गोलकस्य श्यामतालक्षणं सौन्दर्य्यं तस्य शिल्पी निर्माता अभूत्। विधाता महता श्रमेण पञ्चषपाटनया वाह्यानि मोचावल्कलानि नीलोत्पलदलानि च अपनीय तन्मध्यस्थसारभूतेन धवलांशेन नीलांशेन च दमयन्त्या अभितः पाण्डुरे श्यामलगोलके च नयने निर्ममे। इत्युत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या ॥ ३१ ॥

चकोरनेत्रैणदृगुत्पलानां निमेषयन्त्रेण किमेष कृष्टः।
सारः सुधोद्गारमयः प्रयत्नैर्विधातुमेतन्नयने विधातुः॥ ३२॥
ऋणीकृता किं हरिणीभिरासीदस्याः सकाशान्नयनद्वयश्रीः।
भूयोगुणेयं सकला बलाद्यत्ताभ्योऽनयाऽलभ्यत बिभ्यतीभ्यः ३३

---

चकोरेति। विधातुः स्रष्टुर्ब्रह्मणः एतस्या भैम्या नयने विधातुं निर्मातुं प्रयत्नैः कर्त्तृभिः चकोरनेत्रैणदृगुत्पलानां चकोरः चन्द्रकिरणपायी पक्षीविशेषः तस्य नेत्रे एणदृशौ मृगनेत्रे उत्पलानि नीलोत्पलानि च तेषां सुधोद्गारमय अमृतस्रावरूपः अतिमनोहर इति भावः। एष पुरोदृश्यमानः सारः रसः निमेषः निमीलनं चकोरनेत्रादीनामिति भावः। एव यन्त्रं निष्पीड़नसाधनसुपकरणविशेष इत्यर्थः। तेन कृष्टः किम्? यन्त्रेण निष्पीड्य द्रव्यस्य रसग्रहणं प्रसिद्धम्। चकोरस्य चन्द्रकिरणामृतपायित्वात् तन्नयनयोः सुधारसपरिणतत्वम् एणस्य च सततोत्सङ्गवर्त्तित्वात् तन्नयनयोः सुधासम्बन्धः नीलोत्पलानाञ्च रात्रौ चन्द्रोदयविकासात् ततसुधायोग इति तेषां सुधोद्गारमयत्वमिति बोध्यम्। विधाता चकोरनेत्र-हरिणनेत्र-नीलोत्पलरसैः निष्पीड़ितैः एतस्या भैम्या नयने तथा सरसे निर्मितवान् किम् इत्युत्प्रेक्षा॥ ३२॥

ऋणीकृतेति। हरिणीभिः मृगीभिः अस्या भैम्याः उत्तमर्णभूताया इति भावः। सकाशात् नयनद्वयस्य श्रीः शोभा अऋणम् ऋणं कृतेति ऋणीकृता अभूततद्भावे च्विप्रत्ययः। ऋणत्वेन गृहीतेत्यर्थः किम् इत्युत्प्रेक्षा। किं तत इत्याह भूय इति। यत् यस्मात् अनया भैम्या उत्तमर्णया इति भावः। बिभ्यतीभ्यः त्रस्यन्तीभ्यः ताभ्यः हरिणीभ्यः अधमर्णाभ्य इति

दृशौ किमस्याश्चपलस्वभावे न दूरमाक्रम्य मिथो मिलेताम्।
न चेत् क्षतः स्यादनयोः प्रयाणे विघ्नः श्रवःकूपनिपातभीत्या२४

---

भावः। उत्तमर्णदर्शने अधमर्णो बिभ्यतीति प्रसिद्धिः। भयावस्थायाञ्च तासां नेत्रयोः कातर्य्यसूचकचलत्वात् शोभातिशय इति भावः। भूयो गुणा अधिकगुणा सकला समग्रा अथच कला वृद्धिस्तया सहिता कला स्यान्मूल रै वृद्धौ शिल्पादावंशमात्रके। षोड़शांशे च चन्द्रस्य कला च कालमानयोरिति मेदिनी। इयं नयनद्वयश्रीः बलात् बलात्कारेण बलमाश्रित्येत्यर्थः ल्यब्लोपे पञ्चमी। अलभ्यत लब्धा। उत्तमर्णाश्च प्रतिश्रुतदेयकालातिक्रमात् बलमाश्रित्य अधमर्णेभ्यो बिभ्यद्भ्यः समग्रं वृद्ध्या अधिकगुणं दत्तमृणं गृह्णन्तीति लोकाचारः। एतेन दमयन्त्या नयने हरिणनयनेभ्यः समधिकसौन्दर्य्यशालिनी इति भावः॥ २३॥

दृशाविति। अस्याः भैम्याः चपलस्वभावे स्वभावचञ्चले इत्यर्थः। दृशौ नयने दूरम् आक्रम्य गत्वा मिथः परस्परं मिलेतां सङ्गत्य तिष्ठेतां किं न? अपितु मिलेतामेवेत्यर्थः मिलतेर्लिङ् तसस्तामादेशः। ननु दूरानाक्रमणेन मिथो मिलने को हेतुरित्यत्राह नेति। अनयोर्दृशोः प्रयाणे दूरगमने श्रवसी कर्णाविव कूपौ श्रवःकूपौ रूपकम्। तयोः निपातात् भीतिः भयं तया कर्त्र्या विघ्नः अन्तरायः न क्षतः स्यात् चेत् यदि, यदि कर्णकूपपतनात् भीतिर्न स्यात् तदा तन्नयने ततोऽपि दूरं व्रजेताम् अस्माच्च विघ्नात् गमनात् विरम्य आकर्णं विश्रान्ते इति वाक्यार्थः। अत्र रूपकेणानुप्राणितोत्प्रेक्षालङ्कारः। अस्या नयने अतिचञ्चले आयते चेति भावः॥ २४॥

केदारभाजा शिशिरप्रवेशात् पुण्याय मन्ये मृतमुत्पलिन्या।
जाता यतस्तत्कुसुमेक्षणेयं यतश्च तत्कोरकदृक् चकोरः॥२५॥

---

केदारेति। उत्पलिन्या नीलोत्पललतया पद्मिन्या वा केदारं क्षेत्रविशेषं पर्वतविशेषं वा तदाख्यशिवञ्च भजतीति तद्भाक् तया ढातृभजसहवहो विस्विति विण्प्रत्ययः। केदारः पर्वतक्षेत्रेभवक्षेत्रालवालयोरिति विश्वः। तत्या शिशिरप्रवेशात् हिमर्त्तोरागमात् शिशिरे जले प्रवेशाच्च पुण्याय उत्कृष्टफलकसुकृतलाभायेत्यर्थः मृतं निधनं प्राप्तं मन्ये सम्भावयामि कुत जातेति। यतः शिशिरमरणाद्धेतोरित्यर्थः इयं दमयन्ती उत्पलिन्याः कुसुमे एव ईक्षणे यस्याः तथाभूता जाता यतश्च चकोरः तस्याः कोरकावेव कलिके एव दृशौ यस्य तथाभूतः जात इति लिङ्गव्यत्ययेनानुषङ्गः। कलिका कोरकः पुमानित्यमरः। कोरकापेक्षया कुसुमस्योत्कृष्टत्वात् चकोरनेत्रादपि अस्या नेत्रे उत्कृष्टे इति गम्यते। केदारमरणात् उत्कृष्टफलं लभ्यते इति आगमात् उत्पलिन्याः तथा मृतायाः कुसुमं दमयन्तीनयनपरिणतिरूपं कोरकश्च चकोरनेत्रपरिणतिरूपमुत्कृष्टं फलं लेभे इति तात्पर्य्यम्। केचित्तु यतः यस्मात् हेतोः ते उत्पलिनी कुसुमे एव ईक्षणे नयने यस्यास्तथाभूता इयं दमयन्ती जाता यतश्च स कोरक एव दृक् नेत्रं यस्य तथाभूतः चकोरः जातः भैमीनयनं नीलोत्पलपरिणतिः चकोरनेत्रन्तु तत्कोरकपरिणतिरिति कोरकापेक्षया कुसुमस्योत्कर्षात् चकोरनेत्रादपि दमयन्तीनेत्रमुत्कृष्टमिति प्रतीयते। धर्मार्थमरणे देहिन एवोत्कृष्टफललाभः श्रूयते न तु तदङ्गस्य केवलस्येति प्राचां व्याख्यानं न सङ्गतमित्याहुः॥२५॥

नासाऽदसीया तिलपुष्पतूणं जगत्त्रयन्यस्तशरत्रयस्य ।
श्वासानिलामोदभरानुमेयां दधद्द्विबाणीं कुसुमायुधस्य ॥२६॥
बन्धूकबन्धूभवदेतदस्या मुखेन्दुनाऽनेन सहोज्जिहानम् ।
रागश्रिया शैशवयौवनीयां स्वमाह सन्ध्यामधरोष्ठलेखा ॥२७॥

---

इत्थं नयने वर्णयित्वा नासां वर्णयति नासेति। अमुष्या इयं अदसीया दमयन्तीसम्बन्धिनीत्यर्थः नासा नासिका जगतां त्रये न्यस्तं प्रयुक्तं शरत्रयं येन तस्य त्रिलोकीजयाय नियुक्त-शरत्रितयस्य कुसुमायुधस्य कामस्य श्वासानिलेन यः आमोद-भरः सौरभातिशयः तेन अनुमेयां द्वयोर्बाणयोः समाहारः द्वि-बाणी प्रागुक्तं बाणद्वयं समाहारे द्विगोरिति ङीप्। दधत् दधानं तिलपुष्पमेव तिलकुसुममेव तूणम् इषुधिरित्युत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या। कुसुमायुधस्य तूणमपि कुसुममेव तत्तु नासाकारतुल्यत्वात् तिलभवमित्युत्प्रेक्षा युज्यते। एते-नास्याः पद्मिनीत्वं गम्यते ॥ २६ ॥

अथ अधरोष्ठौ षड्भिर्वर्णयति बन्धूकेति। अस्या भैम्या अधरोष्ठलेखा अनेन पुरोदृश्यमानेन मुखमेव इन्दुश्चन्द्रः तेन मुखेन्दुना मुखचन्द्रेण सह उज्जिहानम् उद्यत् उदयच्छमानम् उदयमानमिति यावत्। रागश्रिया आरुण्यशोभया बन्धूक-बन्धूभवत् बन्धुजीवाख्यरक्तकुसुमसदृशं भवत् स्वम् आत्मानं स्वोऽज्ञातौ आत्मनि स्वं त्रिष्वित्यमरः। शैशवयौवनीयां बाल्य-तारुण्यसन्धौ वर्त्तमानां सन्ध्याम् आह अहमेव शैशवयौवनयो-रवस्थयोः सन्ध्येति कथयति। वयःसन्धौ वर्त्तमानाया भैम्याः अधरौष्ठावतीव रक्तौ जाताविति तात्पर्य्यम्। दिनरजन्योरन्त-र्वर्त्तिनी सन्ध्यापि तथा रक्ता सती चन्द्रेण सह उज्जृम्भते।

अस्या मुखेन्दोरधरः सुधाभूर्विम्बस्य युक्तः प्रतिविम्ब एषः ।
तस्याथ वा श्रीर्द्रुमभाजि देशे सम्भाव्यमानास्य तु विद्रुमे सा ॥

---

उज्जिहानेति पाठे उज्जिहाना उद्गच्छन्ती अधरोष्ठरेखेत्यस्य विशेषणम् ॥ ३७ ॥

अस्या इति । अस्याः भैम्या एषः अग्रे दृश्यमान इत्यर्थः मुखेन्दोः मुखचन्द्रस्य अधरः ओष्ठप्रान्तदेशः सुधाया अमृतस्य भूरुत्पत्तिस्थानं खनिरित्यर्थः अमृतपूर्ण इति यावत् । चन्द्रस्य अमृतमयत्वात् तदङ्गभूतस्य अधरस्य अमृतपूर्णत्वं युज्यत एवेति भावः । अतएव विम्बस्य विम्बफलस्य प्रतिविम्बः सदृशः युक्तः ? काकुः नैव युक्त इत्यर्थः अमृतपूर्णस्य अस्य अतथा-भूतेन विम्बफलेन साम्यकल्पनमयुक्तमिति भावः । सुधा-भूविम्बस्येति पाठे अस्या मुखेन्दोरधरः सुधायां सुधाया वा भवति उत्पद्यते इति तथोक्तं यत् विम्बं विम्बफलं तस्य प्रतिविम्बः सदृशः युक्तः उचितः स्वयममृतमयचन्द्ररूपमुखस्य अङ्गत्वात् अमृतपूर्णः अमृतोत्पन्नेन विम्बफलेन सादृश्यमर्हत्येव । यदि विम्बफलममृतोत्पन्नं न स्यात् तदा भैम्या अधरेण साम्यं न लभते इति भावः । सुधाभूभूविम्बस्य अमृतरश्मिमण्डलस्य प्रतिविम्बः सौन्दर्य्यच्छाया अस्या भैम्या मुखेन्दोरधरः मुख-चन्द्रापेक्षया हीन इति च ध्वन्यते । न तु एतावता भैम्या अधरविम्बफलयोः साम्यं न सङ्गच्छते इत्याह तस्येति । अथवा तस्य विम्बफलस्य श्रीः शोभा द्रुमभाजि वृक्षशालिनि देशे वने इत्यर्थः सम्भाव्यमाना अस्तीति शेषः वन्यफलत्वादिति भावः । अस्य तु अधरस्य पुनः सा श्रीः शोभा विद्रुमे प्रवाले अथच द्रुमरहिते देशे नगरे सम्भावना विद्यते इति शेषः । तस्मात् अनयोर्महद् वैषम्यं दृश्यते तत्कथं साम्यकल्पनमिति भावः ।

जानेऽतिरागादिदमेव बिम्बं बिम्बस्य च व्यक्तमितोऽधरत्वम्।
द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम्॥३९
मध्योपकण्ठावधरौष्ठभागौ भातः किमप्युच्छ्वसितौ यदस्याः।
तत्स्वप्नसम्भोगवितीर्णदन्तदंशेन किं वा न मयापराद्धम्॥४०॥

---

बिम्बफलादपि उत्तमोऽस्या अधरः विद्रुमसाम्यमर्हतीति तात्पर्य्यम्। अथ विद्रुमः पुंसि प्रवालं पुंनपुंसकमित्यमरः॥ ३८॥

जाने इति। अतिरागात् अतिरक्तत्वात् हेतोः इदं पुरोदृश्यमानं भैम्या रदनच्छदलक्षणं वस्तु एव बिम्बं बिम्बशब्दप्रतिपाद्यं फलं न तु बिम्बफलं बिम्बशब्दप्रतिपाद्यमित्यर्थः। बिम्बस्य तदाख्यफलस्य इतः भैमीरदनच्छदात् अधरत्वम् अपकृष्टत्वं व्यक्तम् अथवा भैमीरदनच्छदात् उपमानात् अधरत्वम् अधरशब्दप्रतिपाद्योपमेयत्वं व्यक्तं स्फुटञ्च प्रतीयते इति शेषः प्रागुक्तरीत्येति भावः। अतिरागरूपगुणयोगादुपमानत्वं ततोऽन्यूनरागयोगादुपमेयत्वम् उपमानस्य उपमेयात् आधिक्यस्यैव प्रसिद्धत्वादिति तात्पर्य्यम्। ननु एवं लोके तत्फलस्य बिम्बसंज्ञेत्यत्राह द्वयोरिति द्वयोः अनयोः अधरबिम्बयोः विशेषागमे विशेषप्रतीतौ तारतम्यज्ञाने इत्यर्थः अक्षमाणाम् अशक्तानां मुग्धानामित्यर्थः जनानां नाम्नि संज्ञायां भ्रमः भ्रान्तिः विपर्य्यास इति यावत् अभूत् जाने मन्ये उत्प्रेक्षालङ्कारः। अधरस्तु पुमानोष्ठे हीनेऽनूर्द्धे च वाच्यवदिति मेदिनी॥ ३९॥

मध्येति। यत् यस्मात् अस्याः दमयन्त्याः मध्यस्य अधरमध्यभागस्य उपकण्ठौ समीपवर्त्तिनौ अधरौष्ठभागौ अधरोष्ठयोरंशविशेषौ किमपि किञ्चित् उच्छ्वसितौ उच्छूनौ सन्तौ भातः रजतः, तत्तस्मात् स्वप्ने यः सम्भोगः अनया सह मम

विद्या विदर्भेन्द्रसुताधरौष्ठे नृत्यन्ति कत्यन्तरभेदभाजः ।
इतीव रेखाभिरपश्रमस्ताः संख्यातवान् कौतुकवान् विधाता ॥ ४१ ॥
सम्भुज्यमानाऽद्य मया निशान्ते स्वप्नेऽनुभूता मधुराधरेयम् ।
निःसीमलावण्यरदच्छदेत्थं कथं मयैव प्रतिपद्यते वा ॥ ४२ ॥

---

विस्तारः तत्र वितीर्णः दत्तः दन्तदंशः दशनक्षतं येन तथाभूतेन मया किं वा न अपराद्धम् ? अपितु मया तथा अपराधः कृत एव वा स्यादित्यर्थः । यद्वा स्वप्नसम्भोगे वितीर्णः दन्तः यो दन्तदंशः दशनक्षतं तेन करणेनेति योजना । अधरोष्ठयोर्मध्यभागस्य स्वत एव उच्छूसितत्वं दशनक्षतजनितत्वेन उत्प्रेक्ष्यते इत्युत्प्रेक्षालङ्कारः ॥ ४० ॥

विद्या इति । विधाता कौतुकं कुतूहलं दमयन्त्याः विद्याज्ञानार्थमौत्सुक्यमिति यावत् । विद्यते अस्येति तद्वान् अतएव अपश्रमः विगतपरिश्रमः संख्याने परिश्रममगणयन्नित्यर्थः यद्वा अपश्रमः सततसृष्टिव्यापाराभ्यासात् श्रमरहितो विधाता कौतुकवान् सन्निति योजना विधातुः श्रमरहितत्वेनैव भैम्या विद्यागणने क्षमत्वं नान्यथेति भावः । विदर्भेन्द्रसुतायाः दमयन्त्याः अधरोष्ठे अन्तरभेदभाजः विद्यात्वावच्छेदेन एकरूपा अपि अवान्तरभेदयुक्ताः कति विद्याः नृत्यन्ति विद्यन्ते इतीव संशयादिति भावः । रेखाभिः सङ्ख्यातवान् गणितवान् किम् इत्युत्प्रेक्षा व्यञ्जकप्रयोगात् गम्या । अन्यथा रेखासृष्टेर्वैफल्यमिति भावः ॥ ४१ ॥

सम्भुज्यमानेति । अद्य निशान्ते निशावसानसमये इयं भैमी मया स्वप्ने सम्भुज्यमाना मधुरः मधुवर्षी अधरो यस्याः तथाभूता सती अनुभूता स्वादिता । मया निःसीम सीमाशून्यं

यदि प्रसादीकुरुते सुधांशोरेषा सहस्रांशमपि स्मितस्य ।
तत्कौमुदीनां कुरुते तमेव निमिश्य देवः सफलं स्वजन्म॥४३॥

---

निरवधीत्यर्थः लावण्यं यस्य तादृशः रदच्छदः अधरो यस्याः तथाभूतैव इयं कथं वा इत्थम् एवम्प्रकारा यादृशी स्वप्नेऽनुभूता तादृशी एवेत्यर्थः प्रतिपद्यते ज्ञायते दृश्यते इति यावत्। स्वप्न-दृष्टस्य प्रायेण मिथ्यात्वं दृश्यते इदन्तु स्वप्नदर्शनं सत्यमिति चित्रमिति भावः। निशान्तस्वप्नदर्शनस्य सद्यःफलजनकत्वमुक्तं तथाच, गोविसर्जनवेलायां दृष्टा सद्यःफलं लभेदिति। अत्र मधुराधरा कथं निःसीमलावण्यः अतिलवणरसः रदच्छदो यस्याः इति निःसीमलावण्यरदच्छदा प्रतिपद्यते इति मधुर-लवणरसयोः परस्परविरोधात् विरोधालङ्कारः। तत्परिहारस्तु पूर्वव्याख्यानादित्यवधेयम् ॥ ४२ ॥

अथैकेन अस्याः स्मितं वर्णयति यदीति। एषा दमयन्ती स्मितस्य मृदुहसितस्य सहस्रांशमपि सहस्रतमांशमपि वृत्ति-विषये सङ्ख्याशब्दस्य पूरणार्थत्वं त्रिभागवत्। सुधांशोश्चन्द्रस्य प्रसादीकुरुते यदि प्रसन्नतया दद्यात् यदीत्यर्थः तत्तदा स देवः सुधांशुः तमेव स्मितसहस्रांशमेव निमिश्य स्वकौमुदीषु प्रक्षिप्य डुमिञ्प्रक्षेपणे इति धातोर्ल्यबादेशः। कौमुदीनां चन्द्रिकाणां स्वजन्म स्वकीयं जननं सफलं सार्थकं समधिकोत्-कर्षवदिति भावः कुरुते। उत्कृष्टसङ्गात् निकृष्टस्य उत्कर्ष एव जायते। संसर्गजा दोषगुणा भवन्तीति न्यायादिति भावः। यद्वा सफलं कुरुते यथा विन्दुमात्रगङ्गाजलमिश्रणेन अन्यजलं सफलं भवति तद्वदिति भाव इति प्राचां व्याख्यानं तन्न समी-चीनं तादृशजलेन योगे गङ्गाजलस्य दुष्टत्वकीर्त्तनात्। तथा-चोक्तम्, सर्वत्र पावनी गङ्गा त्रिषु स्थानेषु दूषति। लोकान्तर्गी

चन्द्राधिकैतन्मुखचन्द्रिकाणां दरायतं तत्किरणात् घनानाम् ।
पुरःपरिस्रस्तपृषद्द्वितीयं रदावलिद्वन्द्वति विन्दुवृन्दम् ॥४४॥
सेयं ममैतद्विरहार्त्तिमूर्च्छा तमोविभातस्य विभाति सन्ध्या ।
महेन्द्रकाष्ठागतरागकर्त्री द्विजैर्नमोभिः समुपास्यमाना ॥४५॥

---

सुराभाण्डे कूपोदकविमिश्रणे इति। निमिन्क्येत्यत्र निर्मञ्छ्र्य ेति पाठे निर्मञ्छ्य आदरेण नीराज्य कौमुदीनां स्वजन्म सफलं कुरुते तत्पूरणेनेति भावः। अत्र यद्यर्थबलादाहृतेन सम्भावनेन कौमुदीनां स्मितांशासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदः। भैम्याः स्मितं कौमुदीं तिरस्करोतीति भावः॥४३

अथ अस्या दशनपङ्क्तिद्वयं त्रिभिर्वर्णयति चन्द्रेति। तस्य चन्द्रस्य किरणात् ल्यब्लोपे पञ्चमी। चन्द्रकिरणमपेक्ष्येत्यर्थः घनानां सान्द्राणां चन्द्रादधिकस्य उत्कृष्टस्य एतस्या भैम्याः मुखस्य चन्द्रिकाणां चन्द्रादाधिक्यमेव तन्मुखस्य चन्द्रिकाणां सान्द्रत्वप्रयोजकमिति भावः। दरायतं ईषद्दीर्घं पुरः अग्रतः परिस्रस्तानि निःसृतानि यानि पृषन्ति विन्दवः तानि द्वितीयानि यस्य तत् अग्रनिःसृतविन्दूनां सूक्ष्मत्वात् अधोदन्तत्वं ततो निःसृतानां तत्सङ्घादीषदायतत्वादूर्द्ध्वदन्तत्वम् अधोदन्तेभ्य ऊर्द्ध्वदन्तानामायतत्वस्य स्वतःसिद्धत्वादिति भावः। विन्दुवृन्दं विन्दूनां समूहः रदावलिद्वन्द्वमिव आचरति दशनावलियुगलमिव आचरतीत्यर्थः। सर्वप्रातिपदिकेभ्यः क्विब्वाचार इति क्विबन्ताल्लट्। अस्याः दन्ता ईषदायताः घनाः श्वेतोज्ज्वलाश्चेति भावः। अत्रोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या॥ ४४ ॥

महेन्द्रेति। सा इयं दमयन्ती महेन्द्रस्य देवेन्द्रस्य काष्ठाम् उत्कर्षं पूर्वां दिशञ्च तस्य पूर्वदिगधिपत्वादिति भावः। काष्ठो-

राजौ द्विजानामिह राजदन्ताः संबिभ्रति श्रोत्रियविभ्रमं यत् ।
उद्वेगरागादिमृजावदातास्चत्वार एते तदवैमि मुक्ताः ॥४६॥

त्वर्षे स्थितौ दिशौत्यमरः। गतः प्राप्तः यो रागः अनुरागः लौहित्यञ्च रागोऽनुरागे लौहित्ये इति विश्वः। तस्य कर्त्री जनयित्री अमीभिः द्विजैः दन्तैः विप्रैश्च दन्तविप्राण्डजा द्विजा इत्यमरः। समुपास्यमाना समाश्रीयमाणा अलङ्क्रियमाणेति भावः आराध्यमाना च अतएव मम एतया भैम्या यो विरहः तेन आर्त्तिः पीड़ा तया मूर्च्छा मोह एव तमी रजनी यामिनी तमीत्यमरः। तस्या विभातस्य अवसानस्य सन्ध्या प्रातःसन्ध्येत्यर्थः विभाति राजते विरहावसानसमयोऽयं वर्त्तते इति तात्पर्य्यम्। अत्र प्रातःसन्ध्याधर्मस्य महेन्द्रकाष्ठागतरागादिसम्बन्धात् सन्ध्यात्वमुत्प्रेक्ष्यते इत्युत्प्रेक्षा सा च श्लेषमूलेत्यनयोः सङ्करः ॥ ४५ ॥

राजाविति। यद् यस्मात् इह अस्मिन् द्विजानां दन्तानां विप्राणाञ्च राजौ श्रेण्याम् उद्वेगः पूगफलं घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु फलमुद्वेग इत्यमरः। तस्य रागः लौहित्यम् आदिः येषां तेषां आदिशब्दात् खदिरादिपरिग्रहः। मृजया मार्जनेन अवदाताः विशुद्धाः अन्यत्र उद्वेगः दुश्चिन्ता रागः विषयासङ्गाभिलाषः आदिपदेन द्वेषादिसंग्रहः। तेषां मृजया परिहारेण अवदाताः निर्मलान्तःकरणा इत्यर्थः। चत्वारः राजदन्ता दन्तानां राजानो राजदन्ताः सम्मुखीनाः दन्तश्रेष्ठा इत्यर्थः राजदन्तादिषु परमिति दन्तशब्दस्य उपसर्जनस्य परनिपातः। चत्वारो राजदन्ताः स्युः सम्मुखीना रदास्तु ये इति बलः। श्रोत्रियाणां छन्दांसि अधीतवतां वेदपारदृश्वनां श्रोत्रियश्छान्दसौ समावित्यमरः। श्रोत्रियाच्छन्दो-

शिरीषकोषादपि कोमलाया वेधा विधायाङ्गमशेषमस्याः।
प्राप्तप्रकर्षः सुकुमारसर्गे समापयद्वाचि मृदुत्वमुद्राम् ॥४७॥
प्रसूनबाणाद्वयवादिनी सा कापि द्विजेनोपनिषत्पिकेन।
अस्याः किमास्यद्विजराजतो वा नाधीयते भैक्षभुजा तरुभ्यः॥४८

---

ऽधीत इति निपातः। विभ्रमं विलासं संविभ्रति धारयन्ति तत् तस्मात् एते चत्वारो दन्ता मुक्ता मुक्ताफलानि जीवन्मुक्ताश्च मुक्ता तु मौक्तिके मुक्ता प्राप्तमुक्ता तु मोचित इति विश्वः। अवैमि जानामि मन्ये इत्यर्थः वाक्यार्थः कर्म। उत्प्रेक्षालङ्कारः॥ ४६ ॥

अथ अस्या वचनमाधुरीं चतुर्भिर्वर्णयति शिरीषेति। वेधा विधाता शिरीषस्य पुष्पविशेषस्य कोषादभ्यन्तरभागात् कुड्मलाद्वा ल्यब्लोपे पञ्चमी। शिरीषकोषमपेक्ष्येत्यर्थः कोमलायाः सुकुमाराङ्ग्याः अस्याः भैम्याः अशेषं समस्तम् अङ्गं विधाय निर्माय सुकुमारसर्गे कोमलवस्तुसृष्टौ प्राप्तः प्रकर्षः नैपुण्यं येन तथाभूतः लब्धप्रतिष्ठः सन्नित्यर्थः भवति विज्ञतमः क्रमशो जन इति भावः। वाचि वचने मृदुत्वस्य मार्दवस्य मुद्रां मर्य्यादां समापयत् एतावत्पर्य्यन्तं मार्दवं सम्भवति न अतःपरमिति सीमां समापयत् संस्थापितवानित्यर्थः। अस्या वाङ्माधुरी सर्वातिशायिनीति भावः॥ ४७ ॥

कोकिलवचसोऽपि तथा माधुर्य्यं नास्तीत्याह प्रसूनेति। तरुभ्यः आम्रादिवृक्षेभ्यः सकाशात् भिक्षाणां समूहो भैक्षं भिक्षादिभ्योऽणिति अण्प्रत्ययः। भैक्षम् आम्रफलादिति भावः। भैक्षं भिक्षाकदम्बकमित्यमरः। तत् भुङ्क्ते इति तथोक्तेन ब्रह्मचारिणो भिक्षाशित्वविषये प्रमाणं यथा। प्रतिगृह्योपितं दण्ड-

पद्माङ्कसद्मानमवेक्ष्य लक्ष्मीमेकस्य विष्णोः श्रयणात् सपत्नीम्।
आस्येन्दुमस्या भजते जिताब्जं सरस्वती तद्विजिगीषया किम् ४९

मुपस्थाय च भास्करम्। प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि। समाहृत्य तु तद्भैक्ष्यं यावदन्नममायया। निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥ इति मनुना प्रतिपादनात्। पिकेन कोकिलेन कोकिलः पिक इत्यपीत्यमरः। द्विजेन पक्षिणा विप्रेण च अस्या भैम्या आस्यं मुखमेव द्विजराजः चन्द्रः ब्राह्मणश्रेष्ठश्च तस्मात् प्रसूनबाणमेव काममेव अद्वयम् अद्वितीयं वस्तु वदति प्रतिपादयतीति तद्वादिनी कामरूपब्रह्मप्रतिपादिकेति भावः। कापि अनिर्वचनीया रहस्येति भावः। उपनिषत् भैमीवचनरूपा वेदान्तविद्या भवेदुपनिषद्धर्मे वेदान्ते च रहस्यपीति विश्वः। नाधीयते वा किम्? अपितु अधीयत एवेत्यर्थः। कोकिलस्वरादपि अस्याः स्वरस्य माधुर्य्यातिशयः अन्यथा कथमेतन्मुखचन्द्रः कोकिलेन स्वरमाधुरी-शिक्षार्थमाचार्य्य इव सेव्यते इति भावः। अन्योऽपि द्विजः विदुषो द्विजराजात् ब्रह्मचारी भूत्वा ब्रह्मप्रातिपादिनीमुपनिषद्विद्यामधीते। अत्र श्लेषानुप्राणितोत्प्रेक्षालङ्कारः ॥ ४८ ॥

पद्मेति। सरस्वती वाग्देवी एकस्य एकमात्रस्य विष्णोः नारायणस्य श्रयणात् उभयोः पत्नीत्वेन आश्रयणाद्धेतोः समानः पतिः यस्याः सा सपत्नी एकपत्नी तां नित्यं सपत्न्यादिष्विति ङीप् नकारश्च एतस्मादेव निर्देशात् समानशब्दस्य नित्यं सभावः। तां लक्ष्मीं पद्मस्य अङ्क उत्सङ्ग एव सद्म आलयः यस्याः तथाभूतां पद्मालयामित्यर्थः लक्ष्मीः पद्मालया पद्मेत्यमराभिधानात्। अवेक्ष्य दृष्ट्वा तस्याः लक्ष्म्या विजिगीषया विजयेच्छया जितम् अब्जं पद्मं येन तत् जिताब्जं पद्मविजयीत्यर्थः

कण्ठे वसन्ती चतुरा यदस्याः सरस्वती वादयते विपञ्चीम्।
तदेव वाग्भूय मुखे मृगाक्ष्याः श्रोतुः श्रुतौ याति सुधारसत्वम्॥५०॥
विलोकिता स्यान्मुखमुन्नमय्य किं वेधसेयं सुषमासमाप्तौ।

अस्याः भैम्याः आस्येन्दुं मुखचन्द्रं भजते सेवते किम्? अस्याः सपत्न्या गृहात् मम गृहम् उत्कृष्टं भवतु इतीर्ष्ययेव पद्मादपि उत्कर्षशालि दमयन्तीमुखमाश्रयति किम् इत्युत्प्रेक्षा। यद्वा जितः अब्जः चन्द्रो येन तथाविधम् आस्येन्दुं भजते किम्? तथाच चन्द्रः कमलविरोधित्वात् तद्विजयी, सोऽपि भैमीमुखेन जित इति भैमीमुखस्य कमलविजयिनश्चन्द्रादपि उत्कर्ष इति मत्वा सपत्नीगृहपरिभाविचन्द्रस्यापि परिभाविनो भैमीमुखस्य आश्रयणेन सरस्वत्या लक्ष्मीः सुतरां जितेति तात्पर्य्यम्। अस्या वचसि सरस्वती अधिवसतीति फलितार्थः॥ ४९॥

कण्ठ इति। मृगाक्ष्याः मृगनयनायाः अस्याः भैम्याः कण्ठे वसन्ती सततसन्निहिता चतुरा वीणावादनकुशला सरस्वती वाग्देवी विपञ्चीं वीणां यत् वादयते तत् विपञ्चीवादनमेव स वीणारव एवेत्यर्थः अस्या मुखे वाक् भूय वाणीत्वेन परिणम्य अभूततद्भावे च्विः। ऊर्व्यादित्वात् समासे ल्यबादेशः। श्रोतुः श्रवणकर्त्तुः जनस्य श्रुतौ कर्णे सुधारसत्वम् अमृतरसवत् आस्वाद्यत्वं याति गच्छति। न अयमस्या मधुरालापः किन्तु कण्ठे नित्यसन्निहितायाः सरस्वत्याः विपञ्चीरवः अतएव श्रूयमाणः श्रोतृजनस्य अमृतास्वादवत् मनो मोहयतीति भावः। अतिमधुरभाषिणी इयं भैमीति तात्पर्य्यम्। अत्रोत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या॥ ५०॥

चिबुकं वर्णयति विलोकितेति। वेधसा विधात्रा सुषमा

धृत्युद्भवा यच्चिबुके चकास्ति निम्ने मनागङ्गुलियन्त्रणेव ॥५१॥
प्रियामुखीभूय सुखी सुधांशुर्वसत्यसौ राहुभयव्ययेन।
इमां दधाराधरबिम्बलीलां तस्यैव बालं करचक्रवालम् ॥५२॥

---

परमा शोभा। सुषमा परमा शोभेत्यमरः। तस्याः समाप्तौ मुखस्य परमसौन्दर्य्यनिवेशस्य समापने सति इयं भैमी मुखम् अस्या इति भावः। उन्नमय्य कीदृशी शोभा जातेति परीक्षार्थं किञ्चित् उत्तोल्य विलोकिता किम्? दृष्टा किम्? इत्युत्प्रेक्षा। कथमेतत् ज्ञातमित्यत्राह धृतीति। यत् यस्मात् मनाक् ईषत् निम्ने नते अस्याः चिबुके धृत्या धारणेन उद्भवति इति धृत्युद्भवा अङ्गुल्या धारणजनिता इत्यर्थः यन्त्रणा इव अङ्गुल्या निपीड़नमुद्रेव चकास्ति राजते। अङ्गुष्ठाग्रं चिबुके निवेश्य अधोनिवेशिताभिः अपराङ्गुलिभिः मुखम् उन्नमय्य मुखस्य शोभातिशयं ददर्श तेनैव चिबुकमङ्गुलिमुद्रितमिव आसीत् इति परमार्थः। शिल्पिनाञ्च अयं नियमः यत्किञ्चिन्निर्माय तन्मुखमुत्तोल्य शोभा जाता नवेति परीक्षते। तत्र च निर्मितवस्तुन आमत्वात् अङ्गुलिनिवेशचिह्नम् ईषत् निम्नत्वञ्च जायते ॥ ५१ ॥

पुनश्च साङ्गं मुखं नवभिः श्लोकैः वर्णयति प्रियेति। अयं सुधांशुः चन्द्रः प्रियायाः भैम्याः अमुखं मुखं भूत्वा मुखीभूय अभूततद्भावे च्विप्रत्ययः। वदनरूपमाश्रित्येत्यर्थः राहोः भयं तस्य व्ययः अपगमः तेन सुखी सन् वसति। जयतीति पाठे जयति सर्वोत्कर्षेण वर्त्तते इत्यर्थः। ननु तर्हि तस्य किरणजालं क्व इत्यत्राह इमामिति। तस्यैव सुधांशोरेव बालम् अभिनवं रक्तमिति भावः। करचक्रवालं किरणसमूहः इमां दृश्य-

अस्यामुखस्यास्तु न पूर्णिमास्यं पूर्णस्य जित्वा महिमा हिमांशुम्।
भूलक्ष्मखण्डं दधदर्द्धमिन्दुर्भालस्तृतीयः खलु यस्य भागः ॥५२॥

---

मानाम् अधरविम्बलीलाम् अधररूपविम्बफलविलासं दधार प्राप। अधरविम्बं भूत्वा राजते। अत्र प्रथमार्द्धे व्यञ्जकाप्रयोगात् गम्या उत्प्रेक्षा द्वितीयार्द्धे कथमन्यस्य धर्ममन्यो वहतु इति अधरविम्बस्य लीलामिव लीलामिति सादृश्याक्षेपात् निदर्शना। तदुक्तं दर्पणे, सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शनेति तदनयोः संसृष्टिः॥ ५२॥

अस्या इति। पूर्णिमायाः पौर्णमास्याः तिथेः आस्यं मुखभूतं हिमांशुं चन्द्रं जित्वा पूर्णस्य सर्वसौष्ठवसमन्वितस्य अस्या भैम्याः मुखस्य महिमा माहात्म्यं न अस्तु? काकुः इयम् अपि तु अस्तु एवेत्यर्थः। जितापेक्षया जयिनो माहात्म्यमवश्यमस्ति एवेति भावः। ननु जयात् महिमोच्यते तत् कुत इत्यत्राह भूलक्ष्मेति। यस्य मुखस्य तृतीयो भागः तृतीयांशभूतः भालः ललाटदेशः भूरेव लक्ष्मखण्डः कलङ्कैकदेशः तं दधत् धारयन् अर्द्धमिन्दुः खलु अर्द्धचन्द्र एव तस्मात् युक्तं पूर्णस्य मुखस्य द्विगुणित स्वतृतीयांशभूतचन्द्रजयेन माहात्म्यम् इति भावः। पूर्णिमास्यम् इत्यत्र पौर्णमासमिति पाठे पौर्णमास्या अयं पौर्णमासः तं पौर्णमास्याम् उदितं सम्पूर्णम् इति भावः। पूर्णिमास्यं हिमांशुं जित्वा अस्या मुखस्य महिमा न अस्तु न भवतु, हीनजये का महिमा इति भावः। कथम् अस्य चन्द्रस्य हीनत्वमित्यत्राह भूलक्ष्मेति। तृतीयो भागोऽर्द्धेन्दुरिति कथनेन तद्द्विगुणस्य पूर्णस्य अपि चन्द्रस्य एतन्मुखापेक्षया हीनत्वात् इति केचित्। अत्र पूर्णिमास्यं हिमांशुम् इति व्यस्तरूपकं

व्यधत्त धाता मुखपद्ममस्याः सम्राजमम्भोजकुलेऽखिलेऽपि ।
सरोजराजौ सृजतोऽदसीयां नेत्राभिधेयावत एव सेवाम् ॥५४॥
दिवारजन्योः रविसोमभीते चन्द्राम्बुजे निक्षिपतः स्वलक्ष्मीम् ।
अस्या यदास्ये न तदा तयोः श्रीरेकश्रियेदन्तु कदा न कान्तम्५५

---

भ्रूलक्ष्मखण्डमिति समस्तरूपम् । आभ्यां समुज्जीवितोत्प्रेक्षालङ्कार इत्येषामङ्गाङ्गिभावेन सङ्करः ॥ ५३ ॥

व्यधत्तेति । धाता विधिः अस्या भैम्याः मुखमेव पद्मं वा पुंसि पद्ममित्यभिधानात् अत्र सम्राजमिति विशेषणत्वेन पुंलिङ्गता । अखिले समग्रेऽपि अम्भोजकुले पद्मवंशे सम्राजं राजाधिराजं येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राडिति कथ्यते इत्यमरः । यद्वा सम्यक् राजते शोभते इति सम्राट् तं पद्मजातिषु मध्ये सर्वोत्कर्षेण राजमानमित्यर्थः व्यधत्त विहितवान् कृतवान् इत्यर्थः । अतएव राजाधिराजत्वात् एव नेत्राभिधौ नेत्रशब्दवाच्यौ सरोजानां राजानौ सरोजेभ्योऽपि उत्कर्षेण राजमानौ द्वौ किङ्करौ इति भावः । अमुष्य इयम् अदसीया तां मुखपद्मसम्बन्धिनीम् इत्यर्थः सेवाम् अनुवृत्तिं सृजतः कुरुतः । युक्तञ्चैतत् सम्राजो राजसेव्यत्वमिति भावः । अत्र नेत्राख्यसरोजराजसेव्यत्वात् भैमीमुखं सम्राडित्युत्प्रेक्ष्यते । तदयं रूपकोत्प्रेक्षयोः अङ्गाङ्गिभावेन सङ्करः ॥ ५४ ॥

दिवेति । चन्द्रश्च अम्बुजञ्च चन्द्राम्बुजे चन्द्रपद्मे दिवारजन्योः दिवसयामिन्योः यथाक्रमं रविसोमाभ्यां भीते शङ्किते दिवा सूर्य्यात् भीतः चन्द्रः रात्रौ चन्द्रात् भीतं पद्मम् इत्यर्थः, यदा अस्या भैम्या आस्ये मुखे स्वलक्ष्मीं स्वां स्वां कान्तिं

अस्या मुखश्रीप्रतिबिम्बमेव जलाच्च तातान्मुकुराच्च मित्रात्।
अभ्यर्थ्य धत्तः खलु पद्मचन्द्रौ विभूषणं याचितकं कदाचित्॥५६

निक्षिपतः न्यस्यतः, तदा तयोः चन्द्राम्बुजयोः श्रीः शोभा न भवतीति शेषः। इदन्तु अस्या मुखन्तु कदा कस्मिन् काले दिवा रजन्यां वा इत्यर्थः। एकश्रिया एकस्य चन्द्राम्बुजयोः अन्यतरस्य श्रिया प्राप्तया इति भावः। दिवसे चन्द्रश्रिया रजन्यां पद्मश्रिया इत्यर्थः न कान्तं न रमणीयम्? अपितु सर्वदैव कान्तमित्यर्थः। चन्द्रस्य रात्रौ एव शोभा न तु दिने सूर्य्यकिरणेन तस्य तिरोहितत्वात् पद्मस्य दिवसे एव शोभा न तु रात्रौ चन्द्रोदये तस्य सङ्कोचात् भैमीमुखन्तु दिवा-रजन्योः सममेव शोभते इति भावः। अन्योऽपि कुतश्चित् भीतः स्वधनं स्वतोऽधिकमहिमशालिनि न्यस्यति ततो भय-कारणापगमात् पुनश्च तत एव गृह्णातीति ध्वन्यते। अत्र, दिवारजन्यो रविसोमभीते इति यथासङ्ख्यमलङ्कारः। तदुक्तं दर्पणे, यथासङ्ख्यमनूद्देश उद्दिष्टानां क्रमेण यदिति। चन्द्राम्बुजे निक्षिपतः स्वलक्ष्मीमिति प्रतीयमानोत्प्रेक्षालङ्कारश्च ताभ्यां मुखस्य चन्द्रपद्माभ्याम् उपमानाभ्याम् आधिक्यस्य प्रतीतेः व्यतिरेको व्यज्यते। इत्यलङ्कारेण अलङ्कारध्वनिः॥ ५५॥

अस्या इति। पद्मश्च चन्द्रश्च तौ पद्मचन्द्रौ तातात् जनकात् जलात् उभयोरपि जलोत्पन्नत्वात् इति भावः। मित्रात् स्वच्छ-तया आकारसाम्येन सुहृद्भूतात् मुकुरात् दर्पणाच्च दर्पणे मुकुरादर्शौ इत्यमरः। अस्याः दमयन्त्याः मुखश्रियः वदन-कान्तेः प्रतिबिम्बमेव छायामेव। छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातप इत्यमरः। याचितकं याञ्चालब्धं याञ्चाप्राप्तं याचितकम् इत्यमरः। आप्तमित्ययाचिताभ्यां तन्कनाविति

अर्काय पत्ये खलु तिष्ठमाना भृङ्गैर्मितामक्षिभिरम्बुकेलौ।
भैमीमुखस्य श्रियमम्बुजिन्यो याचन्ति विस्तारितपद्महस्ताः॥५७

कन्प्रत्ययः। विभूषणम् अलङ्करणं कदाचित् न तु सर्वदा याचितकस्य सर्वदा धारणेन क्षयसम्भवात् महाजनद्वेषाशङ्केति भावः। अभ्यर्थ्य याचित्वा धत्तः दधाते खलु। यदा जले मुकुरे वा भैमीमुखस्य प्रतिविम्बं पतति तदा दिवसे पद्मं रात्रौ चन्द्रः तातं जलं मित्रं मुकुरञ्च हे तात! हे मित्र! भवति प्रतिविम्बिता भैमीमुखकान्तिः मह्यं क्षणं दीयतां पुनरपि प्रतिदास्यामि इत्येवं याञ्चालब्धं भैमीमुखस्य प्रतिविम्बमेव अलङ्करणं धारयति न तु अनयोः स्वाभाविकी कान्तिः इत्युत्प्रेक्ष्यते भैमीमुखं चन्द्रपद्माभ्यामपि अधिकमनोहरमिति तात्पर्य्यम्। अत्रापि उत्प्रेक्षया उपमानाभ्यां भैमीमुखस्य उपमेयस्य आधिक्यप्रतीतेः व्यतिरेकालङ्कारो व्यज्यते इत्यलङ्कारेण अलङ्कारध्वनिः॥ ५६॥

अर्कायेति। अर्काय सूर्य्याय पत्ये स्वामिने तिष्ठमानाः स्वाभिलाषं प्रकटयन्त्य इत्यर्थः स्वमनोरथपूरणाय स्वामिनं सूर्य्यं प्रवर्त्तयन्त्य इति भावः। श्लाघह्नुङ इत्यादिना चतुर्थी। प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदम्। अम्बुजिन्यः पद्मिन्यः विस्तारिता विकासं नीता इति भावः पद्मान्येव हस्ता याभिः ताः सत्यः अम्बुकेलौ जलविहारकाले भैम्या इति भावः। भृङ्गैरेव अक्षिभिः नयनैः मिताम् उपलब्धां दृष्टाम् इति यावत् भैम्या जलेषु विहरन्त्या इति भावः। मुखं तस्य श्रियं शोभां सौन्दर्य्यम् इति यावत् याचन्ति खलु। हे भैमि! वयं तव मुखश्रिया प्राप्तया रुचिरतरा भूत्वा स्वामिनं सूर्य्यं प्रीणयामः त्वम् अस्मभ्यं स्वां मुखशोभां क्षणं देहीत्येवं भैमीं प्रार्थयन्ते

अस्या मुखेनैव विजित्य नित्यस्पर्द्धी मिलत्कुङ्कुमरोषभासा।
प्रसह्य चन्द्रः खलु नह्यमानः स्यादेव तिष्ठन् परिवेशपाशः॥५८॥
विधोर्विधिर्बिम्बशतानि लोपं लोपं कुहूरात्रिषु मासि मासि।
अभङ्गुरश्रीकममुं किमस्या मुखेन्दुमस्थापयदेकशेषम्॥५९॥

किं ? यद्वा हे प्रभो ! वयं भैमीमुखश्रिया रुचिरतरा भूत्वा त्वां सेवामहे तत् देहि अस्मभ्यं दमयन्तीमुखश्रियमित्येवं स्वपतिं सूर्यं प्रार्थयन्ते किम् ? इत्युत्प्रेक्षा। स्वरितेत्त्वात् याचिरुभयपदी। दुह्यादित्वात् द्विकर्मकः। अत्र पद्मिनीनां भैमीमुखश्रीयाच्ञोत्प्रेक्षया मुखस्योपमेयभूतस्य उपमानात् पद्मात् आधिक्यप्रतीतिः व्यतिरेकालङ्कारो व्यज्यते इत्यलङ्कारेण अलङ्कारध्वनिः॥ ५७॥

अस्या इति। नित्यं सततं स्पर्द्धते इति नित्यस्पर्द्धी अस्या मुखेन सततविरोधीत्यर्थः चन्द्रः मिलन्ती व्याप्नुवन्ती कुङ्कुम एव रोषभाः क्रोधजनितारुण्यकान्तयः यत्र तेन अस्या भैम्या मुखेनैव विजित्य पराभूय प्रसह्य बलात् नह्यमानः बध्यमानः अत एव परिवेशः परिधिरिव पाशः बन्धनरज्जुभूतः यस्य तथाभूतः तिष्ठन् स्थितः स्यादेव खलूत्प्रेक्षायाम्। यतोऽयं चन्द्रः सततस्पर्द्धितया सापराधः तत एव भैमीमुखेन कुङ्कुमलेपनमिषात् क्रोधरक्तेन सता निर्जित्य परिवेशमिषबन्धनपाशेन बद्धः स्थित इवेति उत्प्रेक्षया अन्योऽपि कृतापराधो वैरी विजेत्रा बलात् संयम्य स्थाप्यते इति वस्तु पूर्ववदुपमेयस्य भैमीमुखस्य उपमानाच्चन्द्रात् आधिक्यव्यतिरेकश्च व्यज्यते इत्यलङ्कारेण वस्तुध्वनिरलङ्कारध्वनिश्च॥ ५८॥

विधोरिति। विधिः विधाता मासि मासि प्रतिमासं पञ्च-

कपोलपत्रात् मकरात् सकेतुर्भ्रूभ्यां जिगीषुर्धनुषा जगन्ति ।
इहावलम्बास्ति रतिं मनोभूः रज्यद्वयस्यो मधुनाऽधरेण ॥ ६० ॥

---

दित्यादिना मासशब्दस्य मासित्ययमादेशः। कुहूरात्रिषु नष्टेन्दुकलासु अमावास्यारात्रिषु सा नष्टेन्दुकला कुहूरित्यमरः। विधोः चन्द्रस्य विम्बशतानि मण्डलशतानि लोपं लोपं लुप्त्वा लुप्त्वा आभीक्ष्ण्ये णमुलिति णमुल्प्रत्ययः। आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम् आभीक्ष्ण्यं पौनः पुन्यम् इति काशिका। अभङ्गुरा अविनश्वरी श्रीः यस्य तत् अभङ्गुरश्रीकं शेषात् विभाषेति कप्। अमुं पुरो दृश्यमानम् अस्या भैम्याः मुखमेव इन्दुः तम् एकशेषम् एकमेव शिष्यते इति शेषम् अवशिष्यमाणम् अस्थापयत् किम्? सरूपाणामेकशेष इति वैयाकरणाः। चन्द्रमण्डलस्य प्रतिमासं क्षयं दृष्ट्वा विधिः विरज्य अविनश्वरशोभं दमयन्तीमुखमेव तत्कार्य्ये स्थापयामास किम्? इत्युत्प्रेक्षा। अनया च उत्प्रेक्षया चन्द्रात् उपमानात् अस्या मुखस्य उत्कर्षप्रतीतेः व्यतिरेकालङ्कारः। अन्योऽपि शिल्पी स्वकृतानि बहूनि अपकृष्टानि विनाश्य सर्वोत्कृष्टमेकमेव स्थापयति इति व्यज्यते। इत्यलङ्कारेणालङ्कारध्वनिः वस्तुध्वनिश्च ॥ ५९ ॥

कपोलेति। मनोभूः कामः इह अस्मिन् भैमीमुखे कपोलयोः गण्डयोः यत् पत्रं पत्ररचनेत्यर्थः। तस्मात् तत्सद्भावात् इति भावः। सकेतुः पत्रान्तस्थां मकरचित्रणात् स मकरध्वज इत्यर्थः सवाहन इति भावः। भ्रूभ्यां भ्रूयुगलेन धनुषा जगन्ति विजिगीषुः विजेतुमिच्छुः उप्रत्यययोगे कर्मणि षष्ठीनिषेधः। अधरेणैव मधुना मधुवत् आस्वाद्येन अधरेण इत्यर्थः अथच रत्या वसन्तेन रज्यन् अनुरक्तीभवन् वयस्यः सखा वसन्त इत्यर्थः यस्य तथोक्तः यद्वा रज्यन्तः अनुरागिणो भवन्तः वयसि

वियोगवाष्पाञ्चितनेत्रपद्मच्छद्मार्पितोत्सर्गपयःप्रसूनौ।
कर्णौ किमस्यारतितत्पतिभ्यां निवेद्यपूपौ विधिशिल्पमीदृक् ६१
दुराविशश्चेन पथातिवक्रः शास्त्रौघनिष्यन्दरसप्रवाहः।

यौवने स्थिता वयस्थाः तरुणा इत्यर्थः यस्मात् सः रतिम् अनुरागं स्वप्रियाञ्च अवलम्ब्य अस्ति। कामस्य जगद्विजयसाधनसामग्री सर्व्वापि एतस्या मुखे वर्त्तते इत्युत्प्रेक्षा। अत्र पत्रावल्यादौ आरोप्यमाणस्य हेलादेः प्रकृतजगद्विजयरूपकार्य्योपयोगित्वात् परिणामालङ्कारः। तदुक्तं दर्पणे, विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि। परिणामो भवेदिति। स च उक्तया गम्योत्प्रेक्षया समुज्जीवित इत्यनयोः सङ्करः। तेन एतन्मुखं सर्वथा काममुद्दीपयतीति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ ६०॥

अथ पञ्चभिरस्याः कर्णौ वर्णयति वियोगेति। अस्याः भैम्याः कर्णौ वियोगवाष्पेण विरहाश्रुणा अञ्चिते अन्विते ये नेत्रे एव पद्मे तयोश्छद्मना मिषेण अर्पिते उत्सर्गपयःप्रसूने उत्सर्गजलपुष्पे ययोः तथाभूतौ अतएव रतितत्पतिभ्यां रतिकामाभ्यां देवाभ्यां सम्प्रदानभूताभ्यां सम्प्रदाने चतुर्थी। निवेद्यौ निवेदनीयौ अर्पणीयौ इत्यर्थः पूपौ पिष्टके पूपोऽपूपः पिष्टकं स्यात् इत्यमरः। ईदृक् एवंविधं विधेः ब्रह्मणः शिल्पं निर्माणं किम्? नैवेद्यञ्च जलपुष्पाभ्यामन्वितं कृत्वा देवेभ्यो निवेद्यते इति प्रसिद्धिः। अस्याः सवाष्पनयनयुगलस्पर्शिनौ कर्णौ सरतिं काममुद्दीपयत इति वस्तु नेत्रपद्मेत्यपह्नुत्यानुप्राणितया उत्प्रेक्षया व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ ६१॥

—शेति। अतिवक्रः अतिकुटिलः दुर्बोध इत्यर्थः शास्त्राणाम्

सोऽस्याः श्रवःपत्रयुगे प्रणाली रेखेव धावत्यभिकर्णकूपम् ॥ ६२ ॥
अस्या यदष्टादश संविभज्य विद्याः श्रुती दध्रतुरर्द्धमर्द्धम् ।
कर्णान्तरुत्कीर्णगभीररेखः किं तस्य सङ्ख्यैव नवा नवाङ्कः ॥ ६३ ॥

ओघः समूहः तस्य निष्यन्दः सार एव रसप्रवाहः अमृतप्रवाहः येन पथा इह भैमीकर्णकूपे अविशत् प्रविष्टवान् स पन्थाः अस्याः भैम्याः श्रवसोः कर्णयोः पत्रयुगे पत्रावलिद्वये प्रणाली-रेखेव जलनिःसरणपदवीरेखेव इयोः प्रणाली पयसः पदव्याम् इत्यमरः । अभिकर्णकूपं कर्णरन्ध्रम् अभिलक्ष्य धावति गच्छति नासौ कर्णकूपपर्य्यन्तगामिनी पत्रावलिरेखा स्थिता किन्तु कर्णकूपं प्रविष्टवतः विद्यासमूहरसस्य कुटिला प्रणालीति भावः । अस्याः कर्णौ वक्ररेखायुक्तपत्रावलिशोभितौ बहु-शास्त्रामृतपूर्णौ चेति फलितार्थः । उत्प्रेक्षालङ्कारः ॥ ६२ ॥

अस्या इति । अस्याः दमयन्त्याः श्रुती कर्णौ अष्टादश-विद्याः सषडङ्गा चतुर्वेदी मीमांसा न्यायविस्तृतिः । आयुर्वेदो धनुर्वेदो गान्धर्वमर्थशासनम् । पुराणं धर्मशास्त्रञ्च विद्या ह्यष्टा-दश स्मृत इत्युक्ताः संविभज्य सम्यक् विभक्ताः कृत्वा द्विधा-कृत्येति यावत् । यत् अर्द्धमर्द्धं दध्रतुः धारयामासतुः कर्णान्तः कर्णयोरभ्यन्तरे उत्कीर्णा उत्पादिता गभीरा दूरायता रेखा यस्य तथाभूतो नवाङ्कः नवसंख्याबोधकोऽङ्कः तस्यैव अर्द्धस्यैव संख्या न वा किम् ? यद्वा नवा नवीना अपूर्वरूपेत्यर्थः संख्यैव किम् ? इत्युत्प्रेक्षा । एकः कर्णो नवसंख्या विद्या धारयति अपरश्च तथेति प्रकटनार्थं विधात्रा अस्याः कर्णद्वयं नवसंख्या-सूचकरेखाभिः प्रत्येकं चिह्नितम् इवेत्युत्प्रेक्षार्थः । प्रत्येकं कर्णाभ्यन्तरवर्त्ति नवरेखावतीयमति सुलक्षणा भैमीति तात्-

मन्येऽमुना कर्णलतामयेन पाशद्वयेन छिदुरेतरेण ।
एकाकिपाशं वरुणं विजिग्येऽनङ्गीकृतायासततीरतीशः ॥ ६४ ॥
आत्मैव तातस्य चतुर्भुजस्य जातश्चतुर्दोरुचितः स्मरोऽपि ।
तच्चापयोः कर्णलते भ्रुवोर्द्वे वंशत्वगंशौ चिपिटे किमस्याः ॥ ६५ ॥

मन्ये इति । रतीशः कामः अमुना पुरोदृश्यमानेनेत्यर्थः कर्णलतामयेन श्रवणवल्लिरूपेण छिदुरेतरेण दृढतरेणेत्यर्थः । विदिभिदिच्छिदेः कुरजिति कर्मकर्त्तरि कुरच्प्रत्ययः । पाशद्वयेन पाशास्त्रयुगलेन पाशो बन्धनशस्त्रयोरित्यमरः । न अङ्गीकृता स्वीकृता आयासततिः प्रयासातिशय इत्यर्थः येन तथाभूतः अपरपाशास्त्रद्वयविरचने प्रयासाधिक्यमस्वीकुर्वन्नित्यर्थः अनायासः सन्निति भावः । एकाकी अद्वितीयः एकादाकिन् चासहाये इत्याकिन्प्रत्ययः । पाशो बन्धनशास्त्रं यस्य तादृशं वरुणं जलाधिपतिं देवं विजिग्ये जितवान्, विपराभ्यां जेरात्मनेपदम् । मन्ये सम्भावयामि वाक्यार्थः कर्म । उत्प्रेक्षालङ्कारः । मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षावाचकाः शब्दा इवशब्दोऽपि तादृश इत्युक्तेः । अधिकसाधनेन अल्पसाधनः सुखेन पराजेतुं शक्यते इति भावः । भैम्याः कर्णयुगं दृष्ट्वा देवो वरुणः कामवशतां गत इति वस्तु उत्प्रेक्षया व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ६४ ॥

आत्मेति । चत्वारो भुजा यस्य स चतुर्भुजः तस्य चतुर्भुजस्य तातस्य जनकस्य । तातस्तु जनकः पिता इत्यमरः । विष्णोः इत्यर्थः आत्मैव स्वरूपमिव आत्मेवेति पाठे आत्मेव स्वरूपमिव जातः अङ्गात् अङ्गात् सम्भवति हृदयात् अधिजायते । आत्मा वै पुत्रनामासि सजीवः शरदः शतमिति श्रुतेः । स्मरोऽपि कामो-

ग्रीवाङ्गतैवावटुशोभितापि प्रसाधिता माणवकेन सेयम् ।
आलिङ्ग्यतामप्यवलम्बमाना सरूपताभागखिलोर्द्धकाया॥६६॥

ऽपि चत्वारो दोषो भुजा यस्य स चतुर्दोः चतुर्भुजः उचितः युक्तः कारणगुणाः कार्य्यगुणमारभन्ते इति न्यायात्। यद्वा चतुर्भिर्दोर्भिः उचित इत्यर्थः। ननु चतुर्भुजस्य द्वे धनुषी द्वे च शिञ्जिन्यौ युक्ते अस्य तु न तथा दृश्यते इत्यत्राह तच्चापयोः इति। तस्य चतुर्भुजस्य स्मरस्य चापयोः धनुषोः अस्या भैम्या भ्रुवोः अस्या एव द्वे चिपिटे विस्तृते चिपिटः खाद्यभेदे ना त्रिषु पिट्टिकविस्तृते इति मेदिनी। इनच् पिट्च चिकचिचेति पिट्च प्रत्ययो नेश्चिरादेशश्च। कर्णलते श्रोत्रवल्ली वंशस्य त्वक्सारस्य त्वगंशौ त्वङ्निर्मिते मौर्व्वौ किम्? भैम्या भ्रुवौ कामधनुषी कर्णौ च ज्ये इति भावः। भैम्याः कर्णलता कामस्य युवजनवशीकरणहेतुरिति तात्पर्य्यम्। उत्प्रेक्षालङ्कारः ॥६५॥

अथ अस्या ग्रीवां वर्णयति ग्रीवेति। सा प्रसिद्धा या पूर्वं श्रुता सा वा इयं पुरतो दृश्यमानेत्यर्थः अस्याः ग्रीवा वटुना माणवकेन शोभिता न भवति इति अवटुशोभितापि माणवकेन प्रसाधिता अलङ्कृता इति विरोधः अपिर्विरोधे। परिहारस्तु अवटुशोभिता घाटालङ्कृता अवटुर्घाटा कृकाटिका इत्यमरः। माणवकेन विंशतिसरेण मुक्ताहारेण प्रसाधिता अलङ्कृता विंशतिसरो माणवकोऽल्पत्वादिति चीरस्वामी। भवेत् माणवको हारभेदे भारे कुपूरुष इत्यभिधानम्। केचित्तु माणवकेन अर्द्धहाराख्यहारविशेषेण अर्द्धहारो माणवक इत्यमरोक्ते इत्याहुः। किञ्च या आलिङ्ग्यतां वाद्यविशेषताम् अवलम्बमानापि मृदङ्गा मुरजाभेदास्त्वङ्क्यालिङ्ग्योर्द्धकास्त्रय इत्यमरः। हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्द्धकः। आलिङ्ग्यश्चैव गोपुच्छो

कवित्वगानप्रियवादसत्यान्यस्या विधाता न्यधिताधिकण्ठम् ।
रेखात्रयन्यासमिषादमीषां वासाय सोऽयं विबभाज सीमाः ॥६७

बाहू प्रियाया जयतां मृणालं द्वन्द्वे जयो नाम न विस्मयोऽस्मिन् ।
उच्चैस्तु तच्चित्रममुष्य भग्नस्यालोक्यते निर्व्यथनं यदन्तः ॥६८॥

---

मध्यदक्षिणवामगा इत्यमरः । सरूपभाक् समानरूपतां भजमानः अखिलः समग्र ऊरुकः ऊरुकाण्डवाद्यभेदो यस्याः तादृशी इति विरोधः परिहारस्तु आलिङ्ग्यताम् आलिङ्गनयोग्यत्वम् अवलम्बमानापि आश्रयन्ती अपि सरूपतां सौन्दर्य्यवत्तां भजते इति तथाभूतः अखिलः समस्त ऊरुकायः शरीरोर्द्धभागो यस्याः तथाभूता अतएव अद्भुता आश्चर्य्यरूपा एव उक्तविरोधात्तथा निरुपमसौन्दर्य्ययोगाच्च इति भावः । अत्र विरोधालङ्कारयोः संसृष्टिः ॥ ६६ ॥

अथ अस्याः कण्ठं वर्णयति । विधाता ब्रह्मा अस्या भैम्या कण्ठे इत्यधिकण्ठं विभक्त्यर्थेऽव्ययीभावः । कवित्वं काव्यं गानं सङ्गीतं प्रियवादः मधुरभाषित्वं सत्यं तानि चत्वारि न्यधित निहितवान् । अथ सोऽयं विधाता अमीषां चतुर्णां कवित्वादीनां वासाय निर्विवादवसतये इत्यर्थः रेखात्रयस्य न्यासमिषात् रचनाच्छलात् सीमाः मर्य्यादाः विबभाज मध्यरेखात्रयविन्यासेन चतुर्धा स्थानानि विभक्तवानित्यर्थः कवित्वादिगुणशालिनी रेखात्रयवत्त्वात् कम्बुकण्ठी च भैमी इति तात्पर्य्यम् । उत्प्रेक्षा अत्र व्यञ्जकाप्रयोगात् गम्या ॥ ६७ ॥

अथ द्वाभ्यां बाहुद्वयमस्या वर्णयति बाहू इति । प्रियायाः दमयन्त्या बाहू भुजौ मृणालं जयतां परिभवतां जयतेर्लोटि तसस्तामादेशः । युक्तञ्चैतत् यतोऽस्मिन् द्वन्द्वे बाहुयुगले कलहे

अजीयतावर्त्तशुभंयुनाभ्यां दोर्भ्यां मृणालं किमु कोमलाभ्याम्।
निःसूत्रमास्ते घनपङ्कमृत्सु मूर्त्तासु नाकीर्त्तिषु तन्निमग्नम्॥६८

---

च द्वन्द्व कलहयुग्मयोः इत्यमरः। जयो नाम न विस्मयः न आश्चर्य्यः द्वाभ्यामेकस्य जयः सम्भवत्येव नात्र विस्मयः कलहे च उभयोरेकतरजयः स्यादेव तत्रापि न विस्मय इति भावः। तु किन्तु भग्नस्य पराजितस्य अमुष्य मृणालस्य अन्तः गर्भे अन्तःकरणे च व्यथनस्य अभावः निर्व्यथनम् अक्लेश इत्यर्थः छिद्रञ्च छिद्रं निर्व्यथनं रोकमित्यमरः। अभावेऽव्ययीभावः। यत् आलोक्यते दृश्यते ज्ञायते इति यावत् तत् उच्चैः महत् चित्रम् आश्चर्य्यम्। भग्नमपि अव्यथमिति विरोधः। स्वच्छिद्रमिति तत्परिहार इति विरोधालङ्कारः। मृणालादपि सुकुमारी बाहू अस्या इति भावः। अनेन वस्तुना मृणालात् उपमानात् उपमेययोः बाह्वोः आधिक्यप्रतीतिः व्यतिरेको व्यज्यते। इति वस्तुना अलङ्कारध्वनिः॥ ६८॥

अजीयतेति। आवर्त्तः अम्भसां भ्रमः स्यात् आवर्त्तोऽम्भसां भ्रम इत्यमरः। स इव शुभंयुः शुभावहा शुभंयुस्तु शुभान्वित इत्यमरः। नाभिः यस्याः तस्याः भैम्याः अहं शुभयोः युसिति शुभमिति सकारान्तादव्ययात् मत्वर्थीयो युस्प्रत्ययः। कोमलाभ्यां मृदुलाभ्यां दोर्भ्यां बाहुभ्यां मृणालम् अजीयत किमु? मृणालमार्दवमतिशयेन जितं किम्? इत्युत्प्रेक्षा कुत इत्याह निःसूत्रमिति घनाः सान्द्राः या पङ्कमृदः कर्दममृत्तिकाः तासु मूर्त्तासु मूर्त्तिमतीषु अकीर्त्तिषु अपयशःसु अकीर्त्तेः श्यामत्वेन वर्णनीयत्वात् पङ्कमृत्तिकारूपत्वमिति भावः। तत् मृणालं निमग्नं निःसूत्रम् अव्यवस्थं निरुपायमिति भावः। सूत्रन्तु सूचना ग्रन्थे सूत्रं तन्तुव्यवस्थयोः इति विश्वः। आस्ते तिष्ठति

रज्यन्नखस्याङ्गुलिपञ्चकस्य मिषादसौ हैङ्गुलपद्मतूणे।
हैमैकपुङ्खास्ति विशुद्धपर्वा प्रियाकरे पञ्चशरी स्मरस्य ॥७०॥
यस्याः करस्पर्द्धनगर्द्धिनश्चिरमल्लमापत् खलु पल्लवो यः।

---

अपराजितत्वे कथमेवमवस्थेति भावः। मृणालादपि समधिक-कोमलौ तदीयौ भुजौ इति तात्पर्य्यम्। प्रागुक्तमपि प्रकारा-न्तरेण अभिहितम्। उत्प्रेक्षालङ्कारस्तेन च प्रागुक्तवत् व्यति-रेको व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः॥ ६९॥

त्रिभिः प्रियायाः करौ वर्णयति रज्यदिति। रज्यन्तः स्व-भावेन रक्तीभवन्तः नखा यस्य तस्य क्वचिरञ्जोः प्राचां श्ये परस्मैपदञ्च। अङ्गुलीनां पञ्चकं तस्य मिषात् व्याजात् असौ पुरो दृश्यमाना हैमाः हिरण्मयाः एके केवलाः श्रेष्ठाश्च पुङ्खाः मूलभागाः यस्याः यस्यां वा सा कर्त्तरी पुङ्ख इति यादवः। तथोक्ता तथा विशुद्धानि सरलानि पर्वाणि ग्रन्थयो यस्याः सा स्मरस्य कामस्य पञ्चानां शराणां समाहारः पञ्चशरी शरपञ्चकं समाहारे द्विगोर्ङीप्। प्रियायाः करे पाणावेव हैङ्गुलं हिङ्गु-लेन रक्तं पद्मं तदेव तूणः इषुधिः तस्मिन् अस्ति वर्त्तते इत्युत्-प्रेक्षा। कामो हि पुष्पशरः तस्येषुधिरपि तथैव पुष्पमयः तच्च पुष्पं साम्यात् रक्तपद्ममेव ततश्च भैम्याः करः कामस्य इषुधिः तत्र पञ्च अङ्गुलयः पञ्च शराः काममुद्दीपयन्तीति भावः। तदत्र अङ्गुलिपञ्चकस्य मिषादिति प्रकृतप्रतिषेधेन पञ्चशरस्थापनात् अपह्नुतिरलङ्कारः। तदुक्तं दर्पणे, प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति। तेन च अनुप्राणिता उत्प्रेक्षेति अनयोरङ्गाङ्गिभावेन सङ्करः॥ ७०॥

यस्या इति। यः पल्लवः किसलयः यस्याः प्रियायाः करेण

भूयोऽपि नामाधरसाम्यमर्वं कुर्वन् कथं वाऽस्तु न स प्रवालः ॥ ७१ ॥

अस्यैव सर्गाय भवत्करस्य सरोजसृष्टिर्मम हस्तलेखः ।
इत्याह धाता हरिणेक्षणायां किं हस्तलेखीकृतया तयास्याम् ॥ ७२ ॥

---

स्पर्द्धनं गृह्णाति अभिकाङ्क्षतीति करस्पर्द्धनगर्द्धिनी ऋद्धिः कान्तिः यस्य तथोक्तः पाणितुल्योऽहमिति जातस्पर्द्धः सन्नित्यर्थः ऋत्यक् इति प्रकृतिभावः । बालत्वं शिशुत्वम् अभिनवत्वं मूर्खत्वञ्च मूर्खेऽर्भकेऽपि बालः स्यादित्यमरः । न्यूनस्य अधिकेन स्पर्द्धायां स्वस्य मूर्खत्वमेव प्रकाश्यते इति भावः । आपत् प्राप । पल्लवस्य पदस्वरणादपि लवस्य लेशस्य चरणसाम्यमपि अलभमानस्येति भावः स्वतः उत्कृष्टेन पाणिना स्पर्द्धायां भवत्येव मूर्खतेति च ध्वन्यते । भूयोऽपि पुनरपि स पल्लवः अधरसाम्यगर्वं प्रियाया अधरेण साम्याभिलाषं कुर्वन् कथं वा प्रवालः नवपल्लववाच्यः वबयोरभेदात् प्रकृष्टो बालश्च न अस्तु न भवतु ? अपितु अस्तु एवेत्यर्थः । पाणिसाम्याभिलाषेण अस्य मूर्खत्वं पाणितोऽप्युत्कृष्टस्य रतिसर्वस्वस्य अधरस्य साम्ये अतिमूर्खत्वमेवेति भावः । तथाच अस्याः करः किसलयादपि मनोहर इति तात्पर्य्यम् । अधरस्य पल्लवान्मनोहरत्वं प्रसङ्गत उक्तं तद्वर्णनस्य प्रागुक्तत्वादिति द्रष्टव्यम् ॥ ७१ ॥

अस्यैवेति । हे भैमि ! अस्य भवत्याः करस्य पाणेः सर्गायैव निर्माणायैव सरोजानां पद्मानां सृष्टिः निर्माणं मम हस्तलेखः हस्तरेखाभ्यासार्थलेखः इति धाता विधिः अस्यां हरिणेक्षणायां भैम्यां तया हस्तलेखीकृतया हस्तकृतपद्मरेखीकृतया सरोजसृष्ट्या करणेन आह किम् ? सूचयति किम् ? इत्युत्प्रेक्षा । सरोजादपि रमणीयोऽस्याः करः हस्ते पद्मरेखायाः शुभलक्षणत्वाच्च सुलक्षण इति तात्पर्य्यम् ॥ ७२ ॥

किं नर्मदाया मम सेयमस्या दृश्याऽभितो बाहुलतामृणाली।
कुचौ किमुत्तस्थतुरन्तरीपे स्मरोष्मशुष्यत्तरबाल्यवारः ॥७३॥
तालं प्रभु स्यादनुकर्त्तुमेतावुत्थानसुस्थौ पतितं न तावत्।
परञ्च नाश्रित्य तरुं महान्तं कुचौ कृशाङ्ग्याः स्वतएव तुङ्गौ॥७४

---

अथ अस्याः स्तनौ षड्भिः श्लोकैर्वर्णयति किमिति। अथ नर्मदायाः आनन्ददायिन्याः अथच तदाख्याया नद्याः रेवा तु नर्मदेत्यमरः। अस्या भैम्याः अभितः उभयोः पार्श्वयोः दृश्या अतिमनोहारिणी सेयं सा प्रसिद्धा इयं बाहुलता भुजवल्ली मृणाली विसलता किम्? अत्र नर्मदायाः विधेयत्वेन प्राधान्यात् मृणाल्याः साक्षात्सम्बन्धात् अभितः परित इत्यादिना द्वितीया नास्ति। तथा स्मरोष्मणा कामसन्तापेन शुष्यत्तरम् अतिशयेन शुष्यत् बाल्यमेव शैशवमेव वार्जलं वार्वारि सलिलं जलमित्यमरः। यस्याः तथाभूताया अस्याः नर्मदायाः कुचावेव अन्तरीपे अपामन्तवर्त्तिनौ तटे द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटमित्यमरः। सुप्सुपेति समासः। ऋक्पूरित्यादिना समासान्तो द्व्यन्तरुपसर्गेभ्योऽप इदितीकारः। उत्तस्थतुः किम्? उत्थितवन्तौ किम्? इत्युत्प्रेक्षा। ऊर्द्ध्वकर्मत्वात् परस्मैपदम्। नर्मदापि उत्तापेन शुष्यति तेन च तदन्तरीपस्योन्मज्जनं भवति। भैम्या बाहुलतारूपयोर्मृणाल्योरन्तरा द्वीपतुल्यपरिसरौ महान्तौ कुचौ उन्नतौ इति भावः। अत्र रूपकेण समुज्जीवितः उत्प्रेक्षालङ्कारः ॥ ७३ ॥

तालमिति। पतितं वृक्षात् च्युतमित्यर्थः तालं तालफलं कर्त्तृ उत्थानेन स्वत उदयेन उच्चावस्थानेन च सुस्थौ सुखेन स्थितौ सुप्रतिष्ठौ वा अपतितौ इति भावः। एतौ कुचौ तावत्

एतत्कुचस्पर्द्धितया घटस्य ख्यातस्य शास्त्रेषु निदर्शनत्वम्।
तस्माच्च शिल्पान्मणिकादिकारी प्रसिद्धनामाजनि कुम्भकारः ७५

साकल्येन यावत्तावच्च साकल्ये इत्यमरः। अनुकर्त्तुं समीभवितुमिति यावत् न प्रभु न समर्थं स्यात्। आकारेण कथञ्चित् साम्येऽपि पातित्यात् न साम्यं न हि पतितोऽपतितेन साम्यमर्हतीति भावः। ननु पतितं तावत् साम्यं नार्हतु अपतितन्तु साम्यं लभतामित्यत्राह। परम् अन्यत् पतितभिन्नं तालफलमित्यर्थः महान्तम् उच्चैस्तरं तरुम् आश्रित्य च आश्रित्यापि तुङ्गं सदिति भावः। क्षमाड्याः भैम्याः स्वत एव स्वभावेनैव तुङ्गौ उन्नतौ कुचौ अनुकर्त्तुं न प्रभु इत्यनुषङ्गः। न हि स्वतस्तुङ्गम् इतराश्रयेण तुङ्गं वस्तु समीकर्त्तुमलमिति भावः। भैम्याः कुचौ तालफलादपि समुन्नततया मनोज्ञाविति भावः। अत्रोपमानात्तालफलादुपमेयस्य कुचस्याधिक्यप्रतीतेः व्यतिरेकालङ्कारो व्यज्यते॥ ७४॥

एतदिति। एतस्याः भैम्याः कुचयोः स्पर्द्धितया यद्वा एतौ कुचौ तयोः स्पर्द्धितया अहं भैमीकुचसदृश इत्यभिमानिनेत्यर्थः ख्यातस्य ख्यातिं गतस्य लब्धप्रतिष्ठस्येति भावः। घटस्य शास्त्रेषु निदर्शनत्वं दृष्टान्तत्वम् अजनि जातं यद्वस्तु जन्यं तदनित्यं यथा घटः तथा यन्नित्यं तदजन्यं यथा घटः इत्येवमन्वयव्यतिरेकयोः दृष्टान्ततया घटस्यैव शास्त्रेषु कीर्त्तितत्वादिति भावः। अन्यानि वस्तूनि हित्वा शास्त्रेषु अस्यैव दृष्टान्तत्वेन पण्डितैः कीर्त्तनस्य बीजमिदं यत् महाजनविरोधी महानेव सम्भवति कथमन्यथा महद्भिः सह स्पर्द्धते इति प्रतीतिरेव। उक्तञ्च, महाकविना भारविणा। समुन्नयन् भूतिमनार्य्यसङ्गमाद्वरं विरोधोऽपि समं महात्मभिरिति वरं पण्डितमूर्खत्वं न च

गुच्छालयस्वच्छतमोदविन्दु-वृन्दाभमुक्ताफलफेनिलाङ्के ।
माणिक्यहारस्य विदर्भसुभ्रूपयोधरे रोहति रोहितश्रीः ॥७६॥

---

मूर्खेण मितर्तेति च। अस्माच्च शिल्पात् भैमीकुचस्पर्धिकुम्भ-निर्माणात् मणिकादिकारी अलिञ्जरादिमहाभाण्डकारकः अलिञ्जरः स्यात्मणिक इत्यमरः। कुलालः कुम्भं करोतीति कुम्भकार इति प्रसिद्धं नाम यस्य तथाभूतः अजनि जातः न तु मणिकादिकारणात् महत्सङ्ग एव प्रतिष्ठाकर इति भावः। भैमीकुचौ कुम्भौ इव पीनोन्नतत्वेन मनोहराविति तात्पर्य्यम्। अत्रापि उपमानात् कुम्भात् कुचस्योपमानस्य आधिक्यप्रतीतेः व्यतिरेकालङ्कारः ॥ ७५ ॥

गुच्छेति। गुच्छे हारविशेषे हारभेदा यष्टिभेदात् गुच्छ-गुच्छार्द्धगोस्तना इत्यमरः। आलयः आश्रयो येषां तानि स्वच्छतमानि अतिनिर्मलानि उदविन्दुवृन्दभानि जलविन्दु-समूहसदृशानि मुक्ताफलानि मौक्तिकानि तैः फेनिलः फेनयुक्तः अत्युज्ज्वल इति भावः। अङ्कः उत्सङ्गः यस्य तादृशे विदर्भसुभ्रुवः दमयन्त्याः पयोधरे स्तने माणिक्यहारस्य रोहितश्रीः अरुण-कान्तिः रोहितो लोहितो रक्त इत्यमरः। रोहति राजते मुक्ताहारमाणिक्यहाराभ्यामस्याः कुचौ अतितरां शोभते इति भावः। तथा फेनिले पयोधरे जलाधारे वाप्यादौ रोहितस्य तदाख्यमत्स्यविशेषस्य श्रीः शोभा अथो झषा रोहित इत्यमरः। रोहति जायते तथा पयोधरे मेघे रोहितस्य शक्रधनुषः श्रीः इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितमित्यमरः। रोहतीति च गम्यते। अत्र प्रस्तुतस्य भैमीपयोधरस्य अप्रस्तुतस्य जला-धारादेरेकस्य रोहितश्री धारणसम्बन्धाद्दीपकालङ्कारः। तदुक्तं दर्पणे. अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते इति। स च पयो-

निःशङ्कसङ्कोचितपङ्कजोऽयमस्यामुदीतोमुखमिन्दुविम्बः ।
चित्रं तथापि स्तनकोकयुग्मं न स्तोकमप्यश्नति विप्रयोगम् ७७

धरे इति श्लेषेणानुप्राणित इत्यनयोरङ्गाङ्गिभावेन सङ्कर इति केचिदाचक्षते तन्न मनोरमं दीपकस्य वाक्ययोर्द्वयोरेकस्य प्रस्तुतत्वेऽपरस्याप्रस्तुतत्वे एव प्रसङ्गात् व्यवस्थितेरिह तु वाक्यैकं तत्कथं तदवसरः। श्लेषस्य न तत्र उभयोरेवार्थयोः प्रकृतत्वात् इह तु न तथेति सुधीभिर्विभाव्यम्। अयञ्च श्लोको न सर्वैराहृत इति प्रक्षिप्त एव प्रतीयते ॥ ॥ ७६ ॥

निःशङ्केति। निःशङ्कं शङ्कारहितं गगनोदितस्य चन्द्रस्य सूर्य्यभयात् पद्मसङ्कोचने शङ्कितत्वं सततासमत्वञ्च अस्यास्तु मुखचन्द्रस्य न तत् शङ्का नापि अकालाक्षमत्वमिति भावः। यथा तथा सङ्कोचितानि मुकुलीभावं नीतानि पङ्कजानि पद्मानि येन तथाभूतः पद्मादपि उत्कर्षात् रात्रौ स्वोदयेन तत्-सङ्कोचनियमाश्चेति भावः। तत्सङ्कोचकारी अयं पुरोदृश्यमानः इन्दुविम्बः चन्द्रमण्डलमिव मुखम् अस्यां भैम्याम् उदीतः उदयं गतः उत्पूर्वादी गतावित्यस्मात् कर्त्तरि क्तप्रत्ययः। तथापि इन्दूदयेऽपि स्तनावेव कोकौ चक्रवाकौ कोकश्चक्रश्चक्रवाक इत्यमरः। तयोर्युग्मं चक्रवाकदम्पती इत्यर्थः स्तोकमपि अल्पमपि विप्रयोगं विरहं नाश्नति न प्राप्नोति चित्रं रात्रौ चक्रवाकयोः रामशापेन नियन्त्रितयोः रात्रौ चन्द्रोदये विरहस्य सिद्धेः यदेतत् स्तनचक्रयुगलं मुखचन्द्रोदये न विश्लिष्यति तत् आश्चर्य्यमित्यर्थः। भैमीकुचौ चक्रवाकसदृशौ सततसंश्लिष्टौ इति तात्पर्य्यम्। अत्र रूपकेणोत्थापितो विरोधालङ्कारः। तत् परिहारस्तु रूपकवशादेवेत्यनयोः अङ्गाङ्गिभावेन सङ्करः। अत्र

आभ्यां कुचाभ्यामिभकुम्भयोः श्रीरादीयतेऽसावनयोः क्व ताभ्याम्
भयेन गोपायितमौक्तिकौ तौ प्रव्यक्तमुक्ताभरणाविमौ यत्॥७८॥
करायजाग्रच्छतकोटिरर्थी ययोरिमौ तौ तुलयेत् कुचौ चेत्।

---

उपमानाद्वज्रवाकादुपमेयस्य स्तनस्याधिक्यात् व्यतिरेकालङ्कारो व्यज्यते। इति प्रागुक्तेनालङ्कारेण अलङ्कारध्वनिः॥ ७७॥

आभ्यामिति। आभ्यां दृश्यमानाभ्याम् अस्याः कुचाभ्यां स्तनाभ्याम् इभकुम्भयोः गजकुम्भयोः श्रीः शोभा सम्पच्च आदीयते गृह्यते किन्तु ताभ्याम् इभकुम्भाभ्याम् अनयोः कुचकुम्भयोः असौ श्रीः क्व आदीयते? इत्यनुषङ्गः। यत् यस्मात् इभकुम्भौ भयेन कुचकुम्भाभ्यां भीत्या गोपायितानि अन्तर्निहितानि मौक्तिकानि मुक्ताफलानि याभ्यां तौ गोपायतेः कर्मणि क्त-प्रत्ययः। इमौ कुचकुम्भौ प्रव्यक्तानि प्रकाशितानि मुक्ताभरणानि मुक्ताहाराः ययोः याभ्यां वा तौ। मुक्ताफलानि गजकुम्भाभ्यन्तरे वर्त्तन्ते मुक्ताहारस्तु स्तनयोरुपरि दृश्यते च। विजितो हि स्वधनं भयात् विजेतुर्गोपायति विजेता तु निर्भयः स्वं धनम् अन्येभ्यो बलाद् गृहीतं प्रकाशेन धारयति। तदत्र अन्यस्य श्रीरन्येन कथं गृह्यते इति कुचकुम्भाभ्यामिभकुम्भस्य श्रीरिव श्रीरिति सादृश्याक्षेपान्निदर्शना। तदुक्तं दर्पणे, सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति। भयेनेति व्यञ्जकाप्रयोगात् प्रतीयमानोत्प्रेक्षा च तदनयोः संसृष्टिरनया च इभकुम्भादुपमानादुपमेयस्य कुचकुम्भस्याधिक्यप्रतीतेः व्यतिरेकालङ्कारो व्यज्यते। इत्यलङ्कारेणालङ्कारध्वनिरिभकुम्भोपमस्तनी असौ भैमीति वस्तु व्यज्यते चेति वस्तुध्वनिश्च॥ ७८॥

सर्वं तदा श्रीफलमुन्मदिष्णु जातं वटीमप्यधुना न लब्धुम्॥७९

स्तनाऽतटे चन्दनपङ्किलेऽस्या जातस्य यावद्युवमानसानाम् ।
हारावलीरत्नमयूखधाराकाराः स्फुरन्ति स्खलनस्य रेखाः॥८०

---

कराग्रे ति। करस्य हस्तस्य अग्रे जाग्रत् दीप्यमान इत्यर्थः शतकोटिः वज्रम् अथच शतानां कोटीनां तत्संख्यकधनानां समाहारः शतकोटि तद् यस्य सः वज्रधर इन्द्रः महाधनिकश्च ययोः कुचयोः अर्थी मर्दनाभिलाषुकः, वटीमपि क्षुद्रकपर्दिकामपि वटः कपर्दे न्यग्रोधे इति विश्वः। अपचयविवक्षायां स्त्रीलिङ्गप्रयोगः। स्त्री स्यात् काचमणौ स्त्र्यादिविवक्षापचये यदीत्यमराभिधात्। लब्धुं न जातं न समर्थम् अतिनिःस्वमिति भावः। सर्वं श्रीफलं विल्वफलं कर्त्तृ विल्वे शाण्डील्यशैलूषौ मालूरश्रीफलावपीत्यमरः। इमौ तौ कुचौ तुलयेत् उपमिनुयात् चेत् तदा उन्मदिष्णु उन्मादयुक्तं स्यादित्यर्थः। अलङ्कृञित्यादिना इष्णुच्। उपमातीतवस्तुना स्पर्द्धा उन्मादस्तथा धनिकैकलभ्ये वस्तुनि निःस्वस्य लिप्सा च उन्माद एवेति भावः। विल्वफलादपि अधिकमनोरमौ भैमीकुचौ इति तात्पर्य्यम्। अत्रोपमानात् विल्वादुपमेयस्य कुचस्याधिक्यप्रतीतेः व्यतिरेकालङ्कारो व्यज्यते ॥ ७९ ॥

स्तनातटे इति। चन्दनेन पङ्किले पङ्कवति चन्दनरूपपङ्कलेपिते इत्यर्थः पिच्छादित्वादिलच्प्रत्ययः। अस्याः भैम्याः स्तनयोः अतटे प्रपाते। प्रपातस्त्वतटो भृगुरित्यमरः। जातस्य उत्पन्नस्य यावन्ति यूनां मानसानि तेषां साकल्यार्थस्य यावच्छब्दस्य विशेषणसमासः। स्खलनस्य पतनस्य रेखाः चिह्नानि हारावलीषु यानि रत्नानि माणिक्यहीरकादीनि तेषां मयूख-

क्षीणेन मध्येऽपि सतोदरेण यत् प्राप्यते नाक्रमणं बलिभ्यः।
सर्वाङ्गशुद्धौ तदनङ्गराज्ये विजृम्भितं भीमभुवीह चित्रम् ॥८१॥

---

धारा किरणराजयः एव आकारा मूर्त्तयो यासां तथाविधाः सत्यः स्फुरन्ति राजन्ते। नैताः रत्नरश्मिपरम्पराः किन्तु चन्दनलिप्तत्वात् पिच्छिले अत्युन्नतस्तनरूपप्रपातस्थानात् युवजनमानसानां सञ्चरतां पतनरेखा एव दृश्यन्ते इति फलितार्थः। अन्येऽपि अत्युन्नते पिच्छिले स्थाने सञ्चरन्तः प्रायेण पतन्ति। 'अत्युन्नतौ भैम्याः कुचौ दृष्ट्वा युवानोऽधैर्य्याः सन्तः पतन्तीति तात्पर्य्यम्। अत्र रेखाः स्फुरन्तीति व्यञ्जकाप्रयोगात् प्रतीयमानोत्प्रेक्षा। स्तनातट इत्यत्र स्तनावट इति पाठे स्तनयोरवटे गर्त्ते अभ्यन्तरे इति भावः। अवटः स्यात् विले गर्त्ते कूपे कुहकजीविनि इति विश्वः। चन्दनपङ्किले गर्त्ते पतनस्य रेखा इति सम्बन्धः॥ ८०॥

उदरं तावदेकेन वर्णयति क्षीणेनेति। इह अस्यां भीमभुवि दमयन्त्यां भयङ्करभूमौ च क्षीणेन कृशेन दुर्बलेन च मध्ये शरीरमध्यस्थाने प्रबलशत्रुमध्ये च सता तिष्ठता वसता चापि उदरेण जठरेण बलिभ्यः त्रिवलीरेखाभ्य इत्यर्थः, बवयोरभेदात् प्रवलेभ्यश्च सकाशात् आक्रमणं व्यापनं परिभवश्च यत् न प्राप्यते तदनाक्रमणं चित्रम् आश्चर्य्यं प्रबलशत्रुसकाशात् दुर्बलस्य आक्रमणं न चित्रमित्यर्थः तच्च आक्रमणं सर्वेषाम् अङ्गानां हस्तपदादीनां स्वामात्यादीनाञ्च शुद्धिः सौष्ठवं यस्मिन् तादृशि अनङ्गस्य कामस्य राज्ये यौवने इत्यर्थः अथच अराजिदेशे विजृम्भितं विलसितं चित्रमित्यनुषङ्गः सौराज्ये प्रबलेन दुर्बलाक्रमणमाश्चर्य्यमित्यर्थः। अनङ्गराज्यविजृम्भितमिति पाठे सर्वाङ्गशुद्धौ सर्वेषामङ्गानां शुद्धौ सौष्ठवे सत्यपि अनङ्गस्य राज्यं

मध्यं तनूकृत्य यदीदमीयं वेधा न दध्यात् कमनीयमंशम् ।
केन स्तनौ सम्प्रति यौवनेऽस्याः सृजेदनन्यप्रतिमाङ्गदीप्तेः॥८२॥
गौरीव पत्या सुभगा कदाचित् कर्त्रीयमप्यर्द्धतनूसमस्याम् ।
इतीव मध्ये निदधे विधाता रोमावलीमेचकसूत्रमस्याः ॥८३॥

---

यौवनं तस्य विजृम्भितमिति योजना। भयङ्करकान्तारादिस्थाने प्रबलैर्दुर्बलं आक्रम्यते। किन्तु तत् यदि सुराज्ञि देशे घटेत तच्चित्रमिति वार्थः। यद्वा इह भीमभुवि भीमनरेन्द्रनगर्यां सर्वाङ्गसुन्दरी सर्वाङ्गसौष्ठवे सति तस्य अनङ्गराज्यस्य दमयन्तीरूपस्येति भावः। विजृम्भितं विलसितं चित्रं विस्मयकरमित्यर्थः। भीमस्य शिवस्य भुवि स्थाने निकटे इति यावत् अनङ्गराज्यविजृम्भितं कामस्य राज्ञः विलसितं चित्रमिति वा अर्थः। त्रिवलीविराजितमस्या उदरमिति भावः। अत्र वाच्यप्रतीयमानयोरर्थयोरभेदाध्यासाद्विरोधालङ्कारः। तत्परिहारकस्तु श्लेष एवेति बोध्यम् ॥ ८१ ॥

मध्यमिति। वेधा विधिः अस्या इदम् इदमीयं मध्यं तनूकृत्य ह्रासयित्वा कमनीयं सुन्दरम् अंशम् अवयवमिति भावः। अंशम् एतदुद्धृतभागमित्यर्थः न दध्यात् यदि क्वचित् स्थाने न रचेत् यदि तर्हि सम्प्रति यौवने अनन्यप्रतिमा अनन्यसदृशी अङ्गस्य दीप्तिः कान्तिः यस्याः तथाभूतायाः अस्या भैम्याः स्तनौ केन प्रकारेण सृजेत् रचयेत् नूनमुदरोद्धृतसारभागेन अस्याः स्तनौ निर्मितवान् तेनैव उदरस्य क्षीणत्वं स्तनयोश्च पीवरत्वं जातमित्युत्प्रेक्षा। व्यञ्जकाप्रयोगात् गम्येति क्षीणमध्या पीवरस्तनी च भैमी इति भावः ॥ ८२ ॥

अथ चतुर्भिः श्लोकैः रोमालिं वर्णयति गौरीवेति। इयमपि

रोमावलीरज्जुमुरोजकुम्भौ गम्भीरमासाद्य च नाभिकूपम् ।
मद्दृष्टितृष्णा विरमेत् यदि स्यान्नैषां वतैषा सिचयेन गुप्तिः॥८४॥

---

सुभगा सौभाग्यवती भर्त्तृवल्लभेत्यर्थः। गौरीव पार्वतीव कदाचित् कालान्तरे पत्या भर्त्रा सह अर्द्धतनूसमस्यां अर्द्धाङ्गसङ्घटनं स्यात् समस्या सङ्घटनमिति बलः। कर्त्री करिष्यतीत्यर्थः भविष्यदर्थे तृन्। कर्त्तेति पाठे लुटोरूपम् इति मत्वेति शेषः। विधाता अस्या मध्ये मध्यदेशे रोमावली एव मेचकसूत्रं नीलसूत्रं तत् निदधे निहितवानिव। यथा शिल्पकारः काष्ठपाटनार्थं पाटयितव्ये अंशे तन्निर्णयार्थं सूत्रं पातयति तद्वदिति भावः। कालश्याममेचका इत्यमरः। उत्प्रेक्षालङ्कारः॥ ८३ ॥

रोमावलीति। मम दृष्टिरेव तृष्णा दृष्टेस्तृष्णा दर्शनाभिलाषो वा रोमावली एव रज्जुः ताम् उरोजावेव स्तनावेव कुम्भौ गम्भीरं नाभिरेव कूपः तञ्च आसाद्य प्राप्य एषां रोमावल्यादीनां सिचयेन वस्त्रेण। वस्त्रन्तु सिचयः पट इति हलायुधः। एषा गुप्तिः छादनं न स्यात् यदि वत खेदे तदा विरमेत् शाम्येत्। यदि रोमावली स्तनौ नाभिकूपश्च अनावृतः स्यात् तदा पुनःपुनः एतद्दर्शनेन नयनसाफल्यं करोमि इति भावः। अन्योऽपि पिपासुः पान्थः कूपं कुम्भं रज्जुञ्च प्राप्य यदि असिचयेन लक्षणया खड्गधारिपुरुषसङ्घेन तज्जलं न गोप्यते तदा पिपासां शमयति। यद्वा विरमेदिति काकुः विरमेत्? नैव विरमेदित्यर्थः, पुनःपुनः दर्शनेनापि न तृप्तिं लभे इत्यर्थः। श्रेयसि केन तृप्यते इति भावः। अत्र एषासिचयेनेत्यत्र एषा सिचयेन एषा असिचयेनेति सभङ्गश्लेषः तेन च अनुप्राणितो रूपकालङ्कारः॥ ८४ ॥

उन्मूलितालानबिलाभनाभिश्छिन्नस्खलच्छृङ्खलरोमदामा ।
मत्तस्य सेयं मदनद्विपस्य प्रस्वापवप्रोच्चकुचास्तु वास्तु ॥ ८५ ॥
रोमावलिभ्रूकुसुमैः स्वमौर्वीं चापेषुभिर्मध्यललाटमूर्ध्नि ।
व्यस्तैरपि स्थास्नुभिरेतदीयैर्जैत्रः स चित्रं रतिजानिवीरः ॥८६॥

---

उन्मूलितेति। सा इयं भैमी उन्मूलितम् उत्पाटितम् आलानं बन्धनस्तम्भः यस्मात् तादृशं यद्बिलं गर्त्तः तदाभा तत्-सदृशी नाभिर्यस्याः सा गभीरनाभिरिति भावः। छिन्नं त्रुटितम् अतएव स्खलत् अधोगच्छत् शृङ्खलमिव रोमदाम रोमावलिः यस्याः तथोक्ता अधोगतरोमराजिरिति भावः। प्रस्वापाय प्रकृष्टनिद्रार्थमित्यर्थः यौ वप्रौ मृत्कूटौ स्याच्चयो वप्रमस्त्रिया-मित्यमरः। तौ इव उच्चौ उन्नतौ कुचौ यस्याः तथाभूता मत्त-हस्तिनः शयने पार्श्वपरिवर्त्तनार्थं उभयोः पार्श्वयोर्वप्रौ क्रियेते इति प्रसिद्धिः। अतएव मत्तस्य मदोद्धतस्य मदनद्विपस्य काम-गजस्य वास्तु वसतिस्थानम् अस्तु भवतु। अत्र उपमारूपकयोः संसृष्टिः ॥ ८५ ॥

रोमावलीति। रतिः जाया यस्य स रतिजानिः कामः स च असौ वीरश्चेति रतिजानि-वीरः कामभट इत्यर्थः जायाया जानिरादेशः। मध्यं ललाटः मूर्द्धा चेति मध्यललाटमूर्द्धं तस्मिन् प्राण्यङ्गत्वात् द्वन्द्वे नपुंसकता। व्यस्तैः असम्बद्धैरित्यर्थः, स्थास्नुभिः स्थितैः ग्लाजिस्थश्चक्स्नुः। एतदीयैः भैमीसम्बन्धिभिः रोमावली च भ्रुवौ च कुसुमानि च तैरेव स्वस्य मौर्वी च चापश्च इषवः शराश्च तैः मध्यस्थितया रोमावल्या मौर्व्या ललाटस्थितया भ्रुवा चापेन मूर्द्धस्थितैः कुसुमैरेव शरैरित्यर्थः जेतैव जैत्रः प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः। चित्रम् आश्चर्य

अस्याः खलु ग्रन्थिनिबद्धकेश-मल्लीकदम्बप्रतिबिम्बदेशात्।
स्मरप्रशस्तीरजताक्षरेयं पृष्ठस्थलीहाटकपट्टिकायाम्॥८७॥

---

वीरो हि अधिज्ये धनुषि शरानारोप्य संग्रामे शत्रून् जयति अयन्तु पृथक् पृथक् स्थितैरपि जयसाधनैः रोमावल्यादिभिः मौर्वी-धनुः-शरैः जगत् जयन्ति इति आश्चर्य्यमित्यर्थः। अत्र विरूपयोः साधनसङ्गतिराहित्यजगज्जयरूपयोः सङ्घटनात् विषमालङ्कारभेदः। तदुक्तं दर्पणे, विरूपयोः सङ्घटना या च तद्विषमं मतमिति। अस्या रोमावली-भ्रू-मूर्द्धस्थितकुसुम-चयदर्शनात् कामः समुल्लसतीति तात्पर्य्यम्॥ ८६॥

पृष्ठदेशं वर्णयति अस्या इति। अस्याः भैम्याः पृष्ठस्थली पृष्ठदेशः पृष्ठन्तु चरमं तनोरित्यमरः। सा एव हाटकपट्टिका सौवर्णफलकम्। स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकम् इत्य-मरः। तस्यां ग्रन्थिना बन्धनेन निबद्धाः केशाः संयताः केशा इत्यर्थः तेषु यत् मल्लीकदम्बं मल्लिकाकुसुमसङ्घः तस्य प्रति-बिम्बः प्रतिमा तस्य देशात् प्रदेशात् इयं रजताक्षरा रौप्य-रसविरचितवर्णा स्मरस्य कामस्य प्रशस्तिः प्रशंसालिपिरित्यर्थः खलु भातीति शेषः। उत्प्रेक्षालङ्कारः। सुवर्णपट्टकनिभेऽस्याः पृष्ठफलके संयतेषु केशेषु निबद्धा मल्लिकाकुसुमराजयः कामस्य विजयप्रशस्तिसूचिकाः रजतरसविरचिता वर्णावलय इव राजन्ते इति वाक्यार्थः। अस्याः पृष्ठदेशपतितं केशनिबद्ध-कुसुमावलीप्रतिबिम्बं दृष्ट्वा कामः समुज्जृम्भते इति तात्पर्य्यम्। ग्रन्थिनिबद्धकेशमल्लीकदम्बं प्रतिबिम्बवेशादिति पृथक्पदत्व-पाठे ग्रन्थिनिबद्धकेशमल्लीकदम्बं प्रतिबिम्बवेशात् प्रतिमाच्छलात् रजताक्षरा इयं विधेयप्राधान्यात् स्त्रीत्वं स्मरप्रशस्तिः खलु इत्यन्वयः॥ ८७॥

चक्रेण विश्वं युधि मत्स्यकेतुः पितुर्जितं वीक्ष्य सुदर्शनेन।
जगज्जिगीषत्यमुना नितम्बद्वयेन किं दुर्लभदर्शनेन ॥ ८८ ॥
रोमावलीदण्डनितम्बचक्रे गुणश्च लावण्यजलश्च बाला।
तारुण्यमूर्त्तेः कुचकुम्भकर्त्तुर्बिभर्त्ति शङ्के सहकारि चक्रम् ॥८९

---

द्वाभ्यां नितम्बं वर्णयति चक्रेणेति। मत्स्यकेतुः मकरध्वजः कामः सुदर्शनेन तदाख्येन सुलभदर्शनेन च पितुर्विष्णोः चक्रेण युधि युद्धे विश्वं जगत् जितं पराभूतं वीक्ष्य दृष्ट्वा अमुना पुरोदृश्यमानेन दुर्लभदर्शनेन वसनावृततया असुलभदर्शनेनेत्यर्थः नितम्बद्वयेन कटीपश्चाद्भागद्वयेन पश्चान्नितम्बः स्त्रीकट्या इत्यमरः। चक्रेणेति भावः। जगत् जिगीषति जेतुमिच्छति किम्? इत्युत्प्रेक्षा। युक्तञ्चैतत् पितृसाधर्म्यं पुत्रस्य, किन्तु पितुरतीवसामर्थ्यात् एकेन चक्रेण जगज्जयित्वं स्वस्य तु तथा सामर्थ्याभावात् चक्रद्वयेन जगज्जयित्वम् इयांस्तु विशेषः यत् पितुश्चक्रं सुलभदर्शनं तेन अस्य प्रतीकारसहत्वं स्वस्य तु दुर्लभदर्शनमित्यस्य प्रतीकारासहत्वं तथाच भैमीनितम्बदर्शनात् दुर्वारः कामः प्रसरतीति तात्पर्य्यम्। नितम्बद्वयेन इत्यत्र नितम्बमयेन इति पाठान्तरम् ॥ ८८ ॥

रोमावलीति। बाला दमयन्ती तारुण्यमेव मूर्त्तिः स्वरूपं यस्य तस्य यौवनस्येत्यर्थः कुचावेव कुम्भौ कलशौ तयोः कर्त्तुः निर्मातुः कुचरूपकुम्भकारस्य रोमावली एव दण्डः नितम्ब एव चक्रं ते गुणश्च सौन्दर्य्यादि च सूत्रञ्च लावण्यमेव जलं तच्च सहकारिचक्रं सहकारिकारणकलापं बिभर्त्ति धारयति इति शङ्के सम्भावयामि उत्प्रेक्षालङ्कारः। कुलालस्य कुम्भकरणे दण्डचक्रसूत्रसलिलानि सहकारिकारणानि तिष्ठन्ति तद्वत्

अङ्गेन केनापि विजेतुमस्या गवेष्यते किं चलपत्रपत्रम् ?।
न चेद्विशेषादितरच्छदेभ्यस्तस्यास्तु कम्पस्तु कुतो भयेन॥९०॥

अत्रापि यौवनमेव कुम्भकारः कुचकुम्भनिर्माणे रोमावल्यादीनि सहकारीणि आश्रयति। फलितार्थस्तु यथा यथा यौवने कुचकुम्भोद्भेदः तथा तथा रोमावल्या नितम्बभारस्य लावण्यस्य सौन्दर्य्यस्य च समुदयो भवतीति। इयं भैमी यौवनेन रोमावल्यालङ्कृतजघना नितम्बभारवती गुणवती लावण्यवती कुचकुम्भवती चेति तात्पर्य्यम्॥ ८९॥

अस्या योनिमेकेन श्लोकेन वर्णयति अङ्गेनेति। अस्या दमयन्त्याः केनापि गोप्यतमेन अतिमनोहारित्वात् अनिर्वचनीयेन अङ्गेन स्त्रीत्वसूचकेन श्रेष्ठावयवविशेषेण योनिरूपेणेति भावः। चलपत्रस्य अश्वत्थस्य। बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः अश्वत्थ इत्यमरः। पत्रं विजेतुं विशेषेण अभिभवितुं गवेष्यते अन्विष्यते किम्? उत्प्रेक्षा। मार्गत्यन्विष्यति गवेषयति चेति मल्लभट्टः। कुत इत्याह नेति। न चेत् यद्येवं न स्यादित्यर्थः तदा कुतः कस्मात् भयेन तस्य अश्वत्थपत्रस्य इतरच्छदेभ्यः अन्यवृक्षपत्रेभ्यः पञ्चमीविभक्तिः। विशेषात् अतिशयात् कम्पः अस्तु तुरेवार्थः भवतु एवार्थः। अन्यत् कम्पकारणं न दृश्यते भैम्या वराङ्गं दृष्ट्वैव तत्पराभवभिया सततमेतत् पत्रं कम्पते इति फलितार्थः। अश्वत्थपत्रस्य सततं कम्पनं प्रसिद्धम् अतएव बोधिद्रुमश्चलदल इत्यमराभिधानं सङ्गच्छते। बलिना अन्विष्यमाणो दुर्बलः पराभवभिया कम्पते इति ध्वन्यते। योनिर्भवति वै यस्या बोधिद्रुमदलाकृतिः। साम्यलक्षणहीनापि सौख्यसौभाग्यमृच्छतीति। अश्वत्थदलसङ्काशं गुह्यं गूढमणिप्रभम्। यस्याः सा सुभगा नारी पुण्यैरेव

भ्रूश्चित्रलेखा च तिलोत्तमास्या नासा च रम्भा च यदूरुसृष्टिः
दृष्टा ततः पूरयतीयमेकाऽनेकाप्सरः-प्रेक्षणकौतुकानि ॥८१॥
रम्भापि किं चिह्नयति प्रकाण्डं न चात्मनः स्वेन न चैतदूरू।

---

मवाप्यते। इति च सामुद्रिकाः। भैम्या मदनमन्दिरम् अश्वत्थ-दलाकृति मधुरमिति तात्पर्य्यम् ॥ ८० ॥

अस्या भ्रूादिवर्णनेन अप्सरसां समष्टिरूपत्वं व्यञ्जयति, भ्रूरिति। यत् यस्मात् अस्या भैम्याः भ्रूः चित्रा लेखा रचना यस्याः सा विचित्ररेखयालङ्कृतेत्यर्थः अथच चित्रलेखानाम अप्सराः। नासा नासिका तिलात् तिलकुसुमात् उत्तमा उत्कृष्टा अथच तिलोत्तमा नाम अप्सरा, ऊरुसृष्टिः ऊरुनिर्माणं कृदभिहितो भावो द्रव्यवत् प्रकाशते इति न्यायात्। सृष्ट ऊरुदेशः रम्भा कदली च कदलीकाण्डरूपेत्यर्थः अथच रम्भा-नाम अप्सराः। ततस्तस्मात् इयम् एका भैमी दृष्टा सती अनेकासाम् अप्सरसां प्रेक्षणकौतुकानि दर्शनकुतूहलानि दर्श-नोत्सवानि इत्यर्थः पूरयति सफलयति बह्वनामप्सरसां दर्शने यादृश उल्लासः समुल्लसति एकस्या एव अस्या दर्शने तथैवेति भावः। अत्र अन्यदर्शनकौतुकमन्यः कथं जनयतीति तासाम् अप्सरसां दमयन्त्याश्च सादृश्याक्षेपात् निदर्शनालङ्कारः। तदुक्तं दर्पणे, सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शनेति। एकस्य चाने-कात्मतयोक्तेः विरोधस्येत्यनयोः संसृष्टिः सा श्लेषमूलेति सङ्करः। तेन च अप्सरोभ्योऽप्यधिकसुन्दरी इयमिति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८१ ॥

ऊरू वर्णयति रम्भेति। रम्भापि कदल्यपि स्वेन आत्मना

स्वस्यैव येनोपरि सा दधाना पत्राणि आगत्यनयोर्भ्रमेण॥८२॥
विधाय मूर्द्धानमधस्वरञ्चेत् मुञ्चेत्तपोभिः स्वमसारभावम्।
जाड्यञ्च नाञ्चेत् कदली बलीयः तदा यदि स्यादिदमूरुचारुः ८३

---

स्वयमित्यर्थः प्रकृत्यादिभ्य उपसङ्ख्यानात् तृतीया। आत्मनः प्रकाण्डं स्कन्धं स्तम्भमित्यर्थः न चिह्नयति किम्? न चिह्नितं करोति किम्? एतस्या भैम्या ऊरू च न च चिह्नयति किम्? द्वयोरभेदबोधपरिहारार्थं किमपि विशेषचिह्नं न चकार किम्? अपितु भेदज्ञानाय विशेषचिह्नं चकार इवेत्यर्थः। कथमित्याह स्वस्येति। येन हेतुना सा रम्भा अनयोः स्वकाण्ड-तदूर्वोः भ्रमेण भ्रान्तिपरिहारार्थमिति भावः। स्वस्यैव स्व-काण्डस्यैव उपरि पत्राणि दलानि दधाना धारयन्ती सती आगत्ति सावधाना तिष्ठति। दलरहितकदलीस्तम्भो दम-यन्त्या ऊरुश्च अभिन्न इति दृष्ट्वा असाधारणेन चिह्नेन दलेन स्वं प्रकाण्डमावृणोतीति फलितार्थः। रम्भास्तम्भनिभौ भैम्या ऊरू इति तात्पर्य्यम्। उत्प्रेक्षालङ्कारः॥ ८२॥

विधायेति। कदली मूर्द्धानं शिरोभागम् अधस्वरम् अधो-वर्त्तिनं विधाय कृत्वा तपोभिः चान्द्रायणादिभिः स्वं स्वकीयम् असारभावं निःसारत्वं मुञ्चेत् चेत् त्यजेत् यदि तपस्यारूप-कठिनव्रतैः किञ्चित् काठिन्यं लभेत यदीत्यर्थः तथा बलीयः अतिप्रबलम् अत्यन्तमित्यर्थः जाड्यं शैत्यञ्च नाञ्चेत् यदि न गच्छीयात् यदि, तदा इदमूरुचारुः अस्याः ऊरुवत् मनो-हारिणी स्यात् यदि सम्भावनायां स्यादेवेति सम्भावयामीत्यर्थः। अस्या ऊरुयुगलं सारवत् ग्रीष्मे एव शीतं हेमन्तादौ तु उष्णं शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च सुखशीतला। नवयौवनसम्पन्ना

ऊरुप्रकाण्डद्वितयेन तन्व्याः करः पराजीयत वारणीयः।
युक्तं ह्रिया कुण्डलनच्छलेन गोपायति स्वं मुखपुष्करं सः॥८४॥

---

सा स्त्री श्यामेति कीर्त्तितेत्युक्तलक्षणवत्त्वादिति भावः। कदली तु निःसारा सर्वकाले च एकान्तशीतेति कथमस्या ऊर्वोः साम्यमर्हति तत् तदि तपश्चरणेनोक्तदोषद्वयपरिहारः स्यात् तदैतत्साम्यं लभते इति फलितार्थः। अत्र कदल्या अधःशिरस्त्वादिधर्मासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः॥ ८३॥

ऊर्विति। तन्व्याः कृशाङ्ग्याः अस्याः भैम्याः तस्या इति पाठान्तरमयुक्तं सम्मुखवर्त्तिन्याः तच्छब्देन परामर्शस्यायुक्तत्वादिति बोध्यम्। ऊरुप्रकाण्डयोः ऊरुश्रेष्ठयोः ऊरुस्तम्भयोर्वा द्वितयेन युगलेन वारणस्य हस्तिनः अयं वारणीयः हस्तिसम्बन्धीत्यर्थः करः शुण्डादण्डः पराजीयत पराभूतः परापूर्व्वाज्जेः कर्मणि लङ्। स पराजितः वारणकरः ह्रिया लज्जया स्वं निजं मुखपुष्करं मुखाग्रं मुखपद्मञ्च मुखं निःसरणे वक्त्रप्रारम्भोपाययोः अपीति पुष्करपङ्कजे व्योम्नि पयः करिकराग्रयोरिति च विश्वः। कुण्डलनच्छलेन मण्डलीकरणमिषेण गोपायति संवृणोति युक्तमुचितमेतदित्यर्थः। पराजितस्य अन्यसन्निधौ मुखसङ्गोपनं लज्जया कर्त्तव्यमेवेति भावः हस्तिनाञ्च शुण्डादण्डस्य कुण्डलीकरणं स्वभावः। अत्र प्रकृतकुण्डलप्रतिषेधेन मुखसङ्गोपनस्थापनादपह्नुतिरलङ्कारः। उक्तञ्च दर्पणे, प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति। हस्तिशुण्डस्य कर्कशत्वात् तथा कोमलयोरस्या ऊर्वोरुपमानयोग्यताया अलाभादेतस्या ऊरू करिकरादपि मनोहराविति तात्पर्य्यम्॥ ८४॥

अस्यां मुनीनामपि मोहमूहे भृगुर्महान् यत्कुचशैलशीली।
नानारदाह्लादि मुखं श्रितोरू व्यासो महाभारतसर्गयोग्यः॥८५॥

---

अस्यामिति। अस्यां भैम्यां मुनीनामपि जितेन्द्रियाणामपि इति भावः विषयिणां किं वक्तव्यमित्यपि शब्दार्थः। मोहं मुखादौ चन्द्रपङ्कजादिभ्रमं मदनजनितविकारावेशञ्च ऊहे तर्कयामि मुनीनामपि मनोमोहिनीयमिति सम्भावयामि इति यावत्। कुत इत्याह भृगुरिति। यत् यस्मात् महान् महर्षिरित्यर्थः भृगुः मुनिविशेषः महान् प्रपातश्च प्रपातस्त्वतटो भृगुः इत्यमरः। कुचौ स्तनौ एव शैलौ पर्वतौ शीलयति परिचिनोतीति तथोक्तः स्तनपर्वताश्रयीत्यर्थः, मुनीनां पर्वतनिवासित्वात् अस्याः स्तनौ पर्वतधिया समाश्रयतीति भावः। अथच कामार्त्तः कुचावस्याः मर्दयितुमिच्छतीति च गम्यते अस्याः कुचयोः भृगुदेशो महानिति तात्पर्य्यम्। मुखं नारदं देवर्षिविशेषम्, आह्लादयतीति नारदाह्लादि तन्न भवतीति अनारदाह्लादि तच्च न भवतीति नानारदाह्लादि नारदमुनिमाह्लादयतीत्यर्थः नारदमनोहारीति भावः। अथच नानारदैः नानाप्रकारैः क्षुद्रैः बृहद्भिः स्थूलैः सूक्ष्मैश्चेति भावः बहुसङ्ख्यकैर्वा रदैः दन्तैः आह्लादयति यूनां मनोहरतीति तथोक्तम्। तथा महाभारतस्य तदाख्यस्य इतिहासस्य सर्गे सृष्टौ प्रणयने इत्यर्थः, योग्यः शक्तः महाभारतप्रणेतेत्यर्थः व्यासः द्वैपायनः श्रितौ ऊरू सक्थिनी येन सक्थि क्लीवे पुमानूरुरित्यमरः। तथोक्तः व्यासोऽपि महामुनिः कदलीकाननवासित्वात् ऊरू एतौ कदल्या वेति भ्रान्त्या कामविकारेण वा समाश्रयतीति भावः। अथच महाभाः अत्युज्ज्वलः कान्तिपूर्ण इत्यर्थः रतस्य सुरतस्य सर्गे व्यापारे योग्यः उपयुक्तः व्यासः विस्तारः श्रितौ

क्रमोन्नता पीवरतांघ्रिजङ्घे वृक्षाधिरूढिं विदुषी किमस्याः ।
अपि भ्रमीभङ्गिभिरावृताङ्गं वासो लतावेष्टितकप्रवीणम् ॥८६

---

जरू येन तथाभूतः विस्तृतः सुरतसम्पादनार्होऽस्या ऊर्वोः विस्तारोऽतिरमणीय इति भावः। अत्र श्लेषमूलया मुनिमोहोत्प्रेक्षया मुनयोऽपि यस्यां मुह्यन्ति किमन्ये इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८५ ॥

अथ अस्या जङ्घे वर्णयति क्रमेति। अस्याः भैम्याः अधिजङ्घं जङ्घयोः विभक्त्यर्थेऽव्ययीभावः। क्रमेण आनुपूर्व्यात् उन्नता उत्थिता पीवरता पीनता वृक्षस्य अधिरूढिं वृद्धिम् आलिङ्गनविशेषञ्च विदुषी किम्? जानती किम्? न लोकेत्यादिना षष्ठीप्रतिषेधः। तथा वासः वसनम् अपि भ्रमीभङ्गिभिः वेष्टनविशेषैः आवृतम् आच्छादितम् अङ्गं येन तथाभूतम् अतएव लतावेष्टितके लतया वृक्षवेष्टनविशेषे लता यथा वृक्षं वेष्टयति तथा वेष्टने इत्यर्थः, तदाख्ये आलिङ्गनविशेषे च प्रवीणं कुशलं किम् इति पूर्वेणानुषङ्गः। अन्यथा कथमित्थमालिङ्गेदिति भावः। अनयोरालिङ्गनयोर्लक्षणे उक्ते रतिसर्वस्वे। रमणचरणमेकेनाङ्घ्रिणाक्रम्य भिन्नं स्वसितमपरपादेनाश्रयन्ती तदूरुम्। निजमथ भुजमेकं पृष्ठतोऽस्यार्पयन्ती पुनरपरभुजेन प्राश्रयन्ती तदङ्गम्। तरुमिव कमितारं चुम्बनार्थाधिरूढा यदभिलषितरागात् तच्च वृक्षाधिरूढम्। अयमनुक्षतवल्लीविभ्रमात् वेष्टयन्ती द्रुममिव सरलाङ्गी मन्दसीत्का तदीयम्। वदनमुचितखेदाकम्पमाचुम्बनार्थं नमयति विनदन्ती तल्लतावेष्टितं स्यादिति। भरतोऽप्याह। एकेन कान्तचरणं चरणेन कान्ताधिष्ठाय जानुमपरेण च चुम्बनार्थम्। आरोढुमिच्छति पतिं तरुवल्लताङ्गी

अरुन्धतीकामपुरन्ध्रिलक्ष्मी-जम्भद्विषद्दारनवाम्बिकानाम् ।
चतुर्दशीयं तदिहोचितैव गुल्फद्वयामा यदहश्यसिद्धिः ॥९७॥

---

वृक्षाधिरूढ़िमिति तत् कवयो वदन्तीति। वल्लीव वृक्षं दयितं मृगाक्षी संवेष्टयन्ती नमयेत् तदास्यम्। यच्चुम्बनार्थं भृश-मूह्यकाया बुधा लतावेष्टितकं तदाहुरिति। अन्येनाप्युक्तम्। वृक्षारोहणवत् यत्र क्रमात् आक्रम्यतेऽङ्ककम्। वृक्षाधि-रूढ़कं नाम बुधा आलिङ्गनं विदुरिति। सव्यापसव्ययोगेन लतावत् परिवेष्टनैः। यत्र प्रत्यङ्गमाश्लिष्टं लतावेष्टितकन्तु तदिति। अपरेण चोक्तम्। बाहुभ्यां कण्ठमालिङ्ग्य कामिनी कान्त उच्छ्रिते। अङ्कमारोपयति यत् वृक्षारूढ़ं तदुच्यते इति। उपविष्टं प्रियं कान्ता सुप्ता वेष्टयते यदि। तल्लतावेष्टितं ज्ञेयं कामानुभववेदिभिः। इति ॥ ९६ ॥

अथ अस्या गुल्फौ वर्णयति, अरुन्धतीति। यत् यस्मात् इह अस्यां भैम्याम् उचितैव उपयुक्तैव अनुरूपैवेत्यर्थः अदृश्य-सिद्धिः अदर्शनत्वसिद्धिः गुल्फद्वयेन चरणग्रन्थियुगलेन तद्-ग्रन्थिघुटिके गुल्फावित्यमरः। आप्ता प्राप्ता यतो गूढ़गुल्फेय-मिति भावः। गूढ़गुल्फत्वं स्त्रीणां सुलक्षणमिति सामुद्रिकाः। तत्तस्मात् इयं भैमी अरुन्धती वशिष्ठपत्नी कामपुरन्ध्रिः रतिः लक्ष्मीः जम्भद्विषतः इन्द्रस्य जम्भारातिः शचीपतिरित्यमरः। दाराः पत्नी शचीत्यर्थः। नव नवसङ्ख्यकाः अम्बिकाः ब्राह्मी-त्याद्या मातर इत्यर्थः तथाच आगमः। ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा। वाराही नारसिंही च माहेन्द्री चण्डिका तथा। महालक्ष्मीरिति प्रोक्ताः क्रमेणैता नवाम्बिका इति। तासां त्रयोदशानामिति भावः चतुर्दशी चतुर्दशसंख्या-पूरणी अत्रा अरुन्धत्यादयोऽदृश्यगुल्फतया सुलक्षणवत्यः तथा

अस्याः पदौ चारुतया महान्तावपेक्ष्य सौक्ष्म्याल्लवभावभाजम् ।
जाता प्रवालस्य महीरुहाणां जानीमहे पल्लवशब्दलब्धिः॥९८॥
जगद्वधूमूर्द्धसु रूपदर्पात् यदेतयाऽधायि पदारविन्दम् ।
तत्सान्द्रसिन्दूरपरागरागैः ध्रुवं प्रवालप्रबलारुणं तत् ॥९९॥

---

इयमपि गूढ़गुल्फतया सुलक्षणेति नाम्नां सम्मेयमिति भावः । यद्वा इयं भैमी अरुन्धत्यादीनां चतुर्दशी तदन्तःपातिनीत्यर्थः तत्तस्मादिह अस्यां दमयन्त्यां गुल्फद्वयेन आप्ता प्राप्ता या च सा अदृश्यसिद्धिश्चेति यददृश्यसिद्धिः येयं गुल्फयोः अदर्शन-सिद्धिरित्यर्थः । सा उचितैव सति शेषे यत् तयोर्नित्यसम्ब-न्धात् । चतुर्दशी च तिथिः साधकानां गुटिकादिभिः अदृश्यत्व-सिद्धिसाधनीति च गम्यते । अत्र चतुर्दशीति प्रतीयमानोत्-प्रेक्षा व्यञ्जकाप्रयोगात् ॥ ९७ ॥

अथ अस्याश्चरणौ षड्भिर्वर्णयति अस्या इति । चारुतया सौन्दर्य्येण महान्तौ अधिकौ अस्या दमयन्त्याः पदौ चरणौ पदङ्घ्रिश्चरणोऽस्त्रियामित्यमरः । अवेक्ष्य दृष्ट्वा सौक्ष्म्यात् तदपेक्षया स्वस्य अल्पत्वात् इत्यर्थः, लवभावभाजः अल्पत्वं भजतः महीरुहाणां वृक्षाणां वृक्षो महीरुहः शाखीत्यमरः । प्रवालस्य किसलयस्य पल्लवशब्दलब्धिः पदोः लवोऽस्य इति व्युत्पत्तिलभ्यः पल्लव इति संज्ञालाभः जाता इति जानीमहे मन्यामहे उत्प्रेक्षालङ्कारः । अनेन च नवकिसलयापेक्षयापि अतिसुन्दरौ भैम्याश्चरणौ इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तु-ध्वनिः ॥ ९८ ॥

जगदिति । यत् यस्मात् एतया दमयन्त्या रूपदर्पात् सौन्दर्य्यगर्वात् जगत्सु या वध्वः सुन्दर्य्यः तासां मूर्द्धसु शिरःसु

रुषारुणा सर्वगुणैर्जयन्त्याः भैम्याः पदं श्रीः स्म विधेर्वृणीते।
ध्रुवं स तामच्छलयद्यतः सा भृशारुणैतत्पदभाग्विभाति॥१००॥

पदारविन्दं पादपद्मम् अधायि निहितं ध्रुवमित्युत्प्रेक्षावाचकेनोभयान्वयः। धाञः कर्मणि लुङ्। आतो युक् चिण्कृतोरिति युगागमः। अदायीति पाठे अदायि दत्तम् अर्पितमित्यर्थः। तत् तस्मात् तेषु जगद्वधूमूर्द्धसु ये सान्द्रा घनाः सिन्दूरपरागाः सिन्दूररेणवः तैः प्रवालात् विद्रुमात् नवपल्लवाद्वा प्रबलम् अत्यधिकम् अरुणं रक्तं स्वभावरक्तमपि तत्सिन्दूरपरागयोगात् अधिकरक्तं जातमिति शेषः ध्रुवमुत्प्रेक्षे। मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः। उत्प्रेक्षावाचकाः शब्दा इवशब्दोऽपि तादृश इति दर्पणः। अत्र उत्प्रेक्षाद्वयेन त्रिलोकसुन्दरीभ्य इयमतिसुन्दरी। अस्याश्च चरणौ शोभिताविति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ ९९॥

रुषेति। श्रीः लक्ष्मीः रुषा कोपेन पराजयजनितेनेति भावः, अरुणा रक्ता सती सर्वैः गुणैः शीलसौन्दर्य्यादिभिः जयन्त्या पराभवन्त्या आत्मानमिति शेषः। अस्याः भैम्याः पदं स्थानं स्वारूप्यमिति भावः, विधेः विधातुः सकाशात् वृणीते स्म प्रभो देहि मह्यं दमयन्तीपदमिति याचितवतीत्यर्थः। पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः। स विधिः तां श्रियम् अच्छलयत् प्रतारितवान् ध्रुवमित्युत्प्रेक्षे। यतः भृशारुणा अतिरक्ता सा श्रीः एतस्याः भैम्याः पदं भजते इति एतत्पदभाक् सती शोभारूपेणेति भावः। विभाति राजते अत्र विधिः श्रीप्रार्थितोऽपि तस्यै भैमीसारूप्यरूपं पदं दातुमशक्तो भैमीचरणरूपं पदं छलेन दत्तवान् सा च शोधारुणशोभा-

यानेन तन्व्या जितदन्तिनाथौ पदाब्जराजौ परिशुद्धपार्ष्णी ।
जाने न शुश्रूषयितुं स्वमिच्छू नतेन मूर्ध्ना कतरस्य राज्ञः॥१०१॥
कर्णाक्षिदन्तच्छदबाहुपाणिपदादिनः स्वाखिलतुल्यजेतुः ।
उद्वेगभागद्वयताभिमानादिहैव वेधा व्यधित द्वितीयम् ॥१०२॥

---

रूपेण तत्पदं सेवते इत्युत्प्रेक्षया अतिरक्ततलौ भैम्याश्चरणौ इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १०० ॥

यानेनेति । यानेन गमनेन विजययात्रया च जितः पराभूतः दन्तिनाथो गजेन्द्रः तदाख्यो नृपतिश्च याभ्यां तौ परिशुद्धः विपादिकादिदोषरहितः वशीकृततया अविरुद्धश्चेत्यर्थः पार्ष्णिः पश्चाद्भागः पार्ष्णिग्राहः पृष्ठवर्त्ती राजविशेषश्चेत्यर्थः ययोः तौ तन्व्याः कृशाङ्ग्याः अस्याः भैम्याः पदाब्जे एव राजानौ चरणकमले एव नृपतौ कतरस्य बहूनां मध्ये कस्य राज्ञः पत्युरिति भावः । नतेन परिपन्थिनश्च कोपशान्त्यर्थम् अवनतेन मूर्ध्ना शिरसा स्वमात्मानं शुश्रूषयितुं सेवयितुम् इच्छू अभिलाषुकौ न जाने न वेद्मि केन महात्मना एतस्याश्चरणौ प्रणयकोपे नतेन मूर्ध्ना सेविष्येते इत्थं न जानामीति अतिमनोहरौ अस्याश्चरणौ इति वस्तु पादाब्जराजाविति रूपकेण श्लेषानुप्राणितेन व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १०१ ॥

अथ कर्णादीनामवयवानामौपम्याभावं भङ्ग्याह, कर्णेति । स्वस्य अखिलानि समस्तानि तुल्यानि सदृशानि शष्कुलीकमलादीनि तेषां जेतुः जयशीलस्य भाषितपुंस्कत्वात् पुंवद्भावः समग्रोपमानवस्तुपरिभाविन इत्यर्थः । कर्णश्च अक्षि च दन्तच्छदश्च बाहुश्च पाणिश्च पदश्च तत् कर्णाक्षिदन्तच्छदबाहुपाणिपदं प्राण्यङ्गत्वादेकवद्भावः । तत् आदि यस्य तस्य आदि-

तुषारनिःशेषितमब्जसर्गं विधातुकामस्य पुनर्विधातुः ।
पद्मस्त्विहास्याङ्घ्रिकरेष्वभिख्याभिक्षाऽधुना माधुकरीसदृक्षा १०३

---

शब्दात् स्तनाद्यङ्गपरिग्रहः। अङ्गजातस्य अद्वयताभिमानात् अहमेव सर्वोत्तमं वस्तु द्वितीयं नास्तीति अद्वितीयत्वगर्वात् उद्वेगं भजते इति उद्वेगभाक् उद्विग्नः क्रोधपरीत इत्यर्थः। वेधा ब्रह्मा इहैव अस्यामेव भैम्यां द्वितीयं कर्णादिकं व्यधित निर्मितवान् इहैव इत्यनेन तद्दर्शनेन तेषां गर्वच्युतिरचिरादेव भवति अन्यत्र विधाने कदाचित् अदर्शनात् तथा न स्यादिति सूच्यते। विधाता प्रथमं भैम्या एकैकं कर्णाद्यङ्गं निर्माय अथ तेषामनन्यसदृशत्वगर्वं दृष्ट्वा क्रोधात् तत्खण्डनार्थं द्वितीयं कर्णादिकं निर्मितवानित्यर्थः। अतएव तत्तदवयवानामप्रतिरूपतया यथा द्वितीयः कर्णः प्रथमकर्ण इव दक्षिणं चक्षुः वामं चक्षुरिवेति परस्परसाम्यम्। तदत्र अस्याः कर्णौ अस्याः कर्णौ इवेत्यनन्वयालङ्कारस्य व्यज्यते। उपमानोपमेयत्वमेकस्यैव त्वनन्वय इति लक्षणात्॥ १०२॥

तुषारेति। तुषारेण शिशिरेण निःशेषितं नाशितम् अब्जसर्गं अब्जसृष्टिं पुनः विधातुं कामो यस्य तस्य विधातुः अधुना साम्प्रतं वसन्तोदये इत्यर्थः, इह अस्यां भैम्यां पद्मसु आस्यञ्च अङ्घ्री च करौ च तेषु मुखपदपाणिषु अधिकरणैतावत्त्वे चेत्येकवद्भावप्रतिषेधः इह अधिकरणं समाहारत्वात् तस्यैतावत्त्वं पञ्चत्वम्। अभिख्याभिक्षा शोभायाञ्चा अभिख्या नाम शोभयोरित्यमरः। मधुकरस्य इयं माधुकरी नाम गृहपञ्चके भिक्षा तया सदृक्षा सदृशी दृशेः क्सश्च वक्तव्य इति क्सप्रत्ययः। वर्त्तते इति शेषः। मधुकरो यथा पुष्पात् पुष्पात् किञ्चित् किञ्चित् मधु आहरति तेनैव मधुना तस्य तृप्तिर्भवति तथा

**एष्यन्ति यावद्गणनादिगन्तात् नृपाः स्मरार्त्ताः शरणे प्रवेष्टुम् ।**
**इमे पदाब्जे विधिनापि सृष्टास्तावत्य एवाङ्गुलयोऽत्र रेखाः॥१०४**

---

ब्रह्मचार्य्यादिः स्वपोषणार्थं पञ्चभ्य एव गृहेभ्यः किञ्चित् किञ्चित् भिक्षित्वा वृत्तिं करोति एष एव वृत्तिर्माधुकरीत्युच्यते विधातापि पद्मानां समूलशोषणात् पुनस्तत् सिसृक्षुः दमयन्त्या मुखात् पद्भ्यां कराभ्यां च एतेभ्यः पञ्चभ्यः किञ्चित् किञ्चित् लावण्यं भिक्षित्वा पुनः पद्मानि स्रष्टुं प्रवर्त्तते इत्युत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या तथाच दमयन्त्या मुखादिपञ्चकलावण्यं पद्मेषु किञ्चिदस्तीति पद्मापेक्षया अस्या मुखाद्यङ्गपञ्चकं श्रेष्ठमिति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥१०३॥

अथ अस्याः । पदाङ्गुलीः कीर्त्तयति एष्यन्तीति । स्मरेण कामेन दमयन्तीगतेनेति भावः । आर्त्ताः पीड़िताः दमयन्त्यभिलाषुका इत्यर्थः, नृपाः राजानः इमे पदाब्जे चरणकमले अस्या इति शेषः । शरणे रक्षके कामपीड़ात इति भावः । शरणं गृहरक्षित्रोः इत्यमरः । प्रवेष्टुं गन्तुम् आश्रयितुमित्यर्थः यावन्ति गणनानि यस्य तस्मात् यावत्संख्यकादित्यर्थः दिगन्तात् यावत्संख्यकेभ्यो दिगन्तेभ्य इत्यर्थः जातावेकवचनम् । एष्यन्ति आगमिष्यन्ति, अत्र अनयोः भैमीपादाब्जयोः तावत्य एव तत्संख्यका एव अङ्गुलय एव रेखाः अङ्गुलिलक्षणाः सङ्ख्याङ्का इत्यर्थः विधिना विधात्रा सृष्टाः अपि रचिताः किम् इत्युत्प्रेक्षा अत्र अपि उत्प्रेक्षाद्योतकः । विधिना निसृष्टेति पाठेऽपि स एवार्थः । केवलमुत्प्रेक्षायाः प्रतीयमानत्वमिति विशेषः । तेन च अलङ्कारेण भैम्याश्चरणयोः दशाङ्गुलयः सन्ति ताश्च राज्ञां मनोहारित्वात् उपास्या इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १०४ ॥

प्रियानखीभूतवतो मुदेदं व्यधाद्विधिः साधुदशत्वमिन्दोः।
एतत्पदच्छद्मसरागपद्मसौभाग्यभाग्यं कथमन्यथा स्यात् ॥१०५
यशः पदाङ्गुष्ठनखौ मुखञ्च बिभर्त्ति पूर्णेन्दुचतुष्टयं या।
कला चतुःषष्टिरुपैतु वासं तस्यां कथं सुभ्रु वि नाम नास्याम्१०६

---

अथ अस्याश्चरणाङ्गुलिनखान् वर्णयति, प्रियेति। विधिः विधाता प्रियाया दमयन्त्याः नखीभूतवतः नखभावत्वमापन्नस्य इत्यर्थः चन्द्रसादृश्यादिति भावः। अभूततद्भावे च्विः। भवतेः क्तवतुप्रत्ययः। इन्दोश्चन्द्रस्य इदं साधुदशत्वम् उत्कृष्टावस्थत्वम् अथच साधु सुष्ठु यथा तथा दशत्वं दशसंख्यावत्त्वं मुदा परितोषेण व्यधात् विहितवान् कथमित्याह एतदिति अन्यथा विधात्रा साधूदशत्वाविधाने सतीत्यर्थः कथम् एतस्याः प्रियायाः पदस्य छद्म छलं यस्य तादृशं यत् सरागम् अरुणं पद्मं तस्य सौभाग्ये सौन्दर्य्ये भाग्यं भाजनत्वं स्यात् अस्याश्चरणनिर्माणकाले विधुः स्वयमागत्य एतच्चरणनखत्वमङ्गीकृतवान् तदवलोक्य विधिः परितोषात् तं तथा परिणाम्य एतच्चरणरूपरक्तपद्मेन सङ्गमतिदुर्लभं विधाय अपूर्वदशासुखिनं कृतवानिति भावः। अस्याः चरणाङ्गुलिनखाः रक्तपद्मशोभयालङ्कृता अभिनवोदिता दश चन्द्रा इव विराजन्ते इति तात्पर्य्यम्। अत्र प्रकृतपदप्रतिषेधेन सरागपद्मस्थापनात् अपह्नुतिरलङ्कारः। साधुदशत्वं व्यधादिति श्लेषमूला च उत्प्रेक्षेत्यनयोः संसृष्टिः। तथाच पूर्वोक्तं तात्पर्य्यरूपं वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १०५ ॥

यश इति। या सुभ्रूः दमयन्ती यशः शीलसौन्दर्य्यादीनां कीर्त्तिः पदाङ्गुष्ठयोः नखौ मुखञ्च इति पूर्णेन्दुचतुष्टयं चतुरः

सृष्टातिविश्वा विधिनैव तावत्तस्यापि नीतोपरि यौवनेन ।
वैदग्ध्यमध्याप्य मनोभुवेयं मवापिता वाक्पथपारमेव ॥१०७॥

पूर्णचन्द्रानित्यर्थः बिभर्त्ति धारयति तस्यामस्यां सुभ्रुवि दमयन्त्यां कलानां षोड़शभागानां विद्यानाञ्च शिल्पादीनां चतुरधिका षष्टिः चतुःषष्टिः वासम् अवस्थितिं कथं नाम न उपैतु? न प्राप्नोतु? अपितु उपैतु एवेत्यर्थः। एकस्य पूर्णचन्द्रस्य षोड़षकलत्वात् तच्चतुष्टयस्य सुतरां तच्चातुर्गुण्येन चतुःषष्टिकलत्वं सिद्धम्। कला स्यान्मूल रै वृद्धौ शिल्पादावंशमात्रके। षोड़शांशे च चन्द्रस्य कलना कलमानयोरिति मेदिनी। अत्र कलेति श्लेषेणानुप्राणितं पूर्णेन्दुचतुष्टयमिति रूपकं तेनेयं चतुःषष्टिकामकलापूर्णा सुन्दरीति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ १०६ ॥

इत्थं प्रत्यङ्गं वर्णयित्वा परिशेषेऽस्या अलौकिकत्वं व्यञ्जयति, सृष्टेति। इयं भैमी विधिनैव विधात्रैव तावत् सर्वसौष्ठवेन विश्वमतिक्रान्ता अतिविश्वा विश्वातिशायिनीत्यर्थः। लोकातीतसौन्दर्य्यशालिनीति यावत् अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः। सृष्टा निर्मिता, ततो यौवनेन तस्यापि विधिकृतातिशयितसृष्टेरपि उपरि नीता ऊर्द्धं प्रापिता विधिसृष्टसौन्दर्य्यादपि समधिकसौन्दर्य्यवती कृतेति भावः। अनन्तरं मनोभुवा कामेन वैदग्ध्यं विलासचातुर्य्यम् अध्याप्य शिक्षयित्वा वाक्पथस्य वचनमार्गस्य पारम् अनिर्वचनीयत्वमित्यर्थः, वाक्पथस्य विद्यापथस्य चतुःषष्टिकामकलारूपस्येति भावः पारञ्च अवापिता प्रापिता। अत्र एकस्य वस्तुनः क्रमेणानेकधर्मसम्बन्धकथनात् पर्य्यायालङ्कारः। तथाच दर्पणः, क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात्। भवति क्रियते वा चेत्तदा

इति स चिकुरादारभ्यैतां नखावधि वर्णयन्
हरिणरमणीनेत्रां चित्राम्बुधौ तरदन्तरः ।
हृदयभरणोद्वेलानन्दः सखीवृतभीमजा-
नयनविषयीभावे भावं दधार धराधिपः ॥ १०८ ॥

श्रीहर्षं कविराजिराजमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
गौड़ोर्वीशकुलप्रशस्तिभणितिभ्रातर्ययं तन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽगमत् सप्तमः ॥ १०९ ॥

पर्य्याय इष्यते ॥ इति । सर्वथा वर्णयितुमशक्येयं जगद्विलक्षण-सौन्दर्य्यशालिनीति तात्पर्य्यम् ॥ १०७ ॥

इतीति । स धराधिपो भूपतिर्नलः इतीत्थम् एतां हरिण-रमणीनेत्रां मृगाक्षीं चिकुरात् केशपाशात् आरभ्य नखावधि पदाङ्गुष्ठनखपर्य्यन्तं वर्णयन् चित्राम्बुधौ विस्मयसागरे तरत् सन्तरत् अन्तरम् अन्तःकरणं यस्य तथाभूतः विस्मितान्तरात्मेत्यर्थः, तथा हृदयस्य भरणात् आनन्देन परिपूरणादित्यर्थः, उद्वेलः वेलामुत्क्रान्तः असीम इत्यर्थः आनन्दो यस्य सः सन् सखीभिः वृतायाः परिवेष्टितायाः भीमजायाः दमयन्त्या नयन-विषयीभावे दृष्टिगोचरत्वे भावम् अभिप्रायं दधार अदृश्यत्वं त्यक्त्वा दृश्यो भवितुमियेष इत्यर्थः । अत्र हरिणरमणीनेत्रा-मित्युपमा चित्राम्बुधाविति रूपकमनयोः संसृष्टिः । हरिणी-वृत्तं, रसयुता हयैर्न सौ म्रौ स्लौ गो यदा हरिणी तदेति तल्लक्षणात् ॥ १०८ ॥

श्रीहर्षमिति । गौड़ोर्वीशकुलस्य गौड़भूमीन्द्रवंशस्य प्रशस्तिः प्रशंसा तस्या भणितिः रचना नाम सन्दर्भः तस्याः भ्रातरि

## अष्टमः सर्गः ।

अथाद्भुतेनास्तनिमेषमुद्र मुन्निद्ररोमाणममुं युवानम् ।
दृशा पपुस्ताः सुदृशः समस्ताः सुता च भीमस्य मही-मघोनः॥१

---

समानकर्तृकत्वात् सहोदरे। प्रशस्ति-भगिनी-भ्रातर्थ्येयमिति पाठे स एवार्थः। प्रशस्तेः स्त्रीत्वात् भगिनीत्वारोप इति विशेषः। अगमत् समाप्तिं गत इत्यर्थः। अन्यत् प्राक् व्याख्यातम् ॥ १०८ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
सप्तमसर्गव्याख्या समाप्ता।

---

अथ सखीसहिताया साक्षात् नलदर्शनमाह, अथेति। अथ नलस्य दमयन्तीसकाशे प्रत्यक्षीभावानन्तरं समस्ताः सर्वाः ताः सुदृशः सुनयनाः नलदर्शनात् सफलचक्षुषो वा सख्य इति शेषः। महीमघोनः पृथिवीन्द्रस्य भीमस्य सुता दमयन्ती च अद्भुतेन दमयन्तीदर्शनजनितविस्मयेन अस्ता नष्टा निमेषमुद्रा निमीलनावेशः यस्य तं निर्निमेषमिति यावत्। अस्तनिमेष-निद्रमिति पाठे अस्ता निमेषनिद्रा नेत्रसङ्कोचः यस्य तम्। उन्निद्राणि उद्भिन्नानि रोमाणि यस्य तं रोमाञ्चितमित्यर्थः। युवानम् अमुं नलं दृशा चक्षुषा जातावेकवचनम्। पपुः अति-तृष्णया ददृशुरित्यर्थः। अत्राद्भुतेन अनिमेषमुद्रमुन्निद्ररोमाञ्च-मिति च द्वयं लिङ्गविभक्तिविपरिणामेन सुदृशः सुता इति पदद्वयस्य विशेषणतया चान्वेतव्यम्। अस्तनिमेषमुद्रमिति

कियच्चिरं दैवतभाषितानि निह्नोतु मेनं प्रभवन्तु नाम ।
पललजालैः पिहितः स्वयं हि प्रकाशमासादयतीक्षुडिम्भः ॥२॥

---

क्रियाविशेषणं वा तत्र निर्निमेषं यथा तथा पपुरित्यन्वयः । अत्र सुहृशः समस्ता इत्यनेन भैमीप्राप्तावपि पुनर्विशिष्य भीमस्य सुतेति ग्रहणं तद्दर्शनस्य सानुरागत्वं विशिनष्टीति बोध्यम् । अस्मिन् सर्गे पूर्ववदुपजातिवृत्तम् ॥ १ ॥

ननु देवतावरप्रभावजनितमात्मनोऽन्तर्धानं कथमसौ व्याहन्तुमीश इत्यत्राह कियदिति । दैवतानाम् इन्द्रादीनां भाषितानि भूयादन्तर्धिसिद्धेरित्यादीनि अन्तर्धानप्रतिपादकानि वचनानि एनं नलं कियच्चिरं कियन्तं कालमित्यर्थः । अत्यन्तसंयोगे द्वितीया । अव्ययविशेषणत्वात् कियदिति नपुंसकनिर्देशः । क्रियाव्ययानां भेदकान्येकत्वेऽपीति नपुंसकलिङ्गशेषेष्वित्यमरः । निह्नोतुं सङ्गोपयितुं प्रभवन्तु नाम शक्नुवन्तु खलु सम्भावनायां लोट् । नैव प्रभवन्तीति सम्भाव्यते इत्यर्थः । अमुमेवार्थं दृष्टान्तेन द्रढयति पललेति । पललजालैः व्रीह्यादितृणसङ्घैः पिहितः आच्छादितः इक्षुडिम्भः इक्षुप्ररोहः स्वयम् आत्मनैव प्रकाशं व्यक्तीभावम् आसादयति प्राप्नोति आङ्पूर्वात् सदेश्चौरादिकात् लट् । इक्षुप्ररोहाणां पललजालैराच्छादनेन क्वचित् स्थापनात् झटित्यङ्कुरोद्गमः स्यादिति तत् कृषिषु प्रसिद्धिः । वस्तुतस्तु देववरप्रसादलब्धया अन्तर्धानशक्त्या स्वेच्छाधीनत्वादेव दृश्यत्वसिद्धिर्न तु तदतिक्रमणात् इति भावः । अत्र नलेक्षुडिम्भयोः बिम्बप्रतिबिम्बभावेन साधर्म्यात् दृष्टान्तालङ्कारः । तदुक्तं दर्पणकारेण, दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति ॥ २ ॥

अपाङ्गमप्याप दृशोर्न रश्मिर्नलस्य भैमीमभिलष्य यावत् ।
अराशुगः सुभ्रुवि तावदस्यां प्रत्यङ्गमापुङ्खशिखं ममज्ज ॥३॥
यदक्रमं विक्रमशक्तिसाम्यादुपाचरत् द्वावपि पञ्चबाणः ।
चक्रे न वैमत्यममुष्य कस्मात् बाणैरनर्द्धार्द्धविभागभाग्भिः॥४॥

---

अथ अस्य दर्शनमात्रेण भैम्याः कामोद्दीपनं वर्णयति, अपाङ्गमिति । नलस्य दृशोः नयनयोः रश्मिः किरणः । किरण-प्रग्रहौ रश्मी इत्यमरः । भैमीं दमयन्तीम् अभिलष्य दर्शनाभि-लाषविषयीकृत्येत्यर्थः यावत् अपाङ्गम् अतिनैकट्यात् तत्क्षण-प्राप्यमिति भावः नेत्रप्रान्तभागमपि भैमीस्थितिं किं वक्तव्यं न आप न प्राप्तवान् तावत् स्मरस्य कामस्य आशु गच्छतीति आशुगः शरः अस्यां सुभ्रुवि दमयन्त्यां प्रत्यङ्गम् आपुङ्खशिखं समूलाग्रमित्यर्थः, यथा तथा शिखा शाखा बर्हिचूड़ा लाङ्ग-लिक्यग्रमात्रके इति मेदिनी। अभिविधावाङ्योगेऽव्ययी-भावः। ममज्ज प्रविवेशेत्यर्थः। नलकर्तृकदर्शनात् प्रागेव दम-यन्ती सहसा नलं दृष्ट्वा अतीव कामवशगा आसीदिति भावः। अत्राभिलाषे नयनरश्मेः कर्त्तृत्वमौपचारिकम्। यद्वा भैमीम् अभिलष्येत्यत्र स्थितस्येत्यध्याहारे नलस्येत्यनेन सम्बन्धात् न कापि अनुपपत्तिरिति बोध्यम्। अत्र दृष्टिपातस्मराशुगपातयोः समकालिकत्वेन कार्य्यहेत्वोः पौर्वापर्य्यात्ययरूपातिशयोक्तिः ॥ ३ ॥

अथ अनयोर्द्वयोरपि युगपत् कामशराधीनत्वं व्यञ्जयति यदिति। पञ्च बाणाः मादनो मोहनश्चैव तापनः शोषणस्तथा। मारणश्चेति विज्ञेया बाणाः पञ्च स्मरस्य वै इत्युक्ताः शराः यस्य सः पञ्चबाणः कामः विक्रमस्य पराक्रमस्य या शक्तिरुत्साहः

तस्मिन्नलोऽसाविति साऽन्वरज्यत् क्षणं क्षणं सोऽत्र स कुत्र दास्यः ।
पुरः स्म तस्यां वलतेऽस्य चित्तं दूत्यादनेनाथ पुनर्न्यवर्त्ति ॥५॥

---

तस्याः साम्यात् तुल्यत्वात् ल्यब्लोपे पञ्चमी, साम्यमवलम्ब्येत्यर्थः, उभयोरपि तुल्योत्साहेनेति भावः । नास्ति क्रमो यत्र तत् यथा तथा युगपदित्यर्थः । द्वावपि भैमीनलौ यत् उपाचरत् सेवितवान् सर्वैरपि बाणैः उभावेव समं प्रहृतवानित्यर्थः । अमुष्य तस्येत्यर्थः, समोपचरणस्येति भावः । अर्द्धम् अर्द्धं विभागं भजन्ते इति अर्द्धार्द्धविभागभाजः ते न भवन्तीति अनर्द्धार्द्धविभागभाजः तैः विषमसंख्यैरिति भावः । बाणैः पञ्चभिरिति भावः कस्मात् अपरिवाध्याहार्य्यः कस्मादपि अनिर्वचनीयात् कारणादित्यर्थः । वैमत्यम् असम्मतिः न चक्रे न कृता द्वयोरपि द्वे द्वे रूपे कृत्वा तुल्यतया प्रहृष्टमिति भावः । वैमत्यमित्यत्र वैमुख्यमिति पाठे यच्छब्देन तच्छब्दो बोद्धव्यः सततं बुधैरिति वचनात् तत्रेत्यध्याहृत्य अमुष्य पञ्चबाणस्य अनर्द्धार्द्धविभागभाग्भिः बाणैः कस्मादपि वैमुख्यं पराङ्मुखत्वं न चक्रे इति योजना । अत्र विषमैः शरैः युगपत् उभयत्र समप्रहारात् विरोधाभासालङ्कारः स्मरप्रभावस्य अनिर्वचनीयहेतोस्तत्परिहारः ॥ ४ ॥

तदवस्थायामुभयोर्भावद्वैविध्यमाह, तस्मिन्निति । अथ अनन्तरं सा दमयन्ती तस्मिन् पुरुषे नल इति धियेति शेषः । हंसादिमुखात् यथाश्रुतसंवादादिति भावः । क्षणं व्याप्य अत्यन्तसंयोगे द्वितीया । अन्वरज्यत् अनुरक्ता आसीत् । अथ इह अस्मिन् कन्यान्तःपुरे सुरक्षिते इति भावः, स नलः क्व कुतः कथमागत इत्यर्थः असम्भवमेतदिति भावः इति धियेति शेषः ।

कयाचिदालोक्य नलं ललज्जे कयापि तद्भासि हृदा ममज्जे।
तं कापि मेने स्मरमेव कन्या भेजे मनोभूवशभूयमन्या ॥६॥

---

क्षणम् उदास्त उदासीना अतिष्ठत् इत्यर्थः उत्पूर्वादासेः कर्त्तरि लङ्। अस्य नलस्य चित्तं पुरः प्रथमं तस्यां दमयन्त्यां क्षण-मत्रापि योज्यम् बलते स्म चलति स्म साभिलाषमभूदित्यर्थः। क्षणाच्च दूत्यात् परकृत्ये प्रवृत्तत्वादिति भावः। अनेन चित्तेन नलेन वा पुनः न्यवर्त्ति दूत्ये स्थितस्य मम परनार्य्यामभिलाषो न युक्त इति धिया निवृत्तमित्यर्थः। पूर्वार्द्धे परार्द्धे च प्रथमं हर्षोदयःततश्च विषाद इति द्वौ भावसन्धौ उक्तौ तत्र भाव-लक्षणमाह दर्पणः, सञ्चारिणः प्रधानानि देवादिविषया रतिः। उद्‌बुद्धमात्रः स्थायी च भाव इत्यभिधीयते॥ इति। अत्र प्राधा-न्येनाभिव्यक्तौ हर्षविषादौ सञ्चारिणौ इति बोध्यम्। उभयोस्तु सम एव रागविषादयोरुदय आसीदिति तात्पर्य्यम्॥ ५॥

अथ तद्दर्शनेन सखीनां विकारान् वर्णयति कयाचिदिति। कयाचित् कन्यया नलम् आलोक्य दृष्ट्वा ललज्जे लज्जितम्। कयापि अन्यया कन्यया तस्य नलस्य भासि प्रभायां लावण्ये इत्यर्थः, हृदा हृदयेन ममज्जे मग्नं तल्लावण्यपूर्णहृदयया अभावीत्यर्थः, भावे लिट्। कापि कन्या तं नलं स्मरमेव काममेव एवकारादपरव्यवच्छेदः मेने अमन्यत। अन्या कन्या मनोभुवः कामस्य वशभूयं वशत्वं भुवो भावे इति क्यप्। भेजे प्राप कर्त्तरि लिट्। तं वीक्ष्य काचित् कुब्जा ललज्जे इति पाठान्तरम्। अत्र ललज्जे इति लज्जारूपस्य सञ्चारिणः स्व-शब्देनोक्तत्वात् रसगतोऽयं दोषः। तथाच दर्पणः, रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि——दोषा रसगता मता इति।

कस्त्वं कुतो वेति न जातु शेकुस्तं प्रष्टुमप्यप्रतिभातिभारात्।
उत्तस्थुरभ्युत्थितिवाञ्छयेव निजासनान्नैकरसाः कृशाङ्ग्यः ॥७॥
स्वाच्छन्द्यमानन्दपरम्पराणां भैमी तमालोक्य किमप्यवाप।
महार्घ्यं निर्झरिणीव वारा मासाद्य धाराधरकेलिकालम्॥८॥

---

ममज्जे इति चित्तरागः स्मरमेव मेने इति अनङ्गो मूर्त्तिमानिति विस्मयः। भेजे इति औत्सुक्यातिशयश्च सूचितः॥ ६॥

क इति। कृशाङ्ग्यः तन्वङ्ग्यो दमयन्तीसख्यः एक एव रसः तद्दर्शनजनितानन्दानुभवः यासां ताः तथाभूताः सत्यः अप्रतिभाया अप्रतिपत्त्या अतिभारात् इतिकर्त्तव्यताविमूढतातिशयादित्यर्थः, तं नलं कस्त्वम्? कुतो वा आगत इति शेषः। इति प्रष्टुम् अनुयोक्तुमपि जातु कदाचिदपि न शेकुः न शक्ता आसन्नित्यर्थः। तथा अभ्युत्थितिरभ्युत्थानं तस्या वाञ्छया अभिलाषेण निजासनात् न उत्तस्थुः न उत्तिष्ठन्ति स्मेत्यर्थः। अप्रतिभातिभारादित्यत्रापि योजनीयम्। विस्मयपरवशतया किंकर्त्तव्यविमूढ़ा वाक्शक्तिरहिता उत्थानशक्तिरहिताश्च तिष्ठन्ति स्मेति भावः। नैकरसा इति पाठे नैके बहवः रसाः शृङ्गाराद्भुतादयो यासां ताः सत्यः निजासनात् अभ्युत्थितिवाञ्छयेव अभ्युत्थानेन अभिनन्दयितुमिच्छयेव वस्तुतः किंकर्त्तव्यविमूढ़तया तस्मात् अपसरणेच्छयेति भावः। उत्तस्थुः उत्तिष्ठन्ति स्मेत्यर्थः। अभ्युत्थितिवाञ्छयैवेति पाठे अभ्युत्थानेन अभिनन्दयितुमिच्छयैवेत्यर्थः निजासनात् उत्तस्थुरिति केचित्॥ ७॥

अथ दमयन्त्या नलदर्शनजं हर्षातिशयं वर्णयति स्वाच्छन्द्यमिति। भैमी दमयन्ती तं नलम् आलोक्य दृष्ट्वा धाराधराणां मेघानां केलिकालं क्रीड़ासमयं वर्षर्त्तुमित्यर्थः आसाद्य प्राप्य

तत्रैव मग्ना यदपश्यदग्रे नास्या दृगस्थाङ्गमयास्यदन्यत् ।
नादास्यदस्यै यदि बुद्धिधारां विच्छिद्य विच्छिद्य चिरान्निमेषः॥९॥
दृशापि सालिङ्गितमङ्गमस्य जग्राह नाग्रावगताङ्गहर्षैः ।
अङ्गान्तरेऽनन्तरमीक्षिते तु निवृत्य सस्मार न पूर्वदृष्टम्॥१०॥

---

निर्झरिणी गिरिप्रवाहिणी सरित् वारां जलानाम् आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलमित्यमरः। महारयं महान्तं वेगमिव किमपि अनिर्वचनीयम् आनन्दपरम्पराणाम् आनन्दधाराणां स्वच्छन्दो निर्बाधः अप्रतिबन्ध इत्यर्थः। स्वच्छन्दो निरवग्रह इत्यमरः। तस्य भावः साच्छन्द्यम् अतिरेकमित्यर्थः अवाप प्राप्तवती। अत्र उपमालङ्कारः॥ ८॥

अथ अस्याः तस्मिन् नले नयनप्रीतिं षड्भिः श्लोकैः कीर्त्तयति तत्रैवेत्यादिभिः। अस्याः दमयन्त्या दृक् दृष्टिः अस्य नलस्य यत् अङ्गम् अग्रे प्रथमम् अपश्यत् तत्रैव मग्ना सती अन्यत् अपरमस्याङ्गं न अयास्यत् न अगमिष्यत् न अद्रक्ष्यत् इत्यर्थः यदि निमेषः नेत्रसङ्कोचः चिरात् बहुक्षणावलोकनात् विच्छिद्य विच्छिद्य विरमय्य विरमय्य अस्यै दृशे बुद्धिधारां ज्ञानपरम्पराम् अपराङ्गदर्शनविषयिणीमवधानवत्तामिति भावः न अदास्यत्। बहुक्षणं निर्निमेषेण अङ्गमेकं निरीक्ष्य निमीलनात् परं पुनरुन्मेषे अङ्गान्तरेषु दृष्टिव्यापारः न तु पूर्वाङ्गदर्शनतत्येति भावः। क्रियातिपत्तौ लृङ्॥ ९॥

दृशेति। सा दमयन्ती दृशा चक्षुषा आलिङ्गितमपि विषयीकृतमपि अस्य नलस्य अङ्गम् अपरमिति शेषः अग्रे प्रथमम् अवगतं ज्ञातं निरीक्षितमिति यावत्। यत् अङ्गं तस्य हर्षैः तज्जनितानन्दैः हेतुभिः न जग्राह न गृहीतवती दृष्टापि

हित्वैकमस्यापघनं विशन्ती तद्दृष्टिरङ्गान्तरभुक्तिसीमाम्।
चिरं चकारोभयलाभलोभात् स्वभावलोला गतमागतञ्च॥११॥

---

अवधानवत्तया न ज्ञातवतीति भावः। अनन्तरं बहुक्षणं पूर्वाङ्गदर्शनात् परम् अङ्गान्तरे अन्यस्मिन् अङ्गे ईक्षिते दृष्टे तु अवधानेनेति भावः। निवृत्य पूर्वदृष्टादङ्गात् विमुखीभूयेत्यर्थः तत्पूर्वदृष्टं न सस्मार न स्मृतवतीत्यर्थः। एकस्य अङ्गस्य दर्शनजनितैः अपारानन्दैः विह्वला सन्निकृष्टमपि अपरमङ्गं न विवेद अथ कथञ्चित् तस्मिन् अपरस्मिन् अङ्गे दृष्टे तज्जनितैः तादृशैः एव आनन्दैर्विवशा पूर्वदृष्टमङ्गं विसस्मारेति परमार्थः। सर्वेऽपि नलस्यावयवा अलौकिकरम्या इति तात्पर्य्यम्॥ १०॥

हित्वेति। स्वभावेन लोला चञ्चला अभिमतवस्तुलाभे किं वक्तव्यमिति भावः। तस्या दमयन्त्या दृष्टिः चक्षुः अस्य नलस्य एकम् अपघनम् अङ्गम् अपघनोऽङ्गमित्ययान्तो निपातः। अङ्गं प्रतीकोऽवयवोऽपघन इत्यमरः। हित्वा त्यक्त्वा अङ्गान्तरभुक्तिसीमाम् अङ्गान्तरस्य अन्यस्य अवयवस्य भुक्तिः स्वस्य भोगः अवलोकनमिति भावः, तस्य सीमा मर्य्यादा तां विशन्ती अङ्गान्तरमवलोकयन्तीति यावत्। चिरम् उभयोः अङ्गयोः लाभे लोभात् लुब्धत्वाद्धेतोः उभादुदात्तो नित्यमित्यत्र पृथक् सूत्रकरणादेव नित्यमयजादेशे सिद्धे पुनर्नित्यग्रहणमुभयशब्दस्य वृत्तावप्ययजर्थमिति कैयटः। गतमागतञ्च गमनागमने चकार कृतवती द्वयोरङ्गयो मनोहरत्वादेकमपि त्यक्तुं न शशाकेति भावः। अङ्गान्तरभक्तिसीमामिति पाठे अङ्गान्तरस्य विभागदेशमित्यर्थः। अत्र स्वभावलोलेति पदार्थस्य गतागतकरणे हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ ११॥

निरीक्षितञ्चाङ्गमवीक्षितञ्च दृशा पिबन्ती रभसेन तस्य ।
समानमानन्दमियं दधाना विवेद भेदं न विदर्भसुभ्रूः ॥ १२॥
सूक्ष्मे घने नैषधकेशपाशे निपत्य निष्पन्दतरीभवद्भ्याम् ।
तस्यानुबन्धं न विमोच्य गन्तुमपारि तल्लोचनखञ्जनाभ्याम्॥१३
भूलोकभर्त्तुर्मुखपाणिपादपद्मैः परीरम्भमवाप्य तस्य ।
दमस्वसुर्दृष्टिसरोजराजिश्चिरं न तत्याज सबन्धुबन्धम् ॥१४॥

निरीक्षितमिति। इयं विदर्भसुभ्रूः दमयन्ती तस्य नलस्य निरीक्षितं दृष्टम् अवीक्षितञ्च अदृष्टञ्च अङ्गं दृशा चक्षुषा रभसेन हर्षेण। रभसो वेगहर्षयोः इत्यमरः। पिबन्ती सादरं पश्यन्तीत्यर्थः समानं दृष्टादृष्टयोस्तुल्यमित्यर्थः। आनन्दं दधाना धारयन्ती सती भेदं पूर्वदृष्टमिदम् अपूर्वदृष्टमिदमिति विशेषं न विवेद न ज्ञातवतीत्यर्थः उभयोरपि अपूर्ववत् चमत्कारित्वात् निरतिशयप्रीतिप्रदत्वाच्चेति भावः ॥ १२ ॥

सूक्ष्मे इति। तस्या भैम्या लोचने नेत्रे एव खञ्जनौ तदाख्यपक्षिविशेषौ। खञ्जरीटस्तु खञ्जन इत्यमरः। सूक्ष्मे घने सान्द्रे नैषधस्य नलस्य केशपाशे केशकलापे केशरूपबन्धनसाधने च पाशः पक्ष्यादिबन्धन इति विश्वः। निपत्य निष्पन्दतरीभवद्भ्यां निर्निमेषीभवद्भ्यां निश्चलीभवद्भ्याञ्च सद्भ्यां तस्य केशपाशस्य अनुबन्धम् आसक्तिं बन्धनञ्च विमोच्य गन्तुं न अपारि न शक्तं पारयतेर्भावे लुङ्। अतिमनोहरं नलकेशपाशं सा चिरं निरीक्षाञ्चक्रे इति भावः। अत्र श्लेषेणानुप्राणितं रूपकम् ॥ १३ ॥

भूलोकेति। दमस्वसुः दमयन्त्याः दृष्टय एव सरोजानि पद्मानि क्रियाभेदात् बहुत्वं तेषां राजिः संहतिः भूलोकभर्त्तुः

तत्कालमानन्दमयी भवन्ती भवत्तरानिर्वचनीयमोहा।
सा मुक्तसंसारिदशारसाभ्यां द्विस्वादमुल्लासमभुङ्क्त मृष्टम्॥१

पृथिवीन्द्रस्य तस्य नलस्य मुखञ्च पाणी च पादौ च मुखपाणि पादं प्राण्यङ्गत्वात् एकवद्भावः। तदेव पद्मानि तैः सह परी रम्भम् आलिङ्गनमवाप्य प्राप्य समाना बन्धवः सबन्धवः जाति जनपदेत्यादिना समानशब्दस्य सभावः। तेषु बन्धः समासक्ति तं समबन्धुसङ्गमित्यर्थः चिरं न तत्याज न मोक्तुं शशाकेत्यर्थः स्निग्धा हि बन्धवो बन्धून् प्राप्य समाश्लेषादिसुखासङ्गात् चिरे णापि त्यक्तुं नेच्छन्तीति भावः। दमयन्ती नलस्य मुखं पाणी पादौ च चिरमद्राक्षीदिति फलितार्थः। रूपकमलङ्कारः॥१४

तदानीं भैम्या आनन्दमोहौ सञ्जातावित्याह, तत्काल मिति। सा दमयन्ती तस्मिन् काले तत्कालं अत्यन्तसंयोगे द्वितीया। नलाङ्गदर्शनसमये इत्यर्थः आनन्दमयी केवलानन्द पूर्णेति यावत्। अथच आनन्दमयब्रह्मभावमापन्ना आनन्द ब्रह्मणो रूपमिति श्रुतेः। तथा भवत्तरः अतिशयेन भवः अनिर्वचनीयः वक्तुमशक्यः मोहः किंकर्त्तव्यविमूढता अति सुरक्षितेऽस्मिन् कन्यान्तःपुरे कथमस्य समागमः तदसौ नलं नेति भ्रान्तिर्वा यस्याः तथोक्ता भवन्ती सती टिड्ढाणञ्द्वयस ङीप्। मुक्तश्च संसारी च तयोः मुक्तसंसारिणोः जीवन्मुक्त संसारस्थितयोः ये दशे अवस्थे आनन्दमयत्वमोहमयत्वे इति भावः। तयोः यौ रसौ स्वादौ ताभ्यां द्वौ स्वादौ यस्य तं द्वि स्वादं द्विविधास्वादपूर्णमित्यर्थः, मृष्टं विशुद्धम् उल्लासं प्रीति मित्यर्थः। अभुङ्क्त अन्वभवत् भुजोऽनवन इति लुङ् तङ् केवलानन्दमयत्वं मुक्तदशा सर्वमसारं दृष्ट्वापि मोहः संसारि दशा, नलदर्शनेऽस्यास्तदुभयदशारसः सञ्जात इति भावः॥१५

दूते नलश्रीभृति भाविभावा कलङ्किनीयं जनितेति नूनम् ।
न स व्यधान्नैषधकायमायं विधिः स्वयं दूतमिमां प्रतीन्द्रम्॥१६
पुण्ये मनः कस्य मुनेरपि स्यात् प्रमाणमास्ते यदघेऽपि धावत्।
तच्छिन्ति चित्तं परमेश्वरस्तु भक्तस्य दृष्यत्करणो रुणद्धि ॥१७॥

ननु भैम्या नल एवायमिति निश्चयस्य कारणाभावात् तदङ्गस्य तथाविधानुरागेण दर्शने न कथं पातिव्रत्यभङ्ग इत्याशङ्क्याह दूते इति। इयं भैमी नलस्य श्रियं बिभर्त्तीति नलश्रीभृत् तस्मिन् अत्रान्यस्य धर्मं कथमन्यो वहतु इति नलस्य श्रियमिव श्रियमिति सादृश्याक्षेपात् निदर्शनालङ्कारः। तथाचोक्तं दर्पणेन, सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शनेति। नलरूपधारिणीत्यर्थः तस्मिन् दूते भावी भविष्यन् भावोऽनुरागो यस्याः तथोक्ता सती कलङ्किनी पातिव्रत्यभङ्गात् कलङ्कवती जनिता भविष्यति जनिधातोर्लुट्। इति मत्वेति शेषः। विधिः ब्रह्मा इमां भैमीं प्रति नैषधस्य नलस्य कायः रूपमेव माया छलं यस्य तथाविधं नलरूपधरमित्यर्थः। स्वयं साक्षात् इन्द्रमेव दूतं न संव्यधात् न संविहितवान् इन्द्राय अहं स्वयं नलरूपधरो भैम्यां दूत्यं करोमीति बुद्धिं नादादिति भावः। नूनं वितर्के एतदहं वस्तुतो विचारयामीत्यर्थः तर्कस्य विचाररूपत्वात्। न च अत्र उत्प्रेक्षालङ्कारः तस्योत्कटकोटिकसंशयरूपत्वात् अत्र दूतभावेनान्तर्हितस्यापि तस्य वास्तवनलत्वान्नायं दोषावसर इति भावः॥ १६ ॥

ननु मा तावत् पातिव्रत्यभङ्गः परं नलोऽयमिति निश्चयाभावेऽपि तस्यास्तत्रारक्तिर्दोषमावहतीत्याशङ्क्याह पुण्ये इति।

सालीकदृष्टे मदनोन्मदिष्णुर्यथाप शालीनतया न मौनम्।
तथैव तथ्येऽपि नले न लेभे मुग्धेषु कः सत्यमृषाविवेकः?॥१

---

मुनेरपि ऋषेरपि विषयासङ्गवर्जितस्यापीति भावः। अन्यत्
किं वक्तव्यमित्यपि शब्दार्थः कस्य मनः अन्तःकरणं पुरुष
सुचरिते एव प्रमाणं निश्चितत्वेन सिद्धान्तितं स्यात्?
कस्यापीत्यर्थः। यत् यस्मात् अघेऽपि पापेऽपि परदारगम
नादिदुष्कृतेऽपीत्यर्थः धावत् शीघ्रमेव प्रचलत् दृश्यते इति
शेषः। जितेन्द्रियेणापि स्वभावचपलं मनो दुष्कृतान्नियन्तुं
न शक्यते किमुत तथा कामपरायणाया भैम्या इति भावः
तु किन्तु दृष्यन्ती उदयमाना करुणा यस्य सः परमेश्वरः
विधाता भक्तस्य तत्परायणस्येति भावः। तत्पापं चिन्तयतीति
तच्चिन्ति तदनुधावि चित्तं रुणद्धि प्रतिबध्नाति धर्मनिष्ठस्य
मनः कथञ्चित् यदि पापासङ्गे सहसा प्रवर्त्तते तत्क्षणमेव
स परमेश्वरकृपया तत्पापात् निवर्त्तते इति भावः। तद
भैम्यास्तत्र पुरुषे नलत्वनिश्चयाभावेऽपि सहसा चित्तप्रसक्तौ
दोष इति तात्पर्य्यम्॥ १७॥

इत्थमनौचित्यदोषं परिहरन् प्रकृतमनुसरति सेति। स
भैमी मदनेन कामेन उन्मदिष्णुः उन्मादशीला अलङ्कृञित्य
दिना इष्णुच्। सती अलीकदृष्टे तन्मयतादशायां मिथ्यादृष्टे
नले शालीनतया अधृष्टतया निर्लज्जतया इत्यर्थः शालीन
कौपीने अधृष्टाकार्य्यकारिणोरिति निपातः। यथा मौनं
लेभे न तूष्णीमासीत् पूर्वं प्रलापदशायां किमपि अब्रवीत् इति
भावः। तथ्येऽपि सत्येऽपि सत्यदृष्टेऽपीत्यर्थः। नले तथै
मौनं न लेभे न प्राप्तवतीत्यर्थः अवादीदिति भावः न चैतदवि
वेकित्वमित्याह मुग्धेष्विति। मुग्धेषु मदनार्त्तेषु सत्यमृषयोः

व्यर्थीभवद्भावपिधानयत्ना स्वरेण साथ श्लथगद्गदेन ।
सखीचये साध्वससन्नवाचि स्वयं तमूचे नमदाननेन्दुः ॥१९॥
नत्वा शिरोरत्नरुचापि पाद्यं सम्पाद्यमाचारविदातिथिभ्यः ।
प्रियाचरालीरसधारयापि वैधी विधेया मधुपर्कतृप्तिः ॥२०॥

---

सत्यमेतत् मृषैतदित्यनयोर्विचारः विवेकः कः ? नास्ति एवे-त्यर्थः । शालीनतयेत्यत्र शालीनतमेति पाठे शालीनतमा अतिप्रगल्भेत्यर्थः ॥ १८ ॥

व्यर्थीभवदिति । अथ द्विविधोल्लासभोगानन्तरं सा दम-यन्ती व्यर्थीभवन् विफलीभवन् भावस्य सात्त्विकलक्षणस्य आकारस्य च पिधाने गोपने यत्नः यस्याः सा तथाभूता नल-दर्शनेन स्वीयं सत्त्वोद्रेकजनितं भावं स्तम्भस्वेदादिकं मनोगत-मभिप्रायं वा गोप्तुमशक्तेत्यर्थः । सखीचये सहचरीगणे साध्व-सेन कोऽयं पुरुषोऽत्र समागतः किं वा करिष्यतीति भयेन स्थगिता वाक् यस्य तथाभूते किमपि अब्रुवाणे इति यावत् । सति स्वयं नमन् आननेन्दुः मुखचन्द्रः यस्य तथोक्ता अधो-मुखीत्यर्थः । सती श्लथः विरलः गद्गदः अस्पष्टभाषणं तेन स्वरेण तं नलम् ऊचे अब्रवीत् कर्त्तरि लिट् । ब्रुवो वचिः ॥ १९ ॥

प्रथमन्तावदस्यातिथ्यं चिकीर्षुस्त्रिभिः तत्कार्य्यं वर्णयति, नत्वेत्यादिभिः । हे नरश्रेष्ठेति सम्बोधनपदमध्याहृत्य व्याख्येयं हे नरश्रेष्ठ ! आचारं वेत्तीति आचारवित् तेन विधिज्ञेनेत्यर्थः जनेनेति शेषः । अतिथिभ्यो गृहागतेभ्यः । अतिथिर्ना गृहागते इत्यमरः । नत्वा पदेषु निपत्येत्यर्थः शिरोरत्नस्य चूडामणेः रुचापि किरणेनापि पाद्यं पादप्रक्षालनार्थमुदकं पादाभ्यामिति यत्प्रत्ययः । पाद्यं पादाय वारिणीत्यमरः ।

स्वात्मापि शीलेन तृणं विधेयं देया विहायासनभूर्निजापि।
आनन्दवाष्पैरपि कल्प्यमम्भः पृच्छा विधेया मधुभिर्वचोभिः॥२१

सम्पाद्यम् उदकाभावे तत्तुल्यतया ते शिरोरत्नकिरणरूपजलेनापि देयमित्यर्थः अतिथिं त्वां प्रणमामीति भावः। तथा प्रियाणि अक्षराणि तेषां आली प्रियवचनपङ्क्तिरित्यर्थः तस्या रसधारया मधुनिष्यन्देन वैधी मधुपर्केण अतिथिमर्चयेदिति विधिबोधिता मधुपर्केण तृप्तिः अतिथिजनस्य प्रीतिः विधेया सम्पाद्या मधुपर्कोपकरणाद्यभावे प्रियवचनरूपं मधुपर्कं देयमिति भावः। तदहं त्वां प्रियवचनेन मधुपर्कास्वादप्रीतं करोमि मुख्याभावे अनुकल्पस्यापि विधेयत्वादिति भावः॥ २०॥

स्वात्मेति। किञ्च पूर्वोक्तमाचारविदेत्यत्राप्यनुषञ्जनीयम्। शीलेन सद्वृत्तेन सौजन्येनेति भावः। शीलं स्वभावे सद्वृत्ते इत्यमरः। स्वस्य आत्मापि देहोऽपि आत्मा जीवे धृतौ देहे इति वैजयन्ती। तृणं विधेयम् अतिथेरग्रे तृणवत् तुच्छवस्तुतया दर्शनीयमिति भावः। सर्वथा अतिथ्यग्रे नतभावेन स्थातव्यमिति तात्पर्य्यम्। केचित्तु आस्तरणवस्तुनोऽभावे स्वात्मापि स्वकीयम् अन्तःकरणमपि तृणं विधेयं तृणवदास्तरणस्थानीयं कार्य्यमित्यर्थः अन्तरात्मनि अतिथिरुपवेशयितव्य इति भावः। आन्तरिकभक्त्या अतिथिरर्चनीय इति तात्पर्य्यम्। निजापि स्वकीयापि आसनभूः उपवेशनभूमिः विहाय परित्यज्य देया स्वयं ततोऽपसृत्य तत्रातिथिरुपवेशनीय इत्यर्थः। आनन्दवाष्पैः हर्षाश्रुभिः अन्यजलाभावे इति भावः। अम्भः जलं मुखप्रक्षालनार्थमिति भावः। कल्प्यं विधेयम्। तथा मधुभिः मधुसदृशैः मनोहारिभिरिति भावः। वचोभिः वचनैः पृच्छा

पदोपहारेऽनुपनम्रतापि सम्भाव्यतेऽपां त्वरयापराधः।
तत्कर्त्तुमर्हाञ्जलिसज्जनेन स्वसंभृतिप्राञ्जलतापि तावत्॥२२॥
पुरा परित्यज्य मयात्यसर्जि स्वमासनं तत्किमिति क्षणन्न।

भिदादित्वादङ्प्रत्ययः। विधेया कर्त्तव्या। तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता। एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥ इति वचनात् तृणाद्यसम्भवे शरीरादिनापि अतिथिः सेवनीय इति भावः। तदहं त्वद्दर्शनेन आनन्दवाष्प-वर्षिणी सौजन्येन निजामासनभूमिं दत्त्वा मधुरवचनैः त्वाम् अतिथिं सत्करोमीति पर्य्यवसितोऽर्थः॥ २१॥

पदेति। पदोपहारे चरणप्रक्षालनविषये त्वरया सत्वरम् अपां जलानाम् अनुपनम्रता अनाहरणम् अपराधः सम्भाव्यते दोषत्वेन गण्यते इत्यर्थः तत्तस्मात् अञ्जलिसज्जनेन अञ्जलि-बन्धनेन स्वस्य आत्मनः संभृत्या समुपस्थानेन प्राञ्जलता सर-लतापि तावत् साकल्येन यावत्तावच्च साकल्ये इत्यमरः। सम्य-गित्यर्थः कर्त्तुमर्हा कर्त्तुमुचिता, स्वसम्भृतीत्यत्र सुसम्भृतीतिपाठे सुष्ठु सम्भृतिः सन्निधौ उपस्थितिः तया प्राञ्जलता सरलता इति स एवार्थः। यद्वा पदोपहारे अपां जलानां त्वरया जलाहरणार्थं व्यग्रतया इत्यर्थः, अनुपनम्रता अप्रणतिरित्यर्थः अपराधः सम्भाव्यते प्रथमम् अतिथावागत एव प्रणत्या अभि-नन्दनीयं ततः पादप्रक्षालनाद्यर्थं जलाद्याहरणं विधेयं तत् अकृत्वा प्रथममेव जलाहरणादिषु व्यग्रतया प्रणत्यपचारः दोष एवेति भावः। तन्मम झटिति त्वत्पादोदकानाहरणरूपो-ऽपराधो न गण्य इति कृताञ्जलिर्याचे इति निष्कर्षः॥ २२॥

पुरेति। मया स्वं निजम् आसनं पुरा पूर्वं तव दर्शनमात्र

अनर्हमप्येतदलङ्क्रियेत प्रयातुमीहा यदि चान्यतोऽपि ?॥२३॥
निवेद्यतां हन्त समापयन्तौ शिरीषकोषम्रदिमाभिमानम्।
पदौ कियद्दूरमिमौ प्रयासे निधित्सते तुच्छदयं मनस्ते ?॥२४॥

---

एवेत्यर्थः। परित्यज्य अत्यसर्जि अतिसृष्टं तुभ्यं दत्तमित्यर्थः, पुरेत्यत्र पुर इति पाठे पुरः अग्रत इत्यर्थः। तत्तस्मात् एतत् आसनम् अनर्हमपि तव अयोग्यमपि यदि वा अन्यतः कुत्रापि इत्यर्थः। प्रयातुं गन्तुम् ईहा चेष्टा इच्छेति यावत्। अपि अस्तीति शेषः तदपि किमिति क्षणम् अल्पकालं न अलङ्क्रियेत स्वोपवेशनेन न भूषितं क्रियेत ? अपितु कृपया अत्र क्षण सुपविश्यतामित्यर्थः॥ २३ ॥

निवेद्यतामिति। तुच्छा दया यस्य तत् तुच्छदयं दयारहितं दयायां सत्यामीदृशसुकोमलपदप्रयासे न कोऽपि प्रवर्त्तते इति भावः। ते तव मनः हृदयं शिरीषकोषस्य शिरीषमुकुलस्य यो म्रदिमा मार्दवं तस्य अभिमानो गर्वः अहमेव सर्वेभ्यो मृदुरित्यहङ्कार इत्यर्थः तं समापयन्तौ निरस्यन्तौ शिरीषकोषादपि कोमलावित्यर्थः। इमौ प्रत्यक्षदृश्यमानौ पदौ चरणौ पदङ्घ्रिश्चरणोऽस्त्रियामित्यमरः। कियद्दूरं कियच्चिरं कियद्दूरदेशपर्य्यन्तं वा प्रयासे गमनायासे निधित्सते निधातुमिच्छति ? निपूर्वाद्धधातेः सन्नन्ताल्लिट् तङ् सनि मीमेत्यादिना इसादेशः। अत्र लोपोऽभ्यासस्येति अभ्यासलोपः। निवेद्यतां विज्ञाप्यतां हन्तेति खेदेऽनुकम्पायां वा। तव एतावद्दूरप्रयासे अहं खिद्यामि। अथवा निवेदनेन अनुगृह्यतामिति भावः। वाक्यार्थः कर्म। यस्मिन् देशे गन्तव्यं भवता, स देशः कथ्यतामिति तात्पर्य्यम्। अत्र शिरीषकोष-

अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य ।
त्वदाप्तसङ्केततया कृतार्था अव्यापि नानेन जनेन संज्ञा ?॥२५॥
तीर्णः किमर्णोनिधिरेष नैष सुरक्षितेऽभूदिह यत् प्रवेशः ।
फलं किमेतस्य तु साहसस्य न तावदद्यापि विनिश्चिनोमि२६

---

त्वदिमाभिमानं समापयन्ताविव्यनेन चरणयोः ततोऽप्याधिक्य-प्रतीतेः व्यतिरेकालङ्कारो व्यज्यते ॥ २४ ॥

अनायीति। अद्य अस्मिन् दिवसे त्वया कतमो देशः वसन्तेन मुक्तं वसन्तमुक्तं तस्य वसन्तविरहितस्येत्यर्थः। वनस्य दशाम् अवस्थाम् अनायि नीतः प्रापित इत्यर्थः। यथा वसन्त-रहितं वनं श्रीशून्यं भवति तथा त्वया विना अद्य किंनामको देशो विश्रीको जात इति भावः। नयतेर्द्विकर्मकत्वात् प्रधाने कर्मणि लुङ्। किञ्च त्वयि आप्तः लब्धः सङ्केतो यया सा त्वदाप्तसङ्केता तस्या भावः त्वदाप्तसङ्केतता तया त्वयि वाच्ये लब्धप्रतिष्ठतयेत्यर्थः कृतार्था सफला संज्ञा नाम अनेन जनेन मया इति भावः। अव्यापि न ? श्रोतुमर्हापि न ? अपितु अर्हैवेत्यर्थः। नामश्रवणे वाधा नास्तीति भावः। कुत आगतो-ऽसि ? किञ्च ते नाम ? तत्कथ्यतामिति तात्पर्य्यम्। संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचनेत्यमरः। अत्र अन्यस्य धर्मं कथमन्यो वहतु इति सादृश्याक्षेपात् वसन्तमुक्तस्य वनस्य दशामिव दशामिति प्रतीतेर्निदर्शनालङ्कारः ॥ २५ ॥

तीर्ण इति। सुरक्षिते सुष्ठु यथा तथा रक्षिभिर्गुप्ते अत्यन्त-दुष्प्रवेशे इत्यर्थः। इह अन्तःपुरे प्रवेशः तवेति शेषः अभूत् इति यत् एषः दुष्प्रवेश इति भावः। अर्णोनिधिः जलनिधिः एव तीर्णः न किम् ? उत्तीर्णो न किम् ? अपितु तीर्ण एवेत्यर्थः

तव प्रवेशे सुकृतानि हेतुं मन्ये मदक्ष्णोरपि तावदत्र।
न लक्षितो रक्षिभटैर्यदाभ्यां पीतोऽसि तन्वा जितपुष्पधन्वा॥२७॥
यथाकृतिः काचन ते यथा वा दौवारिकान्धङ्करणी च शक्तिः।
रुच्यो रुचीभिर्जितकाञ्चनीभि स्तथासि पीयूषभुजां सनाभिः॥२८॥

---

भवता एतस्मिन् अन्तःपुरे यत्प्रवेशः कृतः तत् समुद्रपारगमनतुल्य-मित्यर्थः। अतएव अत्रापि पूर्ववत् सादृश्याक्षेपात् निदर्शना। नु पुनः एतस्य अन्तःपुरप्रवेशलक्षणस्य साहसस्य अविमृष्य-कारित्वरूपस्य फलं प्रयोजनं किम्? अद्यापि एतावत्काल-पर्य्यन्तमपि तत् तावत् सम्यक् न विनिश्चिनोमि न निर्णेतुं शक्नोमीत्यर्थः किमर्थमीदृशं साहसं कृतं तत्कथ्यतामिति तात्-पर्य्यम्॥ २६॥

तवेति। अत्रान्तःपुरे तव प्रवेशे विषये मदक्ष्णोः मम चक्षुषोः सुकृतान्यपि पुण्यान्यपि तावत् आपाततः, अन्योऽपि हेतुरस्तीति भावः। हेतुं कारणं मन्ये सम्भावयामि मम चक्षुषोः सुकृतबलात् त्वमत्र प्रविष्टोऽसीत्यर्थः। केचित्तु अपि-रेवार्थः ततश्च मदक्ष्णोरपि मम चक्षुषोः एवेत्यर्थः इति व्याचक्षते। कुत इत्याह। यत् यस्मात् तन्वा अङ्गेन जितः पुष्पधन्वा येन तथाभूतः न्यक्कृतमदन इत्यर्थः। त्वं रक्षिभटैः रक्षकयोधैः न लक्षितः अलक्षितः सन् नञर्थस्य नशब्दस्य सुप्सुपेति समासः। आभ्यां मदक्षिभ्यां पीतः असि अतितृष्णया अव-लोकितोऽसीत्यर्थः सुकृतानीति बहुवचनबलात् बहूनि सुकृ-तानि विना ईदृशान् रक्षिजनप्रतिबन्धान् अतिक्रम्य ईदृशरूप-राशिसाक्षात्कारो न घटते इति भावः॥ २७॥

यथेति। यथा ते तव आकृतिः मूर्त्तिः काचन कापि

**न मन्मथस्त्वं स हि नास्तिमूर्त्तिर्नवाश्विनेयः सहि नाद्वितीयः ।
चिह्नैः किमन्यैरथवा तवेयं श्रीरेव ताभ्यामधिका विशेषः॥२९**

अनि [illegible] नीत्यर्थः । यथा वा द्वारि नियु [illegible] ह् । द्वारादीनां चे सैजागमः । तेषाम् अन्धीक्रियन्ते अनयेति अन्धङ्करणी दृष्टिरोधिनीत्यर्थः आढ्यसुभगेत्यादिना करणार्थे ख्युन्प्रत्ययः । अरुर्द्विषदित्यादिना मुमागमः ख्युनन्तत्वात् ङीप् । शक्तिश्च सामर्थ्यमपि काचनेत्यनुषङ्गः अमानुषी शक्तिरित्यर्थः । तथा त्वं जिता काञ्चनी हरिद्रा याभिः हरिद्राजैत्रीभिरित्यर्थः । निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी इत्यमरः । समासान्तविधेरनित्यत्वात् नद्यृतश्चेति कवभावः । जितकाञ्चनाभिरिति पाठे जितकनकाभिरित्यर्थः । रुचीभिः प्रभाभिः कृदिकारादक्तिनो वा वक्तव्य इति ङीप् । रोचते इति रुचः दीप्यमानः राजसूयेत्यादिना कर्त्तरि क्यबन्तो निपातः । पीयूषम् अमृतं भुञ्जते इति पीयूषभुजः देवाः तेषां समाना नाभिर्मूलं यस्य स सनाभिः सगोत्र इत्यर्थः । ज्योतिः जनपदेत्यादिना समानशब्दस्य सभावः । असि । आकृत्या सामर्थ्येन रूपेण च त्वं कश्चिद्देव एव मया उत्प्रेक्ष्यसे इति भावः । अत्र पादत्रयवाक्यानां चतुर्थपादवाक्यस्य हेतुत्वेन कीर्त्तनात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तदुक्तं दर्पणे, हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति ॥ २८ ॥

इत्थमस्य देवत्वे निश्चिते तथा सुन्दरोऽयं मन्मथो वाश्विनेयो वेति संशयं निरस्यति नेति । त्वं मनो मथ्नातीति मन्मथः कामो न, हि यतः स मन्मथः नास्ति मूर्त्तिर्यस्य स नास्ति-

आलोकलक्ष्मीकृतलोक ! यस्त्वा मसूत पीयूषमयूखमेतम् ।
कः स्पर्द्धितुं धावति साधु साऽर्द्धमुदन्वता नन्वयमन्ववायः ३०

---

मूर्त्तिः अनङ्ग इत्यर्थः। सुबधिकारे अस्ति चौरादिवचनमिति बहुब्रीहौ न समासः। न वा त्वम् आश्विनेयः अश्विनीकुमारः, हि यस्मात् स न अद्वितीयः द्वितीयरहितः अश्विनीसुतौ द्वौ एव त्वन्तु अद्वितीय इति भावः। अथवा अन्यैः चिह्नैः अभिज्ञानैः मन्मथाश्विनेययोरिति भावः किम् ? न किमपि प्रयोजनमित्यर्थः ताभ्यां मन्मथाश्विनेयाभ्याम् अधिका अतिशायिनी श्रीरेव कान्तिरेव विशेषः व्यवच्छेदको धर्मः ततश्च मन्मथाश्विनीकुमाराभ्यामपि समधिकरमणीयाकृतिः कश्चित् देवकुमारः प्रतिभासीति भावः ॥ २८ ॥

आलोकेति। आलोकेन त्वत्कर्मकेण दर्शनेन उद्योतेन च आलोकौ दर्शनोद्योतौ इत्यमरः। अलक्ष्माः लक्ष्माः कृताः लक्ष्मीकृताः लोका जना जगन्ति च येन तत् सम्बुद्धौ अभूततद्भावे च्विप्रत्ययः। हे आलोकेन जनप्रीणन ! इत्यर्थः यः एतं त्वामिव पीयूषमयूखम् अमृतरश्मिं चन्द्रमित्यर्थः व्यस्तरूपकम्। असूत अजनयत् अतएव उदन्वता सागरेण। उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णव इत्यमरः। उदन्वानुदधिश्चेति निपातनात् साधुः। सार्द्धं साधु सम्यक् यथा तथा स्पर्द्धितुम् अहमपि चन्द्रजनकत्वात् भवता सदृश इति स्पर्द्धां कर्त्तुं धावति प्रवर्त्तते ननु भोः अयं अन्वकाय वंशः कः ? वंशोऽन्ववायः सन्तान इत्यमरः। यस्मिन् वंशे त्वमुत्पन्नः तस्य द्वितीयं चन्द्रं जनयतो युक्तमेव सागरेण सह स्पर्द्धनमिति भावः। को वंशोऽस्त्वत्कुल-त्वया जननेन तत्कथ्यतामिति तात्पर्य्यम् ॥ ३० ॥

भूयोऽपि बाला नलसुन्दरं तं मत्वाऽमरं रक्षिजनाक्षिबन्धात्।
आतिथ्यचाटून्यपदिश्य तत्स्थां श्रियं प्रियस्यास्तुत वस्तुतःसा॥३१
वाग्जन्मवैफल्यमसह्यशल्यं गुणाधिके वस्तुनि मौनिता चेत्।
खलत्वमल्पीयसि जल्पितेऽपि तदस्तु वन्दिभ्रमभूमितैव॥३२॥

---

अथ अस्याः तस्य पुंसः स्तुतिमाह, भूय इति। भूयः पुनरपि सा बाला मुग्धा दमयन्ती तं पुमांसं नल इव सुन्दरः तं रक्षिजनानां दौवारिकाणाम् अक्षिबन्धात् दृष्टिप्रतिरोधात् अमानुषकार्य्यकरणात् इति भावः। अमरं कञ्चित् देवं मत्वा अवधार्य्य आतिथ्यानि अतिथौ साधूनि अतिथे ण्यप्रत्ययः। चाटूनि प्रियवचनानि अपदिश्य व्याजीकृत्य अतिथिप्रयोज्यप्रियवचनव्याजेनेत्यर्थः तस्मिन् तिष्ठतीति तत्स्था तां तत्पुरुषनिष्ठां सुपस्थ इति कप्रत्ययः। प्रियस्य नलस्य श्रियं सौन्दर्य्यं वस्तुतः तत्त्वतः अस्तुत तुष्टाव स्तौतेर्लुङि तङ्। अत्र तत्स्थां प्रियस्य श्रियमिति असम्भवेन श्रियमिव श्रियमिति सादृश्याक्षेपात् निदर्शनालङ्कारः। नलशोभासादृश्यप्रतीतेर्नलशोभास्तुतावेव मननात् न परपुरुषगुणस्तुतिरूपदोषप्रसङ्ग इति बोध्यम्॥३१॥

स्तुतेः कारणमाह, वागिति। चेत् यदि गुणैः शीलसौन्दर्य्यादिभिः अधिके अतिशायिनि वस्तुनि विषये मौनिता तूष्णीम्भावः भवतीति शेषः। तदा असह्यं शल्यं दुःसहशल्यप्रायमित्यर्थः, वाग्जन्मनः वागिन्द्रियोत्पत्तेरित्यर्थः, वैफल्यं निष्फलत्वं स्यादिति शेषः। यदि गुणाधिकं वस्तु न स्तूयते तदा वागिन्द्रियं वृथा मूकत्वमेव वरमिति भावः। ननु तर्हि यत्किञ्चित् वर्ण्यतामित्यत्राह खलत्वमिति। अल्पीयसि अत्यल्पे जल्पिते कथितेऽपि यत्किञ्चित् स्तुतेऽपीत्यर्थः, भावे

कन्दर्प एवेदमविन्दत त्वां पुण्येन मन्ये पुनरन्यजन्म।
चण्डीशचण्डाक्षिहुताशकुण्डे जुहाव यन्मन्दिरमिन्द्रियाणाम् ३२

क्तप्रत्ययः। खलत्वं दुर्जनत्वं प्रकाशते इति शेषः। खला हि कथञ्चित् गुणाधिकं स्वल्पमात्रं स्तुवन्ति सर्वानस्य गुणान् न ख्यापयन्तीति भावः। तत्तस्मात् वन्दिनः स्तुतिपाठकस्य। वन्दिनस्तुतिपाठका इत्यमरः। यो भ्रमः स्तुतिपाठकोऽयमिति लोकानां, भ्रान्तिः अविवेकबुद्धिरिति यावत्। अकथनेऽल्पकथने च प्रागुक्तदोषाज्ञानजनितेति भावः। तस्य भूमिता विषयता एव अस्तु भवतु। वन्दिनां वाग्वैफल्यं खलत्वदोषश्च नास्ति केवलमधिकवर्णनात् वावदूकतैव प्रकाशते उक्तदोषद्वयापेक्षया तदपि वरमिति मम स दोषो मर्षयितव्य इति तात्पर्य्यम्॥ ३२॥

कन्दर्प इति। कन्दर्प एव काम एव पुण्येन सुकृतेन इदं त्वां त्वद्रूपम् अन्यजन्म जननान्तरं पुनरविन्दत लेभे इति मन्ये पुण्यबलात् पुनः कन्दर्प एव त्वत्स्वरूपेणोत्पन्न इत्यर्थः इत्युत्प्रेक्षे इत्यर्थः। किं तत्पुण्यं येन त्वद्रूपेण पुनर्जननमित्यत्राह यत् यस्मात् चण्डीशस्य गौरीपतेर्हरस्य चण्डं दारुणम् अक्षि तृतीय नयनमेव हुताशकुण्डम् अग्निकुण्डं तस्मिन् इन्द्रियाणां मन्दिरं गृहं शरीरमित्यर्थः जुहाव हवनीयत्वेन प्रक्षिप्तवान्। यथा कोऽपि केनापि कामनया अग्निकुण्डे शरीरं विसृज्य उत्तमां गतिं लभते तथा कामोऽपि हरनयनाग्निकुण्डे शरीरविसर्जनजनितेन सुकृतेन त्वयि एव जन्म लब्धवानिति निष्कर्षः। अत्र समेन कार्य्येण प्रस्तुते कन्दर्पे अप्रकृतस्य अग्निकुण्डपातिनो व्यवहारसमारोपात् समासोक्तिरलङ्कारः। तथाच दर्पणः,

शोभायशोभिर्जितशैवशैलं करोषि लज्जागुरुमौलिमैलम्।
दस्रौ हठात् श्रीहरणादुदस्रौ कन्दर्पमप्युज्झितरूपदर्पम्॥३४॥

---

समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति॥ ३३॥

शोभेति। शोभायशोभिः सौन्दर्य्यकीर्त्तिभिः जितः न्यक्कृतः शैवशैलः हरगिरिः कैलास इत्यर्थः येन तं कैलासश्रियमतिशयानमित्यर्थः, इलायाः अपत्यं पुमान् ऐलः पुरूरवाः तं तस्येदमित्यण्प्रत्यये पर्य्यवसानात् विशेषलाभः। हठात् प्रसह्य श्रीहरणात् सौन्दर्य्यहरणाद्धेतोः हठश्रीहरणादिति पाठान्तरं लज्जया गुरुः दुर्वह इति यावत् अवनत इति भावः। मौलिः शिरो यस्य तं करोषि। यस्य प्रतिष्ठावतः श्रीर्बलादन्येन गृह्यते स नतशिरा एव भवति पुरूरवाश्च सौन्दर्य्यकीर्त्त्या लब्धप्रतिष्ठः स्वापेच्चया त्वां निरतिशयरूपशालिनं दृष्ट्वा लज्जया मस्तकमवनमयतीति निष्कर्षः। दस्रौ अश्विनीकुमारौ अत्रापि शोभायशोभिर्जितशैवशैलमिति वचनविपर्य्यासेन जितशैवशैलाविति विशेषणं योज्यम्। हठात् श्रीहरणादित्यपि योज्यम् उदस्रौ उद्गतवाष्पौ करोषि त्वाम् अधिकरूपशालिनं दृष्ट्वा अतिदुःखेन रुदित इति भावः। तथा कन्दर्पमपि उज्झितः परित्यक्तः रूपदर्पः सुन्दरोऽहं मत्तः परः सुन्दरो नास्तीत्येवमहङ्कारः येन तथाभूतम् अत्रापि पूर्ववत् शोभायशोभिर्जित शैवशैलमिति हठश्रीहरणादिति च योज्यम्। करोषि। भवन्तं स्वतोऽतिशयितरूपं दृष्ट्वा कामः सौन्दर्य्यगर्वं परित्यक्तवानिति भावः। शरीरसौन्दर्य्येण सौन्दर्य्ययशोभिः सुविख्यातान् एतान् अतिशय्य वर्त्तसे इति निष्कर्षः॥ ३४॥

अवैमि हंसावलयो वलक्षास्त्वत्कान्तिकीर्त्तेश्चपलाः पुलाकाः।
उड्डीय युक्तं पतिताः स्रवन्तीवेशन्तपूरं परितः प्लवन्ते ॥२५॥
भवत्पदाङ्गुष्ठमपि श्रिता श्रीर्ध्रुवं न लब्धा कुसुमायुधेन।
जेतुस्त्वमेतत् खलु चिह्नमस्मिन्नर्द्धेन्दुरास्ते नखकैतवेन॥ २६॥

---

अवैमीति। वलक्षाः धवलाः। वलक्षो धवलोऽर्जुन इत्यमरः। हंसावलयः राजहंसश्रेणयः तव कान्तिकीर्त्तेः सौन्दर्य्यशोभायशसः चपलाः चलिताः तव कान्तियशो दृष्ट्वा लज्जया अपसृता इति भावः। पुलाकाः तुच्छधान्यानि। स्यात् पुलाकस्तुच्छधान्ये इत्यमरः। इति अवैमि मन्ये अतएव उड्डीय उत्पत्य स्रवन्तीनां निम्नगानां वेशन्तानां पल्वलानाञ्च। स्रवन्ती निम्नगापगेति वेशन्तः पल्वलञ्चाल्पसर इति चामरः। पूरः प्रवाहः तं परितः समन्ततः अभितः परित इत्यादिना द्वितीया। पतिताः सत्यः प्लवन्ते तरन्ति लघुत्वात् भासन्ते इत्यर्थः। युक्तमुचितमेतत् लघूनां जलोपरि प्लवनमिति शेषः। जगति त्वमेव अद्वितीयः सुन्दर इति तात्पर्य्यम्। हंसावलयो वलक्षा इत्यत्र हंसावलयोऽपि काला इति पाठे काला मलिना इत्यर्थः ॥२५॥

भवदिति। कुसुमायुधेन कामेन भवतः तव पदाङ्गुष्ठम् अपि श्रिता आश्रिता श्रीः तव पादाङ्गुष्ठकान्तिरपि इत्यर्थः न लब्धा न प्राप्ता ध्रुवमिति मन्ये इत्यर्थः। सर्वा कायकान्तिरिति किं वक्तव्यमिति भावः। तथाहि तं कामं जेतुः स्मरारेः इत्यर्थः। तृन्नन्तत्वात् न लोकेत्यादिना षष्ठीप्रतिषेधः। जेतुः तमेतदित्यत्र तज्जेतुरेतदिति समस्तपाठे तृजन्तेन षष्ठीसमासः। साधुश्चायमेव पाठः तृन्नन्तस्य श्चालोपस्य अनुपयोगात्। स्मर जेतुरिति देशान्तरपाठस्त्वयुक्त एव प्रकृतार्थस्य सर्वगाम्भोपा-

राजा द्विजानामनुमासभिन्नः पूर्णां तनूकृत्य तनुं तपोभिः ।
कुहूषु दृश्येतरतां किमेत्य सायुज्यमाप्नोति भवन्मुखस्य ? ॥ ३७ ॥

देयस्य स्वशब्दोपादाने पौनरुक्त्यदोषादिति । एतत् इति हस्तेन निर्दिश्य प्रदर्शयति इति भावः । अर्द्धेन्दुरूपम् अर्द्धचन्द्राकृतिचिह्नम् अस्मिन् अङ्गुष्ठे नखकैतवेन आस्ते खलु तिष्ठति किम् ? इत्युत्प्रेक्षा । स्वजेत्रचिह्नं नखरूपमर्द्धचन्द्रं दृष्ट्वा भयेन तन्निष्ठश्रियं ग्रहीतुं नाशकत् यो योऽर्द्धचन्द्राङ्कितः स स शिव इत्यनुमितिरेव अत्र वीजमिति तात्पर्य्यम् । नखकैतवेनेत्यत्र नखवेशधारीति पाठे नखरूपधरमिति चिह्नमित्यस्य विशेषणम् अर्थस्तु स एव । अत्र प्रकृतनखरूपार्थप्रतिषेधेन तदन्यस्यार्पणादपह्नुतिरिति ॥ ३६ ॥

राजेति । मासि मासि अनुमासं तस्मिन् भिन्नः पुनः पुनरुत्पन्नत्वात् भेदं गत इत्यर्थः द्विजानां राजा चन्द्रः ब्राह्मणश्रेष्ठश्च द्विजराजः शशधरो नक्षत्रेशः क्षपाकर इति दन्तविप्राण्डजा द्विजा इति चामरः । पूर्णां पौर्णमास्यामुदितामिति भावः । तनूं शरीरं तपोभिः चान्द्रायणादिभिर्व्रतैरित्यर्थः । प्रत्यहं देवेभ्यः एकैककलासमर्पणरूपैश्च । पर्य्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेरिति श्लोकप्रामाण्यादिति भावः । तनूकृत्य कृशीकृत्य कुहूषु अमावास्यासु सा नष्टेन्दुकला कुहूरित्यमरः । दृश्येतरताम् अदृश्यत्वम् एत्य प्राप्य भवतो मुखस्य सायुज्यमैक्यम् आप्नोति किं ? लभते किम् ? इत्युत्प्रेक्षा यथा कोऽपि ब्राह्मणश्रेष्ठस्तीव्रेण तपसा ब्रह्मसायुज्यं लभते तथा चन्द्रोऽपि तपोबलादेव तव मुखसायुज्यं प्राप्नोति अन्यथा कथं कुहूषु न दृश्यते इति भावः । ततश्च कुहूष्वेव तव कृष्णरूपं धत्ते नान्यतिथिष्विति तस्मात् तव मुखस्य महत्त्वा-

कृत्वा दृशौ ते बहुवर्णचित्रे किं कृष्णसारस्य तयोर्मृगस्य।
अदूरजाग्रद्विदरप्रणालीरेखामयच्छद्विधिरर्द्धचन्द्रम् ॥३८॥
मुग्धः स मोहात् सुभगात् न देहाद्दङ्गवद्भ्रूरचनाय चापम्।
भ्रूभङ्गजेयस्तव यन्मनोभूरनेन रूपेण यदातदाऽभूत् ॥ ३९ ॥

---

तिशय इति तात्पर्य्यम्। अत्र समेन कार्य्येण प्रकृते चन्द्रे अप्रकृतस्य ब्राह्मणस्य व्यवहारसमारोपात् समासोक्तिरलङ्कारः॥३७॥

कृत्वेति। विधिः विधाता ते तव दृशौ नेत्रे बहुभिः वर्णैः शुक्लकृष्णरक्तैः चित्रे चमत्कारिणी कृत्वा सृष्ट्वा कृष्णः सारः शवलः कृष्णसारः तस्य तदाख्यस्य मृगस्य तयोः दृशोः अदूरे समीपे जाग्रती स्फुरन्ती या विदरप्रणाली स्फुटनमार्गः सैव रेखा। विदरः स्फुटनं भिदेत्यमरः। अर्द्धचन्द्राकृतिरिति भावः ताम् अर्द्धचन्द्रं गलहस्तिकाम् अयच्छत् किम्? अर्द्धचन्द्रस्तु चन्द्रके गलहस्ते बाणभेदेऽपीति विश्वः। तव नयनयोः असमकक्षत्वेऽपि तत्सादृश्यकाङ्क्षिणोः तयोः क्रोधात् नेत्राधोवर्त्तिप्रणालीरेखाच्छलेन अर्द्धचन्द्रं दत्तवानिवेत्युत्प्रेक्षा। कृष्णसारचक्षुषोरपि तव चक्षुषी मनोहारिणी इति तात्पर्य्यम्। अत्र प्रकृतरेखापह्नवेन अप्रकृतार्द्धचन्द्रस्थापनादपह्नुतिः तया च समुज्जीवितोत्प्रेक्षालङ्कारः॥ ३८ ॥

मुग्ध इति। स मनोभूः कामः मोहात् अज्ञानात् अविवेकादित्यर्थः मुग्धः मुग्धशब्दवाच्यः मूर्ख इत्यर्थः सुभगात् सुन्दरात् देहात् न मुग्धः न सुन्दरः। मुग्धः सुन्दरमूढयोरिति विश्वः। यत् यस्मात् स मनोभूः भवती भ्रुवो रचनाय निर्माणाय चापं स्वं धनुः ददत् ब्रह्मणे उपादानत्वेनेति शेषः। प्रयच्छन् सन् अनेन इति हस्तेन निर्देशः। दृश्यमानेन रूपेण

मृगस्य नेत्रद्वितयं त्वदास्ये विधौ विधुत्वानुमितस्य दृश्यम्।
तस्यैव च त्वत्कचपाशवेशः पुच्छः स्फुरच्चामरगुच्छ एषः ॥४०॥
आस्तामनङ्गीकरणाद्भवेन दृश्यः स्मरो नेति पुराणवाणी।
तवैव देहं श्रितया श्रियेति नवस्तु वस्तु प्रतिभाति वादः ॥४१॥

---

सौन्दर्य्येण हेतुना यदा तदा सर्वस्मिन्नेव काले इत्यर्थः भ्रुवो-स्तच्चापनिर्मितयोरेव भङ्गेन कौटिल्येन जेयः जेतुं शक्योऽभूत्। कामः त्वां सायुधोऽपि जेतुं न शक्नोति साम्प्रतन्तु त्वद्भ्रू-रचनार्थं चापार्पणात् निरायुधः सुतरां जेतुमनर्ह एवेति भावः। तव भ्रुवौ कामधनुराकृती कामोद्दीपिन्यौ चेति भावः ॥ ३९ ॥

मृगस्येति। तव आस्यं मुखं तस्मिन् त्वदास्ये तव वदने एव विधौ चन्द्रे विधुत्वेन चन्द्रत्वेन हेतुना अनुमितस्य यो विधुः स मृगवान् चन्द्रत्वादित्यनुमानविषयीभूतस्य न तु प्रत्यक्षदृश्यस्येति भावः। मृगस्य नेत्रद्वितयं नयनयुगलं दृश्यं दृश्यते इत्यर्थः, किञ्चेति चार्थः तव कचपाशः केशपाश एव वेशो यस्य तथोक्तः। एषः प्रत्यक्षदृश्यः स्फुरन् विलसन् चामर-गुच्छो यस्मिन् तथाभूतः पुच्छः बालधिः। पुच्छे इति पाठे पुच्छे बालधौ एष स्फुरन् चामरगुच्छ इत्यर्थः। अत्र प्रकृत-केशपाशप्रतिषेधेन अप्रकृतचामरगुच्छस्थापनादपह्नुतिस्तदुत्था-पिता च इयमुत्प्रेक्षेति सङ्करः। तव मुखं चन्द्रः नेत्रयुगलं मृगनेत्रतुल्यं केशपाशः चामरसदृश इति त्रितयं वस्तु व्यज्यते। इत्यलङ्कारेण वस्तुध्वनिः ॥ ४० ॥

आस्तामिति। भवेन हरेण अनङ्गीकरणात् अङ्गशून्यता-प्रापणात् भस्मीकरणादिति भावः। स्मरः कामो दृश्यो न प्रत्यक्षगोचरो न इति पुराणवाणी पुरातनसंवादः आस्तां

त्वया जगत्युञ्छितकान्तिसारे यदिन्दुनाऽशीलि शिलोञ्छवृत्तिः।
आरोपो तन्माणवकोऽपि मौलौ स यज्वराज्येऽपि महेश्वरेण॥४२

तिष्ठतु ऐतिह्यमात्रतया असत्यं तादृति भावः। कुत इत्याह त्वदीति। तव एव देहे श्रितया श्रिया सौन्दर्य्येण शोभया वा न दृश्यः पराजितो लज्जया दर्शनाविषयीभूत इत्यर्थः यद्वा तव देहश्रिया हेतुना न दृश्यः न सुन्दरः त्वद्देहश्रीसदृशशोराहित्यादिति भावः। दृश्यं दर्शनयोग्ये स्यात् सुन्दरे चाभिधेयवत् इति। वत्सः। नवो नूतनो वादस्तु संवाद एव तुरेवार्थः वस्तु परमार्थः प्रतिभाति शोभते। अस्य प्रत्यक्षागोचरतायाम् असुन्दरतया पराजितत्वमेव निमित्तमुत्प्रेक्ष्यते इत्युत्प्रेक्षालङ्कारः तेन कामादपि सुन्दरोऽसीति वस्तु व्यज्यते। इत्यलङ्कारेण वस्तुध्वनिः॥ ४१॥

त्वयेति। त्वया जगति त्रिभुवने उञ्छितः गृहीतः कान्तिसारः शोभाश्रेष्ठांशः यस्मात् यस्य वा तथाभूते सति इन्दुना चन्द्रेण यत् शिलोञ्छो एव वृत्तिः जीवनोपायः शिलोञ्छवृत्तिः उञ्छो धान्यकणादानं कणिकाद्यर्जनं शिलमिति यादवः। एकैकधान्यादिगुड़कोच्चयनमुञ्छः। मञ्जर्य्यात्मकानेकधान्योच्चयं शिलम् इति मनुटीकायां कुल्लूकभट्टः। अशीलि अवलम्बिता शीलयतेः कर्मणि लुङ्। तत्तस्मात् कारणात् मनोः अपत्यं पुमान् माणवः तस्यापत्यमित्यण्प्रत्यये णत्वम् अपत्ये कुत्सिते मूढमनोः औत्सर्गिकः स्मृतः। नकारस्य तु मूर्द्धन्यस्तेन सिध्यति माणव इति वचनात् अल्पो माणवः माणवकः। कलारूपत्वात् बालोऽपि स इन्दुः महेश्वरेण महादेवेन महाराजेन च मौलौ शिरसि यज्वनां याज्ञिकानां द्विजानाम् इति भावः। राज्ये आधिपत्येऽपि आरोपि आरोपितः स्थापित इत्यर्थः। इन्दुः

आदेहदाहं कुसुमायुधस्य विधाय सौन्दर्य्यकथादरिद्रम्।
त्वदङ्गशिल्पात् पुनरीश्वरेण चिरेण जाने जगदन्वकम्पि ॥४३॥
मही कृतार्था यदि मानवोऽसि जितं दिवा यद्यमरेषु कोऽपि।
कुलं त्वयालङ्कृतमौरगञ्चेन्नाधोऽपि कस्योपरि नागलोकः? ॥४४

---

जगतां कान्तिसारं प्रायेण त्वया गृहीतं दृष्ट्वा स्वल्पया कान्त्या कलामात्रविशेषः सन् तपसा देवदेवं प्रसादितवान् तेन च प्रसन्नेन कृपया स्वयं शिरसि धृतः द्विजराजश्च कृतः अथच महाराजेन उपनीतो गुरुकुले कृतब्रह्मचर्य्यो माणवकः शिरसा पूज्यते द्विजश्रेष्ठतया सम्मान्यते च। तथाचोक्तं मनुना, ब्राह्मणानां गुरुकुलाद्विप्राणां पूजको भवेत्। नृपाणामक्षयो ह्येष विधिर्ब्राह्मो विधीयते॥ इति निष्कर्षः। त्रिभुवनाह्लादकश्चन्द्रोऽपि तव लावण्यस्य लेशभागीति भावः। उत्प्रेक्षालङ्कारः ॥ ४२ ॥

आदेहेति। ईश्वरेण हरेण कुसुमायुधस्य कामस्य आदेहदाहं देहदाहात् आरभ्य मर्य्यादायामव्ययीभावः। जगत् भुवनं सौन्दर्य्यस्य कथायां दरिद्रं सौन्दर्य्यकथाशून्यमित्यर्थः। विधाय कृत्वा चिरेण बहोः कालात् परमित्यर्थः, तव अङ्गस्य शिल्पात् रचनात् पुनः अन्वकम्पि अनुकम्पितम् इति जाने मन्ये इत्युत्प्रेक्षा। पुरा कामस्य देहदाहात् जगति सौन्दर्य्यवार्त्तापि नासीत् अधुना त्वां सृष्टवता ईश्वरेण कृपया तद्वार्त्ता पुनरुज्जीवितेति द्वितीयः कामोऽसीति वस्तु उत्प्रेक्षया व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ४३ ॥

महीति। यदि त्वं मनोः अपत्यं पुमान् मानवः कश्चित् मनुष्य इत्यर्थः असि भवसि तस्यापत्यमित्यण्प्रत्ययः। तदा

सेयं न धत्तेऽनुपपत्तिमुच्चैर्मच्चित्तवृत्तिस्त्वयि चिन्त्यमाने।
ममौ स भद्रं चुलुके समुद्र स्त्वयात्तगाम्भीर्य्यमहत्त्वमुद्रः॥४५॥

---

मही पृथ्वी कृतार्था धन्या भवतीति शेषः। त्वदधिष्ठानेनेति भावः। यद्वा मह्यते पूज्यते इति मही कृतः सत्योऽर्थो यस्याः सा परमार्थत एव सार्थकनामा भवतीत्यर्थः। यदि अमरेषु देवेषु मध्ये कोऽपि असि कश्चन देवो भवसि तदा दिवा स्वर्गेण सुरलोको द्यो दिवौ द्वे स्त्रियौ इत्यमरः। जितं सर्वोत्कर्षेण स्थितमित्यर्थः नपुंसके भावे क्तः। इन्द्रादिदेवाधिष्ठितापि द्यौः तेषां त्वादृशसौन्दर्य्यभावात् त्वदधिष्ठितेन अन्येन भुवनेन पराजीयत, त्वदधिष्ठाने तु स्वस्य अन्यभुवनविजयित्वम् अनायासलभ्यमिति भावः। त्वया उरगाणामिदम् औरगं कुलं नागकुलमित्यर्थः। अलङ्कृतं चेत् कश्चन नागोऽसि यदीत्यर्थः, तदा अधोऽपि सर्वाधःस्थितोऽपीत्यर्थः, नागलोकः पाताललोकः कस्य लोकस्य उपरि न? सर्वस्यापि लोकस्य उपरि वर्त्तते इत्यर्थः। उपर्य्युपरिष्टादिति निपातः। त्वं देवमानवोरगान् सर्वानेव सौन्दर्य्येणातिशेषे इति भावः॥४४

सेयमिति। त्वयि चिन्त्यमाने स्वरूपतो गुणतश्च महत्त्वेन गाम्भीर्य्येण चेति भावः। विचार्य्यमाणे त्वमेव महान् अतिगम्भीरश्चेति विभाव्यमाने इति यावत् सति सेयं या कथमगस्त्यकरसम्पुटे ईदृक् महान् अतिगभीरोऽर्णवः परिमाति स्मेत्येवं विभावयन्तीति भावः। मम चित्तवृत्तिः मनोवृत्तिः इदानीम् उच्चैर्महतीम् अनुपपत्तिम् असम्भवबुद्धिं न धत्ते न धारयति कुत इत्याह ममाविति। स समुद्रः त्वया आत्ता गृहीता हृता इत्यर्थः, गाम्भीर्य्यमहत्त्वयोः गभीरत्वविशालत्वयोः मुद्रा मर्य्यादा यस्य तथाभूतः चुलुके अगस्त्यकरसम्पुटे

संसारसिन्धावनुविम्बमत्र जागर्त्ति जाने तव वैरसेनिः ।
विम्बानुविम्बौ हि विहाय धातुर्न जातु दृष्टातिसरूपसृष्टिः॥४६
इयत्कृतं केन महीजगत्याम् अहो महीयः सुकृतं जनेन ।
पादौ यमुद्दिश्य तवापि पद्मारजःसु पद्मस्रजमारभेते ॥४७॥

---

भद्रं सम्यक् यथा तथा ममौ माति स्म । त्वया कृतगाम्भीर्य्य-महत्त्वस्य तस्य अतीवक्षुद्रत्वात् मुनिचुलुके परिमाणम् अयुक्त-तया न प्रतिभातीति भावः । समुद्रादपि तव गाम्भीर्य्यं मह-त्त्वञ्च अधिकमिति तात्पर्य्यम् ॥ ४५ ॥

संसारेति । अत्र संसारसिन्धौ संसारसागरे संसारस्य निरवधित्वात् प्रतिविम्बधारणयोग्यत्वाच्च सागरौपम्यम् । वीर-सेनस्य अपत्यं पुमान् वैरसेनिः नलः तव अनुविम्बं प्रतिविम्बं जागर्त्ति राजते इति जाने मन्ये । हि यतः विम्बश्च अनुविम्बश्च तौ । यस्य प्रतिविम्बं पतति तत् विम्बं प्रतिविम्बञ्च अनुविम्बश्च तौ विहाय त्यक्त्वा धातुः स्रष्टुर्ब्रह्मणः अतिसरूपयोः अतिशयेन समानरूपयोः द्वयोरिति भावः । सृष्टिः निर्माणं जातु कदा-चित् न दृष्टा । समरूपं वस्तुद्वयं विधात्रा न सृज्यते तत् नलस्य तव च रूपसाम्यात् एकं वस्तु त्वल्लक्षणं विम्बं नलरूपं वस्तु प्रतिविम्बमेव भवतीत्यर्थः । प्रतिविम्बस्य च छायारूपत्वेन अवास्तविकत्वात् नल एव त्वमिति प्रतिभातीति तात्पर्य्यम् । अत्र जाने इति उत्प्रेक्षया उक्ततात्पर्य्यार्थरूपं वस्तु व्यज्यते इति अलङ्कारेण वस्तुध्वनिः ॥ ४६ ॥

इयदिति । महीजगत्यां पृथिवीतले केन जनेन इयत् एतत् परिमाणं महीयो महत्तरं अति महदित्यर्थः सुकृतं पुण्यं कृतम् अहो आश्चर्य्यं यं कृतसुकृतमित्यर्थः, जनम् उद्दिश्य

ब्रवीति मे किं किमियं न जाने सन्देहदोलामवलम्ब्य संवित् ।
कस्यापि धन्यस्य गृहातिथिस्त्व मलीकसम्भावनयाथवालम् ४८
प्राप्तैव तावत् तव रूपसृष्टं निपीय दृष्टिर्जनुषः फलं मे ।
अपि श्रुती नामृतमाद्रियेतां तयोः प्रसादीकुरुषे गिरश्चेत् ४९

---

तवापि ईदृक् सुकोमलाङ्गस्य अपीति भावः। पादौ चरणौ पथ्यारजःसु अध्वधूलिषु सरणिः पद्धतिः पथ्येमरः। पद्मस्रजं कमलमालाम् आरभेते रचयतः पादयोः कमलसाम्यात् पद्म-चिह्नितत्वात् वेति भावः। यदर्थं त्वया पादचारेणागमनप्रयासः कृतः सोऽतिधन्य एव वक्तव्य इति तात्पर्य्यम् ॥ ४७ ॥

ब्रवीतीति। इयं मे मम संवित् अन्तःकरणवृत्तिरित्यर्थः, सन्देह एव दोला तां संशयदोलिकामित्यर्थः। अवलम्ब्य आरुह्य किं किं ब्रवीति नल एवायम् अन्यो वेत्येवं रूपं तर्कयतीत्यर्थः, न जाने नैककोटिं निश्चिनोमीत्यर्थः। अथवा अलीकसम्भावनया मिथ्यातर्केण अलं तत्साध्यं किमपि नास्तीत्यर्थः, अतएव गम्यमानसाधनत्वापेक्षया करणत्वात् तृतीयेति न्यासद्योतकारः यद्वा अलीकसम्भावनया अलं किमपि प्रयोजनं नास्तीत्यर्थः, अलमित्यव्यययोगे तृतीया। त्वं कस्यापि धन्यस्य पुण्यवतः गृहातिथिः आतिथ्यस्वीकारेण गृहपवित्रकारी भवसि इति शेषः। अथवा न जाने इत्यत्र योज्यं ततश्च कस्यापि गृहातिथिर्भविष्यसीति न जाने न निश्चिनोमीत्यर्थः ॥ ४८ ॥

प्राप्तेति। मे मम दृष्टिः तव रूपेण सौन्दर्य्येण त्वद्दर्शनेन इति भावः। सृष्टं जनितम् अमृतमिति शेषः। यद्वा रूपस्य सृष्टं सृष्टिं भावे क्तः विधातृसृष्टं सौन्दर्य्यमिति यावत्। निपीय

**इत्थं मधूत्थं रसमुद्गिरन्ती तदोष्ठबन्धूकधनुर्विसृष्टा।**
**कर्णात् प्रसूनाशुगपञ्चबाणी वाणीमिषेणास्य मनो विवेश॥५०**

---

सतृष्णं निरीक्ष्येत्यर्थः, जनुषः जन्मनः जनुर्जननजन्मानीत्यमरः। फलं साफल्यमित्यर्थः, प्राप्तैव त्वां विलोक्य चक्षुषोस्तृप्तिः केवलं जातेति भावः। श्रुती अपि श्रवणेन्द्रिये अपि अमृतं सुधां न आद्रियेतां न सादरं पिबेतां चेद् यदि तयोः श्रुत्योः गिरं वचनं प्रसादीकुरुषे यदि प्रसन्नतया किमपि वचनं ब्रवीषि तदा अमृतास्वादतृप्तेः अधिकां तृप्तिं मम श्रुती लभेयातामित्यर्थः सर्वथा प्रश्नोत्तरदानेन मामनुगृह्णाणेति तात्पर्य्यम्॥ ४९॥

इत्थं भैम्या वचनमाकर्णयतो नलस्य अतितमां कामावेशः समजनीत्याह इत्थमिति। इत्थम् उक्तरूपेण मधूत्थं मधुन उत्तिष्ठति इति मधूत्थः तम् आतश्चोपसर्ग इति कप्रत्ययः। रसं मधुसदृशमास्वादमित्यर्थः उद्गिरन्ती वर्षन्ती इत्यर्थः तस्या भैम्या ओष्ठ एव बन्धूकं बन्धुजीवाख्यकुसुमम्। बन्धूको बन्धुजीवक इत्यमरः। तदेव धनुः कार्मुकं कामस्य पुष्पचापत्वादिति भावः। तेन तस्माद्वा विसृष्टा प्रयुक्ता प्रसूनाशुगस्य पुष्पशरस्य कामस्य पञ्चानां बाणानां समाहारः पञ्चबाणी तद्धितार्थेत्यादिना समाहारे द्विगुः। अकारान्तोत्तरपदत्वात् स्त्रियां द्विगोरिति ङीप्। वाणीमिषेण वचनव्याजेन अस्य नलस्य कर्णात् कर्णं प्रविश्येत्यर्थः ल्यब्लोपे पञ्चमी। मनो हृदयं विवेश प्रविष्टवती। नेयं भैम्या वाणी परन्तु कामस्य पञ्चबाणी नलस्य कर्णरन्ध्रेण हृदयं प्रविश्य व्यथयामासेति भावः। दमयन्तीवचनश्रवणेन तद्वचनार्थचिन्तनेन च नलो नितरां कामार्त्तहृदय आसीदिति तात्पर्य्यम्॥ ५०॥

अमज्जदामज्जमसौ सुधासु प्रियं प्रियाया वदनात् निपीय।
द्विषन्मुखेऽपि स्वदते स्तुतिर्या तन्मिष्टता नेष्टमुखे प्रमेया ॥५१॥
पौरस्त्यशैलं जनतोपनीतां गृह्णन् यथाहर्पतिरर्घ्यपूजाम्।
तथातिथेयीमथ सम्मतीच्छन्नस्या वयस्यासनमाससाद ॥५२॥

अतितमामस्य हर्षो जातस्तेत्याह अमज्जदिति। असौ नलः प्रियाया दमयन्त्याः वदनात् प्रियं प्रीतिकरं वचनं स्तुतिवाक्यमित्यर्थः। निपीय सादरं श्रुत्वेत्यर्थः सुधासु अमृतेषु आमज्जं मज्जानं धातुमभिव्याप्येत्यर्थः, अभिविधावव्ययीभावः। अनश्चेति समासान्तष्टच्। आकण्ठमिति पाठे आकण्ठं कण्ठपर्य्यन्तम् अमज्जत् मग्नो बभूव अमृतास्वादसुखमनुबभूवेति यावत्। तथाहि द्विषतः शत्रोः मुखेऽपि वर्त्तमानेति शेषः। या स्तुतिः स्वदते रोचते प्रीतिकरी भवति इत्यर्थः। तस्याः स्तुतेः मिष्टता मधुरता इष्टमुखे प्रियजनवदने न प्रमेया प्रमातुं नैव शक्येत्यर्थः। अपि तु बहुलैव भवतीति भावः। शत्रवः प्रायेण निन्दन्त्येव न खलु कदाचित् स्तुवन्ति यदि कथञ्चित् स्तुवन्ति तत्तु न सम्यक् प्रियजनस्तु यथायथमतिक्रम्य अतिशयेन प्रियगुणान् कीर्त्तयन्ति यदा शत्रुकृतस्तुतिः अल्पापि सुखायते तदा प्रियजनकृतस्तुतिः अतिमहती कीदृक् सुखायते तन्न वर्णयितुं शक्यते इति तात्पर्य्यम्। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥५१॥

अथ भैमीदत्तं निजासनं परित्यज्य तत्सख्या आसने नलस्य उपवेशनमाह पौरस्त्येति। अथानन्तरं नलः जनानां समूह जनता ग्रामजनबन्धुसहायेभ्यस्तल्। तया उपनीतां समर्पिताम्

अयोधि तद्धैर्य्यमनोभवाभ्यां तामेव भूमीमवलम्ब्य भैमीम्।
आह स्म यत्र स्मरचापमन्तश्छिन्नं भ्रुवौ तज्जयभङ्गवार्त्ताम्॥५३

अर्घ्यपूजाम् अर्घ्यार्थं जलम् अर्घ्यं पादार्घाभ्यां चेति यत्प्रत्ययः। तदेव पूजा तां गृह्णन् स्वीकुर्वन् अह्नां पतिः अहर्पतिः सूर्य्यः अहरादिना पत्यादिषु परख्यानमिति रेफादेशः। अह्नः पतिरिति पाठान्तरम्। पुरो भवः पौरस्त्यः दक्षिणादिभ्यश्चेति त्यन्प्रत्ययः। तं शैलम् उदयाचलमित्यर्थः यथा आसीदति इति शेषः। तथा अतिथिषु साध्वी आतिथेयी तां पूजामिति शेषः। अतिथि सत्कारमित्यर्थः पथ्यतिथिवसतिस्वपतेर्ढक्प्रत्ययः। सम्प्रति इच्छन् प्रतिगृह्णन् तस्या भैम्याः वयसा तुल्या वयस्या सखी नौवयोधर्मेत्यादिना यत्प्रयः। तस्याः आसनम् आससाद जग्राह न तु भैम्याः, स्वस्य प्रेष्यावस्थया नीचत्वाभिमानात् न हि प्रेष्यः प्रभोरासनमर्हतीति भावः। उपमालङ्कारः॥ ५२॥

तदवस्थायां जातमपि मदनविकारं धैर्य्येण नलो निवारयति स्मेत्याह अयोधीति। तस्य नलस्य धैर्य्यं धीरत्वं मनोभवः कामः ताभ्यां तामेव भैमीं भूमीं रणक्षेत्रम् अवलम्ब्य प्राप्य अयोधि युद्धं कृतं कदाचित् धैर्य्येण कामो जितः कदाचिद्वा कामेन धैर्य्यं निरस्तम् इत्यङ्कते यत्र भैमीलक्षणायां रणभूमौ छिन्नं विच्छेदवदित्यर्थः, भ्रुवौ भैम्याः इति शेषः। स्मरचापं दमयन्तीभ्रूयुगललक्षणं कामधनुः कर्त्तृ तयोर्धैर्य्यमनोभवयोः जयभङ्गौ जयपराजयौ तयोर्वार्त्तां ताम् आह स्म सूचयामास। नलधैर्य्यस्य जयं कन्दर्पस्य पराजयं कथयामास इति भावः। यस्य धनुश्छिन्नं स स्वतएव निरायुधत्वात् पराजित एव भवतीति भावः। नलो धैर्य्येण तात्कालिकं मदनविकारं संवृणोति स्मेति तात्पर्य्यम्॥ ५३॥

अथ स्मराज्ञामवधीर्य्य धैर्य्यादूचे स तद्वागुपवीणितोऽपि ।
विवेकधाराशतधौतमन्तः सतां न कामः कलुषीकरोति ॥५४॥
इरित्पतीनां सदसः प्रतीहि त्वदीयमेवातिथिमागतं माम् ।

---

अथैवं कामविकारान् निगृह्य नलस्तां प्रतिवक्तुमारेभे अथेति । अथ कामसंवरणानन्तरं स नलः तस्या भैम्या वाचा उपवीणितः वीणया उपगीतोऽपि वीणारववत् मनोहारिण्या वचनमाधुर्य्या समाकृष्टोऽपि इति भावः । सत्यापपाशेत्यादिना वीणाशब्दादुपगीतेऽपि च इति खन्तात् कर्मणि क्तः । धैर्य्यात् धैर्य्यम् आश्रित्य ल्यब्लोपे पञ्चमी । स्मरस्य कामस्य आज्ञां तद्विकारमिति भावः । अवधीर्य्य अवज्ञाय अगणयित्वेत्यर्थः, वीणासङ्गीते हि सर्वस्यैव जनस्य मनः समाकृष्टं भवति किन्तु धैर्य्यवशात् तदाकृष्टिरूपं कामविकारं निरस्येति भावः । ऊचे अब्रवीत् । नन्वेतादृगवस्थायां कथं कामसंवरणं जातमित्यत आह विवेकेति । विवेकानां धाराशतैः प्रवाहशतैः धौतं क्षालितं सतां साधूनां धीराणामित्यर्थः, अन्तः अन्तःकरणं कामः न कलुषीकरोति न मलिनीकर्त्तुं शक्नोतीत्यर्थः । अस्य तु तथाविधविकारहेतु-विलासराशियुतभैमीसन्निधौ तथा विकारसंवरणमेव धीरत्वं व्यनक्ति । उक्तञ्च विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीरा इति । अत्र पूर्व्वार्द्धे विवेकधारया धावितस्य चित्तस्य धैर्य्यनियमनात् परिसङ्ख्यालङ्कारः । एकस्य वस्तुनो भावादनेकत्रैकदा यदा । एकत्र नियमस्यादि परिसङ्ख्या निगद्यते इति लक्षणात् । तस्य चार्थस्य उत्तरार्द्धगतेन सामान्येनार्थेन समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ५४ ॥

वहन्तमन्तर्गुरुणादरेण प्राणानिव स्वःप्रभुवाचिकानि ॥५५॥
विरम्यतां भूतवती सपर्य्या निविश्यतामासनमुज्झितं किम्।
या दूतता नः फलिनी विधेया सैवातिथेयी पृथुरुद्भविनी॥५६॥
कल्याणि! कल्यानि तवाङ्गकानि कच्चित्तमां चित्तमनाविलं ते।

---

किमित्याह हरिदिति। मां गुरुणा महता आदरेण प्रतियत्नेनेत्यर्थः। स्वःप्रभूणां स्वर्गाधिकारिणामिन्द्रादीनां व्याहृतार्था वाचो वाचिकानि सन्देशवचनानि सन्देशवाग् वाचिकं स्यात् इत्यमरः। वाचो व्याहृतार्थायामिति ठक्। प्राणानिव तदीयानिति भावः। अन्तः अन्तःकरणे वहन्तं धारयन्तं हरित्पतीनां दिक्पालानाम् इन्द्रादीनां दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता इत्यमरः। सदसः सभायाः आगतं त्वदीयमेव अतिथिम् आगन्तुकं प्रतीहि जानाहि इन्द्रादीनां दूतो भूत्वा तव सकाशमागतोऽहमिति विद्धीत्यर्थः ॥५५॥

विरम्यतामिति। विरम्यतां तूष्णीं स्थीयतां सपर्य्या पूजा सत्कारः पूजा नमस्यापचितिः सपर्य्यार्चार्हणाः समा इत्यमरः। भूतवती जातैव दर्शनेनैव भवत्या इति भावः। भवतेस्तवत्-प्रत्यये ङीप्। निविश्यताम् उपविश्यतां किं कथम् आसनम् उज्झितं त्यक्तम्? आसनपरित्यागस्य प्रयोजनं नास्तीत्यर्थः नोऽस्माकं या दूतता दौत्यं फलवती सफला विधेया कर्त्तव्या त्वया इति शेषः। सैव पृथुमहती आतिथेयी अतिथौ मयि साध्वी पूजेत्यर्थः, उद्भविनी भाविनी। मदुपचारार्थं व्यग्रतया अलं यदर्थमागतोऽस्मि तत्सफलतैव मम प्रीतिकरीति तात्पर्य्यम्॥ ५६ ॥

कल्याणीति। हे कल्याणि! मङ्गलमयि! तव अङ्गकानि

अलं विलम्बेन गिरं मदीया माकर्णयाकर्णतटायताक्षि ! ॥५७॥
कौमारमारभ्य गणा गुणानां हरन्ति ते दिक्षु धृताधिपत्यान् ।
सुराधिराजं सलिलाधिपञ्च हुताशनञ्चार्य्यमनन्दनञ्च ॥ ५८ ॥

---

कोमलानि अङ्गानि कल्यानि निरामयाणि कच्चित्तमाम् ? वार्त्तो निरामयः कल्य इत्यमरः। कच्चिदिति प्रश्नार्थमव्ययं कच्चित्काम प्रवेदने इत्यमरः। तस्मादतिशायिने तमपिष्ठनाविति तमप्प्रत्ययः किमस्तिङव्ययादित्यादिना आम्प्रत्ययः। ते तव चित्तं मनः अनाविलं अकलुषम् अनुद्विग्नमिति यावत् कच्चित्तमामित्यनुषङ्गः। हे आकर्णतटायताक्षि ! कर्णतटात् आ आकर्णतटं कर्णतटपर्य्यन्तमित्यर्थः, मर्य्यादायामव्ययीभावः। ततः सुप्सुपेति समासः। आकर्णतटम् आयते विस्तृते अक्षिणी यस्याः सा आकर्णतटायताक्षी बहुव्रीहौ सकथ्यक्ष्णोः स्वाङ्गात्षच् षिद्गौरादिभ्यश्चेति ङीप्। तत्सम्बुद्धौ। हे आकर्णतटायताक्षि ! अम्बार्थनद्योर्ह्रस्वः। आकर्णविस्तृतनेत्रे ! विलम्बेन अलं प्रयोजनं नास्ति, मदीयां गिरं वाचम् आकर्णय। यदि तव शरीरं स्वस्थं मनश्च निरुद्वेगं स्यात् तदा अविलम्बेन मद्वाक्यं शृण्वित्यर्थः। शरीरस्य अस्वास्थ्ये मनसश्चोद्वेगे श्रवणं न प्रीतिकरं विफलञ्चेति प्रथमं तत्प्रश्नाभिप्राय इति बोध्यम् ॥ ५७ ॥

प्रथमं तावत् साधारण्येन चतुर्णामेव दूत्यं प्रस्तौति कौमारमिति। हे दमयन्ति ! कौमारं शैशवमारभ्य प्राणभृज्जातिवयोवचनादिभ्योऽञ्। ते तव गुणानां शीलसौन्दर्य्यादीनां गणाः समूहाः दिक्षु धृतम् आधिपत्यं प्रभुत्वं यैः तान् दिक्पालानित्यर्थः सुराधिनाथं देवेन्द्रं सलिलाधिपं वरुणं हुताशनम्

वरच्चिरं शैशवयौवनीय-द्वैराज्यभाजि त्वयि खेदमेति।
तेषां रुचश्चौरतरेण चित्तं पञ्चेषुणा लुण्ठितधैर्य्यवित्तम् ॥५९॥
तेषामिदानीं किल केवलं सा हृदि त्वदाशा विलसत्यजस्रम्।
आशास्तु नासाद्य तनूरुदाराः पूर्वादयः पूर्ववदात्मदाराः ॥६०॥

अग्निम् अर्य्यमणः सूर्य्यस्य नन्दनं यमञ्च हरन्ति प्रीणयन्ति आकर्षन्तीत्यर्थः। आवाल्यं तव गुणाद्याकर्णनेन एते चत्वारो दिगीन्द्रास्त्वयि जातानुरागा इति भावः ॥ ५८ ॥

वरदिति। शैशवयौवनयोरिदं शैशवयौवनीयं बाल्य-यौवनसम्बन्धीत्यर्थः वृद्धाच्छः। तत्, द्वयोः राज्ञोर्भावः। द्वैराज्यं न ब्राह्मणादित्वात् ष्यङ्प्रयः। तत् भजते इति तद्भाजि तस्यां शैशवयौवनयोर्वयसोः सन्धौ वर्त्तमानायामित्यर्थः, त्वयि वरत् वर्त्तमानं समासक्तमित्यर्थः, तेषाम् इन्द्रादीनां चित्तं कर्त्तृ रुचः कान्तेः चौरतरेण अतिशयेन अपहारिणा विरहिकान्तिहरेण इत्यर्थः, पञ्चेषुणा कामेन लुण्ठितं हृतं धैर्य्यमेव वित्तं यस्य तथाभूतं सत् खेदं त्वदप्राप्तिदुःखम् एति लभते द्वैराज्ये स्थितानां प्रजानामेकतरराजनियमाभावात् प्रबलचौरादिभिः आक्रमणात् दुःखं भवतीति ध्वन्यते। अत्र पञ्चेषुणा चौरेण धैर्य्यवित्तं हृतमिति रूपकं तदनुप्राणितं खेदमेतीति वाक्यार्थ-हेतुकं काव्यलिङ्गमलङ्कारः इत्युभयोः सङ्करः ॥ ५९ ॥

तेषामिति। इदानीं तव यौवनदशायामुपस्थितायामित्यर्थः तेषामिन्द्रादीनां हृदि केवलं सा त्वदाशा त्वत्प्राप्तिलालसा तव अवस्थानदिक् च। आशादिगतितृष्णयोरिति वैजयन्ती। किल निश्चितम् अजस्रम् अविरतं विलसति विस्फुरति। तु पुनः आत्मदाराः निजभार्य्याः आशा दिशः पूर्वादयः प्राच्यादयः

अनेन सार्द्धं तव यौवनेन कोटिं परामच्छिदुरोऽध्यरोहत्।
प्रेमापि तन्वि! त्वयि वासवस्य गुणोऽपि चापे सुमनःशरस्य ६१

उदारा महतीः सौन्दर्य्येण ख्याताश्च उदारो महति ख्याते दक्षिणे दानशौण्डके इति वैजयन्ती। तनूः अङ्गानि आसाद्य स्थिता अपि इति शेषः। पूर्ववत् प्राग्वत् न विलसन्तीति वचनव्यत्यासेनानुषङ्गः। पूर्वं पूर्वादिदिशो यथा सानुरागं पालयन्ति स्म साम्प्रतं त्वयि समासक्तचित्ततया ताः तथा न पालयन्ति इत्यर्थः। अपूर्वकान्तानुरक्ते हृदि पूर्वाश्चतुरा अपि न स्थानं प्राप्नुवन्तीति भावः। अतिविस्तृतावयवानां परमाणुसदृशे क्षुद्रे वस्तुनि हृदये कथं पर्य्याप्नोतु इति च गम्यते। अत्रोभयोः आशयोः एकत्र हृदि स्थितौ एकस्या भैम्याशाया एव तन्नियमनात् परिसङ्ख्या। प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत्। तादृगन्यव्यपोहश्चेत् परिसंख्येति लक्षणात्। ननु यद्यपि एकस्य उभयप्राप्तावेकत्र नियमनं परिसंख्येत्यालङ्कारिकाणां लक्षणं तथापि मीमांसकैः उभयोरेकत्र प्राप्तावेकस्य नियमनमित्यस्य अप्यङ्गीकारात् चमत्कारित्वाविशेषात् अपलक्षणत्वेनोभयाङ्गीकारेण विरोधाच्च। अथवा एकस्य हृदयस्य आशाद्वयप्राप्तौ एकत्रैव नियमनात् सापि लभ्यत इति सर्वथा परिसंख्यैवास्ति। सा च श्लेषेण उभयाशारूपयोः अर्थयोः अभेदाध्यवसायात् अतिशयोक्तिमुत्थापयतीत्येषाम् अङ्गाङ्गिभावेन सङ्करः॥ ६०॥

इत्थं साधारण्येन समासक्तिमुक्त्वा क्रमेण इन्द्रादीनां दूत्यमाश्रयन् प्रथमं प्राधान्यात् इन्द्रस्य दूत्यं प्रस्तौति अनेन इति। हे तन्वि! सुन्दरि! भैमीति पाठान्तरम्। वासवस्य इन्द्रस्य त्वयि विषये प्रेमापि समासक्तिरपि सुमनःशरस्य पुष्पायुधस्य कामस्य चापे धनुषि विषये गुणोऽपि मौर्वी अपि अनेन तव

प्राचीं प्रयाते विरहं दधत्ते तापाच्च रूपाच्च शशाङ्कशङ्की।
परापराधैर्निदधाति भानौ रुषारुणं लोचनवृन्दमिन्द्रः ॥६२॥

---

यौवनेन सार्द्धम् अच्छिद्दुरः अविच्छेदं गतः सन् परां परमां कोटिम् उत्कर्षम् अटनिश्च कोटिरस्त्री च चापाग्रे संख्याभेदप्रकर्षयोः इति मेदिनी। अध्यरोहत् प्राप्तवान्। यथा यथा तव यौवनोद्भेदो भवति कुसुमशरोऽपि अधिज्यधनुषा तथा तथा तम् इन्द्रम् आबाल्यात् अनुरागिणम् अतितरां व्यथयतीति निष्कर्षः। अत्र प्रकृतयोः प्रेमगुणयोः विशेषणसाम्येनौपम्योपगमात् प्रकृतविषयिणी तुल्ययोगिता। पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्। एकधर्माभिसम्बन्धः स्यात् तदा तुल्ययोगिता इति लक्षणात्। सा च परां कोटिमिति श्लेषभित्तिकेनाभेदाध्यवसायेन उत्थापितया अतिशयोक्त्या अनुप्राणितया यौवनेन सार्द्धमिति सहार्थबलप्ररूढ़या सहोक्त्या सङ्कीर्य्यते इत्येषामङ्गाङ्गिभावेन सङ्करः। सहोक्तिलक्षणयुक्तं दर्पणेन, सहार्थस्य बलादेकं यत्र स्यात् वाचकं द्वयोः। सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत् इति ॥ ६१ ॥

प्राचीमिति। इन्द्रः ते तव विरहं दधत् धारयन् सन् प्राचीं पूर्वां दिशं प्रयाते आगते उदिते इत्यर्थः, भानौ सूर्य्ये तापात् सन्तापजनकत्वाच्च रूपात् उदये रक्तत्वाच्च चन्द्रस्यापि विरहिसन्तापकत्वम् उदये रक्तत्वमिति भावः। शशाङ्कं शङ्कते इति शशाङ्कशङ्की चन्द्रोऽयमिति भ्रान्तः सन् परापराधैः परस्य चन्द्रस्य अपराधैः तापादिभिः हेतुभिः रुषा क्रोधरक्तं लोचनवृन्दं नयनसहस्रमित्यर्थः, निदधाति ददाति क्रोधात् दहन्निव लोचनानां सहस्रेण भानुं प्रति निरीक्षितवान् इत्यर्थः। क्रोधान्धस्य सापराधानपराधविवेको नास्तीति भावः। अत्र

त्रिनेत्रमात्रेण रुषा कृतं यत्तदेव योऽद्यापि न संवृणोति ।
न वेद रुष्टेऽद्य सहस्रनेत्रे गन्ता स कामः खलु कामवस्थाम् ६३
पिकस्य वाङ्मात्रकृतात् व्यलीकान्न स प्रभुर्नन्दति नन्दनेऽपि ।
बालस्य चूड़ाशशिनोऽपराधान्नाराधनं शीलति शूलिनोऽपि ६४

सन्तापकत्वरक्तत्वगुणसाम्येन भानौ शशाङ्कभ्रमात् भ्रान्तिमानलङ्कारः । तदुक्तं दर्पणे, साम्यादतस्मिन् तद्बुद्धिर्भ्रान्तिमान प्रतिभोत्थितेति । अनेन च अलङ्कारेण इन्द्रस्त्वद्विरहेण नितरां सन्तप्यते इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ६२ ॥

त्रिनेत्रेति । त्रीणि नेत्राणि यस्य स त्रिनेत्रः, हरः स एव मात्रं त्रिनेत्रमात्रं तेन । मात्रं कार्त्स्न्येऽवधारणे इत्यमरः । नेत्रत्रयवता हरेण रुषा क्रोधेन यत् कृतम् अनङ्गत्वमिति भावः । तदेव त्रिनेत्रक्रोधकृतम् अनङ्गत्वमेव यः कामः अद्यापि न संवृणोति न संवरीतुं शक्नोति न उपशमयितुं शक्नोतीत्यर्थः । अद्य साम्प्रतं सहस्रं नेत्राणि यस्य तस्मिन् नेत्रसहस्रशालिनि इन्द्रे रुष्टे क्रुद्धे सति स कामः काम् अवस्थां दशां गन्ता गमिष्यति प्राप्स्यति इत्यर्थः, गमेर्लुट् । न वेद न जानामि खलु निश्चितम् । वाक्यार्थः कर्म । विदो लटो वेति मिपो णलादेशः । यः त्रिनेत्रकृतं तथा दुरवस्थत्वं न प्रतिकर्त्तुं शक्तः, स सहस्रनेत्रकृतं दुरवस्थत्वं नैव प्रतिकर्त्तुं शक्ष्यतीति निष्कर्षः । इन्द्रः त्वत्कृते अतीवकामेन पीड्यते इति तात्पर्य्यम् ॥ ६३ ॥

पिकस्येति । स प्रभुः निग्रहानुग्रहसमर्थ इति यावत् । एतेन तं प्रति अयथार्थां दण्डनीयत्वशङ्कापीति ध्वन्यते । इन्द्रः पिकस्य कोकिलस्य । कोकिलः पिक इत्यपीत्यमरः । वाङ्मात्रकृतात् वचनमात्रजनितात् न तु कायकृतात् मनःकृताच्चेति

तमोमयीकृत्य दिशः परागैः स्मरेषवः शक्रदृशां दिशन्ति ।
कुहूगिरं चञ्चुपुटं द्विजस्य राकारजन्यामपि सत्यवाचम्॥६५॥

---

भावः। व्यलीकात् अप्रियात् व्यलीकन्त्वप्रियानृते इत्यमरः। नन्दयति सुखयतीति नन्दनं स्वभावत एव आनन्दजनकं तस्मिन् तदाख्ये देवोद्यानेऽपीत्यर्थः। किमुतान्यत्र इति भावः। न नन्दति न प्रीणाति तत्र कोकिलरवस्य विरहोद्दीपकतया दुःश्रवत्वादिति भावः। अप्रियवादिनि नन्दने पुत्रे पिता न नन्दतीति च गम्यते। तथा बालस्य शिशोः कलामात्रस्येति भावः, पूर्णस्येति किमु वक्तव्यमिति भावः। चूडाशशिनः शिरःस्थचन्द्रस्य अपराधात् उद्दीपकताजनितादिति भावः। शूलिनः शिवस्यापि आराधनं नित्यकर्त्तव्यमिति भावः, न शीलति न आचरति शील समाधाविति भौवादिकाल्लट्। शत्रुणा सङ्गतं शूलहस्तमपि जनं प्रभुर्नानुवर्त्तते इति च ध्वन्यते। अत्र नन्दनसेवनशिवाराधनसम्बन्धेऽपि असम्बन्धोक्तेः अतिशयोक्तिरलङ्कारः। तेन च इन्द्रस्त्वद्विरहेण रम्याणि द्वेष्टि अवश्यकर्त्तव्यमपि न करोतीति वस्तु वज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ६४ ॥

तमोमयीति। स्मरस्य कामस्य इषवः शराः पुष्पमया इति भावः। परागैः रजोभिः। परागः कौसुमं रज इत्यमरः। दिशः तमोमयीकृत्य अन्धकारमयीकृत्य तत्प्रकृतवचने मयट्त्वात् अभूततद्भावे च्विः। कुहूरिति गीः वाणी यस्य तादृशं कुहूरवं कुर्वाणमित्यर्थः। द्विजस्य अण्डजस्य पक्षिण इत्यर्थः। कोकिलस्य अन्यत्र ब्राह्मणस्य दन्तविप्राण्डजा द्विजा इत्यमरः। चञ्चुपुटं मुखं शक्रदृशाम् इन्द्रचक्षुषां सम्बन्धे राकारजन्यामपि पौर्णमासीरात्रावपीत्यर्थः। पूर्णे राका निशाकरे इत्यमरः।

शरैः प्रसूनैस्तुदतः स्मरस्य स्मर्त्तुं स किं नाशनिना करोति ?।
अभेद्यमस्याहह ! वर्म न स्यादनङ्गता चेद्गिरिशप्रसादः॥६६॥

---

सत्या वाग् यस्य तं दिशन्ति आदिशन्ति कथयन्ति इति यावत्। सृजन्तीति पाठे सृजन्ति कुर्वन्तीत्यर्थः। कुहूः स्यात् कोकिलापो नष्टेन्दुकलयोः अपीति विश्वः। तथा मदनाशुगा देवेन्द्रं प्रति कामेन प्रयुज्यन्ते यथा असौ तद्रजोभिः अन्धकारिता दिशोऽवलोक्य पूर्णिमारजनीमपि कोकिलस्य कुहूरवेण नष्टचन्द्रामावास्येयमिति भ्रान्तिमेति इति निष्कर्षः। कोऽपि वाक्सिद्धो द्विजः पूर्णिमायाममावास्येयमिति सहसा कथयन् तत्सिद्धये स्वतपोबलेन लोकान् तथा दर्शयति इति ध्वन्यते। अत्र श्लेषेणोपात्तयोः द्वयोरपि कुह्वोः द्विजयोश्च अभेदाध्यवसायात् अतिशयोक्तिस्तया च कुहूत्वस्य सत्यवादित्वस्य च परस्परविरुद्धस्य सिद्धेर्वाक्यार्थहेतुकं काव्यलिङ्गमित्येषामङ्गाङ्गिभावेन सङ्करः। तेन च इन्द्रस्य राकायां भ्रान्तिरिति भ्रान्तिमानलङ्कारो व्यज्यते इत्यलङ्कारेण अलङ्कारध्वनिः। इन्द्रः त्वद्विरहेण कामान्धो जात इति वस्तुव्यक्तेर्वस्तुध्वनिश्च ॥ ६५ ॥

शरैरिति। स इन्द्रः प्रसूनैः पुष्पैः शरैः बाणैः तुदतः विध्यतः स्मरस्य कामस्य अशनिना वज्रेण स्मर्त्तुम् अधिगर्थेत्यादिना कर्मणि शेषे वा षष्ठी किं न करोति ? कामं स्मरणमात्रशेषं किं न कुर्य्यात् ? अपितु करोति एवेत्यर्थः। स्मरं वज्रेण प्रहृत्य विनाशयेदेवेति यावत्। अहह खेदे, चेत् यदि गिरिशस्य प्रसादः प्रसादलब्धमिति यावत् कार्य्यकारणयोः अभेदोपचारः। अनङ्गता अङ्गराहित्यरूपमित्यर्थः। अस्य स्मरस्य अभेद्यं भेत्तुमशक्यं वर्म कवचं न स्यात्। वज्रप्रहारोऽङ्गे एव स्यात् तदभावादेव अमुं शक्रो वज्रेण न प्रहर्त्तुं शक्नोतीति भावः। अत्र अभेद्यं

धृताधृतेस्तस्य भवद्वियोगान्नानार्द्रशय्यारचनाय लूनैः ।
अप्यन्यदारिद्र्यहराः प्रवालैर्जाता दरिद्रास्तरवोऽमराणाम् ६७
रवैर्गुणास्फालभवैः स्मरस्य स्वर्णाथकर्णौ बधिरावभूताम् ।
गुरोः शृणोतु स्मरमोहनिद्रा प्रवोधदक्षाणि किमक्षराणि ६८

---

वर्मेति रूपकेण दुर्वारोऽयं कामो देवेन्द्रं नितरां व्यथयतीति व्यज्यते। इत्यलङ्कारेण वस्तुध्वनिः ॥ ६६ ॥

धृतेति। अन्येषां दारिद्र्यं हरन्तीति अन्यदारिद्र्यहरा अपि वाञ्छितार्थप्रदा अपीति भावः हरतेरनुद्यमनेऽच्। अमराणां देवानां तरवः कल्पद्रुमा इत्यर्थः, भवत्या वियोगात् विरहात् सर्वनाम्नस्तद्वृत्तिमात्रे पूर्वपदस्य पुंवद्भावो वक्तव्यः। धृता अधृतिः असन्तोषः अधैर्य्यं वा। धृतिः सन्तोषधैर्य्ययोः इत्यमरः। तस्य इन्द्रस्य नानाविधानाम् आर्द्राणां शय्यानां शिशिरशयनानामित्यर्थः। रचनाय कल्पनाय लूनैः छिन्नैः प्रवालैः पल्लवैः दरिद्राः रिक्ताः जाताः। नानार्द्रेत्यत्र अन्यान्येति पाठे अन्या अन्याः भिन्ना भिन्नाः क्षणे क्षणे पूर्वशय्याया विरहतप्ताङ्गसङ्गात् विमर्दितत्वात् नूतना नूतना याः शय्याः तासां रचनाय इत्यर्थः। अत्र सुरतरूणां प्रवालदारिद्र्यासम्बन्धेऽपि तत्सम्बन्धोक्तेः अतिशयोक्तिः तया च अस्य तथा कामसन्तापो जातो यथा विविधशीतोपचारेण अपि न असौ शाम्यतीति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ६७ ॥

ननु गुरूपदेशात् तस्य किं प्रबोधो न स्यात् येन ईदृक् माद्यतीत्यत्राह, रवैरिति। स्वर्णाथस्य स्वर्गाधिपस्य इन्द्रस्य कर्णौ श्रवणेन्द्रिये पूर्वपदात् संज्ञायामग इति णत्वम्। स्मरस्य कामस्य गुणो मौर्वी तस्य आस्फालः आकर्षणं तस्मात् भवः उत्पत्तिः

अनङ्गतापप्रशमाय तस्य कदर्थ्यमाना मुहुरामृणालम्।
मधौ मधौ नाकनदीनलिन्यो वरं वहन्तां शिशिरेऽनुरागम्॥६९

---

येषां तैः रवैः धनुर्ज्याकर्षणजनितैः टङ्कारैः इत्यर्थः, बधिरौ श्रवणाक्षमावित्यर्थः, अभूतां ततश्च गुरोः बृहस्पतेः सकाशात् स्मरमोहः काममुग्धता एव निद्रा तस्याः प्रबोधे जागरणे चैतन्यापादने इत्यर्थः दक्षाणि निपुणानि विवेकजनकत्वात् काममोहनिवारणक्षमाणि इत्यर्थः। अक्षराणि वचनानि किं कथं शृणोतु? न शृणोतु एवेत्यर्थः। अत्र पूर्वार्द्धवाक्यस्य उत्तरार्द्धवाक्यहेतुत्वात् काव्यलिङ्गमलङ्कारः तेन त्वद्विरहकामिनं बृहस्पतिरपि चेतयितुं न शक्नोतीति वस्तु व्यज्यते। इत्यलङ्कारेण वस्तुध्वनिः॥६८॥

अनङ्गेति। नाकनदी स्वर्गसरित् मन्दाकिनी इत्यर्थः। तस्याः तत्र वा नलिन्यः पद्मिन्यः मधौ मधौ प्रतिमधु प्रतिवसन्तमित्यर्थः तस्य इन्द्रस्य अनङ्गतापस्य कामसन्तापस्य प्रशमाय शान्त्यर्थं मुहुः पुनःपुनः आमृणालं मृणालपर्य्यन्तम् अभिविधावव्ययीभावः कदर्थाः कुत्सितवस्तूनि कोस्तत्पुरुषेऽचीति कोः कदादेशः। कदर्थाः क्रियमाणाः कदर्थ्यमानाः पीड्यमाना इत्यर्थः, समुच्छिद्यमाना इति यावत् तत्करोतीति ण्यन्ताल्लटः शानजादेशः। सत्यः शिशिरे ऋतौ अनुरागं प्रीतिं वरं वहन्तां धारयन्तु न तु वसन्ते इत्यर्थः, शिशिरे पद्मिन्याः केवलं पुष्पपत्राणां शोषणं भवति मृणालमवशिष्यते अत्र तु वसन्ते तस्य इन्द्रस्य कामसन्तापाधिक्यात् तन्निवारणार्थम् आमृणालोन्मूलनादिति भावः। वसन्तस्य अतीवोद्दीपकत्वात् तस्य अत्र वसन्ते अतीव कामसन्तापो जायते इति भावः। वहेः स्वरितत्वात् आत्मनेपदम्॥६९॥

दमस्वसः! सेयमुपैति तृष्णा जिष्णोर्जगत्यग्रिमलेख्यलक्ष्मीम्।
दृशां यदब्धिस्तव नाम दृष्टित्रिभागलोभार्त्तिमसौ बिभर्त्ति॥७०

अग्न्याहिता नित्यमुपासते यां देदीप्यमानां तनुमष्टमूर्त्तेः।
आशापतिस्ते दमयन्ति! सोऽपि स्मरेण दासीभवितुं न्यदेशि॥७१

दमस्वसरिति। हे दमस्वसः दमयन्ति! जिष्णोः इन्द्रस्य जिष्णुर्लेखर्षभः शक्र इत्यमरः। सा अति प्रसिद्धेत्यर्थः, इयं तृष्णा आशा जगति अग्रे भवम् अग्रिमम् अग्रपश्चादिमन् वक्तव्यः। तच्च तत् लेख्यञ्चेति अग्रिमलेख्यं तस्य लक्ष्मीं श्रियम् आदिमगण्यस्य शोभामित्यर्थः, अग्रगण्यतामिति यावत् उपैति प्राप्नोति, कथमित्याह दृशामिति। यद् यस्मात् दृशां नयनानाम् अब्धिः समुद्रः सहस्रनयन इति भावः। असौ इन्द्रः तवः दृष्टेः त्रिभागः तृतीयोभागः संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वाङ्गीकारात्। कटाक्षस्येति भावः। तत्र लोभेन तृष्णया आर्त्तिः पीड़ा सन्ताप इत्यर्थः, तां बिभर्त्ति नाम धारयति खलु। सत्यपि नेत्राणां सहस्रे त्वदीयस्य नेत्रत्रिभागस्य अपि आकाङ्क्षी इति अतितरां लुब्धाग्रगण्य इन्द्र इति निष्कर्षः। तव कटाक्षदृष्टिमाकाङ्क्षति तस्य नेत्रसहस्रमिति भावः॥ ७० ॥

अथ अग्नेः अवस्थां वर्णयति अग्नीति। हे दमयन्ति! अग्निः आहितो यैः ते अग्न्याहिताः आहिताग्नयः द्विजा इति शेषः। वाहिताग्न्यादिषु इति निष्ठायाः परनिपातः। यां देदीप्यमानां जाज्वल्यमानां दीप्यतेर्यङन्तात् कर्त्तरि लटः शानजादेशः। अष्टौ मूर्त्तयः क्षित्यादयः यस्य सः अष्टमूर्त्तिः शिवः तस्य तनुम् अग्निरूपामिति भावः। नित्यं प्रतिदिनम् उपासते सेवन्ते, सोऽपि स्मरहरस्य तनुरपीत्यर्थः, आशापतिः दिक्पतिः अग्निः

त्वद्गोचरस्तं खलु पञ्चबाणः करोति सन्ताप्य तथा विनीतम् ।
स्वयं यथास्वादिततप्तभूयः परं न सन्तापयिता स भूयः ॥७२॥
अदाहि यस्तेन दशार्द्धबाणः पुरा पुरारेर्नयनालयेन ।
सनिर्दहंस्तं भवदक्षिवासी न वैरशुद्धेरधुनाधमर्णः ॥७३॥

स्मरेण कामेन कर्त्रा ते तव अदासो दासो भवितुं दासीभवितुम् अभूततद्भावे च्विः । न्यदेशि दासो भवेति आदिष्टः । स्मरहरमूर्त्तित्वात् स्मरवैरिणम् अग्निं स्मरेण तव दासत्वे नियुज्य सम्यग् वैरशोधनं कृतमिति भावः । अग्निः त्वां प्रति नितरामनुरक्त इति तात्पर्य्यम् ॥ ७१ ॥

त्वद्गोचर इति । पञ्चबाणः कामः त्वद्गोचरः त्वद्विषयः त्वामेव लक्षयित्वेति भावः । तम् अग्निं सन्ताप्य सम्यक् तापयित्वा तथा विनीतं शिक्षितं करोति यथा सोऽग्निः स्वयम् आस्वादितम् अनुभूतं तप्तभूयं सन्तप्तत्वं येन तथाभूतः सन् भुवो भावे इति भावे क्यप् । भूयः पुनः परम् अन्यं जनं न सन्तापयिता न सन्तापयिष्यति सम्पूर्वात्तपतेर्ण्यन्तात् कर्त्तरि लुट् । स्वयं तापदुःखानुभवेन परसन्तापात् निवर्त्तिष्यते इति निष्कर्षः । कामः त्वद्विरहार्त्तम् अग्निम् अतीव सन्तापयतीति भावः ॥ ७२ ॥

अदाहीति । यो दशार्द्धबाणः पञ्चबाणः कामः पुरा पूर्वं पुरारेः हरस्य नयनालयेन नेत्राश्रयेण नेत्राग्निनेत्यर्थः, अदाहि भस्मीकृतः दह भस्मीकरणे इत्यस्मात् कर्मणि लुङ् । स दशार्द्धबाणः अधुना भवत्यास्तव अक्षिण वसतीति भवदक्षिवासी तव नेत्रस्थितः सन् तम् अग्निं निजदाहकमिति भावः निर्दहन् निःशेषेण दग्धं कुर्वन् नितरां तापयन्निति भावः वैर-

सोमाय कुप्यन्निव विप्रयुक्तः स सोममाचामति हूयमानम् ।
नामापि जागर्त्ति हि यत्र शत्रो स्तेजस्विनस्तं कतमे सहन्ते ७४

युद्धेः वैरनिर्यातनात् अधमर्णः ऋणी न । अनृणोऽभूदित्यर्थः । अग्निः भवस्य नयने स्थितः कामं दहति स्म कामस्तु तव नयने स्थितः तं स्वदाहकम् अग्निं तथैव दहतीति निष्कर्षः । कामोद्दीपकं तव नयनं निरीक्ष्य अग्निर्नितरां कामार्त्तो जात इति तात्पर्य्यम् । पुरुषाश्रयेण सामर्थ्यं प्रकटयतोऽग्नेः अबलाश्रयेण तादृशं सामर्थ्यं प्रकटयतः कामस्य प्राधान्यं गम्यते ॥७३॥

सोमायेति । विप्रयुक्तः विरहीत्यर्थः विप्रैर्याज्ञिकैः युक्तश्च सः अग्निः सोमाय चन्द्राय कुप्यन्निव क्रुध्यन्निव क्रुधद्रुहेत्यादिना सम्प्रदानत्वाच्चतुर्थी हूयमानं याज्ञिकैः समर्प्यमाणमित्यर्थः, सोमं सोमलतारसं सोमस्तु हिमदीधितौ । वानरे च कुवेरे च पितृदेवे समीरणे वसुप्रभेदे कर्पूरे नीरे सोमलतौषधाविति मेदिनी । आचामति सोमलतारसं दृष्ट्वा नामसादृश्येन विरहममुद्दीपकश्चन्द्रोऽयमिति मत्वा तं जिघांसन्निव सोमरसं पिबतीत्यर्थः । ननु एकस्य अपराधे नामसाम्येन कथमन्यस्य दण्ड इत्यत्राह नामेति । हि तथाहि यत्र वस्तुनि शत्रोर्नामापि जागर्त्ति दीप्यते तिष्ठतीत्यर्थः तं शत्रुनामधरं कतमे । तेजः अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतमित्युक्तलक्षणं विद्यते येषां ते तेजस्विनः परावमाननासहिष्णव इत्यर्थः । जनाः सहन्ते सोढुं शक्नुवन्ति ? न केऽपीत्यर्थः । तेजस्विनां शत्रुनाम अपि असह्यमिति यज्ञे हूयमानं सोमरससमुपादेयमपि प्रीत्या अग्निः न पिबति तव विरहार्त्तः क्रोधेनैव पिबतीति भावः । अत्र सामान्येन विशेषसमर्थनरूपो अर्थान्तरन्यासः ॥ ७४ ॥

शरैरजस्रं कुसुमायुधस्य कदर्थ्यमानस्तव कारणाय।
अभ्यर्चयद्भिर्विनिवेद्यमानादप्येष मन्ये कुसुमात् बिभेति॥७५॥
स्मरेन्धने वक्षसि तेन दत्ता संवर्त्तिका शैवलवल्लिचित्रा।
चकास्ति चेतोभवपावकस्य धूमाविला कीलपरम्परेव॥७६॥

---

शरैरिति। तव कारणाय त्वदर्थमित्यर्थः, तादर्थ्ये चतुर्थी। कुसुमायुधस्य कामस्य शरैः कुसुमैरिति भावः। अजस्रं सततं कदर्थ्यमानः क्लिश्यमानः एषः अग्निः अभ्यर्चयद्भिः पूजयद्भिः पूजां कुर्वद्भिर्जनैरित्यर्थः, विनिवेद्यमानात् गात्रे प्रक्षिप्यमाणात् कुसुमात् पुष्पात् बिभेति कामशरोऽयमिति मत्वा त्रस्यति इत्यर्थः, इति मन्ये सम्भावयामि उत्प्रेक्षालङ्कारः तव कारणाय इत्यत्र तरुणि! त्वदर्थे इति पाठे। हे तरुणि! इति सम्बोधनपदम्॥७५॥

स्मरेति। स्मरस्य इन्धनं काष्ठं तस्मिन् स्मरदाह्ये इति भावः। वक्षसि हृदये तेन अग्निना दत्ता तापशान्तये न्यस्ता शैवलवल्लिभिः शैवाललताभिः चित्रा कर्वुरा संवर्त्तिका पद्मस्य नवदलम्। संवर्त्तिका नवदलं वीजकोषो वराटक इत्यमरः। चेतोभवः काम एव पावकः अग्निः तस्य धूमेन आविला मलिना कीलपरम्परेव ज्वालामालेव वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखास्त्रियामित्यमरः। शैवाललतानां श्यामत्वात् धूमसाम्यं संवर्त्तिकानां रक्तत्वाज्ज्वालासाम्यमिति भावः चकास्ति राजते। उत्प्रेक्षालङ्कारः। अग्निः त्वामुद्दिश्य भृशं कामसन्तप्ततया शीतोपचारेण हृदयं शीतलयतीति वस्तु व्यज्यते इति वस्तुध्वनिः। अत्र धूमाविला कीलपरम्परा कामाग्निसन्तप्ते वक्षसि तेन निहिता शैवलवल्लिचित्रासंवर्त्तिकेव चकास्तीति

पुत्री सुहृत् येन सरोरुहाणां यत्प्रेयसी चन्दनवासिता दिक्।
धैर्य्यं विभुः सोऽपि तवैव हेतोः स्मरप्रतापज्वलने जुहाव॥७७॥
तं दह्यमानैरपि मन्मथैधं हस्तैरुपास्ते मलयः प्रवालैः।
कृच्छ्रेऽप्यसौ नोज्झति तस्य सेवां सदा यदाशामवलम्बते यः ७८

---

विपर्य्यासेन अन्वयः समीचीनतया सङ्गच्छते धूमावलायाः कीलपरम्पराया वास्तवत्वात् उत्प्रेक्षायाश्च अवास्तवत्वादिति सुधीभिर्विचार्य्यम्॥ ७६॥

अथ यमस्य अवस्थां प्रकटयति पुत्रीति। सरोरुहाणां कमलानां सुहृत् विकासकत्वात् मित्रं सूर्य्य इत्यर्थः, येन विभुना प्रतापशालिना पुत्री प्रशस्तपुत्रवान् एतेन अस्य महा-कुलीनत्वं सूचितम्। चन्दनैः वासिता सुरभीकृता दिक् दक्षि-णेत्यर्थः यस्य विभोः प्रेयसी अतिप्रिया एतेन अस्य भोगित्वं सूचितम्। सोऽपि विभुः निग्रहानुग्रहसमर्थ इत्यर्थः, यम इति शेषः। तवैव एवकारादन्यव्यवच्छेदः हेतोः कारणात् स्मरस्य कामस्य प्रताप एव ज्वलनः अग्निः तस्मिन् धैर्य्यं धीरत्वं जुहाव हुतवान् पितृबन्धूनां कमलानां प्रेयस्या दिशश्चन्दना-नाञ्च स्वायत्तत्वेऽपि तैस्त्वद्विरहतापानिवृत्तिरिति गम्यते। अत्र स्मरप्रतापानल इति रूपकमलङ्कारः। तेन असौ त्वयि नितरामासक्त इति वस्तु व्यज्यते इति वस्तुध्वनिः॥ ७७॥

तमिति। मलयो दक्षिणाशावर्त्ती पर्वतविशेषः। मन्म-थस्य एधं काष्ठभूतं दाह्यत्वादिति भावः। कामाग्निदाह्यकाष्ठ-भूतमित्यर्थः, काष्ठं दार्विन्धनन्त्वेध इत्यमरः। तं यमं दह्य-मानैः अतितप्ततदङ्गसङ्गात् पच्यमानैरपि प्रवालैः नवपल्लवैरेव हस्तैः व्यस्तरूपकम्। उपास्ते सेवते। अन्योऽपि भृत्यो हस्तैः ५व संवाहयतीति भावः। युक्तञ्च एतदित्याह कृच्छ्रे इति।

स्मरस्य कीर्त्त्येव सितीकृतानि तद्दोःप्रतापैरिव तापितानि ।
अङ्गानि धत्ते स भवद्वियोगात् पाण्डूनि चण्डज्वरजर्जराणि॥७९॥
यस्तन्वि! भर्त्ता घुसृणेन सायं दिशः समालम्भनकौतुकिन्याः।
तदा स चेतः प्रजिघाय तुभ्यं यदा गतो नैति निवृत्य पान्थः॥८०॥

---

यो जनः सदा यस्य आशां देशं प्रत्याशाञ्च अवलम्बते आश्रयति असौ जनः कृच्छ्रेऽपि सङ्कटेऽपि तस्य सेवां शुश्रूषाम् आनुगत्यञ्च न उज्झति न त्यजति। यो यदुपजीवी तस्य तत्सेवा विपद्यपि कर्त्तव्या। यस्मात् मलयः तदधिकृतदक्षिणदिक्वर्त्ती अतः तस्य अवश्यमेव स्वतस्तत्सेवनं युक्तमिति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। स च आशेति श्लेषेणोत्थापित इत्यनयोः अङ्गाङ्गिभावेन सङ्करः। तेन यमः त्वद्विरहात् तथा कामसन्तप्तो जातः यथा मलयाद्रिसमुत्पन्नचन्दनपल्लवेन अपि न शान्तिमेतीति वस्तु व्यज्यते इति वस्तुध्वनिः॥ ७८॥

स्मरस्येति। स यमः भवत्या वियोगात् विरहात् पाण्डूनि सततचिन्तया रक्तशोषणात् रक्तशून्यानि धवलानीत्यर्थः, चण्डेन दारुणेन ज्वरेण कामसन्तापेन जर्जराणि विशीर्णानि च अङ्गानि अवयवान् अङ्गं प्रतीकोऽवयव इत्यमरः। स्मरस्य कामस्य कीर्त्त्या यशसा सितीकृतानीव शुक्लीकृतानीव तस्य स्मरस्य दोःप्रतापैः बाहुबलैः इत्यर्थः। तापितानीव स्थितानीति शेषः। अङ्गानि अवयवान् धत्ते धारयति। अत्र यथासंख्योत्प्रेक्षयोः संसृष्टिः। तथा च कामः त्वद्विरहात् पाण्डुः सन्तप्तश्च जात इति वस्तु व्यज्यते इति वस्तुध्वनिः॥ ७९॥

अथ वरुणस्य अवस्थां व्यनक्ति य इति। हे तन्वि!

तथा न तापाय पयोनिधीना मझामुखोत्थः क्षुधितः शिखावान्

---

कृशाङ्गि ! यो देवः सायं सन्ध्याकाले घुसृणेन कुङ्कुमेन रक्ता- ङ्गस्तु कुङ्कुमम् । जागुड़ं दीपनं घस्रं सौरभं घुसृणञ्च तदिति त्रिकाण्डशेषः । समालम्भने अनुलेपने कौतुकं विद्यतेऽस्या इति कौतुकिनी तस्याः कुतूहलवत्या इत्यर्थः कुङ्कुमसदृश- सन्ध्यातपयोगात् कुङ्कुमेनेव विलिप्ताङ्गं दर्शयन्त्या इति भावः । दिशः प्रतीच्या इति भावः । भर्त्ता अधिपतिः । सायमिति प्राच्या अपि तथात्वात् तद्व्यवच्छेदार्थम् । सः वरुणः तदा तस्मिन् काले तुभ्यं त्वदर्थं त्वां प्रतीत्यर्थः । चेतः हृदयं प्रजिघाय प्रहित- वान् हेरचङ्गीति कुत्वम् । यदा यस्मिन् काले भाद्रपदमासादि- दिवसादौ इति भावः । गतः प्रस्थितः नित्यं पन्थानं गच्छतीति पान्थः पथिकः अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि इत्यमरः । निवृत्य परावृत्य न एति न आगच्छति न पुनरा- वर्त्तते इत्यर्थः । सिंहे धनुषि मीने च यो गतो गत एव स इति नन्दन्ति न निवर्त्तन्ते चित्रा स्वात्योर्गता नरा इति च ज्योतिषवचनाभ्यां चित्रायां स्वातिनक्षत्रे सिंहधनुर्मीनराशिषु च प्रस्थितानां पुनरावृत्तिराहित्यदर्शनात् वरुणहृदयम् उक्ता- न्यतमकाल एव त्वयि प्रस्थितम् अतएव न पुनः निवर्त्तते इति निष्कर्षः । अतएव अत्र कवेः पान्थशब्दप्रयोगः पथोऽण् नित्य- मिति नित्याध्वगमने विधिशब्दात् णप्रत्ययान्तपान्थादेशयोः विधानात् अतएव नित्यग्रहणं प्रत्ययार्थविशेषणमिति काशि- कायां तच्चिन्त्यम् । तदात्र प्रजिघाय इति प्रतीयमानया उत्प्रे- क्षया वरुणस्य हृदयं त्वयि एव विहरति इति वस्तु ध्वन्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८० ॥

तथेति । स्मरस्य कामस्य तापेन दहनेन दुःखं तिष्ठतीति-

निजः पतिः सम्प्रति वारिपोऽपि यथा हृदिस्थः स्मरतापदुःस्थः ८१
यत्प्रत्युत त्वन्मृदुबाहुवल्ली-स्मृतिस्रजं गुम्फति दुर्विनीता ।
ततो विधत्तेऽधिकमेव तापं तेन श्रिता शैत्यगुणा मृणाली ८२

---

दुःस्थः अस्वस्थ इत्यर्थः वारीणि पाति रक्षतीति वारिपः जलाधिपः निजः पतिः वरुणः हृदि तिष्ठतीति हृदिस्थः स्मरणविषयीभूतः अभ्यन्तरस्थश्च यथा सम्प्रति त्वद्विरहदशायाम् इत्यर्थः । पयोनिधीनां तापाय भवतीति शेषः । तथा क्षुधितः बुभुक्षितः अश्वामुखोत्थः वड़वामुखोत्पन्नः शिखावान् अग्निः पयोनिधीनां समुद्राणां तापाय न । अत्र तादृक्तापासम्बन्धेऽपि तत्सम्बन्धोक्तेः अतिशयोक्तिः तया च त्वद्विरहात् वरुणस्य सन्तापो वड़वानलमतिशेते इति वस्तु व्यज्यते इति वस्तुध्वनिः ॥ ८१ ॥

यदिति । शैत्यमेव गुणो यस्याः सा शैत्यगुणा शीतस्वभावा अतएव तेन वरुणेन श्रिता तापशान्त्यर्थं धृता सेवितेत्यर्थः । तथापि दुर्विनीता दुश्चारिणी प्रतिकूलवर्त्तिनी तापशान्तिम् अकुर्वतीत्यर्थः । मृणाली बालमृणालम् अल्पत्वविवक्षायां स्त्रीलिङ्गता स्त्री स्यात् काचिन्मृणाल्यादिविवक्षापचये यदीत्यमरः । जातेरस्त्रीविषयादयोपधादिति ङीप् । यत् यस्मात् तव मृदुबाहू एव वल्लरी तयोः कोमलभुजलतयोः इत्यर्थः, स्मृतिस्रजं स्मरणमालां पुनः पुनः स्मरणमित्यर्थः, गुम्फति रचयति जनयतीत्यर्थः । ततः तस्मादेव त्वद्भुजलतास्मरणादेव कारणात् इत्यर्थः । प्रत्युत वैपरीत्येन प्रत्युत युक्तवैपरीत्ये इति गणव्याख्यानम् । अधिकं तापमेव एवकारात् तच्छान्तिव्यवच्छेदः विधत्ते जनयतीत्यर्थः । अन्योऽपि दुर्विनीतः सेवितोऽपि

न्यस्तं ततस्तेन मृणालदण्ड-खण्डं बभासे हृदि तापभाजि।
तच्चित्तमग्नैर्मदनस्य बाणैः क्षतं शतच्छिद्रमिव क्षणेन ॥८३॥
इति त्रिलोकीतिलकेषु तेषु मनोभुवो विक्रमकामचारः।
अमोघमस्त्रं भवतीमवाप्य मदान्धताऽनर्गलचापलस्य ॥८४॥

सेवकस्य उपकारं न करोति प्रत्युत तदपकारमेव करोतीति गम्यते। तापशान्तिः तावद्दूरे तिष्ठतु प्रत्युत तव बाहुलता-स्मरणात् अधिकमेव व्यथते वरुण इति तात्पर्य्यम्। अत्र सा-दृश्यात् बाहुलतास्मृतेः स्मरणालङ्कारः। तथाच दर्पणः, सदृ-शानुभवात् वस्तुस्मृतिः स्मरणमुच्यते इति तेन च समुज्जीवितो यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भव इति दर्पणोक्तविषमा-लङ्कारभेदः इत्यनयोः अङ्गाङ्गिभावेन सङ्करः ॥ ८२ ॥

न्यस्तमिति। ततः तस्मात् सम्पूर्णमृणाल्या बाहुलतास्मार-कत्वेन धारणायोग्यत्वात् इत्यर्थः, तेन वरुणेन तापं भजते इति तापभाजि सन्तापभृते इत्यर्थः हृदि हृदये न्यस्तं निहितं मृणालदण्डखण्डं बिसलताशकलं तस्य वरुणस्य चित्ते मग्नैः निपतितैः मदनस्य कामस्य बाणैः शरैः क्षणेन शतं छिद्राणि यस्य तत् शतच्छिद्रं तदिव तथाकृतमिव बभासे रराजे मृणालदण्डस्य स्वाभाविकं बहुच्छिद्रत्वं मदनबाणकृतत्वेन उत्प्रेक्ष्यते। अनेन च त्वन्निबद्धचेता वरुणः कामशरैः जर्जरी-कृत इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८३ ॥

साम्प्रतं साधारण्येन दूत्यमाचरति इतीत्यादिभिः। हे दमयन्ति! भवतीं त्वाम् अमोघम् अव्यर्थम् अस्त्रम् अवाप्य लब्ध्वा मदेन मदो विकारः सौभाग्ययौवनाद्यवलेपज इत्युक्त-लक्षणेन अन्धः निर्विवेकः तस्य भावः तत्तया अनर्गलम् उच्छृ-

सारोत्थधारेव सुधारसस्य स्वयंवरः श्वो भविता तवेति ।
सन्तर्पयन्ती दमयन्ति ! तेषां श्रुतिः श्रुती नाकसदामयासीत् ॥८५॥
समं सपत्नीभवदुःखतीर्णैः स्वदारनासापथिकैर्मरुद्भिः ।
अनङ्गशौर्य्यानलतापदुःस्थैरथ प्रतस्थे हरितां मरुद्भिः ॥८६॥

---

ह्वलं चापलं चाञ्चल्यं दुर्व्यवहार इति यावत् यस्य तथाभूतस्य मनोभुवः कामस्य तेषु पूर्वोक्तेषु प्रसिद्धेषु वा त्रिलोकीतिलकेषु त्रिभुवनालङ्कारविशेषभूतेषु इन्द्रादिषु इति शेषः। इतीत्थं विक्रमस्य पराक्रमस्य कामचारः स्वेच्छाचारित्वं वर्त्तते इति शेषः। त्वदर्थमेव ते इन्द्रादयः कामेन यथेच्छं क्षुद्रा इव व्यवह्रियन्ते इति भावः ॥ ८४ ॥

सारेति। हे दमयन्ति ! तव स्वयंवरः श्वः परस्मिन् अह्नि भविता भविष्यति इति श्रुतिः वार्त्ता। श्रुतिः श्रोत्रे तथाम्नाये वार्त्तायां श्रोत्रकर्मणि इति विश्वः। सुधारसस्य पीयूषरसस्य सारात् सारभागात् उत्तिष्ठति इति तदुत्था धारा इव प्रवाह इव तेषां नाके स्वर्गे सीदन्तीति नाकसदो देवाः तेषाम् इन्द्रादीनाम् इत्यर्थः कर्मणि षष्ठी। सन्तर्पयन्ती प्रीणयन्ती सती श्रुती कर्णौ तेषामित्यनुषङ्गः अयासीत् प्राप्ता। तव स्वयंवरवार्त्ताश्रवणेन ते हृष्टा जाता इति भावः। अत्र श्रुतेः अरूपत्वात् सुधारससारोत्थधारया सादृश्यासम्भवात् न उपमालङ्कारः तथात्वेन सम्भावनादुत्प्रेक्षैवेति ॥ ८५ ॥

सममिति। अथ तव स्वयंवरश्रवणानन्तरम् अनङ्गस्य कामस्य शौर्य्यं प्रताप एव अनलः अग्निः तेन यः तापः तेन दुःस्थाः दुःखेन स्थिताः तैः हरितां दिशाम्। दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता इत्यमरः। मरुद्भिः देवैः दिक्पालैः

अपास्तपाथेयसुधोपयोगैस्त्वच्चुम्बिनेव स्वमनोरथेन ।
क्षुधश्च निर्वापयता तृषश्च स्वादीयसाध्वा गमितः सुखं तैः ॥८७

---

इत्यर्थः । मरुतौ पवनामरौ इत्यमरः । इन्द्रादिभिः इत्यर्थः, स्वस्वामिभावसम्बन्धे षष्ठीसमासः । समानः पतिः यस्याः सा सपत्नी नित्यं सापत्न्यादिषु इति ङीप् नकारश्च । तद्भवेन अस्माकं भैमी सपत्नी भविष्यति इति धिया जातेन दुःखेन तीक्ष्णाः अत्युष्णाः तैः स्वदाराणां निजरमणीनां नासासु नासिकासु पन्थानं गच्छन्तीति पथिकाः तैः स्वभार्य्यानासापथचारिभिः इत्यर्थः, मरुद्भिः वायुभिः निश्वासवायुभिः इत्यर्थः सहेति शेषः । प्रतस्थे प्रस्थितं भावे लिट् । इन्द्रादिभिः कामसन्तप्तैः त्वाम् उद्दिश्य प्रस्थितं प्रस्थितश्च तत्पत्नीनां शच्यादीनां सापत्न्यदुःखात् दीर्घैः उष्णैश्च निश्वासवायुभिः इति निष्कर्षः । अत्र अमरपवनप्रस्थानयोः कारणकार्य्यरूपयोः समकालत्वेन कार्य्यहेत्वोः पौर्वापर्य्यात्ययरूपातिशयोक्तिस्तया च समुत्थापितः सहोक्त्यलङ्कारः। तथाच दर्पणः, सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते। भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ। पौर्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा तत इति। सहार्थस्य बलादेकं यत्र स्याद् वाचकं द्वयोः। सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेदिति च ॥ ८६ ॥

अपास्तेति। पथि साधु पाथेयं संवलम्। पाथेयं संवलं स्मृतम् इति यादवः। पथ्यतिथिवसतिस्वपतेर्ढञ्। या सुधा अमृतं तस्या उपयोगः आहारः पाथेयसुधोपयोगः। अपास्तः परित्यक्तः पाथेयसुधोपयोगो यैः तथाभूतैः पाथेयं सुधामपि त्यजद्भिरित्यर्थः, तैः इन्द्रादिभिः त्वां चुम्बतीति त्वच्चुम्बी तेन त्वद्गतेनेत्यर्थः। स्वादीयसा अतिशयेन स्वादुना

प्रिया मनोभूशरदावदाहे देवीस्त्वदर्थेन निमज्जयद्भिः ।
सुरेषु सारैः क्रियतेऽधुना तैः पादार्पणानुग्रहभूरियं भूः ॥८८॥
अलङ्कृतासन्नमहीविभागै रयं जनस्तैरमरैर्भवत्याम् ।
अवापितो जङ्गमलेख्यलक्ष्मीं निक्षिप्य सन्देशमयाक्षराणि॥८९॥

अतएव क्षुधं बुभुक्षाञ्च तृषाञ्च पिपासाञ्च निर्वापयता शमयता स्वमनोरथेनेव दमयन्तीं लब्धा एवमेवं रंस्ये इत्येवमभिलाषेण इव रथभूतेनेव इति भावः। अध्वा पन्थाः सुखं गमितः अतिक्रान्तः। इन्द्रादयोऽमृतमपि विहाय त्वद्गतमनोरथमात्रसंबलाः समायाता इति भावः। अत्र मनोरथेनेवेति उत्प्रेक्षालङ्कारः ॥ ८७ ॥

प्रियेति। सुरेषु देवेषु मध्ये सारैः श्रेष्ठैः तैः इन्द्रादिभिः त्वमेव अर्थः प्रयोजनं तेन त्वन्निमित्तेनेत्यर्थः, प्रियाः दयिताः देवीः शच्यादीः मनोभुवः कामस्य शरा एव दावो वनाग्निः दवदावौ वनानले इत्यमरः। तस्य दाहे निमज्जयद्भिः विरहानले निक्षिपद्भिरित्यर्थः, सद्भिः अधुना साम्प्रतम् इयं भूः पृथिवी विदर्भदेशो वा पादार्पणमेवानुग्रहः तस्य भूः स्थानं क्रियते। इन्द्रादयो देवास्त्वामुद्दिश्य साम्प्रतं स्वस्वभार्य्याः परित्यज्य पृथिवीमागता इति निष्कर्षः। अत्र मनोभूशरदावदाहे इति रूपकालङ्कारेण शच्यादयो विरहतापादतितमां व्यथिता इति वस्तु व्यज्यते इति वस्तुध्वनिः ॥ ८८ ॥

अलङ्कृतेति। तैः अमरैः देवैः इन्द्रादिभिः अलङ्कृतः पादार्पणेन भूषितः आसन्नः सन्निहितः महीविभागः भूप्रदेशः यैः तथाभूतैः एतन्नगरीसमीपमुपगतैः इत्यर्थः, सद्भिः अयं जनः मल्लक्षणो जन इत्यर्थः, भवत्यां विषये भवतीं प्रतीत्यर्थः सन्देश-

एकैकमेते परिरभ्य पीनस्तनोपपीड़ं त्वयि सन्दिशन्ति।
त्वं मूर्च्छतामः स्मरभिल्लशल्यैर्मुदे विशल्यौषधिवल्लिरेधि ॥९०॥

मयानि वाचिकरूपाणि अक्षराणि वचनानि निक्षिप्य अर्प-यित्वा जङ्गमस्य गत्वरस्य लेख्यस्य लक्ष्मीं श्रियम् अवापितः प्रापितः जङ्गमपत्रिकासदृशः कृत इत्यर्थः, त्वां प्रार्थयितुं सन्देशहरत्वेनाहं प्रेषित इति यावत्। अत्र अन्यस्य धर्मं कथमन्यो वहत्विति जङ्गमलेख्यस्य लक्ष्मीमिव लक्ष्मीमिति सादृश्याक्षेपात् निदर्शनालङ्कारः। तथा च दर्पणः, सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति ॥ ८९ ॥

एकैकमिति। एते इन्द्रादयो देवाः एकैकं प्रत्येकं वीप्सायां द्विरुक्तिः। एकं बहुव्रीहिवदिति बहुव्रीहिवद्भावात् सुलोपः क्रियाविशेषणञ्च एतत् अन्यथैकत्वनपुंसकत्वानुपपत्तेः। प्रत्येकमिति पाठान्तरम्। पीनस्तनोपपीड़ं पीनस्तनयोरुपपीड्येत्यर्थः, सप्तम्या चोपपीड़रुधकर्ष इति णमुल्प्रत्ययः। परिरभ्य यथा पीनाभ्यां स्तनाभ्याम् आत्मनः पीड़ा भवति तथा आलिङ्ग्येत्यर्थः, त्वयि विषये त्वत्समीपे वा सामीप्याश्लेषविषयैर्व्याप्ताधारश्चतुर्विध इति वोपदेवः। हे भैमि! त्वं स्मरः काम एव भिल्लः अन्त्यजजातिविशेषः व्याध इति यावत् मूलाश्लेषादयो भिल्लाः कथ्यन्ते ह्यन्त्यजातय इति हलायुधः। तस्य शल्यैः तदाख्यैः शरविशेषैः मूर्च्छतां मोहं गच्छतां नोऽस्माकं मुदे हर्षाय तच्छल्योद्धारेण मूर्च्छापनयनेन इति भावः। विशल्या विगतं शल्यं तत्क्लेशो वा यया तथोक्ता शल्योद्धारिणीत्यर्थः, ओषधिवल्लिः ओषधिलताविशेषः विशल्यकरणी नाम लतेत्यर्थः, एधि भव अस्तेर्लोप मध्यमैकवचनं घ्वसोरित्यभ्यास-

त्वत्कान्तिमस्माभिरयं पिपासन्मनोरथाश्वासनयैकयैव ।
निजः कटाक्षः खलु विप्रलभ्यः कियन्ति यावन्न्ण वासराणि ॥ ८१ ॥
निजे स्रजास्मासु भुजे भजन्त्यावादित्यवर्गे परिवेशवेशम् ।
प्रसीद निर्वापय तापमङ्गै रनङ्गलीलालहरीतुषारैः ॥ ८२ ॥

---

लोपश्चेत्येकारः झयलभ्यो हेधि चेति सकारलोपः । त्वामुद्दिश्य स्मरोऽस्मान् नितरां व्यथयति तदस्मान् प्रति स्वसमर्पणेन अनुकम्पस्वेति भावः । इति सन्दिशन्ति वाचिकं कथयन्ति ॥ ८० ॥

अथ षोड़शभिः श्लोकैः सन्देशं विवृणोति त्वदित्यादिभिः । अस्माभिः तव कान्तिं लावण्यं पिपासन् पातुमिच्छन् पिबतेः सनन्ताल्लटः शत्रादेशः । अयं निजः अस्मदीयः कटाक्षः एकया केवलया मनोरथेन या आश्वासना तया एवमेवं प्रकारेण भैमी त्वया निरीक्षणीयेति मनःकल्पितेन आश्वासदानेन एवेत्यर्थः, कियन्ति वासराणि यावत् कियद्दिनपर्य्यन्तमित्यर्थः, अत्यन्तसंयोगे द्वितीया । विप्रलभ्यः प्रतार्य्यः खलु निश्चितं भण कथय। प्रतारणा च लोके न चिरं शोभते अतः स्वकान्तिप्रदर्शनेन अस्माकं कटाक्षः सत्वरं कृतार्थः करणीय इति भावः ॥ ८१ ॥

निजे इति । निजे स्वीये भुजे बाहू अत्र भुजाशब्दः स्त्रीलिङ्गः । आदित्यवर्गे देवगणे सूर्य्यवृन्दे च अस्मासु परिवेशस्य वेष्टनस्य परिधेस्व । परिवेशो रवेः पार्श्वे मण्डले वेष्टने तथेत्यजपालः । वेशम् आकारं भजन्त्यौ प्राप्नुवन्त्यौ स्रज कुरु बाहुभ्यां कण्ठं वेष्टयित्वा अस्मान् आलिङ्गेत्यर्थः । प्रसीद प्रसन्ना भव अनङ्गलीला कामविलासः तस्या लहरीभिः तरङ्गैः तुषाराणि शीतलानि सुखस्पर्शानीति भावः तैः अङ्गैः अवयवैः अस्माकं तापं मदनज्वरजनितं सन्तापं निर्वापय शान्तिं नय ।

दयस्व नो घातय नैवमस्माननङ्गचाण्डालशरैरदृश्यैः ।
भिन्ना वरं तीक्ष्णकटाक्षबाणैः प्रेमस्तव प्रेमरसात् पवित्रैः॥८३॥
त्वदर्थिनः सन्तु परःसहस्राः प्राणास्तु नस्त्वच्चरणप्रसादः ।

---

आदित्यवर्गे अस्माप्स्विति वर्गशब्दस्य बहुत्ववाचकतया न सामानाधिकरण्यव्याघातः। अत्र परिवेशवेशमित्यत्र परिवेशस्य वेशमिव वेशमिति सादृश्याक्षेपात् निदर्शनालङ्कारः ॥ ८२ ॥

दयस्वेति। हे दमयन्ति ! नोऽस्माकं दयस्व अस्माननुकम्पस्वेत्यर्थः, अधिगर्थदयेशां कर्मणि इति षष्ठी। नोऽस्मान् दयस्व स्मृत्यर्थदयेशां वेति कर्मणि षष्ठ्या विकल्पेन विधानादिति केचित्। अदृश्यैः अलक्ष्यैः अतएव अप्रतीकारार्हैरिति भावः अनङ्ग एव चाण्डालः व्याधः तस्य शरैः बाणैः एवं मनोरथशतकल्पनप्रयासरूपेण प्रकारेण इत्यर्थः, अस्मान् न घातय न मारय। प्रेमा एव रसः अमृतं तस्मात् तत्सद्भावादित्यर्थः, पवित्राः विशुद्धाः तैः प्रेमामृतक्षालितैरित्यर्थः तव तीक्ष्णाः तीव्राः दुःसहा इति यावत् ये कटाक्षा एव बाणाः शराः तैः भिन्ना विद्धाः सन्तः वरं प्रेमः प्रेता भवामः प्राणांस्त्यजाम इत्यर्थः। प्रपूर्वादिणो लडुत्तमपुरुषबहुवचनम्। देवादृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक् प्रिये इत्यमरः। चाण्डालहस्तान्मरणमपेक्ष्य पवित्रहस्तात् मरणं मनाक् प्रियमिति भावः। तव कटाक्षपातमाकाङ्क्षन्तो वयमत्र समागता इति तात्पर्य्यम्। अत्र अनङ्गस्य चाण्डालत्वरूपणेन तच्छरस्यातीव कटुत्वं कटाक्षस्य च बाणत्वरूपणेन कटुत्वमपि प्रेमरसात् पवित्रैरिति विशेषणेन मधुरत्वञ्च गम्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८३ ॥

त्वदिति। सहस्रात्परे परःसहस्राः सहस्राधिकसङ्ख्यका

विशङ्कसे कैतवनर्त्तितञ्चेदन्तश्चरः पञ्चशरः प्रमाणम् ॥ ८४ ॥
अस्माकमध्यासितमेतदन्तस्तावद्भवत्या हृदयं चिराय ।
बहिस्त्वयालङ्क्रियतामिदानीं मुरो मुरं विद्विषतः श्रियेव ॥८५॥

---

इत्यर्थः, परःशताद्यास्ते येषां परा सङ्ख्या शताधिकेत्यमरः । पञ्चमी न योगविभागात् समासः राजदन्तादित्वादुपसर्जनस्य परनिपातः पारस्करादित्वात् सुड़ागमः । युवान इति शेषः । त्वामर्थयन्ते इति त्वदर्थिनः त्वत्कामुकाः सन्तु भवन्तु । नोऽस्माकं प्राणास्तु तव चरणयोः प्रसादः अनुग्रहः अस्माकं जीवनं तवानुग्रहाधीनमिति भावः । अन्ये तु तवाभिलाषुका एव परं त्वदधीनप्राणा न, वयन्तु त्वत्कामुकतया त्वदधीनप्राणा इति विशेष इति तात्पर्य्यम् । वास्तवञ्चैतदित्याह विशङ्कसे इति । कैतवेन कपटेन नर्त्तितं कपटनाटकम् अलीकभाषितमिति यावत् विशङ्कसे चेत् तर्हि अन्तश्चरतीति अन्तश्चरः हृदयान्तर्वर्त्तीत्यर्थः पञ्चशरः कामः प्रमाणं साक्षी पञ्चशरमेव हृदयस्थं साक्षिणं पृष्ट्वा अस्माकं मनोगतं भावं निश्चिनुहीति भावः ॥८४॥

अस्माकमिति । भवत्या दीप्यमानया भादीप्तावित्यस्मा-ड्डवतुप्रत्ययः उगितश्चेति ङीप् । त्वया अस्माकम् एतत् अन्तः हृदयम् अन्तःकरणं चिराय चिरात् प्रभृति अध्यासितं तावत् अधिष्ठितमेव तावच्छब्दोऽवधारणे । निरन्तरानुध्यानेन इति भावः । पूर्वकालादारभ्य अस्माभिस्त्वं मनसि धृतासीति तात्पर्य्यम् । इदानीं मुरं विद्विषतः मुरारेर्विष्णोः इत्यर्थः, द्विषोऽमित्र इति शतृप्रत्ययः द्विषः शतुर्वा वचनमिति विकल्पान्न-लोकेत्यादिना षष्ठीप्रतिषेधः । उरः वक्षस्थलं श्रियेव लक्ष्मीव अस्माकं बहिः बाह्यं हृदयं वक्षस्थलमित्यर्थः, हृदयं वक्षसि

दयोदयश्चेतसि चेत्तवाभूदलङ्कुरु द्यां विफलो विलम्बः।
भुवः स्वरादेशमथाचरामो भूमौ धृतिं यासि यदि स्वभूमौ ८६
धिनोति नास्मान् जलजेन पूजा त्वयान्वहं तन्वि ! वितन्यमाना
तव प्रसादाय नतेः तु मौली पूजास्तु नस्त्वत्पदपङ्कजाभ्याम् ८७

---

स्वान्ते इति विश्वः। अलङ्क्रियतां भूष्यताम्। अत्रोपमालङ्कारेण नारायणस्य लक्ष्मीरिव त्वमस्माकं हृदयवर्त्तिनी सती सौभाग्यस्य परां काष्ठां लप्स्यसे इति वस्तु व्यज्यते इति वस्तुध्वनिः॥ ८५॥

दयेति। तव चेतसि दयायाः अस्मासु कृपाया उदयः आविर्भावश्चेत् अभूत् तदा द्यां स्वर्गम् अलङ्कुरु स्वाधिष्ठानेन विभूषयेत्यर्थः, विलम्बः कालक्षेपः विफलः निष्प्रयोजनः शुभस्य शीघ्रमिति न्यायेन कालक्षेपमकृत्वा अस्माकं वरणेन स्वर्गं आगच्छ इति निष्कर्षः। अथ पक्षान्तरे स्वभूमौ निजजन्मस्थाने भूमिः पृथ्यां वासदेशे स्थानमात्रेऽपि च स्त्रियामिति बलः। धृतिं सन्तोषम्। धृतिः सन्तोषधैर्य्ययोरित्यमरः। यासि लभसे जन्मभूमौ वासे प्रीणासीत्यर्थः यदि तदा भूमौ स्वरादेशं स्वर्गसंज्ञां आचरामः भूमिं स्वर्गं कृत्वा वयमत्र वसामः अस्मदधिष्ठानस्यैव स्वर्गत्वादिति भावः॥ ८६॥

धिनोतीति। हे तन्वि ! हे कृशाङ्गि ! त्वया अह्नि अह्नि अन्वहं प्रतिदिनमित्यर्थः वीप्सायामव्ययीभावे अनश्च नपुंसकादन्यतरस्यामिति समासान्तः। अन्वष्टघोरे वेति टिलोपः। वितन्यमाना विशेषेण क्रियमाणा जलजेन कमलेन जलजं शङ्खपद्मयोरित्यमरः। जातावेकवचनं जलजैरित्यर्थः। पूजा अस्मान् न धिनोति न प्रीणयति। तु किन्तु तव प्रणयकुपितायाः इति भावः। प्रसादाय प्रसन्नतासम्पादनाय नते नम्रतां

स्वर्णैर्वितीर्णैः करवाम वामनेत्रे! भवत्या किमुपासनासु।
अङ्ग! त्वदङ्गानि निपीतपीतादर्पाणि पाणिः खलु याचते नः॥९८

---

गते मौलौ शिरसि अस्माकमिति शेषः। तव पादपङ्कजाभ्यां चरणकमलाभ्यां पूजा अस्तु भवतु। अपरकमलापेक्षया तव चरणकमलयोरुत्कर्षात् ताभ्यामेव प्रणयकोपेषु अस्माकं शिरसि ताड़नमेव पूजां वयं बहु मन्यामहे इति परमार्थः। अत्र पद-पङ्कजाभ्यामिति प्रकृतपूजायामुपयोगित्वात् परिणामालङ्कारः। तथाच दर्पणः, विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि। परिणामो भवेदिति॥ ९७॥

स्वर्णैरिति। वामे सुन्दरे नेत्रे यस्याः सा वामनेत्रा तत्-सम्बुद्धौ हे वामनेत्रे! हे सुनयने! इत्यर्थः। वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे इति विश्वः। भवत्या त्वया उपासनासु आराधनासु देवानामस्माकमिति शेषः। वितीर्णैः दत्तैः स्वर्णैः स्वर्णनिर्मितपुष्पालङ्कारादिभिः इत्यर्थः। किं करवाम न किम् अपीत्यर्थः, अस्माकं स्वर्णमयसुमेरुवासित्वात् स्वर्णाभावो नास्तीति भावः। अङ्ग इत्यामन्त्रणे अङ्ग भो भैमि! नः अस्माकं पाणिः निपीतः निःशेषेण पीतः गृहीत इत्यर्थः। पीताया हरिद्राया दर्पः सौन्दर्य्यगर्वः यैः तानि। स्वादूका काञ्चनी पीता हरिद्रा वरवर्णिनीत्यमरः। त्वदङ्गानि तव अङ्गानि अवयवान् याचते खलु प्रार्थयते एवेत्यर्थः। पीतदर्पाणीति पाठस्तु मनो-रमः तदयमर्थः निपीतः पीतस्य सुवर्णस्य दर्पः कान्तिगर्वो यैः तानि त्वदङ्गानि याचते खलु इति। तथाच स्वर्णगर्वहारित्वेन स्वर्णादप्युत्कृष्टं त्वदङ्गं तल्लाभ एव अस्माकमीप्सितः तदपकृष्ट-स्वर्णदाने कथमस्माकं प्रीतिरिति निष्कर्षः। हरिद्रामात्रादुत्कर्षे

वयं कलादा इव दुर्विदग्धं त्वद्गौरिमस्पर्द्धि दहेम हेम ।
प्रसूननाराचशरासनेन सहैकवंशप्रभवभ्रु ! बभ्रु ॥ ९९ ॥
सुधासरःसु त्वदनङ्गतापः शान्तो न नः किं पुनरप्सरःसु ।

न यस्या अङ्गस्य तथा वैचित्र्यमिति बोध्यम् । पीतं वर्णे सुवर्णे चेति बलः ॥ ९८ ॥

वयमिति । प्रसूनं पुष्पं माराचम् अस्त्रविशेषो यस्य स प्रसूननाराचः कामः तस्य शरासनेन चापेन सह एकवंशे एकस्मिन् वेणौ कुले च प्रभवः उत्पत्तिः ययोः तादृश्यौ एककारणोत्पन्ने अतिसुसदृशे इति भावः। भ्रुवौ यस्याः सा तद्भ्रूः तत्सम्बुद्धौ हे कामधनुःसदृशभ्रूयुगशालिनि ! इत्यर्थः । ऊङ् न उत्तरपदो बहुव्रीहिः । अन्यथा अनूङन्तस्य भ्रूशब्दस्यानङ्स्थानस्या नदीत्वात् सम्बुद्धावम्बार्थेत्यादिना नदी ह्रस्वो न स्यात् ननु ऊङ् न इत्युक्तं कथमूकारादिति चेत् सत्यम् अप्राणिजातेश्चारज्वादीनामित्यत्र अलाभः । कर्कन्धूरिति भाष्यकारेण उदाहरणात् ऊकारादप्यङस्येवेति ज्ञायते । अतएव वामनः ऊकारादप्यूङ् प्रवृत्तेरिति । तदेतत् सम्यग्विवेचितं मल्लिनाथेन कुमारसम्भवसञ्जीवन्यां"विमानना सुभ्रु ! कुतः पितुर्गृहे"इत्यत्र श्लोके । वयं कलाः स्वर्णखण्डान् द्यन्ति खण्डयन्तीति कलादाः स्वर्णकारा इव । कलादा रुक्मकारका इत्यमरः । तव गौरिमाणं गौरत्वं स्पर्द्धते इति त्वद्गौरिमस्पर्द्धि तव गौरत्वसाम्याभिलाषीत्यर्थः अतएव दुर्विदग्धं प्रबलविरोधितया अविज्ञमित्यर्थः, बभ्रु पिङ्गलम् । बभ्रु स्यात् पिङ्गले त्रिषु इत्यमरः । हेम सुवर्णं दहेम अग्नौ प्रक्षिपेम । वयमस्य तादृशीं स्पर्द्धां सोढुमसमर्थाः अग्निदाहरूपं दण्डं कुर्म इति भावः। अत्र उपमालङ्कारः ॥९९

निर्वाति तु त्वन्ममताक्षरेण सूनाशुगेषोर्मधुशीकरेण ॥१००॥
खण्डः किमु त्वद्गिर एव खण्डः किं शर्करा तत्पथशर्करैव।
कृशाङ्गि! तद्भङ्गिरसोत्थकच्छदृषणनु दिक्षु प्रथितं तदिक्षुः॥१०१॥

---

सुधेति। नः अस्माकं त्वदनङ्गतापः त्वन्निमित्तकामसन्तापः सुधासरःसु अमृतसरोवरेषु अपि न शान्तः न शान्तिं प्राप्तः, अपां सामान्यजलानां सरःसु अथच उर्वश्यादिषु स्वर्गवेश्यासु किं पुनः? एष सन्तापः सामान्यसरोवरेषु सुरसुन्दरीषु च शमयितुं न शक्य इति भावः। तर्हि कथमस्य शान्तिरित्यत्राह निर्वातीति। तु किन्तु सूनानि कुसुमानि आशुगाः शरा यस्य तस्य इषोः शरस्य कुसुमरूपस्येत्यर्थः मधुशीकरेण मकरन्द-विन्दुसदृशेन इत्यर्थः तव ममताक्षरेण ममत्वसूचकवचनेन यूयं मम इत्येवंरूपेणेति भावः निर्वाति शाम्यति। तव विरह-सन्तप्तानाम् अस्माकम् अमृतसरोवरावगाहनं सुरनारीसम्भो-गश्च न शान्तये, केवलं तव अमृतविन्दुवर्षिणा मधुरवचनेनैव शान्तिर्भविता तापो हि यदप्राप्तिजन्यः तत्प्राप्तिरेव तच्छान्त्यु-पायो न अन्यथा इति भावः॥ १००॥

खण्ड इति। हे कृशाङ्गि! खण्डः गुड़विशेषः। खण्डोऽस्त्री शकले ऽपीक्षुविकारमणिदोषयोरिति। शर्करा खण्डविकृता-वुपला कर्परांशयोरिति मेदिनी। त्वद्गिरः तव वचनस्य खण्ड एव अंश एव किमु? शर्करा सिताख्या तस्या गिरः पन्थाः तत्-पथः तस्य शर्करा कर्परशकल एव किम्? तथा इक्षुः तदाख्यं तत् दिक्षुः प्रथितं विख्यातं वस्तु तस्या गिरः भङ्गी वैचित्र्यवान् यो रसः तस्मात् उत्तिष्ठति इति त्वदुत्थो यः कच्छः अनूपदेशः जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविध इत्यमरः। तस्य दृणं

ददाम किं ते सुधयाधरेण त्वदास्य एव स्वयमास्यते यत्।
विधुं विजित्य स्वयमेव भावि त्वदाननं तन्मखभागभोजि १०२

नु? अन्यथा कथमेषां तथा माधुर्य्यमिति भावः। अत्र उत्प्रेक्षात्रयेण वयमतितरां तव वचनमधु पिपासव इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः। अत्र द्रव्ये वैशेषिककार आह, मत्स्यण्डिकाः खण्डसिताः क्रमेण गुणवत्तमाः। यथा यथा हि नैर्मल्यं मधुरत्वं तथा तथा। धौतत्वात् निर्मलत्वाच्च तथा सितत्वमक्रमात्। वालुकेव भृशं सूक्ष्मा सुस्निग्धा सितपिङ्गला। मत्स्याण्डाकृतिसादृश्ययोगात् मत्स्यण्डिका स्मृता। स्फटिकोपलखण्डाभः खण्डस्तच्छर्करा समा। शर्करा निर्मला सैव सिता तु सितशर्करा। निर्मलैव सिता सातु राजराज इतीरिता इति॥ १०१॥

वयं केनापि प्रियवस्तुदानेन त्वाम् आराधयितुं न शक्ता इत्याह, ददामेति। ते तुभ्यं किं वस्तु ददाम? त्वद्दानोपयुक्तं किमपि अस्माकं नास्ति येन दत्तेन त्वां प्रीणयाम इति भावः। ननु देवा यूयं युष्माकम् अमृतमस्ति तद्दीयतामित्यत्राह सुधया अमृतेन यत् यस्मात् तव आस्ये एव मुखे एव अधरेण अधररूपेण इत्यर्थः, स्वयं साक्षात् आस्यते स्थीयते भावे लट्। तव अधरे एव अमृतं तिष्ठति तत् तदर्थं तव न आकाङ्क्षेति भावः। ननु देवानां यज्ञांशभोक्तृत्वमस्ति तदंशो मह्यं दीयतामित्यत्राह विधुमिति। त्वदाननं तव मुखं कर्तृ विधुं चन्द्रं विजित्य पराभूय स्वयमेव परानपेक्षयैवेत्यर्थः तस्य विधोः यो मखभागः यज्ञांशः तं भोक्तुं शीलमस्येति तन्मखभागभोजि तदीययज्ञांशाधिकारीत्यर्थः, भावि भविता यो यं जयति स तस्याधिकृतं सर्वमेव वस्तुजातं हरतीति नयेन तव मुखेन विधुः

प्रिये ! वृणीष्वामरभावमस्मदिति त्रपोदश्चि वचो न किन्नः ।
त्वत्पादपद्मे शरणं प्रविश्य स्वयं वयं येन जिजीविषामः॥१०३॥
अस्माकमस्मान्मदनापमृत्योस्त्राणाय पीयूषरसोऽपि नासौ ।
प्रसीद तस्मादधिकं निजन्तु प्रयच्छ पातुं रदनच्छदन्नः॥१०४॥

---

जितः तस्मात् विधुप्राप्यं यज्ञांशं त्वं स्वयमेव प्राप्तासीति यज्ञांशदानेन अपि वयं त्वत्प्रीतिं जनयितुं न शक्नुम इति भावः। अत्र पूर्वार्द्धे सुधयाधरेणेति रूपकं द्वितीयार्द्धे विधुं विजित्येति व्यतिरेकश्च इत्यनयोः संसृष्टिः ॥ १०२ ॥

अमरत्वमपि तुभ्यं दातुं न शक्यते इत्याह, प्रिये इति। हे प्रिये ! अस्मत् अस्माकं सकाशादित्यर्थः। अमरभावम् अमरत्वं देवत्वमित्यर्थः अविनाशित्वञ्च वृणीष्व प्रार्थयस्व इत्येवं रूपं नोऽस्माकं वचः वचनं त्रपां लज्जाम् उदञ्चति उद्गिरतीति त्रपोदश्चि लज्जाजनकमित्यर्थः किं न भवति ? अपितु लज्जाजनकमेव भवतीत्यर्थः कथमित्याह, त्वदिति। येन हेतुना वयं स्वयं तव पादपद्मे एव चरणकमले एव शरणं रक्षकम्। शरणं गृहरक्षित्रोः इत्यमरः। प्रविश्य प्राप्य जिजीविषामः जीवितुमिच्छामः यदा त्वत्कृपैव अस्माकं जीवनहेतुः तदा साम्प्रतं मृता एव वयं कथं तुभ्यम् अमरत्वं दातुं शक्नुमः। स्वयम् असिद्धस्य परार्थसाधने प्रयासः केवलमुपहासाय इति भावः। अत्र त्वत्पादपद्मे इति रूपकम्। अस्मदित्यत्र अस्मान् इति पाठे वृञो याञ्चार्थत्वेन द्विकर्मकत्वात् कर्मणि द्वितीया॥ १०३ ॥

ननु अमृताशिनां भवतां कथं मरणाशङ्केत्यत्राह अस्माकमिति। असौ पीयूषरसः अमृतरसोऽपि अस्मात् मदन एव अपमृत्युः अकालमृत्युः तस्मात् अस्माकं त्राणाय रक्षणाय न

प्लुष्टश्चापेन रोपैरपि सह मकरेणात्मभूः केतुनाभूत्
धत्तां मत्त्वत्प्रसादादथ मनसिजतां मानसो नन्दनः सः।
भ्रूभ्यां ते तन्वि! धन्वी भवतु तव सितैर्जैत्रभल्लः स्मितैः स्तात्
अस्तु त्वन्नेत्रचञ्चत्तरशफरयुगाधीनमीनध्वजाङ्कः॥ १०५॥

---

न भवतीति शेषः। त्वाण्ठ्क्षमो न भवतीत्यर्थः, किन्तु तस्मात् अमृततरमात् अधिकम् अधिकगुणं येन अपमृत्युः निवार्य्यते इति भावः। निजं स्वीयं रदनच्छदम् अधरं पातुं नः अस्मभ्यं प्रयच्छ देहि, प्रसीद प्रसन्ना भव त्वं प्रसन्ना भूत्वा अस्मद्वरणेन अस्माकं मदनापमृत्योः परित्राहीत्यर्थः। लोके च सामान्येन औषधेन अप्रतीकार्य्ये रोगे अधिकवीर्य्यं महौषधं व्यवह्रियते इति गम्यते॥ १०४॥

प्लुष्ट इति। हे तन्वि! कृशाङ्गि! आत्मना भवतीति आत्मभूः कामः चापेन धनुषा रोपैः शरैरपि पत्री रोप इषुर्द्वयोः इत्यमरः। मकरेण केतुना च सह प्लुष्टः दग्धः हरनयनानलेनेति शेषः अभूत्। अथ इदानीं स आत्मभूः तव प्रसादात् अनुग्रहात् नोऽस्माकं तव चेत्यर्थः, त्यदादीनि सर्वैर्नित्यमिति युष्मदस्मदोरेकशेषे परशेषः। मनसः अयं मानसः मनसः सम्बन्धी नन्दनः आनन्दयिता पुत्रश्च नन्दनो हर्षके सुते इति विश्वः। सन् मनसिजतां मनसिजस्य भावः। ताम्। सप्तम्यां जने डः हलदन्तात् सप्तम्याः संज्ञायामित्यलुक्। धत्तां दधातु पुरा दग्धोऽपि आत्मभूरात्मभूरेव अस्तु इत्यर्थः, आत्मा देहे मनो ब्रह्म स्वभावधृतिबुद्धिष्विति विश्वकोषेण मनसोऽपि आत्मपर्य्यायेषु धृतत्वादिति भावः। कामः त्वामस्मांश्च तुल्यानुरागितया नन्दयतु इति भावः। ननु तस्य धनुरादिकं दग्धं कथं तत् तेन लभ्यमित्यत्राह भ्रूभ्यामिति। ते तव भ्रूभ्यां भ्रू-

**स्वप्नेन प्रापितायाः प्रतिरजनि तव श्रीषु मग्नः कटाक्षः**
**श्रोत्रे गीतामृताब्धौ त्वगपि ननु तनूमञ्जरीसौकुमार्य्ये।**

---

युगलेन धन्वी धनुष्मान् भवतु। धन्वन् शब्दादिति पाठादिनिः। तव सितैः विशदैः स्मितैः मृदुहासैः जैत्रा जयशीला जयसाधनानीत्यर्थः, भल्ला: अस्त्रविशेषा यस्य तथाभूतः स्तात् भवतु अस्तेर्लोटि तोस्तातङादेशः। तव नेत्रे एव चञ्चत्तरौ अतिशयेन चञ्चलौ शफरौ प्रोष्ठीसंज्ञकमत्स्यविशेषौ प्रोष्ठी तु शफरी द्वयोः इत्यमरः। तयोर्युगं द्वयं तस्याधीनो मीनरूपो ध्वज एव अङ्कश्चिह्नं यस्य तथोक्तः अस्तु भवतु। दग्धः कामः पुनरपि अस्माकं तव च मनसिजो भूत्वा तव भ्रूयुगलं धनुः तव मृदुहसितानि अस्त्राणि तव नयनयुगलं मीनध्वजं गृहीत्वा अदग्ध इव प्राग्वत् विराजतामिति निष्कर्षः। अत्र भ्रूभ्यां धन्वीत्यादिषु रूपकालङ्कारो व्यज्यते। यथासङ्ख्यमात्मभूत्वादिरूपणाद् यथासङ्ख्यमलङ्कारस्तत् सङ्कीर्णो रूपकालङ्कारश्चेति प्राहुः तन्न समीचीनं कथमपि प्रागुद्दिष्टानां पदार्थानां पश्चाद् यथाक्रममुद्देशस्यैव तत्स्वरूपत्वात् तथा च दर्पणः। यथासङ्ख्यमनूद्देश उद्दिष्टानां क्रमेण यदिति। न चात्र रूपकं वाच्यतया परिगृहीतं अपि तु भङ्ग्या गृहीतमिति रूपकस्य व्यङ्ग्यत्वमेव युक्तमित्यलं विस्तरेण। स्रग्धरावृत्तं म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात्॥ १०५॥

स्वप्नेनेति। हे तन्वङ्गि! कृशाङ्गि! प्रतिरजनि रात्रौ रात्रौ वीप्सायामव्ययीभावः। स्वप्नेन कर्त्रा प्रापितायाः स्वप्ने दर्शनं नीतायाः तव श्रीषु सौन्दर्य्येषु नः अस्माकं कटाक्षः मग्नः निपतितः स्वप्ने त्वत्सौन्दर्य्यम् अस्माभिः कटाक्षेण केवलं दृश्यते इत्यर्थः। नः अस्माकं श्रोत्रे कर्णौ तव गीतमेव अमृताब्धिः

नासा श्वासाधिवासेऽधरमधुनि रसज्ञा चरित्रेषु चित्तं
तन्न स्तन्वङ्गि ! कैश्चिन्न करणहरिणैर्वागुरा लम्भितासि॥१०६॥
इति धृतसुरसार्थवाचिकस्रक्-निजरसनामलपत्रहारकस्य ।
सफलय मम दूततां वृणीष्व स्वयमवधार्य्य दिगीशमेकमेषु१०७

---

सुधासिन्धुः तत्र मग्ने इति लिङ्गवचनव्यत्यासेन अन्वयः। ननु इति आमन्त्रणे। हे भैमि ! नः अस्माकं त्वगपि तव तनुमूर्त्तिरेव मञ्जरी कुसुमवल्लरी मञ्जरिर्वल्लरिः स्त्रियाम् इत्यमरः। तस्याः सौकुमार्य्ये लालित्ये मग्नेति लिङ्गव्यत्यासेन अन्वयः। तथा नः अस्माकं नासा नासिका घ्राणेन्द्रियमित्यर्थः, तव श्वासाधिवासे निश्वासमारुतसौरभे मग्ना। तथा नः अस्माकं रसं जानातीति रसज्ञा रसना जिह्वेत्यर्थः, तव अधरमधुनि अधरामृते मग्ना, तथा अस्माकं चित्तं हृदयं तव चरित्रेषु चेष्टासु गत्यादिषु मग्नं लिङ्गव्यत्यासेन अन्वयः। ततस्मात् कैश्चित् कैरपि करणैः इन्द्रियैः एव हरिणैः मृगैः करणं साधकतमं चेत्रगात्रेन्द्रियेष्वपि इत्यमरः। त्वं वागुरा मृगबन्धनार्थपाशविशेषः। वागुरा मृगबन्धनीत्यमरः। न लम्भिता ? न प्राप्ता ? अपि तु सर्वैरेव अस्माकमिन्द्रियैः प्राप्तैवेत्यर्थः। अस्माकं सर्वाणि इन्द्रियाणि स्वप्नदृष्टायाः तव रूपेण सम्मोहितानीति भावः। देवानाम् अस्वप्नत्वात् यदत्र स्वप्नेनेत्युक्तं तन्नचणया उन्मादावस्था द्योत्यते रजन्याश्च नितरामुद्दीपकतया तत्रैव उन्मादाधिक्यसूचनाय प्रतिरजनीत्युक्तं सङ्गच्छते। अत्र चतुर्थपादवाक्यार्थस्य पूर्वपादत्रयवाक्यहेतुकत्वात् काव्यलिङ्गमलङ्कारः। स च करण हरिणैरिति रूपकेणानुप्राणित इत्यनयोः अङ्गाङ्गिभावेन सङ्करः। वृत्तञ्च प्रागुक्तम् ॥ १०६ ॥

इतीति। इत्येवं धृता सुरसार्थस्य देवबृन्दस्य इन्द्रादेरित्यर्थः।

आनन्दयेन्द्रमथ मन्मथमन्मनमग्निं
केलीभिरुद्वर तनूदरि ! नूतनाभिः।
आसादयोदितदयं शमने मनो वा
नो वा यदीत्थमथ तत् वरुणं वृणीथाः॥ १०८॥

---

वाचिकस्रक् सन्देशवचनपङ्क्तिः यया तादृशी या निजरसना स्वीयजिह्वा सैव अमलं निर्मलं विशदाक्षरमित्यर्थः, स्पष्टाक्षरमिति भावः पत्रं तस्य हरतीति हारकः तस्य धृतसुरसार्थवाचिकौघस्वरसनवल्लरिपत्रहारकस्येति पाठे धृतः सुरसार्थस्य वाचिकौघः सन्देशवचनसंहतिर्यया तादृशी या स्वस्य रसनवल्लरिः जिह्वामञ्जरिः सैव पत्रं तस्य हारकः तस्येति योजना। मम दूततां दौत्यं सफलय फलवतीं कुरु, स्वयमात्मना अवधार्य्य विचार्य्य एषु देवेषु मध्ये एकं दिगीशं दिक्पालं वृणीष्व। निजरसनातलपत्रहारकस्येति क्वचित् पाठः। तत्र निजं रसनातलं रसनैवेत्यर्थः, पत्रं तस्य हारकः तस्य। अधः स्वरूपयोस्तलम् इत्यमरः। एषाम् इन्द्रादीनाम् एकस्य वरणेन मम दौत्यं सफलं कुर्विति परमार्थः। अत्र दूत्यसाफल्यस्य वरणवाक्यार्थहेतुकत्वात् काव्यलिङ्गं तच्च रसनातलपत्रेति रूपकेण सङ्कीर्य्यते इति सङ्करः। पुष्पिताग्रावृत्तम् अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात्॥ १०७॥

आनन्दयेति। हे तनूदरि कृशोदरि! नूतनाभिः नवनवाभिः केलीभिः सुरतक्रीडाभिः मन्मथमन्मनं कामाधीनम् इन्द्रम् आनन्दय प्रीणय अथवा तादृशम् अग्निम् उद्वर परिवाहि वा अथवा उदिता उद्रिक्ता दया यस्मिन् कर्म्मणि तद् यथा तथा शमने यमे मनः आसादय अर्पय, इत्थम् एवम्प्रकारं

अष्टमः सर्गः ।

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मा मल्लदेवी च यम् ।
तस्यागादयमष्टमः कविकुलादृष्टाध्वपान्थे महा-
काव्ये चारुणि वैरसेनिचरिते सर्गो निसर्गोज्ज्वलः ॥ १०९ ॥

---

## नवमः सर्गः ।

तृतीयमर्चिभुवविभ्रमेङ्गितैः स्फुटामनिच्छां विवरीतुमुत्सुका ।
तदुक्तिमात्रश्रवणेच्छयाऽऽशृणोद्दिगीशसन्देशगिरो न गौरवात् १

---

नो वा यदि नैतानिच्छसि यदीत्यर्थः, तत् तदा वरुणं वृणीयाः वरणेन कृतार्थं कुर्वित्यर्थः। वसन्ततिलकं वृत्तं चेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ १०८ ॥

श्रीहर्षमिति। कवीनां कुलेन समूहेन अदृष्टः न दृष्टः योऽध्वा मार्गः तस्य पान्थे नित्यपथिके कवीनामदृष्टचररचनाशालिनि इत्यर्थः, चारुणि मनोहरे निसर्गोज्ज्वले स्वभावत औज्ज्वल्यशोभिनि वीरसेनस्यापत्यं पुमान् वैरसेनिर्नलः तस्य चरितं यस्मिन् तथोक्ते यद्वा तस्य चरिते चरित्रवर्णनरूपे इत्यर्थः। अगात् समाप्तिं गत इत्यर्थः ॥ १०९ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
अष्टमसर्गव्याख्या समाप्ता।

अथास्य पुंसो नल एवायमित्यभिमतस्य वाक्यश्रवणानुरागिण्यैव पर्वोक्तवाक्यानां दयमन्त्या श्रवणमाह तृतीति। इयं

तदर्पितामश्रुतवद्विधाय तां दिगीशसन्देशमयीं सरस्वतीम्।
इदं तमुर्वीतलशीतलद्युतिं जगाद वैदर्भनरेन्द्रनन्दिनी ॥ २ ॥

---

दमयन्ती अक्षिणी च भ्रुवौ च अक्षिभ्रुवं द्वन्द्वैकवद्भावः। अच-तुरेत्यादिना समासान्तादिनिपातनात् साधुः। तस्य विभ्रमो विकृतिः अनिच्छाव्यञ्जकभावविशेष इत्यर्थः, तस्य इङ्गितानि चेष्टितानि तैः स्फुटां सुव्यक्तामित्यर्थः,अनिच्छाम् इन्द्रादिषु अनुरागविषयिणीमिति भावः। विवरीतुं वाचा प्रकटयितुम् उत्सुका उद्युक्ता सती इष्टार्थोद्युक्त उत्सुक इत्यमरः। तस्य पुरुषस्य उक्तिरिव उक्तिमात्रं तस्य श्रवणेच्छया शुश्रूषया श्रव-णानुरागेण इत्यर्थः, दिगीशानां दिक्पालानां सन्देशगिरः वाचिकानि अशृणोत् शुश्राव गौरवात् दिगीशानामिति भावः। न अशृणोदित्यनुषङ्गः। दिगीशसन्देशगिरामिति पाठे दिगी-शानां दिक्पालानां सन्देशगिरः वाचिकानि तासां गौरवात् तदाज्ञापालनमवश्यं कर्त्तव्यमित्यादरादित्यर्थः, न अशृणोदित्य-न्वयः। अस्मिन् सर्गे वंशस्थविलं वृत्तं वदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात् ॥ १ ॥

तदेवमिन्द्रादिसन्देशमनादरेण श्रुत्वा दमयन्ती नलं प्रति-वक्तुमारभते तदिति। वैदर्भनरेन्द्रनन्दिनी भीमनृपतिदुहिता दमयन्ती तेन नलेन अर्पितां निवेदितां तां दिगीशानामिन्द्रा-दीनां सन्देशमयीं वाचिकात्मिकां सरस्वतीं वाणीं अश्रुतवत् विधाय अश्रुतामिव ज्ञात्वा तेन तुल्यं क्रिया चेद्वतिरिति वति-प्रत्ययः। तम् उर्वीतलशीतलद्युतिं भूचन्द्रं नलम् इदं वक्ष्य-माणं जगाद उक्तवती। उर्वीतलशीतलद्युतिमिति रूपकेण नलस्य पृथिवीवासिनाम् आह्लादकत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ २ ॥

मयाङ्ग! पृष्टः कुलनामनी भवानमू विमुच्यैव किमन्यदुक्तवान्।
न मह्यमत्रोत्तरधारयस्य किं क्रियेऽपि सेयं भवतोऽधमर्णता ३

अदृश्यमाना क्वचिदीक्षिता क्वचिन्ममानुयोगे भवतः सरस्वती।
क्वचित्प्रकाशां क्वचिदस्फुटार्णसं सरस्वतीं जेतुमनाः सरस्वतीम्४

---

किमित्याह ममेति। अङ्ग भोः श्रीमन्नित्याध्याहारः मया भवान् कुलञ्च नाम च कुलनामनी पृष्टः कस्मिन् कुले जातोऽसि किमाख्योऽसि चेत्यनुयुक्तः सन् प्रच्छतेर्द्विकर्मकत्वादप्रधाने दुहादीनामिति वचनात्। किं कथम् अमू कुलनामनी विमुच्य विहायैव कुलं नाम चानाख्यायेति भावः। अन्यत् अन्यत् असम्बद्धं किमपीत्यर्थः, उक्तवान्? अनुचितमेतदित्याह नेति। अत्र विषये कुलनामप्रश्नविषये इत्यर्थः, मह्यम् उत्तमर्णाय इति शेषः। धारेरुत्तमर्ण इति सम्प्रदानत्वाच्चतुर्थी धारयतीति धारयः अनुपसर्गाल्लिम्पविन्दधारीत्यादिना श-प्रत्ययः। उत्तरस्य धारयः उत्तरधारयः तस्य उत्तरवाक्यम् ऋणत्वेन धारयत इत्यर्थः भवतः सा इयम् अधमः ऋणेनेति अधमर्णः मयूरव्यंसकादित्वात् तत्पुरुषः। तस्य भावः तत्ता ऋणितेत्यर्थः, क्रिये लज्जायै अपि किं न? अपितु क्रिये एव भवतीत्यर्थः। प्रथमं ऋणग्रहणमेव तावत् लज्जाकरम् अथ तत्परिशोधनम् उत्तमर्णस्य प्रार्थनात् प्रागेव कर्त्तव्यं प्रार्थनायान्तु अपरिशोधनम् अतीवलज्जाकरम् इति भावः। तस्मात् मत्प्रश्नस्य उत्तरमदत्त्वा त्वया यदन्यत् अप्रस्तुतं कथितं तन्न युक्तं कृतमिति भावः॥ ३॥

अदृश्यमानेति। भवतः तव सरस्वती वाणी क्वचित् कुत्रचित् मम अनुयोगे प्रश्ने विषये कुलनामविषयके इति भावः।

गिरः श्रुता एव तव श्रवःसुधाः श्रथा भवन्नाम्नि तु न श्रुतिस्पृहा
पिपासुता शान्तिमुपैति वारिणा न जातु दुग्धान्मधुनोऽधिकादपि

प्रश्नोऽनुयोगः पृच्छा चेत्यमरः। भट्टस्यमाना उत्तराप्रदानात् अनवलोक्यमाना क्वचित् कुत्रापि ममानुयोगे कुत आगतोऽसीति प्रश्ने इत्यर्थः। ईक्षिता हरित्पतीनां सदसः प्रतीहि त्वदीयम् एवातिथिमागतं माम् इत्युत्तरेण दृष्टा अतएव क्वचित् प्रदेशे प्रकाशते इति प्रकाशा तां प्रकाशं प्रवहन्तीमित्यर्थः। क्वचित् प्रदेशे अस्फुटानि अव्यक्तानि अर्णांसि जलानि यस्याः ताम् अन्तःसलिलामित्यर्थः। अभोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरमित्यमरः। सरस्वतीं नाम सरस्वतीं नदीं सरस्वती नदीभेदे गो वाग्देवतयोर्गिरि। स्त्रीरत्ने चापगायाञ्चेति विश्वः। जेतुं मनो यस्याः सा जेतुमनाः तुम्काममनसोरपीति मकारलोपः। भवतीति शेषः। तस्मात् कुलनामप्रश्नस्यापि उत्तरं दातव्यं भवतीति तात्पर्य्यम्। अत्र सरस्वत्या अचेतनाया एव जेतुमना इति पदार्थेन उत्प्रेक्षां विना अन्वयानुपपत्तेः प्रतीयमानोत्प्रेक्षा इवादिव्यञ्जकाप्रयोगात् तथाच सरस्वत्या वाण्या सरस्वत्या नद्या सहौपम्यं व्यज्यते इत्यलङ्कारेण अलङ्कारध्वनिः॥ ४॥

ततश्च प्रथमं त्वया स्वं नाम कथ्यतामित्याह गिर इति। श्रवसोः मत्कर्णयोः सुधाः अतिशयेन सन्तर्पणात् अमृतनिभाः तव गिरः वाचः श्रुताः आकर्णिता एव, भवतो नाम्नि तु संज्ञायान्तु विषये श्रुतिस्पृहा श्रवणेच्छा न श्रथा न निवृत्ता इत्यर्थः। ननु मम अन्यवचनामृतानि श्रुतानि तत्कथं मम नाम श्रवणे तव निर्बन्ध इत्यत्राह पिपासुता पातुमिच्छा जलपानेच्छा इत्यर्थः, वारिणा जलेन तत्पानेन एवेत्यर्थः, शान्तिम् प्रति निवर्त्तते इत्यर्थः। अधिकादपि प्रचुरादपि दुग्धात् तथा मधुनः

बिभर्त्ति वंशः कतमस्तमोऽपहं भवादृशं नायकरत्नमीदृशम् ।
तमन्यसामान्यधियावमानितं त्वया महान्तं बहु मन्तुमुत्सहे ॥६॥
इतीरयित्वा विरतां पुनः स तां गिरानुजग्राहतरां नराधिपः ।

---

क्षीद्रात् तत्पानात् इत्यर्थः, जातु कदाचित् न शान्तिमेती-त्यनुषङ्गः यथा जलपिपासा जलेनैव शाम्येत् न तु दुग्धादिना, तथा मम त्वन्नामश्रवणेच्छा त्वन्नामश्रवणेनैव शाम्यति न अन्य-विषयश्रवणेनेति भावः। अत्र पूर्वार्द्धपरार्द्धवाक्ययोः साधर्म्यस्य प्रतिविम्बनात् दृष्टान्तालङ्कारः। तथाच दर्पणः, दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनमिति ॥ ५ ॥

कस्मिन् वंशे जातोऽसि तदपि श्रोतुमिच्छामि इत्यत्राह, बिभर्त्तीति। कतमो वंशः अन्ववायः वेणुश्च वंशो वेणौ कुले वर्गे इति विश्वः। तमांसि अन्धकारान् दुःखानि च अपहन्ति इति तमोऽपहं दुःखान्धकारहरमित्यर्थः। ईदृशम् एवम्प्रकारं भवादृशं त्वद्विधं नायकरत्नं श्रेष्ठरत्नविशेषं नायको नेतरि श्रेष्ठे हारमध्यमणावपीति विश्वः। बिभर्त्ति धारयति। अन्य-सामान्यधिया अन्येषां सामान्यबुद्ध्या अवमानितम् अथवा अपरसाधारणबुद्ध्या अवमानितं तिरोहितं ;तं वंशं यस्मिन् त्वमुत्पन्नोऽसीति भावः। त्वया हेतुना महान्तम् अत्युच्चकं बहु मन्तुम् अधिकं समादर्तुम् उत्सहे इच्छामि। सर्वो हि वंशः तत्समुत्पन्नैः महद्भिः एव जनैः हेतुभिः महत्त्वेन ख्याप्यते न तु स्वत इति भावः। वेणोश्च रत्नयोनित्वमस्ति। तथाच, करीन्द्र-जीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भव वेणुजानि। मुक्ताफलानि प्रथितानि लोके तेषान्तु शुक्त्युद्भवमेव भूरीति ॥ ६ ॥

अथ एवंवादिनीं तां प्रति नलः प्राह इतीति।

विहत्य विश्रान्तवतीं तपात्यये घनाघनश्चातकमण्डलीमिव॥७॥
अये ! ममोदासितमेव जिह्वया द्वयेऽपि तस्मिन्ननतिप्रयोजने ।
गरौ गिरः पल्लवनार्थलाघवे मितञ्च सारञ्च वचो हि वाग्मिता॥८॥

---

धिपः नलः इति पूर्वोक्तम् ईरयित्वा उक्त्वा विरतां तूष्णीभूतां तां दमयन्तीं तपात्यये ग्रीष्मावसाने । ग्रीष्म उष्मागमस्तप इत्यमरः । विहत्य विरावं कृत्वा पिपासया आक्रन्दनं कृत्वेति भावः । विश्रान्तवतीं निस्तब्धां चातकमण्डलीं चातकसंहतिं घनाघनः वर्षुकमेघ इव । अनुघातकमत्तेभवर्षुकाब्दा घनाघना इत्यमरः । गिरा वचनेन गर्जनेन च अनुजग्राहतराम् अतिशयेनानुगृहीतवान् प्रत्युक्तवानित्यर्थः । किमेतिङित्यादिना आम्प्रत्ययः । उपमालङ्कारेण मेघनिनादश्रवणे चातक्या यादृशी प्रीतिर्नलवाणीश्रवणे भैम्याः तथा प्रीतिरिति व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ७ ॥

किमुवाच इत्याह, अये इति । अये दमयन्ति ! न अतिप्रयोजनं यस्मिन् तादृशे तस्मिन् द्वयेऽपि कुलनाम्नोः युगलेऽपि मम जिह्वया रसनया वागिन्द्रियेण इति शेषः । उदासितं माध्यस्थमवलम्बितम् उत्तरं न दत्तमिति भावः । उत्पूर्वादासधातोर्नपुंसके भावे क्तप्रत्ययः । ननु सत्यपि प्रयोजनराहित्ये पृष्टस्य यस्य कस्यचित् अपि उत्तरं दातव्यमित्यत्राह गराविति । पल्लवनं विस्तृतिः अर्थलाघवम् अल्पार्थत्वञ्च ते अल्पे प्रतिपाद्ये निरर्थकबहुतरशब्दप्रयोगः बहुषु अर्थेषु अल्पार्थप्रकटनञ्च इत्यर्थः, एते द्वे गिरः वाचः गरौ विषौ विषतुल्ये इत्यर्थः, विषवत् उक्तौ वाक्यदोषौ विद्वद्भिः परित्यज्येते इति भावः । मितञ्च अल्पञ्च सारञ्च अर्थगौरवयुक्तञ्च वचः हि वचनमेव वाग्मिता

वृथा कथेयं मयि वर्णपद्धतिः कयानुपूर्व्या समकेति केति च ।
क्षमे समक्षव्यवहारमावयोः पदे विधातुं खलु युष्मदस्मदी ॥८॥

---

सुवक्तृत्वम् अन्यथा वाचालतादोष एवेति भावः। तस्मात् सप्रयोजनमेव वाक्यं प्रयोक्तव्यम् उत्तरञ्च दातव्यमिति तात्पर्य्यम्। वाचो ग्मिनिरिति ग्मिनिप्रत्ययः। गराविल्यत्र गर इत्येकवचनान्तपाठे अर्थलाघवे विषये पल्लवना विस्तृतिः गिरः गर इति योज्यम्। अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः। तथाच दर्पणः, सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत इति ॥ ८ ॥

नामप्रश्नस्य निष्प्रयोजन इत्याह वृथेति। का वर्णानां पद्धतिः पङ्क्तिः अक्षराणीत्यर्थः कया आनुपूर्व्या अनुक्रमेण मयि समकेति संज्ञात्वेन सङ्केतिता शक्तेत्यर्थः इतीयं कथा च मदभिधायिनी वर्णावलिः केति कथेत्यर्थः प्रसङ्गस्य वृथा निष्प्रयोजनेत्यर्थः, यस्य प्रश्नोऽपि निरर्थकस्तस्य उत्तरदानस्य निरर्थकत्वं किं वक्तव्यमिति भावः। कथमित्याह खलु यस्मात् आवयोः तव मम च इत्यर्थः त्यदाद्येकशेषे यत्परं तदिति वचनादस्मदः शेषता। अक्ष्णोः समीपे समक्षं प्रत्यक्षमित्यर्थः। समीपार्थेऽव्ययीभावे शरत्प्रभृतित्वात् समासान्तः। व्यवहारं परस्परालापरूपमित्यर्थः विधातुं सम्पादयितुं युष्मदस्मदी पदे युष्मदस्मद्भ्यां शब्दाभ्यां निष्पन्ने त्वमहमिति पदे इत्यर्थः क्षमे समर्थे। युष्मदस्मद्भ्यां शब्दाभ्यामावयोः व्यवहारसिद्धिः स्यात् तत्कथं नामप्रश्ने निर्बन्ध इति भावः। अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः ॥८॥

यदि स्वभावान्मम नोज्ज्वलं कुलं ततस्तदुद्भावनमौचिती कुतः ।
अथावदातं तदहो विडम्बना तथा कथा प्रेष्यतयोपसेदुषः ॥१०
इति प्रतीत्यैव मयावधीरिते तवापि निर्बन्धरसो न शोभते ।
हरित्पतीनां प्रतिवाचिकं प्रति श्रमो गिरां ते घटते हि सम्प्रति११
तथापि निर्बध्नति! तेऽथवा स्पृहा मिहानुरुन्धे मितया न किं गिरा

---

कुलकथनञ्च नोचितमित्याह यदीति। यदि मम कुलं वंशः स्वभावात् उज्ज्वलं दीप्यमानं न प्रशस्तं नेत्यर्थः, तदा तस्य कुलस्य उद्भावनम् आख्यानं कुतः कस्मात् औचिती ? नैव औचित्यमित्यर्थः। अत्र धर्मधर्मिणोः अभेदोपचारः। अथ पक्षान्तरे तत् कुलं अवदातम् उज्ज्वलं चेत् इति शेषः तदा प्रेष्यतया किङ्करत्वेन दूतत्वेनेति भावः। उपसेदुषः उपस्थितस्य जनस्य तथा तादृशी कथा अवदातकुलसङ्कथनमित्यर्थः, विडम्बना अयुक्तत्वेन उपहासहेतुरिति यावत्। अहो इति खेदे नीचवृत्तेरपि स्वकुलमर्यादाख्यापनम् अतिघृणितमिति खेदात् न तदुत्तरं दत्तमिति भावः ॥ १० ॥

इतीति। इतीत्थं प्रतीत्यैव वैयर्थ्यमनौचित्यञ्च निश्चित्यैव मया अवधीरिते उपेक्षिते कुलनामप्रश्ने विषये इति शेषः। तवापि निर्बन्धरसः आग्रहावेशः न शोभते न युज्यते। निरर्थके अनुचिते च प्रश्ने उत्तरदानार्थं त्वया नातिनिर्बन्धः कर्त्तव्य इति यावत्। सम्प्रति हरित्पतीनां दिक्पालानाम् इन्द्रादीनां प्रतिवाचिकं प्रतिसन्देशं प्रति ते तव गिरां वाचां श्रमः आयासः घटते हि युज्यत एवेत्यर्थः। अधुना दिगीन्द्रसन्देशस्य प्रत्युत्तर-दानं तवोचितमिति भावः ॥ ११ ॥

एवमुक्त्या भैम्या वैमनस्यशङ्कया सामान्येन वंशं कीर्त्तयति

हिमांशुवंशस्य करीरमेव मां निशम्य किं नासि फलेग्रहिग्रहा॥१२
महाजनाचारपरम्परेदृशी स्वनाम नामाददते न साधवः।
ततोऽभिधातुं न तदुत्सहे पुनर्जनः किलाचारमुचं विगायति॥१३

---

तथापीति। अथवा पक्षान्तरे तथापि उक्तप्रकारेण वैयर्थ्यानौचित्येऽपि निर्बध्नति! हे निर्बन्धकारिणि! बध्नातेः शत्रन्तादुगितश्चेति ङीबन्तात् सम्बुद्धिः। कुलनामजिज्ञासायाम् आग्रहातिशयवतीत्यर्थः। इह यत्कुलविषये ते तव स्पृहां जिज्ञासां मितया सङ्क्षिप्तया गिरा वाचा न अनुरुन्धे किम्? न अनुसरामि किम्? अपितु अनुरुन्ध एवेत्यर्थः। सामान्येन कुलं ते कीर्त्तयामीति भावः। रुधेर्लटि तङ्। किं तदाह हिमांशु इति। हिमांशुवंशस्य चन्द्रवंशस्य करीरम् अङ्कुरं वंशाङ्कुरः करीरोऽस्त्री इत्यमरः। एव न तु तद्वंश्यप्रधानत्वेन गणितमिति भावः, विनीतत्वातिशयप्रदर्शनमेतत्। निशम्य श्रुत्वा फले ग्रहिः सफलः। स्यात् अवन्ध्यः फलेग्रहिः इत्यमरः। ग्रहः निर्बन्धो यस्याः तादृशी किं नासि? न भवसि? एतच्छ्रवणेन न सन्तुष्यसि किमित्यर्थः। फलेग्रहिः आत्मम्भरिश्चेति निपातनात् साधुः। अहं चन्द्रवंशीय इति श्रुत्वा सन्तुष्टा भवेति भावः॥१२॥

स्वनामकथनं सदाचारविरुद्धमिति तत्कथमपि न वाच्यमित्यत्राह महाजनेति। साधवः स्वं नाम न आददते न गृह्णन्ति ईदृशी एवंरूपा महाजनानां महतां जनानाम् आचारपरम्परा व्यवहारधारा चिरप्रचलितो व्यवहार इत्यर्थः नामेति प्रसिद्धौ। तथाचोक्तम्, आत्मनाम गुरोर्नाम नामापि कृपणस्य च। आयुष्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोः॥ इति। अन्यच्च, नामानुकीर्त्तनं पुंसामात्मनश्च गुरोः स्त्रियाः।

अदोऽयमालप्य शिखीव शारदो बभूव तूष्णीमहितापकारकः।
अथास्य रागस्य दधा पदे पदे वचांसि हंसीव विदर्भजाददे १४

दिनमेकं हरत्यायुः इति। ततः कारणात् अत इति पाठान्तरं तत् पुनः स्वं नाम तु अभिधातुम् आख्यातुं नोत्सहे न इच्छामि शकधृषेत्यादिना तुमुन्प्रत्ययः। किल यतः जनो लोकः आचारं महाजनव्यवहारं मुञ्चतीति आचारमुचं सदाचारत्यागिनमित्यर्थः विगायति विनिन्दति। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ १३॥

एवमुक्त्वा तूष्णीम्भूतं नलं प्रति भैमो उवाच इत्याह अद इति। अयम् अहितानां शत्रूणाम् अपकारकः हन्ता शत्रुन्तप इत्यर्थः, अहीनां सर्पाणां तापकरः हिंस्र इति च गम्यते। नलः शरदि भवः शारदः शरत्कालीन इत्यर्थः, सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्। शिखा विद्यतेऽस्येति शिखी मयूर इव अदः पूर्वोक्तमेतत् वचनम् आलप्य उक्त्वा तूष्णीम्बभूव विरराम मयूरो हि वर्षासु विरुत्य शरदि तूष्णीम्भवति। अथ अनन्तरम् अस्य वाक्यस्य पदे सुप्तिङन्तरूपे पदे विषये यद्वा पदे पदे प्रति सुप्तिङन्तरूपे रागस्य अनुरागस्य मधुरभाषिताजनितस्येति भावः श्रवणेच्छाया इति भावः। दधातीति दधा धारयित्री प्रतिपदं मधुवर्षित्वात् तच्छ्रवणे अविच्छिन्नतृष्णां दधाना इत्यर्थः। ददातिदधात्योर्विभाषेति दधाते रप्रत्यये श्नाविति द्विर्भावः अजाद्यतष्टाप्। अन्यत्र पदे पदे चरणद्वये आस्यरागस्य चञ्चुपुटलौहित्यस्य दधा चञ्चुपुटवत् चरणद्वयमपि सरागं दधानेत्यर्थः। राजहंसास्तु ते चञ्चुचरणैः लोहिताः सिता इत्यमरः। विदर्भजा दमयन्ती हंसीव वचांसि वचनानि आददे जग्राह उक्तवतीत्यर्थः। शरदि हंसा मधुरभाषिणो भवन्ति मयराश्च कर्कश-

सुधांशुवंशाभरणं भवानिति श्रुतेऽपि नापैति विशेषसंशयः ।
कियत्सु मौनं विसृता कियत्सु वागहो त्वदीयो वञ्चनचातुरी तव १५
मयापि देयं प्रतिवाचिकं न ते स्वनाम मत्कर्णसुधामकुर्वते ।
परेण पुंसा हि ममापि सङ्कथा कुलाबलाचारसहासनासहा १६

---

स्वरा इति कविसमयसिद्धिः। तथाच शरदि हंसरवाः परुषीकृत स्वरमयूरमयूरमणीयतामिति शिशुपालबधः। उपमालङ्कारः तेन च अस्य नलस्य शिखिवन्मधुरभाषित्वं भैम्याश्च हंसीवत् तथा भाषित्वमिति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १४ ॥

किमित्याह सुधांश्विति। भवान् सुधांशुवंशस्य चन्द्रवंशस्य आभरणम् अलङ्कारः चन्द्रवंशीय इत्यर्थः इति सामान्ये इति भावः। श्रुतेऽपि विशेषे विषये संशयः नलो वा अन्यो वा कश्चन इति सन्देहः न अपैति न अपगच्छति सन्देहनिर्णयो न जात इति भावः। कियत्सु विषयेषु नामादिप्रश्नेषु इत्यर्थः मौनं प्रत्युत्तरादानं कियत्सु किमर्थमागतोऽसि इत्यादिषु च वाक् वाणी विसृता विस्तृता अहो आश्चर्यं तव वञ्चनचातुरी प्रतारणाचातुर्य्यं महती। पृष्टं सम्यगनुक्त्वा अप्रस्तुतस्य इन्द्रादि-सन्देशस्य कथनेन स्वस्य प्रतारणपटुत्वं ख्यापयसीति भावः॥१५॥

यदुक्तं त्वया स्वनामकथनं लोकगर्हितमिति ममापि पर-पुंसा सङ्कथनं गर्हितमिति त्वयि प्रतिवाचिकं न देयमित्याह मयेति। स्वं नाम मम कर्णसुधां कर्णयोः अमृतसेचनमिति भावः अकुर्वते अश्रावयते इत्यर्थः ते तुभ्यं मयापि प्रतिवाचिकं प्रतिसन्देशवचनं न देयम्। कुत इत्याह परेणेति। हि यतः ममापि परेण पुंसा पुरुषेण त्वयेति शेषः। सङ्कथा संलापः कुलाबलानां कुलाङ्गनानाम् आचारेण सह आसनम् ; अवस्थानं

हृदाभिनन्द्य प्रतिबन्ध्यनुत्तरः प्रियागिरः सस्मितमाह स स्म ताम्
वदामि वामाक्षि! परेषु मा क्षिप स्वमीदृशं माक्षिकमाक्षिपद्वचः
करोषि नेमं फलिनं मम श्रमं द्विषोऽनुरुन्धासि न काञ्चन प्रभुम्।
त्वमित्थमर्हासि सुरानुपासितुं रसामृतस्नानपवित्रया गिरा॥१८॥

---

न सहते इति तथाभूता परपुंसा सह कुलमहिलानाम् आलापो विरुद्ध इति भावः। यथा त्वया महाजननिन्दाभयेन स्वं नाम न कीर्त्तितं तथा मयापि कुलाङ्गनाविरुद्धं परपुंसा त्वया सह संलापः कथं क्रियते इति निष्कर्षः॥ १६॥

तथोक्तवतीं तां नलः प्रत्युवाच हृदेति। स नलः प्रियाया दमयन्त्या गिरः वाचः हृदा मनसा अभिनन्द्य युक्तमुक्तमनया इति प्रशस्येत्यर्थः। प्रतिबन्ध्या पूर्वश्लोकोक्तया परेण पुंसेत्यादिरूपया अनुत्तरः प्रतिवचनासमर्थं सन्नित्यर्थः तां प्रियां भैमीं सस्मितं मृदुहसितं यथा तथा आह स्म उक्तवान् लट् स्म इति भूते लट्। हे वामाक्षि। चारुनेत्रे! माक्षिकं मक्षिकाभिः कृतं मधु इत्यर्थः। मधुभेदो मधु क्षौद्रं माक्षिकम् इत्यमरः। तेन वर्णक्रियं संज्ञायामित्यण्प्रत्ययः। आक्षिपत् तिरस्कुर्वत् मधुनोऽपि मधुरमिति भावः। ईदृशम् एवंविधम् अलौकिकमिति भावः। स्वं वचः परेषु परपुरुषेषु मा क्षिप मा निधेहि न कथय इत्यर्थः इति वदामि परपुरुषेण सम्भाषणं कुलाङ्गनानाम् अनुचितं गर्हितञ्च किन्तु न अहं पर इति भावः। तस्मात् इन्द्रादिषु प्रतिसन्देशवचनं मयि दातव्यमिति तात्पर्य्यम्॥ १७॥

करोषीति। हे भैमि! मम इमं श्रमं सुराणां दौत्यकार्य्ये प्रयासं फलिनं सफलम्। फलवान् फलिनः फली इत्यमरः।

सुरेषु सन्देशयसीदृशीं बहुं रसस्रवेण स्तिमितां न भारतीम् ।
मदर्पिता दर्पकतापितेषु या प्रयातु दावार्दितदावदृष्टिताम् १९

फलबर्हाभ्यामिनन् वक्तव्यः। न करोषि, कञ्चन कमपि चतुर्णामिकमपीत्यर्थः। दिशः प्रभुं दिक्पालं न अनुगृह्णासि स्वयंवरणेन अनुगृहीतं न करोषीत्यर्थः, किन्तु त्वम् इत्थं रसः राग एव अमृतं तत्र स्नानेन अवगाहनेन पवित्रया प्रेमामृतवर्षिण्या इति भावः। गिरा वाचा सुरान् देवान् उपासितुं सेवितुं प्रीणयितुम् इत्यर्थः, अर्हासि योग्यासि देवपूजायां स्नातस्य एवाधिकारात् गिरः स्नानपवित्रत्वमुक्तमिति भावः। यथा ईदृशेन मधुवर्षिणा वचसा मां प्रीणयसि तथा सुरानपि मधुरप्रतिसन्देशवचनेन प्रीणयेति भावः॥ १८॥

सुरेष्विति। ईदृशीम् उक्तप्रकारां बहुं विस्तृतां रसस्य प्रेम्णः शृङ्गारस्य वा स्रवेण प्रवाहेण स्तिमिताम् आर्द्रां स्निग्धाम् इति यावत्। भारतीं वाणीं सुरेषु देवेषु इन्द्रादिषु न सन्देशयसि न प्रतिसन्देशत्वेन प्रेषयसि? काकुः अपितु सन्देशयितुम् अर्हसि इत्यर्थः। सन्देशशब्दात् तत्करोतीति ण्यन्तात् लटि सिप्। या भारती दर्पकेण कामेन कन्दर्पो दर्पकोऽनङ्ग इत्यमरः। तापितेषु तेषु मया अर्पिता मद्दत्ता सती मन्मुखेन श्रुता सती इत्यर्थः। दावेन वनाग्निना अर्दिता ये दावाः अरण्यानि। दवदावौ वनारण्यवह्नी इत्यमरः। तेषु वृष्टितां वृष्टजलत्वमित्यर्थः, प्रयातु गच्छतु तेषां सन्तापहरणात् दावाग्निदग्धारण्यवृष्टितुल्यतां प्राप्नोतु इत्यर्थः। अत्र दावार्दितदाववृष्टितामिति दावार्दितदाववृष्टितुल्यतामिति सादृश्याक्षेपात् निदर्शनालङ्कारः। तेन ओष्ठं प्रतिसन्देशदानेन तत्र

यथायथेह त्वदपेक्षयानया निमेषमप्येष जनो विलम्बते।
रुषा शरव्यीकरणे दिवौकसां तथातथाद्य त्वरते रतेः पतिः॥२०
इयच्चिरस्यावदधन्ति मत्पथे किमिन्द्रनेत्राण्यशनिर्न निर्ममौ।
धिगस्तु मां सत्वरकार्य्यमन्थरं स्थितः परप्रेष्यगुणोऽपि यत्र न॥२१॥

---

अनङ्गदग्धान् समुज्जीवयेति वस्तु व्यज्यते। इत्यलङ्कारेण वस्तु-वस्तुध्वनिः ॥ १८ ॥

यथेति। एष जनः स्वयमित्यर्थः यथा यथा यावत् यावत् त्वदपेक्षया तवोत्तरदानप्रतीक्षया इह तव सन्निधौ निमेषमपि अल्पकालमपि विलम्बते विलम्बं करोति, रतेः पतिः कामः तथा तथा अद्य अस्मिन् दिने रुषा कोपेन दिवौकसाम् इन्द्रादीनां देवानां शरव्यीकरणे शरलक्ष्यीकरणे त्वदर्थमित्यर्थः, त्वरते सत्वरो भवति यथा यथा विलम्बो भवति तथा तथा तेषां कामपीड़ा अधिकं वर्द्धते तस्मात् शीघ्रं प्रत्युत्तरं दीयतामिति भावः। त्वदुपेक्षयेति पाठे तव उपेक्षया प्रत्युत्तरादानरूपया अवज्ञया इत्यर्थः ॥ २० ॥

इयदिति। मम पन्थाः मत्पथः तस्मिन् मत्प्रत्यागमनमार्गे इत्यर्थः। इयच्चिरस्य अत्यन्तसंयोगे द्वितीया इयच्चिरमित्यर्थः अव्ययमेतत्। चिराय चिररात्राय चिरस्याद्याश्चिरार्थका इत्यव्ययेषु अमरः। अवदधन्ति अवधानं कुर्वन्ति वा नपुंसकस्य इति शतुर्नुमागमः। इन्द्रनेत्राणि कर्मभूतानि अशनिः वज्रो न निर्ममौ किम्? अपितु वज्र एव इन्द्रनयनानि निर्ममौ एवेत्यर्थः। इन्द्रनयनानि वज्रनिर्मितानि एव अन्यथा कथं तेषाम् ईदृक् मत्पथनिरीक्षणावधाने दार्ढ्यम् इति भावः। सत्वरे कार्य्ये त्वराप्रयोजने कर्मणीत्यर्थः मन्थरः अलसः तं दीर्घसूत्रम्

इदं निगद्य क्षितिभर्त्तरि स्थिते तयाऽभ्यधायि स्वगतं विदग्धया ।
अधिस्त्रि तं दूतयतां भुवः स्मरं मनोदघत्या नयनैपुणव्यये ॥२२॥
जलाधिपस्त्वामदिशन्मयि ध्रुवं परेतराजः प्रजिघाय स स्फुटम् ।

---

इत्यर्थः, मां धिगस्तु अहमपि आत्मानं चिरक्रियं निन्दामि इत्यर्थः । यत्र मयि परेषां प्रेष्यः भृत्यः दूत इति यावत् तस्य गुणः क्षिप्रकारित्वादिरित्यर्थः अपि न स्थितः कार्य्यसाधकत्व-गुणो दूरे तिष्ठतु सत्वरं वार्त्तावाहित्वमपि नास्ति इति अपि-शब्देन द्योत्यते । तत् सत्वरं प्रतिसन्देशप्रदानेन सत्वरकार्य्य-मन्थरत्वरूपो मम दोषो निवार्य्यतामिति भावः ॥ २१ ॥

एवमुक्त्वा तूष्णीभूतं नलं प्रति भैमी प्राह, इदमिति । क्षितिभर्त्तरि पृथिवीन्द्रे नले इदं निगद्य व्याहृत्य स्थिते विरते सति विदग्धया चतुरया विदुष्या वा तया भैम्या स्त्रीषु अधि अधिस्त्रि विभक्त्यर्थेऽव्ययीभावे नपुंसकह्रस्वः । भुवः पृथिव्याः स्मरं कामं भूलोकमन्मथमित्यर्थः, तं पुरुषं दूतयतां दूतं कुर्वतां दूतकृत्ये नियोजयतामित्यर्थः । इन्द्रादीनां नयेषु नीतिषु यत् नैपुणं पाटवं नैपुण्यमित्यर्थः तस्य व्यये क्षये अभावे इत्यर्थः, मनो दधत्या नोज्ज्वलं रूपवन्तञ्च नार्थवन्तं न चातुरम् । दूतं वापि हि दूतीं वा बुधः कुर्य्यात् कदाचन इति । सुन्दरं तरुणं मर्त्यं न स्त्रियां दूतयेत् सुधीः । इति च नीतिशास्त्रम् । एते यदि जानन्ति तदा कदापि एनं साक्षात् कामं नैव दूत्ये नियुज्य प्रेरयेयुः तस्मात् एषां नीतिज्ञानं नास्तीति मनसा पर्य्यालोचयन्त्या सत्या स्व-गतम् अप्रकाशं यथा तथा सर्वश्राव्यं प्रकाशं स्यात् अश्राव्यं स्वगतं मतमिति दशरूपके तल्लक्षणात् । अभ्यधायि अभिहितं मनसैव चिन्तितमिति यावत् ॥ २२ ॥

मरुत्वतैव प्रहितोऽसि निश्चितं नियोजितश्चोर्द्ध्वमुखेन तेजसा॥२३॥
अथ प्रकामं निभृतस्मिता सती सतीकुलस्याभरणं किमप्यसौ।
पुनस्तदाभाषणविभ्रमोन्मुखं मुखं विदर्भाधिपसम्भवाऽदधे॥२४॥

---

स्वगतमेवाह जलाधिप इति। जलानाम् अधिपो वरुणः मयि विषये माम् उद्दिश्येत्यर्थः। ध्रुवं निश्चितम् त्वाम् अदिशत् प्रेषयत्, स प्रसिद्धः परेतानां मृतानां परेतः प्राप्तपञ्चत्व इत्यमरः। राजा नियन्तेत्यर्थः यम इत्यर्थः स्फुटं निःसंशयं त्वां प्रजिघाय प्रहितवान् मयीति सर्वत्रानुषङ्गः। मरुतो देवा अस्य सन्तीति मरुत्वान् इन्द्रः तेन। मरुतौ पवनामरौ इत्यमरः। प्रहितोऽसि एव प्रेरित एवासीत्यर्थः तथा ऊर्द्ध्वं मुखं यस्य तेन तेजसा अग्निना इत्यर्थः। प्रसिद्धमूर्द्ध्वज्वलनं हविर्भुज इति माघः। निश्चितं नियोजितश्च प्रेषितश्च असीत्यनुषङ्गः। सत्यमेतैः इन्द्रादिभिः त्वं प्रेषित इति निष्कर्षः। ईदृशं काममिव सुन्दरं त्वां दूतकृत्ये नियोजयन् जलाधिपः डलयोरभेदात् जड़ाधिपः परेतराजः मृतानां राजा न तु जीवतां सचेतसामित्यर्थः यस्य चैतन्यमस्ति स कथमीदृशं नीतिविगर्हितमाचरेत् इति भावः। मरुत्वान् वायुमान् इत्यर्थः वातुल इति भावः। नोचेत् स कथमीदृशं निषिद्धं कार्य्यं कुर्य्यात् ऊर्द्ध्वमुखस्य च सम्मुखदृष्टेरभावात् ईदृशं सुन्दरमिमं कथं दूत्ये नियोजयामीति ज्ञानं नैव आसीत् तेन असौ गतानुगतिकन्यायेन इमं प्रेरितवानिति ध्वन्यते॥२३॥

अथेति। अथ स्वगतोक्त्यनन्तरं सतीकुलस्य पतिव्रतावर्गस्य किमपि अनिर्वचनीयम् अलौकिकमित्यर्थः आभरणम् अलङ्कारः असौ विदर्भाधिपसम्भवा दमयन्ती निभृतं संवृतं स्मितं

वृथा परीहास इति प्रगल्भता ननेति च त्वादृशि वाग्विगर्हणा ।
भवत्यवज्ञा च भवत्यनुत्तरादतः प्रदित्सुः प्रतिवाचमस्मि ते ॥२५
कथं नु तेषां कृपयापि वागसौ वसावि मानुषकलाञ्छने जने ।

---

यथा तादृशो गम्भीरस्मितेति भावः, सतो प्रकाशं यथा तथा पुनः तेन नलेन यत् आभाषणं संलापः तत्र यो विभ्रमः विलासः विनोदो वा तत्र उन्मुखम् उत्सुकं मुखम् आदधे चकार उवाच इत्यर्थः। आदधाविति पाठान्तरम्। निभृतस्मितेत्यनेन इन्द्रादीनाम् अयोग्यप्रार्थनं सूचयन्ती प्रत्युत्तरदानेऽनिच्छुरपि नलेन सह सम्भाषणकौतुकात् प्रतिसन्देशवचनम् उवाच इति भावः ॥ २४ ॥

वृथेति। भवति पूज्ये महानुभावे इति भावः। विषये वृथा निरर्थकः परीहास इति इन्द्रादीनां कथया कथमेवं माम् अनर्थकं परिहससीत्येवमुक्तिरित्यर्थः, प्रगल्भता धार्ष्ट्यं चापल्यदोष इति यावत् भवति ममेति शेषः। उपसर्गस्य घञ्यमनुष्ये बहुलमिति घञि परे दीर्घः। त्वादृशि त्वत्सदृशे जने महामहिमशालिनि इत्यर्थः, नन इति वाक् पुनः पुनः निषेधवचनमित्यर्थः, विगर्हणा विशेषेण निन्दा भवति ममेति शेषः तथा अनुत्तरात् उत्तराप्रदानात् अवज्ञा अनादरश्च भवति अतो हेतोः ते तुभ्यं प्रतिवाचं प्रतिसन्देशवचनं प्रदित्सुः प्रदातुमिच्छुः अस्मि उत्तरं दातुमिच्छामि यदि च अत्र परिहासबुद्ध्या उपेक्षा कर्त्तव्या यदि च निषेधाक्षरेण एतद्वचो निरसनीयं वा अवज्ञया तूष्णीम्भावेन स्थातव्यं किन्तु तथात्वे महामहिमः तव अवमानना भवेदिति हेतोरहं प्रत्युत्तरदाने प्रवर्त्ते न तु परमार्थतः प्रत्युत्तरदानार्हत्वधियेति निष्कर्षः ॥ २५ ॥

स्वभावभक्तिप्रवणं प्रतीश्वराः कया न वाचा मुदमुद्गिरन्ति वा ॥२६

अहो महेन्द्रस्य कथं मयौचिती सुराङ्गनासङ्गमशोभिताभृतः ।
ह्रदस्य हंसावलिमांसलश्रियो बलाकयेव प्रबला विडम्बना॥२७॥

---

कथमिति। तेषाम् इन्द्रादीनां कृपयापि दययापि कश्चरी मनुष्यस्य भावः मानुष्यकं योपधात् गुरूपोत्तमाद् वुञ्। तदेव लाञ्छनं कलङ्कः यस्य तस्मिन् जने। कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणमित्यमरः। मलिनत्वादिदोषवति जने इत्यर्थः, असौ वाक् दमयन्ती अस्मान् वृणोतु इत्येवंरूपा इत्यर्थः,कथं केन प्रकारेण हेतुना वा असावि प्रसूता नु इति वितर्के असम्भवमेतत् निष्कलङ्कानां तेषां सकलङ्कजनप्रार्थनमिति भावः। सूतेः कर्मणि लुङ्। पक्षान्तरे अथवेत्यर्थः ईश्वराः प्रभव इत्यर्थः स्वभावेन या भक्तिः अनुरागः तया प्रवणं प्रणतमित्यर्थः जनं प्रति कया वाचा वाण्या मुदं प्रीतिं स्वसन्तोषं न उद्गिरन्ति? न प्रकटयन्तीत्यर्थः? अपितु प्रकटयन्ति एवेत्यर्थः। स्वसन्तोषप्रदर्शनाय सम्भाव्यम् असम्भाव्यञ्च वाचमुक्त्वा भक्तजनम् उल्लासयन्तीति भावः। सर्वथा असम्भवमिदं सन्देशवचनं तत् किमत्र प्रतिसन्दिह्यते इति तात्पर्य्यम् ॥ २६ ॥

अहो इति। अहो आश्चर्य्यं सुराङ्गनानां देवरमणीनाम् उर्वश्यादीनां सङ्गमेन शोभते इति तच्छोभी तस्य भावः तत्ता तां बिभर्त्तीति तद्भृत् तस्य महेन्द्रस्य हंसावलिभिः हंसराजिभिः मांसला मांसवती सिध्मादित्वाल्लच्। बहुला प्रभूता इत्यर्थः श्रीः शोभा यस्य तथाभूतस्य हंसमण्डलीविराजितस्य इत्यर्थः ह्रदस्य सरसः बलाकयेव एकया बकयेव मया निमित्तेन प्रबला महती विडम्बना उपहासः कथम् औचिती? नैषे-

पुरःसुरीणां भण कैव मानुषी न यत्र तास्तत्र तु सापि शोभिका।
अकाञ्चनेऽकिञ्चननायिकाङ्कके किमारकूटाभरणेन न श्रियः २८

त्यर्थः। एतत्तु अमृतमवधीर्य्य सामान्यजलपिपासेव तादृशीः सुररमणीर्विहाय मत्प्रार्थनं न अस्य कथञ्चिदपि शोभते इति तात्पर्य्यम्। उपमालङ्कारः। तेन च हंसावलीमण्डितस्तड़ागो यथा तत्परित्यागेन एकया वक्या न शोभते तथा सर्वाः सुर-कामिनीः विहाय देवेन्द्रो मया नैव शोभिष्यते इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ २७॥

पुर इति। सुरीणां सुराङ्गनानां पुरः अग्रे मानुषी मानवी जातेरस्त्रीविषयादित्यादिना ङीप्। मानवी इति पाठान्तरम्। कैव? न कापीत्यर्थः अतितुच्छैव इति भावः। कीव इति पाठान्तरम्। इवशब्दो वाक्यालङ्कारे। भण कथय। यत्र लोके ताः सुर्य्यः सुरनार्य्यः न सन्तीति शेषः। तत्र तु सापि मानुषी अपि शोभते इति शोभिका शोभाशालिनी भवतीति शेषः। प्रत्ययस्थात् कात्पूर्वस्येतीकारः। नास्ति काञ्चनं यस्य यत्र वा तस्मिन् अकाञ्चने काञ्चनाभरणरहिते विकारान्तोत्तरपदो बहुव्रीहिः। नास्ति किञ्चन यस्य सः अकिञ्चनः निर्धन इत्यर्थः उच्चावचाकिञ्चनाकुतोभयानीति मयूरव्यंसकादिषु निपातनात् तत्पुरुषः। तस्य नायिका रमणी तस्या अङ्गमेव अङ्ककं तस्मिन् स्वार्थे कन्प्रत्ययः। शरीरे आरकूटं रीतिः। रीतिः स्त्रियामारकूटमित्यमरः। तस्य विकारः आरकूटं तच्च तत् आभरणञ्चेति तेन पित्तलाभरणेनेत्यर्थः श्रियः शोभाः किं न? अपितु श्रियो भवन्ति एवेत्यर्थः। एतेन सुराङ्गनासम्भोगिनो महेन्द्रस्य मदभिलाषः काञ्चनपरित्यागेन आरकूटाभरणग्रहणेच्छेव प्रतिभातीति भावः। अत्र दृष्टान्तालङ्कारः॥ २८॥

यथातथा नाम गिरः किरन्तु ते श्रुती पुनर्मे बधिरे तदक्षरे ।
पृषत्किशोरी कुरुतामसङ्गतां कथ मनोवृत्तिमपि द्विपाधिपे॥२९
अदो निगद्यैव नतास्यया तया श्रुती लगित्वाभिहितालिरालपत्।
प्रविश्य यन्मे हृदयं ह्रियाह तद्विनिर्य्यदाकर्णय मन्मुखाध्वना ३०

---

यथेति। ते देवा यथा तथा येन तेन प्रकारेण गिरः वाचः किरन्तु कथयन्तु नाम प्राकाश्ये मयि अभिलाषेण कृपया वा प्रकाशं सन्दिशन्तु इत्यर्थः, पुनः किन्तु तदक्षरे तासां गिरां वर्णमात्रेऽपीत्यर्थः, मे मम श्रुती कर्णौ बधिरे श्रोतुमक्षमे इत्यर्थः ता गिरो नाहं शृणोमि इति भावः। तथाहि पृषत्किशोरी कुरङ्गकुमारी पृषच्च पृषते विन्दौ कुरङ्गेऽपि च कीर्त्तित इति अजयालः। द्विपानाम् अधिपे गजेन्द्रे इत्यर्थः असङ्गताम् अयुक्तां मनोवृत्तिम् अभिलाषमपि तत्प्राप्तिचेष्टां किमु वक्तव्यमित्यपि शब्दार्थः। कथं कुरुतां सम्भावनायां लोट्। नैव करोतु इति सम्भावयामीत्यर्थः। कुरङ्गकुमार्य्या गजेन्द्राभिलाष इव मम देवेन्द्राभिलाषः कथमपि न युज्यते इति भावः। अतएव दृष्टान्तालङ्कारः॥ २९॥

अथ अस्याः सखी भैमीवचनम् अनुवदति अद इति। अदः इदं वचनं निगद्यैव उक्त्वैव नतम् आस्यं यस्याः तथाभूतया अवनतवदनया तया दमयन्त्या श्रुतौ कर्णे लगित्वा लग्नया भूत्वा अभिहिता मदभिप्रायं त्वं जानास्येव तत् त्वया एव अतः परं वक्तव्यम् इति उक्ता आलिः सखी। आलिः सखी वयस्या च इत्यमरः। आलपत् अब्रवीत्। किम् इत्याह प्रविश्येति। इयं दमयन्ती ह्रिया लज्जया मे मम हृदयं प्रविश्य यत् आह कथयति तत् मम मुखमेव अध्वा मार्गः तेन विनिर्य्यत् विनिःसरत् मन्मु-

बिभेति चिन्तामपि कर्त्तुमीदृशीं चिराय चित्तार्पितनैषधेश्वरा।
मृणालतन्तुच्छिदुरा सतीस्थितिर्लवादपि त्रुट्यति चापलात् किल

स्वेनोच्चार्य्यमाणमित्यर्थः आकर्ण्य लज्जावशात् यदनया स्वाभिमतं स्वयं न कथयितुं शक्यते तत् मम सकाशात् शृणु इत्यर्थः ॥ ३० ॥

किं तदाह बिभेतीति। चिराय चिरकालं व्याप्य इत्यर्थः अत्यन्तसंयोगे द्वितीयान्तमव्ययं चिराय चिररात्राय। चिरस्याद्या श्चिरार्थका इत्यव्ययेषु अमरः। बहोः कालात् प्रागपीत्यर्थः चित्ते मनसि अर्पितः पतित्वेन वृत इत्यर्थः नैषधेश्वरः नलः यया तथाभूता इयम् ईदृशीं इन्द्रादिवरणविषयामित्यर्थः चिन्तामपि इन्द्रादिषु मध्ये कोऽपि मया वरणीयः न वेति विचारमपि तद्विषयमभिलाषं किमुतेत्यपि शब्दार्थः। कर्त्तुं बिभेति पातिव्रत्यभङ्गधिया इति भावः। बिभेमि इति पाठान्तरम्। कुत इत्याह मृणालेति। मृणालस्य तन्तुरिव छिदुरा भङ्गुरा कर्मकर्त्तरि कुरच्। सत्याः पतिव्रतायाः स्थितिः मर्य्यादा लवादपि अल्पादपि चापलात् चाञ्चल्यात् पुरुषान्तरविषयकमननादिति भावः। त्रुट्यति किल भङ्गं प्राप्नोति एवेत्यर्थः। मृणालतन्तुर्यथा अल्पेन स्पर्शमात्रेणैव भज्यते तथा सतीधर्मस्य अल्पेनापि दुरभिसन्धिना विलयमापद्यते इति तात्पर्य्यम्। पतिं या नाभिचरति मनोवाक्कायकर्मभिः। सा भर्त्तृलोकमाप्नोति परत्रेह च मोदते इति स्मृतिः एव अत्र प्रमाणम्। चिराय चित्तार्पितनैषधेश्वरेत्यनेन नैषधेश्वरस्य 'पत्युः हृदयस्थितत्वात् पुरुषान्तरसङ्कल्पस्तेन न स्थायेतेत्यपि भयहेतुरिति गम्यते। अत्र परार्द्धवाक्यस्य पूर्वार्द्धवाक्यार्थहेतुत्वात् वाक्यार्थहेतुकं काव्य-

ममाशयः स्वप्नदशाश्रयापि वा नलं विलङ्घ्येतरमस्पृशद्यदि।
कुतः पुनस्तत्र समस्तसाक्षिणी निजैव बुद्धिर्विबुधैर्न पृच्छ्यते॥३२
अपि स्वमस्वप्नमसूषुपन्नमी परस्य दारानवेतुमेव माम्?।
स्वयं दुरध्वार्णवनाविकाः कथं स्पृशन्तु विज्ञाय कदापि तादृशीम्॥३३

---

लिङ्गमलङ्कारः। हेतोः वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति तल्लक्षणात्॥ ३१॥

ननु इन्द्रादयः सर्वान्तर्यामित्वात् मदभिप्रायं किं ज्ञातुं न शक्नुवन्तीत्यत्राह ममेति। वा अथवा मम आशयः अभिलाषः स्वप्नदशायाः स्वप्नावस्थायाः आश्रया प्रभावेण अपीति भावः। नलं विलङ्घ्य अतिक्रम्य इतरम् अन्यं पुरुषम् अस्पृशत् यदि आश्रयत् यदि, स्वप्नदशायामपि यदि अहमन्यं पुरुषं कदापि चिन्तितवती यावत् तर्हि विबुध्यन्ते इति विबुधाः देवाः तैः विद्वद्भिश्चेति ध्वन्यते। तत्र विषये ममाशयविषये समस्तसाक्षिणी सर्वद्रष्ट्री निजैव स्वकीयैव बुद्धिः कुतः पुनः कस्मात् हेतोः पुनः न पृच्छ्यते? न अनुयुज्यते? भैम्या मनोगतं किम् इति पृच्छ्यताम् एवेत्यर्थः। नलादन्यं नाहं स्वप्नेऽपि चिन्तयामि इति जानद्भिरपि यत् त्वं प्रेषितः तच्चित्रमिति भावः। आदित्यचन्द्रावनिलोऽनलश्च द्यौः भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तमिति। विशेषेणाग्नियमयोः सर्वसाक्षित्वे प्रामाण्यं कथयतीति तयोः समान्तिके त्वत्प्रेषणमतीव चित्रमिति च भावः॥ ३२॥

अपीति। अमी देवाः परस्य दारान् स्त्रियम्। दाराः पुंभूम्नि इत्यमरः। माम् अनवेतुम् अज्ञातुम् अस्वप्नं स्वतः स्वप्नवर्जितं स्वम् आत्मानम् असूषुपन् अपि? निद्रापयामासुः किम्? अपि

अनुग्रहः केवल एष मादृशे मनुष्यजन्मन्यपि यन्मनो जने।
स चेद्विधेयस्तदमी तमेव मे प्रसद्य भिक्षां वितरीतुमीशताम् ३४
अपि द्रढीयः शृणु मे प्रतिश्रुतं स पीड़येत् पाणिमिमं न चेन्नृपः।
हुताशनोद्बन्धनवारिवारितां निजायुषस्तत् करवै स्ववैरिताम् ३५

---

प्रश्नार्थः। स्वपेर्ण्यन्तात् ल्युटिस्वाप्योः सम्प्रसारणम्। जागरावस्थायामियं परदारा इति ज्ञाने कथमिमां लब्धुम् अभिलषाम इति धिया स्वप्नमाश्रयन् इवेति उत्प्रेक्षा। कथमन्यथा इत्थमाचरेयुः इत्याह स्वयमिति। स्वयं दुष्टः अध्वा दुरध्वः स एव अर्णवः दुरध्वार्णवः कुमार्गसमुद्रः तस्य नाविकाः कर्णधाराः। कर्णधारस्तु नाविक इत्यमरः। तादृशीं परस्त्रियमित्यर्थः, हृदा मनसा सर्वसाक्षिणा इति भावः। विज्ञायापि कथं स्पृशन्तु अभिलषन्तु ? ते खलु कुपथचारिणः कुपथात् निवारयन्तीति तेषां कुपथनिवारणं धर्मः तदहं यथा कुपथे न प्रवर्त्ते तथैव तेषां कर्त्तव्यं तदकृत्वा स्वयं परदाराभिलाषेण कुमार्गप्रयाणमिति अतीव हासहेतुरिति भावः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ ३३॥

अनुग्रह इति। मनुष्यात् जन्म यस्य तादृशे मानवे इत्यर्थः मादृशे मद्विधे क्षुद्रे इति भावः। जने यत् मनः अनुरक्तं तेषामिति शेषः। एषः केवलः अनुग्रहः अनुकम्पैव भक्तोऽयं जन इति बुद्धेरिति भावः सः अनुग्रहः चेत् यदि विधेयः कर्त्तव्यः तत् तदा अमी देवाः प्रसद्य प्रसन्ना भूत्वा मे मह्यं तमेव नलमेव भिक्षां वितरीतुं दातुं ऋतो वेति दीर्घः। ईशतां प्रभवन्तु नलमेव भिक्षां ददतु इत्यर्थः॥ ३४॥

नलाप्राप्तौ नाहं जीविष्यामीत्याह अपीति। अपि किञ्च

निषिद्धमप्याचरणीयमापदि क्रिया सती नावति यत्र सर्वथा।
घनाम्बुना राजपथे हि पिच्छिले क्वचिद्बुधैरप्यपथेन गम्यते॥२६॥

मे मम द्रढीयः दृढतरं क्रतो इष्ठादेर्लघोरिति रादेशः। मम प्रतिश्रुतं प्रतिज्ञां शृणु आकर्णय, किं तदित्याह स नृपो नलः चेत् यदि इमं मदीयं पाणिं न पीड़येत् न गृह्णीयात् तत् तदा निजस्य स्वस्य आयुषः जीवनस्य हुताशनोद्बन्धनवारिवारितां हुताशनेन अग्निप्रवेशेनेत्यर्थः उद्बन्धनेन गलरज्जुप्रदानेन इत्यर्थः वारिणा जलमज्जनेनेत्यर्थः वारितां निषिद्धां धर्मशास्त्रेषु इति शेषः स्वेन आत्मना वैरितां शत्रुतां करवै अवैधरूपेण आत्महत्यां करिष्यामीति निष्कर्षः॥ २५॥

ननु आत्महत्या अतीवदूषणीया कथं करिष्यते इत्यत्राह निषिद्धमिति। यत्र आपदि यस्मिन् सङ्कटे सती साध्वी शोभनेत्यर्थः धर्म्येति यावत्। क्रिया विधानं सर्वथा सर्वैः प्रकारैः केनापि प्रकारेणेत्यर्थः न अवति न रक्षति जनमिति शेषः धर्म्ये वर्त्मनि स्थितः कथमपि आत्मानं रक्षितुं न शक्नोतीति यावत् तत्र निषिद्धमपि शास्त्रगर्हितमपि आचरणीयम् अनुष्ठेयम्। इममेवार्थमर्थान्तरेण द्रढ़यति घनेति। हि यतः घनाम्बुना मेघवारिणा सान्द्रेण जलेन च राज्ञः पन्था राजपथस्तस्मिन् राजपथे राजमार्गे पिच्छिले पङ्किले सति बुधैरपि विद्वद्भिरपि अपथेन कुमार्गेण क्वचित् कुत्रचित् गन्तव्ये स्थाने गम्यते। तस्मात् नलाप्राप्तौ धर्मोऽकिञ्चित्कर इति मत्वा ममात्मघातो न दूषणीय इति भावः। अत्र सामान्यविशेषभावाभावात् न अर्थान्तरन्यासः किन्तु वाक्ययोर्बिम्बानुबिम्बेन साधर्म्यावगमात् दृष्टान्तालङ्कारः। तथाच दर्पणः, दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति॥ २६॥

स्त्रिया मया वाग्मिषु तेषु शक्यते न जातु सम्यग्विवरीतुमुत्तरम्।
तदत्र मद्भाषितसूत्रपद्धती प्रबन्धृतास्तु प्रतिबन्धृता न ते ॥३७॥
निरस्य दूतः स्म तथा विसर्जितः प्रियोक्तिरप्याह कटुष्णमक्षरम्।
कुतूहलेनेव मुहुः कुहूरवं विडम्ब्य डिम्भेन पिकः प्रकोपितः॥३८

स्त्रियेति। स्त्रिया स्त्रीत्वेन अल्पप्रज्ञया इति भावः। मया वाग्मिषु वाक्पटुषु वाग्मि-वाचाट-वाचाला वावदूकोऽतिवक्तरि इत्यमरः। तेषु इन्द्रादिषु सम्यक् सुष्ठु उत्तरं प्रतिवचनं विवरीतुं प्रकटयितुं जातु कदाचिदपि न शक्यते न प्रभूयते, तत् तस्मात् अत्र अस्मिन् मम भाषिताय्येव सूत्राणि। स्वल्पाक्षरम् असन्दिग्धं सारवत् विश्वतोमुखमस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥ इत्युक्तलक्षणानि संक्षिप्ताक्षराणि इति भावः। तेषां पद्धती मार्गे रचनायामित्यर्थः, ते तव प्रबन्धृता प्रबन्धकर्त्तृत्वं भाष्यकर्त्तृत्वमित्यर्थः अस्तु, प्रतिबन्धृता प्रतिकूलत्वं न अस्तु। तृजन्तात् बन्धेस्तल्। मया संक्षेपेण किञ्चिदुत्तरं दत्तं त्वया एतेनैव मदभिप्रायं ज्ञात्वा विस्तारेण ते देवा बोधनीयाः न तु मद्दोषोद्दोषणेन ते मां प्रति प्रतिकूलाः कर्त्तव्या इति भावः॥ ३७॥

अथ नलः किञ्चित् सरोष इव तामुवाच निरस्येति। स दूतो नलः तथा तेन प्रकारेण निरस्य निराकृत्य विसर्जितः प्रस्थानार्थमनुमतः सन् तथेत्यत्र तयेति पाठे तया भैम्या इत्यर्थः; प्रिया उक्तिर्यस्य स तथोक्तोऽपि प्रियभाषी अपीत्यर्थः, कुतूहलेन कौतुकेन हेतुना डिम्भेन मनुष्यशिशुना पोतः पाकोऽर्भको डिम्भ इत्यमरः। मुहुः पुनः पुनः कुहूरवं कुहूरिति निनादं विडम्ब्य अनुकृत्य प्रकोपितः रोषितः पिकः इव कोकिल

अहो मनस्त्वामनु तेऽपि तन्वते त्वमस्यमीभ्योविमुखीति कौतुकम्
क्व वा निधिर्निर्धनमेति किञ्च तं स वाक्कवाटं घटयन्निरस्यति॥३९
सहाखिलस्त्रीषु वहेऽवहेलया महेन्द्ररागाद्गुरुमादरं त्वयि।
त्वमीहसि श्रेयसि सम्मुखेऽपि तं पराङ्मुखी चन्द्रमुखि! ब्रवीहि तः

---

इव। कोकिलः पिक इत्यपीत्यमरः। कदुष्णम् ईषदुष्णम् अक्षरं वचनम् प्राह स्म उवाच। अत्रोपमालङ्कारः॥ ३८॥

किमित्याह अहो इति। अहो! आश्चर्य्यं तेऽपि देवा अपि त्वामनु त्वां प्रति मनः तन्वते विस्तारयन्ति देवानां मानुष्या-मभिलाष इत्याश्चर्य्यमित्यर्थः, आस्तां तदित्याह त्वमिति। त्वमपि मानुषी अपि अमीभ्यः अभिलषद्भ्यः देवेभ्यः विमुखी पराङ्मुखी देवान् न आकाङ्क्षसे इति कौतुकम् अत्याश्चर्य्यमित्यर्थः, क्वचा कस्मिन् वा लोके इति शेषः। निधिः महारत्नविशेषः। निधिर्नाशेवधिर्भेदाः पद्मसङ्खादयो निधेरित्यमरः। निर्धनं दरिद्रम् एति प्राप्नोति? किञ्च स निर्धनः तं निधिं वागेव त्वया नाथ आगन्तव्यमिति वचनमेव कवाटं प्रतिबन्धकावरण-विशेषः। तत् घटयन् योजयन् निरस्यति निराकरोति? न क्वापीत्यर्थः, अत्र यथा निधेर्दरिद्रप्राप्तीच्छा दरिद्रस्य च निधे-रवहेलनं तथा देवानां त्वत्प्राप्तीच्छा तव च देवानामवहेलन-मिति साधर्म्यप्रतीतेर्दृष्टान्तालङ्कारः॥ ३९॥

न चैतद्युक्तमाचरितं तवेत्यत्राह सहेति। हे चन्द्रमुखि! चन्द्रवदने! त्वयि महेन्द्रस्य रागात् अनुरागात् हेतोः गुरुं महान्तमादरम् अखिलासु अन्यासु सर्वासु स्त्रीषु अवहेलया अवज्ञया सह वहे धारयामि यदा महेन्द्रस्त्वामर्थयते ततः सर्वासु स्त्रीषु त्वमेव सौभाग्यशालिनीति मत्वा त्वामतिगौर-

दिवौकसं कामयते न मानवी नवीनमश्रावि तवाननादिदम्।
कथं न वा दुर्ग्रहदोष एष ते हितेन सम्यग्गुरुणापि शाम्यते ॥४१॥

---

वेण अन्याः सर्वाश्च स्त्रियोऽनादरेण पश्यामीति भावः। वृङ्: स्वरितेत्त्वादात्मनेपदम्। ईदृशि एवंविधे श्रेयसि अभ्युदये सम्मुखेऽपि समीपवर्त्तिन्यपि त्वं पराङ्मुखी अस्मात् श्रेयसो विमुखी सतीत्यर्थः, तम् आदरं बहुमानमित्यर्थः, न्यवीवृतः निवर्त्तितवत्यसीत्यर्थः। वृते र्णौचङि सिचिरूपम्। उरदित्यकारे सन्वद्भावे चाभ्यासेकारः। तमित्यत्र किंमिति पाठे किं कथं नवीवृतः तमित्यध्याहारः। ईदृशसौभाग्यपरित्यागोद्यतां त्वामहं हतभाग्यां तर्कयामीति भावः॥ ४०॥

दिवौकसमिति। मानवी मानुषी द्यौरोको यस्य तं दिवौकसं देवं न कामयते न वरीतुमिच्छति इदं नवीनं नूतनं अश्रुतपूर्वमित्यर्थः, वचः तवाननात् तव मुखात् अश्रावि श्रुतं मयेति शेषः। नवीनमित्यत्र विचित्रमिति पाठान्तरम्। एष ते तव दुर्ग्रहदोषः दुष्टनिर्बन्धरूपो दोषः दुष्टा ग्रहा रव्यादयः तैः दोषः तेषां प्रतिकूलत्वञ्च इत्यर्थः, हितेन आप्तेन बन्धुनेत्यर्थः, गुरुणापि पित्रादिनापि गौष्पतिनापि च गुरुर्गौष्पतिपित्राद्योरित्यमरः। कथं न वा नैव सम्यक् सुष्ठु यथा तथा न शाम्यते? न शान्तिं नीयते? शमेर्ण्यन्तात् कर्मणि लट्। पित्रादिभिः सत्तामदोषो येन केनापि उपायेन शमनीयः रव्यादिग्रहदोषश्च केन्द्रस्थेन बृहस्पतिना शमनीय एव तथाच। किं कुर्वन्ति ग्रहाः सर्वे यस्य केन्द्री बृहस्पतिरिति ज्योतिषम्। तस्माद् दुर्ग्रहमेनं परित्यज्य देवेष्वेतेषु यं कञ्चन वृणीष्वेति भावः। श्लेषाभिधया प्रकृते दुष्टनिर्बन्धरूपे पित्रादिरूपे चार्थे नियः

अनुग्रहादेव दिवौकसां नरो निरस्य मानुष्यकमेति दिव्यताम्।
अयोऽधिकारे स्वरितत्वमिष्यते कुतोऽयसां सिद्धरसस्पृशामपि ॥४२

न्वितत्वात् अप्रकृतार्थयोर्दुष्टग्रहस्नुहस्नतिरूपयोः प्रतीतिर्ध्वनि रेव ॥ ४१ ॥

देवानुग्रहेण देवत्वमपि भवितेत्यचाह अनुग्रहादिति। नरः मानवः दिवं द्यौर्वा ओको येषां तेषां देवानामित्यर्थः, पृषोदरादित्वात् साधुः। अनुग्रहादेव प्रसादादेव मनुष्यस्य भावः। मानुष्यकं तत् निरस्य उत्सृज्य योपधाद्गुरूपोत्तमाद् वुञिति वुञि यस्येति लोपे प्रकृत्या के राजन्यमनुष्ययुवान इति प्रकृति भावादपत्यस्य च तद्धितेनापीति यलोपाभावः। दिव्यतां देवत्वम् एति प्राप्नोति देवपरिग्रहात् तव देवत्वमपि भविष्यति सत्सङ्गजा दोषगुणा भवन्तीति न्याय एवात्र प्रमाणमिति भावः। एतदेवार्थान्तरेण द्रढ़यति अय इति। रसो हि पारदः देहधात्वम्बुपारद इति रसशब्दार्थेषु विश्वः। औषधादिना कथमपि प्रकरणात् लोहान्तराणां सुवर्णीभावसाधनसमर्थः सन् सिद्धरस उच्यते तं स्पृशन्तीति तथोक्तानाम् अयसां सिद्धरसस्पर्शात् सुवर्णतां गतानामित्यर्थः, अयोधिकारे अयसां लोहानां प्रस्तावे प्रसङ्गे स्वरितत्वम् आचितत्वं परिगणनमिति यावत् स्वृशब्दोपतापयोरिति भौवादिकात् धातोः क्त प्रत्ययः केचित् तु स्वर आक्षेपे इति गौरादिकात् क्त प्रत्ययः। कुतः इष्यते? नैवेष्यते इत्यर्थः। यथा सिद्धरसस्पृष्टो लौहः स्वर्णीभवति न पुनः स लोहमध्ये गण्यते च तथा देवशरीरस्पर्शात् तव देवत्वं भविता नातःपरं मानुषीमध्ये तव गणना भविष्यति चेति भावः। अत्र वाक्ययोर्बिम्बानुबिम्बभावप्रतीतेर्दृष्टान्तालङ्कारः॥४२

हरिं परित्यज्य नलाभिलाषुका न लज्जसे वा विदुषीब्रुवा कथम्।
उपेक्षितेक्षोः करभाच्छमीरतादुरुं वदे त्वां करभोरु! भोरिति॥४२

हरिमिति। विदुषी विद्यावती विदेः शतुर्वसुः उगितश्चेति ङीप्। ब्रवीतीति ब्रुवा विदुष्या ब्रुवा विदुषीब्रुवा कर्मणि षष्ठीसमासः। आत्मानं विदुषीं ब्रुवाणेत्यर्थः, पण्डितम्मन्येति भावः। घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचोह्रस्व इति ह्रस्वे विदुषिब्रुवा ब्रूञः पचाद्यच्। एतस्मादेव निपातनात् गुणवच्यादेशयोरभावः। त्वं हरिम् इन्द्रम् इन्द्रो दुश्च्यवनो हरिरिति कोषः। परित्यज्य नलं रलयोरैक्यात् नरं तदाख्यं तृणविशेषमिति च गम्यते अभिलषतीति नलाभिलाषुका सती लषपतेत्यादिना ताच्छील्ये उकञ्प्रत्ययः। न लोकेत्यादिना षष्ठीप्रतिषेधात्। कर्मणि द्वितीयायां गमिगाम्यादि पाठात् समासः। कथं न लज्जसे? इन्द्रपरित्यागेन तृणतुल्यनरग्रहणं मणिपरित्यागेन काचग्रहणवत् लज्जाकरमिति भावः। अतएवाहं त्वामद्य एवं व्याख्यास्यामीत्याह उपेक्षितेति। त्वाम् उपेक्षितः परित्यक्तः इक्षुर्मधुरसवत्तृणविशेषः येन तादृशात् शमीरतात् शमीनाम कण्टकावृततरुविशेषः। तत्र रतात् तल्लुब्धादित्यर्थः, करभात् उष्ट्रात् उरुं महतीं केवलेन मानवजन्मना न तु केनापि गुणेन इति भावः। भोः करभोरु! हे करभोरु!। करभाच्छतीति वदे ब्रवीमि भासनादिसूत्रेण ज्ञानार्थे तङ्। न तु करभः करस्य भागविशेषः। करिशुण्डो वा करभः करिहस्ते स्यात् करभः करिशावके। करभो मणिबन्धादि कनिष्ठान्तोष्ट्रततसुते इति वलः। तद्वत् तत्सदृशावित्यर्थः, ऊरू यस्या इति व्युत्पत्त्यर्थः। अथ सम्बोधनार्थकाः स्युः प्याट् पाड्ङ्ग। हे है भो इत्यव्ययेष्वमरः। चादिपाठान्निपात संज्ञायामोदिति प्रगृह्य-

विहाय हा सर्वसुपर्वनायकं त्वयाहृतः किं नरसाधिमभ्रमः।
मुखं विमुच्य श्वसितस्य धारया वृथैव नासापथधावनश्रमः॥ ४४॥

---

त्वात् प्रकृतिसन्धिः। अनव्ययपक्षेऽपि भवच्छन्द तकारस्य रुत्वादिकार्य्ये यलोपस्यासिद्धत्वादवादेशनिवृत्तौ भो इत्येव सन्धिः। किन्त्वत्र स्त्रीसम्बोधने स्त्रियामुगितश्चेति ङीप्प्रत्यये भवतीति संबुद्धिः स्यात्। न तु भो इति। करभोर्वित्यत्र करभ इवोरू यस्या इति ऊरूत्तरपदादौपम्ये इत्यूङ्प्रत्ययः। करभा-दुरुः करभोरुरिति पक्षे तु मनुष्यजातिविवक्षायां ब्रह्मबन्धु-रित्यादिवत् ऊङ् तदन्तत्वात् नदीकृत्यः। यथाह वामनः। मनुष्यजातेर्विवक्षापक्षे इति। तस्मात् करभचेष्टितमिव तव ग्राह्याग्राह्यत्वविवेकराहित्यमतीव हास्यास्पदमिति पर-मार्थः॥ ४३॥

विहायेति। हा इति खेदे त्वया सर्वेषां सुपर्वणां देवानां नायकं प्रभुं देवराजमित्यर्थः, विहाय परित्यज्य नरे मनुष्ये रलयोरैक्यात् नले इति भावः। साधिमभ्रम साधुत्वभ्रान्तिः देवेन्द्रमपेक्ष्य नलः साधुरिति भ्रम इत्यर्थः, पृथ्वादित्वात् साधो-रिमनिच्प्रत्ययः। किमर्थम् आहृतः अवलम्बित इत्यर्थः, धृत इति पाठान्तरम्। अथवा नियतिः केन बाध्यते इत्याशयेनाह मुखमिति। श्वसितस्य निश्वासपवनस्य धारया प्रवाहेण मुखं मुखरूपं सहजमार्गमिति भावः। विमुच्य विहाय वृथैव निर-र्थकं एव नासापथेन नासारन्ध्रेण सङ्कीर्णमार्गेणेति भावः। धावनश्रमः निःसरणप्रयासः क्रियते इति शेषः। भवितव्यता एव तव ईदृग्दुर्मतेर्हेतुरिति भावः। अत्रापि वाक्ययोर्विम्बानु-विम्बभावप्रतीतेर्दृष्टान्तालङ्कारः॥ ४४॥

तपोऽनले जुह्वति सूरयस्तनूर्दिवे फलायान्यजनुर्भविष्णवे ।
करे पुनः कर्षति सैव विह्वला बलादिव त्वां वलसे न वालिशे ! ४५

यदि स्वमुद्बन्धुमना विना नलं भवेर्भवन्तीं हरिरन्तरिक्षगाम् ।
दिविस्थितानां प्रथितः पतिस्ततो हरिष्यति न्याय्यमुपेक्षते हि कः

तप इति । सूरयः विद्वांसः अन्यस्मिन् जनुषि जन्मनि भविष्णवे भाविन्यै भूष्णुर्भविष्णुर्भवितेत्यमरः । भुवश्चेति इष्णुच्-प्रत्ययः । भाषायामपीष्यते इति भाषितपुंस्कत्वात् पुंवद्भावः । दिवे स्वर्गायैव फलाय तपश्चान्द्रायणादिरूपं व्रतं तदेव अनलः अग्निः तस्मिन् तनुः शरीराणि जुह्वति प्रक्षिपन्ति अदभ्यस्ता-दित्यदादेशः । यदर्थं शरीराणि तपोभिः शोषयन्तीति भावः । सैव कठोरतपःसाध्या द्यौरेव पुनः विह्वला समुत्सुका स्वाश्रय-दानार्थं व्यग्रेत्यर्थः सती बलादिव बलात्कारेणेव त्वां करे कर्षति करे धृत्वा नेतुमिच्छतीत्यर्थः । तथापि हे वालिशे ! मूढे ! अबोधे ! इत्यर्थः । शिशावज्ञे च बालिशे इत्यमरः । न वलसे न चलसि न काङ्क्षसीति यावत् । अन्यैः महद्भिरपि महता क्लेशेन जन्मान्तरलभ्यं यत्फलं लब्धुं प्रयस्यते तत्फलमक्लेशेन अस्मिन्नेव जन्मनि समुपस्थितं त्वं नाभिलषसीति नितरां मूढा-सीति निष्कर्षः ॥ ४५ ॥

यदुक्तं नलालाभे हुताशनोद्बन्धनादिना प्राणांस्त्यक्ष्यामि इति तत्रोत्तरं क्रमेणाह यदीत्यादिभिः । नलं विना नलमप्रा-प्येत्यर्थः, यदि स्वम् आत्मानम् उद्बन्धुं मनो यस्याः सा उद्बन्धुमनाः गले रज्जुदानेन प्राणांस्त्यक्तुकामेत्यर्थः तुं काम-मनसोरपीति मकारलोपः । भवेः स्याः, ततः तदा अन्तरिक्ष-गाम् आकाशवर्त्तिनीं गलरज्जुयोगेन लम्बमानामिति भावः ।

निवेच्यसे यद्यनले नलोज्झिता सुरे तदस्मिन्महती दयाहृता।
चिरादनेनार्थनयापि दुर्लभं स्वयं त्वयैवाङ्ग! यदङ्गमर्प्यते ॥४७॥

---

भवन्तीं त्वां दिविस्थितानाम् अन्तरीक्षचारिणां स्वर्गवासिनाञ्च प्रथितः विख्यातः पतिः प्रभुः हरिः इन्द्रः हरिष्यति ग्रहीष्यति इत्यर्थः हि तथाहि को जनः न्यायादनपेतं न्याय्यं न्यायाधिगतं प्राप्यत्वेन निर्द्धारितमिति यावत् वस्तु उपेक्षते? परित्यजति? न कोऽपीत्यर्थः। स्वाधिकारस्थितमस्वामिकं वस्तु राजगामि भवतीति शास्त्रादिति भावः। तस्मात् उद्बन्धनेऽपि यदा महेन्द्रहस्तगामित्वं तव सिद्धं तदा स्वयमेव सम्माननेन तद्वरणं युक्तमिति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। तेन च आरब्धवैफल्यमनर्थोत्पत्तिश्चेति विषमालङ्कारः समुज्जीवित इत्यनयोरङ्गाङ्गिभावेन सङ्करः॥ ४६ ॥

निवेच्यसे इति। अङ्गेत्यामन्त्रणे। हे मुग्धे! नलेन उज्झिता त्यक्ता अप्राप्तनलेत्यर्थः; सती यदि अनले अग्नौ निवेच्यसे जीवनं हयेति मन्यमाना अग्निं प्रवेक्ष्यसीत्यर्थः आधारत्वविवक्षया सप्तमी नेर्विश इति आत्मनेपदम्। तत् तदा अस्मिन् सुरे देवे अनले महती दया आहृता कृतेत्यर्थः। धृतेति पाठेऽपि स एवार्थः। कुत इत्याह चिरादिति। यत् यस्मात् अनेन अग्निना देवेन चिरात् अर्थनयापि बहुकालप्रार्थनयापि दुर्लभं दुष्प्रापम् अङ्गं शरीरं त्वया एव स्वयम् आत्मनैव अर्प्यते दीयते चिरयाचितमपि यत् प्राक् दुष्प्रापं तत् स्वयमेव दात्वा प्रदत्तं प्रतिग्रहीतारमनुकम्पते एव इति निष्कर्षः। अत्र नलाभावे जीवनत्यागाय अनलप्रवेशे कृते अग्निदेवेन सजीवग्रहणरूपस्य अनर्थस्य उत्पत्तिरिति यद्वा आरब्धस्य वैफल्यमनर्थस्य च सम्भवः इत्युक्तविषमालङ्कारभेदः॥ ४७ ॥

जितं जितं तत् खलु पाशपाणिना विना नलं वारि यदि प्रवेक्ष्यसि
तदा त्वदाख्यान् वहिरप्यसूनसौ पयःपतिर्वक्षसि वक्ष्यतेतराम् ॥४८॥
करिष्यसे यद्यत एव दूषणादुपायमन्यं विदुषी स्वमृत्यवे ।
प्रियातिथिः स्वेन गता गृहान् कथं न धर्मराजं चरितार्थयिष्यसि

---

जितमिति। नलं विना नलमप्राप्येत्यर्थः। वारि जलं प्रवेक्ष्यसि यदि जीवनत्यागाय जले निमङ्क्ष्यसि चेत् तत् तदा पाशः पाणौ यस्य तेन पाशपाणिना वरुणेन प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः। खलु निश्चितं जितं जितं भावे क्तः। नित्यवीप्सेति नित्यार्थे द्विर्भावः। नित्यमाभीक्ष्ण्ये इति काशिका। अतिदुर्लभायाः तव अनायासेन लाभात् सर्वोत्कर्षेण स्थितमित्यर्थः तदा वारिप्रवेशकाले असौ पयःपतिः जलाधिपः वरुणः त्वदाख्यान् त्वन्नामकान् असून् प्राणान् प्राणभूतां त्वामिति भावः। वहिरपि वक्षसि हृदयोपरिस्थिते वक्षःस्थलेऽपीत्यर्थः हृदये तु सततं वहति इत्यपिशब्दार्थः। वक्ष्यतेतराम् अतियत्नेन वक्ष्यतीत्यर्थः। वहेः स्वरितत्वात् लृटि तङि तरवाम्प्रत्ययः। तस्मात् वारिप्रवेशोऽपि तव न युज्यते इति भावः। अत्रापि आरब्धवैफल्यमनर्थोत्पत्तिश्चेति विषमालङ्कारभेदः ॥ ४८ ॥

करिष्यसे इति। यदि अतएव दूषणात् अस्मात् एव उद्बन्धनादिषु दोषादित्यर्थः, हेतोः स्वमृत्यवे जीवनत्यागाय विदुषी विद्यां प्रकटयन्तीति सोल्लुण्ठनोक्तिः सती अन्यम् उद्बन्धनाद्यतिरिक्तम् उपायं विषपानानशनादिरूपं करिष्यसे अवलम्बिष्यसे, तदा स्वेन आत्मना गृहान् गता उपनीता प्रियातिथिः अतिशयेन प्रेयसी अतिथिः अभ्यागता त्वं धर्मराजं यमं कथं न चरितार्थयिष्यसि ? अपितु चरितार्थमेव करिष्यसि

निषेधवेषो विधिरेष तेऽथवा तवैव युक्ता खलु वाचि वक्रता ।
विजृम्भितं यस्य किल ध्वनेरिदं विदग्धनारीवदनं तदाकरः ॥ ५०

---

इत्यर्थः । प्रियातिथिमितिपाठे प्रियः अतिथिर्यस्य तम् अतिथिप्रियमित्यर्थः धर्मराजमित्यस्य विशेषणम् । यतोऽसौ अतिथिसेवापरः अतः त्वां परमदुर्लभाम् अतिथिं प्राप्य आत्मानं कृतार्थं मंस्यते इति भावः । येन केनापि प्रकारेण मृतापि त्वं धर्मराजं न अतिक्रमितुं शक्ष्यसि तस्मात् स्वत एव सम्मानेन तं कुरुष्व इति भावः । अत्रापि आरब्धवैफल्यमनर्थोत्पत्तिश्चेति विषमालङ्कारभेदः प्राग्वदिति बोध्यम् ॥ ४९ ॥

अथवा तेषां वरणं तेऽभिमतं कौशलेन वचनभङ्ग्या मां प्रतारयसीत्याह निषेध इति । अथवा ते तव एष निषेधः इन्द्रादिनिवारणं वेशो यस्य तादृशः इन्द्रादिषु वरणीयेषु निषेधाकारः निषिद्धवदाभासमानः इत्यर्थः विधिः अङ्गीकारः यथा श्रुतार्थग्रहणे आपाततः इन्द्रादिषु कञ्चन न वरिष्यामि इति प्रतीयते किन्तु पूर्वोक्तरूपवाक्यपर्य्यालोचनया तेषु एव एकतमं वरिष्यामीति विधिरेव प्रतिभाति इति भावः । कथमेवमवबुध्यते इत्यत्राह तव एवेति । खलु यतः तवैव विदग्धायाः इति भावः, वाचि वचने वक्रता कूटार्थवत्तया चातुरीत्यर्थः । युक्ता अनुरूपा युक्ततमा शोभते इति भावः । एतदपि कथमित्याह विजृम्भितमिति । इदं वक्रोक्तिरूपं यस्य ध्वनेः वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तममित्युक्तलक्षणस्य काव्यस्य विजृम्भितं विलसितं नपुंसके भावे क्तप्रत्ययः । विदग्धा चतुरा या नारी तस्याः वदनं मुखं तस्य ध्वनेः आकरः उत्पत्तिस्थानं विदग्धकामिनीवदनादेव निषिद्धार्थस्य विधेयतया विहितार्थस्य च निषिद्धतया पर्य्यवसानरूपवाक्यार्थो निःसरतीति निष्कर्षः । तथाच ।

भ्रमामि ते भैमि! सरस्वतीरस-प्रवाहचक्रेषु निपत्य कत्यदः
त्रपामनादृत्य मनाक् कुरु स्फुटं हतार्थनीयः कतमः सुरोत्तमः ५।

५१. अयच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः। मिथ्यावादिनि दूति! बान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्॥ इति वाक्यार्थस्य पर्य्यालोचनमन्तरेणापाततः वापीं स्नातुं गतासि, तस्य अधमस्यान्तिकं न गतासीति निषेधार्थः प्रतीयते किन्तु अधमस्येत्यादिपदार्थपर्य्यालोचनेन तस्यान्तिकमेव रन्तुं गतासीति विधित्वेन पर्य्यवसीयते। भम धम्मिअ! वीसत्थो सो सुणहो अज्ज मारिओ देण। गोलाण इकच्छकुडङ्गवासिणा दरीअ सीहेण। इति प्राकृतम्। भ्रम धार्मिक! विश्रब्धः स श्वाद्यमारितस्तेन। गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥ इति संस्कृतम्। अत्र भ्रम धार्मिकेति भ्रमणस्य विधिः प्रकृते स्वस्य स्वच्छन्दविहारे प्रतिबन्धकतया सिंहेन निहत इति वचनात् भ्रमणनिषेधे पर्य्यवस्यतीति। अनयोश्च वाक्ययोः प्रणेत्री कापि विदग्धा नायिका। तदेवं त्वया विदग्धया इन्द्रादिषु प्रयुक्तं निषेधापरं पर्य्यालोचनया पर्य्यवसाने विध्यपरमेव प्रतीयते इति निष्कर्षः॥ ५०॥

इत्थं देववरणपक्षमेव दृढ़ीकृत्य पुनः निर्बन्धेन पृच्छति भ्रमामीति। हे भैमि! ते तव सरस्वती वाणी नदीभेदश्च तस्या रसः माधुर्य्यं जलञ्च तस्य प्रवाहः धाराः स्रोतांसि च तेषां चक्रेषु चक्रोक्त्यादिरूपेषु आवर्त्तेषु च। चक्रेषु इत्यत्र वक्रेषु इति पाठान्तरेऽपि अयमेवार्थः। कति कियन्तं कालमित्यर्थः निपत्य अदः एवंरूपेणेत्यर्थः भ्रमामि घूर्णामि किमपि निर्णेतुं न शक्नोमीति यावत्। तस्मात् त्रपां लज्जां मनाक् ईषत्

मतः किमैरावतकुम्भकैतव-प्रगल्भपीनस्तनदिग्धवस्तव ।
सहस्रनेत्रान्न पृथक् मते मम त्वदङ्गलक्ष्मीमवगाहितुं क्षमः॥५२॥

---

अनादृत्य शिथिलयित्वा इत्यर्थः कतमः चतुर्षु क इत्यर्थः । सुरोत्तमः देवश्रेष्ठः कृतार्थनीयः कृतार्थः कारणीयः त्वयेति शेषः । स्फुटं स्पष्टं कुरु प्रकाशयेत्यर्थः । तव वक्रोक्त्या नाहं किञ्चिदपि अवधारयितुं शक्नोमि तत् स्पष्टाभिधानेन मदीयं भ्रममपनय कात लज्जा आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत् इति भावः । अदः इदं स्फुटं कुरु इति वा योजना । अद इत्यत्र अत इति पाठो मनरोमः अतः अस्मादित्यर्थः ॥ ५१ ॥

अथ एषु इन्द्र एव त्वया मनसा अङ्गीकृत इत्याशयेन पृच्छति मत इति । ऐरावतस्य कुम्भौ ऐरावतकुम्भौ तयोः कैतवेन व्याजेन प्रगल्भौ कठोरौ पीनौ स्थूलौ च स्तनौ यस्याः माहशी या दिक् प्राचीत्यर्थः तस्या धवः ऐरावतरूपकठिनपीनस्तनशालिन्याः प्राच्या दिशः पतिरित्यर्थः पूर्वदिक्पालः इन्द्र इति भावः । तव मतः अभिमतः किम् ? इन्द्र एव वरणीय इत्यभिलषितं किम् ? इत्यर्थः । किंशब्दः प्रश्ने । मतिबुद्धीत्यादिना वर्त्तमाने क्तप्रत्ययः । क्तस्य च वर्त्तमाने इति तद्योगात् तवेति कर्त्तरि षष्ठी । युक्तञ्चैतदित्याह सहस्रेति । मम मते मद्विवेचनायामित्यर्थः, भावे क्तप्रत्ययः । सहस्रं नेत्राणि यस्य तस्मात् इन्द्रादित्यर्थः । पृथक् अन्यो जनः पृथग्विनेत्यादिना पञ्चमी । तव अङ्गस्य अवयवस्य लक्ष्मीं लावण्यकान्तिम् अवगाहितुं सम्यक् परीक्षया भोक्तुमित्यर्थः, न क्षमः न योग्यः न शक्तो वा । द्विनेत्रस्य तव लक्ष्मीपरीक्षणे न सामर्थ्यं सुतरां सहस्रनेत्र एव तव योग्यः पतिरिति मया विविच्यते इति भावः । अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुत्वात् काव्यलिङ्गमलङ्कारः ।

प्रसीद तस्मिन् दमयन्ति ! सन्ततं त्वदङ्गसङ्गप्रभवैर्जगत्प्रभुः ।
पुलोमजालोचनतीक्ष्णकण्टकैस्तनुं घनामातनुतां स कण्टकैः ॥ ५३
अबोधि तत्त्वं दहनेऽनुरज्यसे स्वयं खलु क्षत्रियगोत्रजन्मनः ।
विना तमोजस्विनमन्यतः कथं मनोरथस्ते वलते विलासिनि ! ५४

---

तदुक्तं दर्पणे, हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति ।
तच्च ऐरावतकुम्भकैतवेनेति प्रकृतनिषेधेन अप्रकृतस्तनस्थापनात्
अपह्नुतिरिति तया संसृज्यते इत्यनयोः संसृष्टिः ॥ ५२ ॥

प्रसीदेति । हे दमयन्ति ! तस्मिन् इन्द्रे प्रसीद प्रसन्ना भव
प्रसन्ना भूत्वा तं वृणीष्वेत्यर्थः । तस्मै इति पाठे तस्मै इन्द्राय
इत्यर्थः, इन्द्रं प्रतीति भावः । क्रियाग्रहणाच्चतुर्थी । स जगतां
प्रभुः पतिः इन्द्रः सन्ततं तनुं निजाङ्गं तव अङ्गसङ्गात् शरीर-
सम्पर्कात् प्रभवो येषां तैः त्वदङ्गसङ्गात् सत्त्वोदयजनितैरित्यर्थः;
अतएव पुलोमजायाः शच्याः लोचनयोः नयनयोः तीक्ष्णा
निशिताः कण्टकाः वृक्षाग्रावयवविशेषाः तैः कण्टकवेधवत्
व्यथाकरैरिति भावः कण्टकैः रोमाञ्चैः । वेणौ द्रुमाङ्गे रोमाञ्चे
क्षुद्रशत्रौ च कण्टके इति वैजयन्ती । घनां सान्द्रां आकीर्णा-
मिति यावत् आतनुतां करोतु । त्वया वृतः शचीपतिः शची-
मपि परित्यज्य त्वामेव अनुरक्तः सेविष्यते इति भावः । अत्र
रोमाञ्चेषु कण्टकत्वरूपणात् व्यस्तरूपकम् । तेन शच्याः सपत्न्या
अपि तवाधिकसौभाग्यरूपं वस्तु व्यज्यते इत्यलङ्कारेण वस्तु-
ध्वनिः ॥ ५३ ॥

अथाग्निरेव त्वया मनसा वृत इत्याशयेनाह अबोधीति ।
हे विलासिनि विनोदिनि ! वौ कषलसकत्थस्रम्भ इति घिनुण्
प्रत्ययः । तत्त्वं तव मनोरथस्य स्वरूपमितियावत् अबोधि विदितं

त्वयैकपत्न्या तनुतापशङ्कया ततो निवर्त्त्यं न मनः कथञ्चन ।
हिमोपमा तस्य परीक्षणक्षणे सतीषु वृत्तिः शतशो निरूपिता ॥ ५५ ॥

मयेति शेषः । कर्म्मणि लुङ् । किमित्याह दहने इति त्वं स्वयम् आत्मनैव दहने अग्नौ अनुरज्यसे अनुरक्तासि खलु निश्चितं रञ्जेर्दैवादिकात् स्वरितेतः कर्त्तरि लट् । अनिदितामित्यादिना अनुनासिकलोपः । अबोधि तत्त्वं दहनेऽनुरज्यसे इत्यत्र असंशयं रज्यसि जातवेदसीति पाठे त्वं जाता वेदा यस्मादिति जातवेदा अग्निः तस्मिन् असंशयं निश्चितं स्वयम् आत्मनैव आत्मीयबुद्धैवेत्यर्थः, रज्यसि रक्तासीत्यर्थः । कुत इत्याह क्षत्त्रियेति । क्षत्त्रियगोत्रे क्षत्रकुले जन्म यस्याः तथाविधायाः ओजस्विकुलोत्पन्नाया इति भावः । तव मनोरथः अभिलाषः ओजस्विनं तेजस्विनं तमग्निं विना अन्यतः अन्यत्र पुरुषे इति शेषः । असार्व्वविभक्तिकस्तसिः । कथं वलते ? सञ्चरति ? न कथमपि इत्यर्थः, योग्यं योग्येन युज्यते इति न्यायेन ओजस्विन्या त्वया ओजस्विनः तस्याग्नेः समागम एव युज्यते इति भावः । तस्मात् दहनमेवानुरूपं पतिं वृणुष्व इति तात्पर्य्यम् । अत्र उत्तरवाक्यार्थस्य पूर्व्ववाक्यार्थहेतुत्वात् काव्यलिङ्गमलङ्कारः ॥ ५४ ॥

न च तस्माद् दाहभीतिः शङ्कनीयेत्यत्राह त्वयेति । एकः पतिर्यस्याः सा एकपत्नी पतिव्रता तया त्वया तनोः शरीरस्य तापशङ्कया दाहभयेन अतनुतापशङ्कया महान् तापो भवेदिति सम्भावनया वेत्यर्थः, ततस्तस्मात् अग्नेः सकाशात् मनः कथञ्चन केनापि प्रकारेण न निवर्त्त्यं न प्रत्यावर्त्तनीयमित्यर्थः । ऋतेर्ण्यन्ताद्दचो यदिति यत्प्रत्ययः । कुत इत्याह हिमेति । तस्याग्नेः परीक्षणक्षणे अग्निदिव्येन पातिव्रत्यपरीक्षावसरे सतीषु पतिव्रतासु वृत्तिः व्यवहारः हिमेन उपमा यस्याः

सः धर्मराजः खलु धर्मशीलया त्वयास्ति चित्तातिथितामवापितः
ममापि साधु प्रतिभात्ययं क्रमश्चकास्ति योग्येन हि योग्यसङ्गमः
अजातविच्छेदलवैः स्मरोत्सवैरगस्त्यभासा दिशि निर्मलत्विषि ।
धुतावधिं कालमनल्पशङ्किता निमेषयत्तेन नयस्व केलिभिः ५७

---

तादृशी तुषारसदृशीत्यर्थः । शतशः शतं शतं वारान् निरूपिता निरीक्षिता निर्धारिता वा यथा रामायणादौ सीतायामिति भावः । न तु कदाचिदिति शेषः । तस्माद्दाहभयेन तस्माद्वहि-मुखता न विधेयेति तात्पर्य्यम् । अत्रापि उत्तरवाक्यार्थस्य पूर्व-वाक्यार्थहेतुत्वात् काव्यलिङ्गमलङ्कारः ॥ ५५ ॥

यमस्त्वया मनसि वृत इत्याशयेनाह स इति । स प्रसिद्धो धर्मेण राजते इति धर्मराजः यमः धर्मं शीलयतीति धर्मशीला धर्मचारिणी तया त्वया शीलिकामिव्यभिचारिभ्योऽच् चित्तस्य मनसः अतिथितां विषयतामित्यर्थः, मनोनीतामित्यर्थः, अवा-पितः खलु ? प्रापितः किम् ? खलुशब्दः प्रश्नार्थः निषेध-वाक्यालङ्कारजिज्ञासानुनये खलु इत्यमरः । एवञ्चेद् युक्त-मित्याह ममेति । ममापि अयं क्रमः नियमः प्रवृत्तिरिति यावत् साधु सम्यक् यथा तथा प्रतिभाति स्फुरति, हि यतः योग्येन अनुरूपेण सह योग्यस्य अनुरूपस्य सङ्गमः समागमः सम्मेलनं चकास्ति शोभते । त्वं धर्मशीला यमश्च धर्मराजः तदनयोर्युवयोः धर्मसम्बन्धेन साम्यात् समागमः सर्वथा समीचीन एव प्रतिभाति, तस्माद् धर्मराजोऽभीप्सितश्चेत् तं वृणीष्व इति भावः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ ५६ ॥

अजातेति । अगस्त्यस्य दक्षिणदिग्वर्त्तिनो महर्षिविशेषस्य नक्षत्रविशेषस्य वा भासा तेजसा दीप्त्या वा निर्मला त्विषः

शिरीषमृद्वी वरुणं किमीहसे पयःप्रकृत्या मृदुवर्गवासवम्।
विहाय सर्वान् वृणुते स्म किन्नसा निशापि शीतांशुमनेन हेतुना

कान्तयः यस्याः तथाभूतायां दिशि दक्षिणस्यामित्यर्थः, एतेन अस्य दिक्पालस्य यमस्य अगस्त्यप्रसादोऽस्तीति सूचितः न अस्ति मृत्योः शङ्कितं शङ्का भावे क्तः यस्याः तथाभूता यद्वा मृत्योः शङ्किता न भवतीत्यमृत्युशङ्किता मृत्युभयवर्जिता इत्यर्थः, सती स्वयं मृत्योर्यमस्यापि तव दासतया स्थितत्वादिति भावः। न जातो विच्छेदस्य विरहस्य विघ्नस्य वा लेशो येषां येषु वा तैः अविच्छिन्नैः अविघ्नितैः चेत्यर्थः, स्मरोत्सवैः कामोत्सवरूपैः केलिभिः क्रीड़ाभिः तेन यमेन सह वृद्धो यूनेति ज्ञापकात् सहा-प्रयोगेऽपि सहार्थे तृतीया। धुतो निरस्तः अवधिर्यस्य तं निर-वधिमित्यर्थः, कालं निमेषवत् सुखसमयस्य अल्पक्षणवदाभास-मानत्वात् निमेषतुल्यमित्यर्थः, यथा तथा नयस्व यापय। अन्य-वरणे तु मृत्युशङ्का अस्ति अस्य वरणे तु तच्छङ्कापि नास्ति इति अतीव सौभाग्यमिति भावः॥ ५७॥

अथ वरुणं प्रति किमनुरक्तासि इत्याशयेन पृच्छति शिरी-षेति। शिरीषवत् मृद्वी शिरीषकुसुमकोमला त्वं पयःप्रकृत्या जलस्वभावेन मृदुवर्गाणां मृदुवस्तुसमूहानां वासवमिन्द्रं वरु-णम् ईहसे किम्? इच्छसि किम्? युक्तञ्चैतदित्याह विहा-येति। सा प्रसिद्धा अतिकोमलत्वेन इति शेषः। निशा रजनी अनेन हेतुना मृदुना मृदुसंयोगो युक्त इति कारणेन सर्वान् देवान् सूर्य्यादीन् इति शेषः। विहाय परित्यज्य शीतांशु चन्द्रं किं न वृणुते स्म? अपि तु वृणुते एवेत्यर्थः। अत्र वाक्ययोर्बिम्बानुबिम्बभावाद् दृष्टान्तालङ्कारः। दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति तल्लक्षणात्॥ ५८॥

असेवि यस्त्यक्तदिवा दिवानिशं श्रियः प्रियेणानणुरामणीयकः ।
सहामुना तत्र पयःपयोनिधौ कृशोदरि ! क्रीड़ यथामनोरथम् ५९
इति स्फुटं तद्वचसस्तयादरात् सुरस्पृहारोपविड़म्बनादपि ।
कराङ्कसुप्तैककपोलकर्णया श्रुतञ्च तद्भाषितमश्रुतञ्च तत् ॥६०॥

असेवीति । हे कृशोदरि ! तनुमध्ये ! त्यक्ता द्यौर्येन तेन त्यक्तदिवा स्वर्गमपि त्यजतेत्यर्थः, श्रियः प्रियेण लक्ष्मीपतिना नारायणेन इत्यर्थः, दिवा च निशा च दिवानिशं रात्रिन्दिव-मित्यर्थः, द्वन्द्वैकवद्भावे अत्यन्तसंयोगे द्वितीया । अनणुर्महान् रमणीय एव रामणीयकः अतिरमणीय इत्यर्थः यद्वा अनणु महत् रामणीयकं रमणीयत्वं यस्य तथाभूतः यः पयःपतिः क्षीरनिधिः असेवि सेवितः यस्मिन् अधिष्ठित इत्यर्थः, नारायणो लक्ष्म्यासह स्वर्गं त्यक्ता यस्य रामणीयकगुणेनाकृष्टः सन् यं सततमधितिष्ठतीत्यर्थः, तत्र पयःपयोनिधौ क्षीरनिधौ अमुना वरुणेन सह यथामनोरथं यथेच्छं क्रीड़ विहर । नारायणो लक्ष्म्या सह यत्र सततं क्रीड़ति वरुणोऽपि त्वया सह तत्रैव सततं क्रीड़िष्यतीति दुर्लभं लक्ष्मीसौभाग्यमपि त्वया लप्स्यते इति भावः ॥ ५९ ॥

इत्थं नलवचनश्रवणे भैम्या आदरानादरौ सममेव जाता-वित्याशयेनाह इतीति । इतीत्थं स्फुटं स्पष्टार्थं तत् तस्य नलस्य भाषितं वचनं तस्य नलस्य वचसि वचसो वा सम्बन्ध-सामान्ये षष्ठी । आदरात् अनुरागात् नलवचनश्रवणस्पृहावशा-दिति यावत् । सुरेषु देवेषु स्पृहाया अनुरागस्य आरोप एव विड़म्बनं कदनं तस्मादपि तस्माच्च हेतोः तया दमयन्त्या कराङ्के हस्ततले सुप्तं विश्रान्तम् एकं कपोलस्य कर्णस्य कपोलकर्णं

चिरादनध्यायमवाप्य दुःखी मुखे ततः स्म सा वासयते दमस्वसा।
कृतायतश्वासविमोक्षणाथ तं क्षणात्बभाषे करुणं विचक्षणा॥६१

इन्द्रादौ श्रुतस्य प्रत्येकमभिसम्बन्धात् एकः कपोलः एकः कर्ण-श्चेत्यर्थः, यस्याः तथाभूतया सत्या श्रुतस्य अश्रुतस्य सुरेषु स्पृहाया अभावात् तद्विषयवचनं श्रुतं माभूदिति एकं कर्णं पिधाय नलवचनश्रवणानुरागादपरः कर्णो व्यापारितः कपोलश्च विषादजनितचिन्तावशात् करतले निहितश्चेति निष्कर्षः। अनादरविड़म्बनयोः श्रुताश्रुताभ्यां कारणकार्य्यरूपत्वेन यथाक्रमसम्बन्धात् यथा यथासङ्ख्यमलङ्कारः यथासङ्ख्यमनूद्दे श उद्दिष्टानां क्रमेण यदिति तल्लक्षणात्॥६०॥

अथ असौ कियन्तं कालं मौनभावमालम्ब्य ततो दीर्घं निश्वस्याह चिरादिति। ततः नलवचनानन्तरं सा दमस्वसा दमयन्ती अवाप्य दुःखी अधोमुखी सती मुखे वदने चिरात् बहुक्षणमित्यर्थः अनध्यायं मौनमित्यर्थः। अध्यायन्यायेत्यादिना घञन्तो निपातः। गतिबुद्धीत्यादिना अणिकर्त्तुः कर्मत्वं वासयते स्म आश्रयति स्मेत्यर्थः। कियन्तं कालं मौनमाश्रित्य तस्थौ इत्यर्थः। वासिधातोर्लट् स्मभूते लट् पादमित्यादिना वसेर्ण्यन्तात् तस्य परस्मैपदप्रतिषेधो णिचश्चेत्यात्मनेपदम्। अथ अनन्तरं कियत्कालतूष्णीम्भावानन्तरं विचष्टे इति विचक्षणा विशेषेण विवेचिका सा अनुदात्तेतश्च हलादेरिति युच्प्रत्यये टाप्। असनयोश्च प्रतिषेधो वक्तव्य इति ख्याञादेशाभावः। कृतम् आयतं दीर्घं यथा तथा श्वासस्य विमोक्षणं त्यागः यया तादृशी दीर्घं निश्वसती सतीत्यर्थः मोक्षयतेश्चौरादिकात् ल्युट्। तं नलं क्षणात् क्षणं विलम्ब्येत्यर्थः ल्यब्लोपे पञ्चमी। करुणं दीनं यथा तथा बभाषे उक्तवती। केचित्तु करुणमित्यत्र च-

विभिन्दता दुष्कृतिनीं मम श्रुतिं दिगिन्द्रदुर्वाचिकसूचिसञ्चयैः ।
प्रयातजीवामिव मां प्रति स्फुटं कृतं त्वयाप्यन्तकदूततोचितम् ॥ ६२ ॥

---

कत्थणमिति पाठं ज्ञात्वा अकत्थं क्रोधात् अतिकठोरं यथा तथा बभाषे इति व्याचक्षते। अत्र मौनश्वासावाङ्मुखत्वा-दयश्चिन्ताख्यव्यभिचारिभावस्यानुभावाः। तथाचोक्तम्, ध्यानं चिन्ता हितानाप्तेः शून्यता श्वासतापकृत् इति। अत्र विच-क्षणेति विशेषणम् एवमवस्थायामुत्तरदानस्य हेतुतया उप-न्यस्तम् अविचक्षणा तु एवमवस्थायां जड़ीभूय न किमपि वक्तुं शक्नोतीति भावः ॥ ६१ ॥

किमित्याह विभिन्दतेति। दुष्कृतं विद्यतेऽस्या इति दुष्कृतिनी तां पापिनीमित्यर्थः, पापवचनग्राहित्वादिति भावः मम श्रुतिं श्रवणेन्द्रियं दिगिन्द्राणां दिक्पालानां दुर्वाचिकानि दुष्टसन्देशवचनानि एव सूचयः तासां सञ्चयैः समूहैः विभि-न्दता विशेषेण विध्यता परपुरुषविषयानुरागवचनानि सती-कर्णे सूचीवेधवत् लगन्तीति भावः। तथापि प्रयातो गतो जीवो यस्याः तां गतजीवितामित्यर्थः मृतामिवेति यावत् मां प्रति स्फुटं स्पष्टम् अन्तयति इति अन्तको यमः तस्य दूतता दूत-त्वं तस्य उचितं कर्म इति शेषः, कृतम्। त्वया चतुर्णां दूतेनापि यमदूतत्वमेव विशेषतः कृतमिति भावः। दुष्कृतिनीमिति माम् इत्यस्य विशेषणं वा। त्वयापि इत्यपिकारात् एतादृश-मनोहरसुकुमारतनोरपि तव यमदूतत्वमनुचितमिति गम्यते। यमदूतो परप्राणान् हरति त्वमपि परपुरुषविषयानुरागवचन-कीर्त्तनेन मम कर्णौ विदार्य्य मां प्रायो हतवान् एवेति तव यमदूतत्वं स्पष्टं प्रतिभाति इति भावः ॥ ६२ ॥

त्वदास्यनिर्यन्मदलीकदुर्यशो मसीमयत्वाल्लिपिरूपभागिव।
श्रुतिं ममाविश्य भवद्दुरक्षरं सृजत्यदः कीटवदुत्कटा रुजः॥६३॥
तमालिरूचेऽथ विदर्भजेरिता प्रगाढमौनव्रतयैकया सखी।
त्रपां समाराधयतीयमन्यया भवन्तमाह स्म रसज्ञया मया॥६४॥

---

तव वचनं केवलं मम दुःखाय एवेत्याह, त्वदिति। तव आस्यात् मुखात् निर्यत् निर्गच्छत् मम अलीकं मिथ्याभूतं दुर्यशः इन्द्राद्यनुरागरूपमपयश इत्यर्थः। तदेव मसीमयत्वात् कृष्णवर्णत्वादिति भावः। लिपिरूपं भजते इति लिपिरूपभाक् तदिव लिप्यक्षरत्वं गतमिव अदः इदं भवतः तव दुरक्षरं दुष्टं वचः दिगिन्द्रदूत्यवाचिकरूपमिति भावः। मम श्रुतिं श्रवणेन्द्रियम् आविश्य प्रविश्य कीटवत् क्षुद्रजन्तुविशेषवत् उत्कटाः दारुणाः रुजः रोगान् पीड़ा इत्यर्थः। जनयति उत्पादयति यथा कथमपि कर्णप्रविष्टः कीटो महान्तं क्लेशम् उत्पादयति तथा भवदुक्तं दुर्वचः मामतितमां व्यथयतीत्यर्थः। मसीमयत्वात् इत्यत्र मसीमयं सदिति पाठे लिपिरूपभागिव लिप्यक्षरमिव मसीमयं सदित्यन्वयः। अत्र मदलीकदुर्यशोमसीमयत्वादिति रूपकं लिपिरूपभागिव इत्युत्प्रेक्षा ताभ्यां समुज्जीविता कीटवदित्युपमा तदेषाम् अङ्गाङ्गिभावेन सङ्करः॥६३॥

तमिति। अथानन्तरं विदर्भजया दमयन्त्या ईरिता मदभिप्रायं त्वं स्फुटं कुरु इति नियुक्ता आलिः सखी त्वं नलम् ऊचे उक्तवती। किमित्याह। इयं सखी भैमी प्रगाढं मौनव्रतं तूष्णीम्भाव इति यावत्। यस्याः तथाभूतया एकया रसं जानातीति रसज्ञा तया जिह्वयेत्यर्थः। त्रपां लज्जां समाराधयति संसेवते, अन्योऽपि देवानाराधयितुं मौनमवलम्बते इति

तमर्चितुं संवरणस्रजा नृपं स्वयंवरः सम्भविता परेद्यवि ।
ममासुभिर्गन्तुमनाः पुरःसरैस्त्वदन्तरायः पुनरेष वासरः ॥६५॥
तदद्य विश्रम्य दयालुरेधि मे दिनं निनीषामि भवद्विलोकिनी ।

भावः । अन्यया अपरया रसज्ञया तद्भूतयेत्यर्थः अभिप्राय-वेदिन्येति भावः । मया भवन्तम् आह स्म वदति स्म । इयं स्वयमतःपरं लज्जातिरेकात् वक्तुमशक्ता स्वाभिप्रायवेदनार्थं नियुक्तया मया स्वमनोरथं ज्ञापयति स्म इति भावः । केचित्तु प्रगाढ़मौनव्रतयेति अप्रगाढ़मौनव्रतयेति पठित्वा अप्रगाढ़ं मौनव्रतं यस्याः तथाभूतया सम्यङ् मौनव्रतमकुर्वत्या इत्यर्थः । मया इत्यस्य विशेषणमित्याचक्षते ॥ ६४ ॥

स्वयमेव दमयन्तीस्वरूपेणाह, तमिति । संवरणस्रजा वर-माल्येन तं नृपं नलम् अर्चितुं आराधयितुम् अर्चतेः भौवादि-कात्तुमुन् । परेद्यवि परस्मिन् दिवसे सद्यः परेत्यादिना निपातनात् साधुः । स्वयंवरः सम्भविता सम्भविष्यति भवते-र्लुट् । पुनः किन्तु एषः वासरः वर्त्तमानो दिवसः पुरोऽग्रे सरन्ति गच्छन्ति इति पुरःसराः अग्रेसराः तैः पुरोऽग्रतोऽग्रेषु सर्त्तेरित्यप्रत्ययः । मम असुभिः प्राणैः सह गन्तुं मनो यस्य स गन्तुमनाः जिगमिषुरित्यर्थः तुं काममनसोरपि इति मकार-लोपः । तस्य स्वयंवरस्य अन्तरायः विघ्नः । ईदृशी उत्सुकता मम जाता यथा अयं दिवसो गच्छन्नपि मुमूर्षोः प्राणा इव न गच्छतीवेति प्रतिभातीति भावः । नलवरणे दिवसमात्रे विलम्बोऽपि न सह्यते तत् कथमेकमवस्थायामन्याभिषङ्गप्रसर इति तात्पर्य्यम् ॥ ६५ ॥

तदिति । तत् तस्मात् एकमात्रदिवसविलम्बाक्षमत्वात्

नखैः किलाख्यायि विलिख्य पक्षिणा तवैव रूपेण समः स मत्प्रियः
दृशोर्द्वयी ते विधिनास्ति वञ्चिता मुखेन्दुलक्ष्मीं तव यन्न वीक्षते ।
असावपि श्वस्तदिमां नलानने विलोक्य साफल्यमुपैतु जन्मनः ॥६९

---

इत्यर्थः । त्वम् अद्य विश्रम्य विश्रामसुखमनुभूय मे मम दयालुः एधि दयावान् भव । अद्य मम सकाशावस्थानेन मामनुकम्पस्वेत्यर्थः । अस्तेर्लोटि सिपि हुझल्भ्यो हेर्धिः । ध्वसो रेध्याभ्यासलोपश्चेत्येकारः । किं तेनेत्याह दिनमिति । भवन्तं विलोकते इति भवद्विलोकिनी सती भवन्तं पश्यन्ती सतीत्यर्थः दिनं एतमिति शेषः निनीषामि नेतुमिच्छामि । ननु मम दर्शनात् कथं ते तृप्तिरित्यत्राह नखैरिति । पक्षिणा हंसेन स मम प्रियो नलः नखैर्विलिख्य लिखित्वा तवैव रूपेण आकृत्या समः तुल्यः आख्यायि किल कथित एव प्रदर्शित एवेत्यर्थः । ख्यातेः कर्मणि लुङ् । चिणो युगागमः । सादृश्यदर्शनादीनां विरहिणां विनोदोपायत्वात् तव दर्शनेन एतत् दिनयापनं मम अक्लेशेनैव भवेदिति भावः ॥ ६६ ॥

अद्य इहावस्थाने न केवलं ममैव प्रीतिस्तव चापि भविष्यति इत्याह, दृशोरिति । विधिना विधाता ते तव दृशोर्द्वयी चक्षुर्द्वयं वञ्चिता प्रतारिता अस्ति यद् यस्मात् तव मुखेन्दोः मुखचन्द्रस्य लक्ष्मीं श्रियं सौन्दर्य्यमित्यर्थः । न वीक्षते न आलोकयति स्वमुखश्रियः स्वचक्षुषा द्रष्टुमशक्यत्वात् यच्च दर्पणादौ दृश्यते तत् केवलं प्रतिबिम्बमात्रं तद्दर्शने न तात्त्विकता अनुभूयते इति भावः । ईदृशीं तव मुखचन्द्रकान्तिं साक्षाद् द्रष्टुमक्षमे एते तव चक्षुषी सुतरां विधात्रा वञ्चिते एवेति निष्कर्षः नन्वत्रावस्थाने कथं तत्साफल्यमित्याह असाविति । तत्

ममैव पाणीकरणेऽग्निसाक्षिकं प्रसङ्गसम्पादितमङ्ग! सङ्गतम्।
न हा सहाधीतिधृतः स्पृहा कथं तवार्य्यपुत्रीयमजर्य्यमर्जितुम्॥६८

तस्मात् असौ अपि दृशोर्द्वयी स्वः परेऽह्नि इमां तव मुखेन्दुलक्ष्मीं नलानने नलमुखे विलोक्य जन्मनः साफल्यं फलवत्ताम् उपैतु प्राप्नोतु। उभयोरपि अभिन्नरूपत्वादेकस्य दर्शने अपरदर्शनसिद्धिरिति भावः। परेद्यवि नलमुखं दृष्ट्वा स्वं मुखं कीदृशीं शोभां धत्ते इति स्वयमनुभविष्यसीति तवापि स्वकार्य्यार्थमत्रैकं दिनं व्याप्य स्थातव्यमिति तात्पर्य्यम्। अत्र दूतस्य नलस्य च मुखलक्ष्म्या वास्तवाभेदेऽपि अवास्तवभेदोक्त्या अतिशयोक्तिरलङ्कारः॥ ६७॥

ममेति। अङ्गेत्यमन्त्रणे। अङ्ग हे देवदूत! मम पाणीकरणे पाणिपीड़ने एव नित्यं हस्ते पाणौ उपयमने इति पाणौ शब्दस्य गतित्वात् कुगतिप्रादय इति समासः। अग्निः साक्षी यस्मिन् कर्मणि तदग्निसाक्षिकं यथा तथा प्रसङ्गेन कार्य्यान्तरप्रसक्त्या सम्पादितम् एकस्मिन् इन्द्रादिदूत्ये प्रसक्त्या तदसिद्धौ अवान्तरस्वयंवरदर्शनप्रसङ्गेन निष्पादितमित्यर्थः। आर्य्ययोः श्वशुरयोः पुत्रः आर्य्यपुत्रः पतिः नल इति भावः। तस्य इदम् पुत्रीयं वृद्धाच्छः। आर्य्यपुत्रीसम्बन्धीत्यर्थः न जीर्य्यतीत्यजर्य्यम् अविनश्वरमित्यर्थः अजर्य्यं सङ्गतमिति यत्प्रत्ययान्तो निपातः। सङ्गतं मैत्रीत्यर्थः प्रेमेति यावत् सङ्गतं प्रेम्णि युक्ते चेति वलः। अर्जितुम् उपार्जयितुं कर्त्तुमित्यर्थः। सह अधीतिः अध्ययनं तां धरतीति सहाधीतिधृत् सब्रह्मचारीत्यर्थ। धृधातोः क्विप्। सारूप्यं बिभ्रत इति भावः। तव स्पृहा इच्छा कथं न भवतीति शेषः। अपितु स्पृहा भवत्येवेत्यर्थः। हा विषादे। ईदृक् सदृशसङ्गताकरणं दुःखावहमित्यर्थः। अतोऽद्य अत्र

दिगीश्वरार्थं न कथञ्चन त्वया कदर्थनीयास्मि कृतोऽयमञ्जलिः ।
प्रसद्यतां नाद्य निगाद्यमीदृशं दधे दृशौ वाष्परयास्पदे भृशम् ॥ ६९ ॥

---

स्थितस्य श्वः स्वयंवरे नलेन सह तवात्ययमैत्रीजनितसुखं भविष्यति इति तात्पर्य्यम् । अत्र मम अग्निसाक्षिकं पाणीकरणे सद्भाधीतिधृतः सादृश्यं बिभ्रतः तव आर्य्यपुत्रीयं नलसम्बन्धीत्यर्थः । अजर्य्यम् अक्षयं प्रतिबन्धुमक्षममिति भावः प्रेम आनुकूल्यमित्यर्थः । प्रसङ्गेन कार्य्यान्तरप्रसक्त्या सम्पादितम् अर्जितुं तव कथं स्पृहा नेति योजना । यथा त्वमिन्द्रादिदौत्याय यतसे, तथा नलेन मत्पाणिपीड़ने कथं न यतसे ? अपितु अवश्यमेव यत्नः करणीय इत्यर्थः । देवा यथा भवत आत्मीयास्तथा नलोऽपि रूपसाम्यादात्मीय एवेति सद्भाधीतिधृत इत्यनेनोक्तमिति केचिद् व्याचक्षते ॥ ६८ ॥

दिगीश्वरार्थमिति । त्वया दिशाम् ईश्वराः इन्द्रादयो दिक्पालाः तदर्थं कथञ्चन केनापि प्रकारेण नाहं कदर्थनीया नोपरुध्य पीड़नीया अस्मि, अयम् अञ्जलिः कृतः बद्धः अहं कृताञ्जलिः त्वामर्थये यद्दिगीन्द्रार्थं मां प्रति न अनुरोद्धव्यमिति भावः । प्रसद्यतां प्रसन्नेन भूयतां अनुगृह्यताम् इत्यर्थः भावे लोट् । अद्य इदानीम् अतःपरमिति भावः ईदृशं प्रागुक्तरूपं दिगीन्द्रसन्देशवचनमिति यावत् न निगाद्यं न वचनीयं ऋहलोर्ण्यत् गदमदेत्यादिनानुपसर्गादेव यतो विधानात् । दृशौ नेत्रे वाष्परयस्य अश्रुवेगस्य आस्पदे आश्रये भृशम् अतिमात्रं दधे धारयामि भविष्यत् सामीप्ये लट् । यदि पुनः दिगीन्द्रसन्देशवचः कीर्त्तयेः तदाहं रोदिष्यामि तदेवं मां रोदयित्वा अलमिति तात्पर्य्यम् ॥ ६९ ॥

वृणे दिगीशानिति का कथा तथा त्वयीति नेक्षे नलभामपीहया
सतीव्रतेऽग्नौ तृणयामि जीवितं स्मरस्तु किं वस्तु तदस्तु भस्म यः ७०
न्यवेशि रत्नत्रितये जिनेन यः स धर्मचिन्तामणिरुज्झितो यया।
कपालिकोपानलभस्मनः कृते तदेव भस्म स्वकुले स्तृतं तया ७१

---

स्वस्य नितरां पातिव्रत्यसूचनाय पुरुषान्तरकथा सर्वथा एव भवता न कथनीयेत्याह वृणे इति। अहं दिगीशान् दिक्पालान् इन्द्रादीन् वृणे भविष्यत्सामीप्ये लट्। करिष्यामि इत्यर्थः इति कथा का? कथमपि नैषा कथा सम्भवतीति भावः। त्वयि अन्यस्मिन् पुरुषे इति भावः स्थितामिति शेषः। नलस्य भामपि सौसादृश्यलक्षणां कान्तिमपीत्यर्थः। तथा तादृश्या ईहया अनुरागेण न ईक्षे न पश्यामि पातिव्रत्यभङ्गभिया इति भावः। ननु इत्थं देवविरोधे स्वयंवरव्याघातश्चेत् कामः सर्वथा त्वां व्यथयिष्यति इत्यत्राह सतीति। सतीव्रते पातिव्रत्ये अग्नौ जीवितं तृणयामि तृणवत् तुच्छं करोमि इत्यर्थः यथा तृणम् अतितुच्छं वस्तु अक्लेशेन अग्नौ प्रक्षिप्यते तथा सतीव्रतरक्षणार्थं प्राणा मयापि अनायासेन त्यक्तुं शक्यन्ते इति निष्कर्षः। यः स्मरः तु केवलं भस्म दग्धत्वात् भस्ममय इत्यर्थः। तत् किं वस्तु अस्तु? न किमपि इत्यर्थः सम्भावनायां लोट् भस्ममयत्वात् अतितुच्छं वस्तु इति मया सम्भाव्यते तत्कथं ततो भयमिति भावः॥ ७०॥

पतिव्रताः कामसुखं न गणयन्तीत्याह न्यवेशीति। जिनेन बुद्धदेवेन यः धर्म एव-चिन्तामणिः अमूल्यरत्नविशेषः यत्प्राप्त्यर्थं लोकैः सततं चिन्त्यते इति भावः। रत्नानां त्रितयं रत्नत्रितयं तस्मिन् सम्यक् दर्शनं सम्यक् ज्ञानं सम्यक् चारित्रमिति

निपीय पीयूषरसौरसौरसौ गिरः स्वकन्दर्पहुताशनाहुतीः।
कृतान्तदूतं न तया यथोदितं कृतान्तमेव स्वममन्यतादयम् ७२

त्रिविधरत्ने न्यवेशि निवेशितः एतत् त्रिविधरत्नरूपतया परिभाषित इत्यर्थः, सद्दृष्टिज्ञानवृत्तानि धर्मं धर्मेश्वरा विदुः इति तद्ग्रन्थधृतवचनात्। विशेर्ण्यन्तात् कर्मणि लुङ्। स धर्मचिन्तामणिः यया नार्य्या कपाली हरः तस्य कोपानलस्य क्रोधाग्नेः यत् भस्म तस्य हरकोपानलदग्धत्वात् भस्ममात्रशेषस्य मदनस्य कृते निमित्तम् उज्झितः परित्यक्तः तया नार्य्या तदेव भस्म स्वकुले निजवंशे स्तृतं विस्तृतं या कामभोगार्थं स्वचरितं न रक्षितुं शक्नोति सा स्वकीयमेव पित्रादिकुलं कलङ्कयतीति निष्कर्षः। तस्मात् नलैकप्राणाया मम समक्षं पुनः इन्द्रादिवचनं भवता नाख्येयमिति तात्पर्य्यम् ॥ ७१ ॥

इत्यमाकर्ण्य दयार्द्रोऽपि नलो दूतकर्त्तव्यत्वात् आत्मानं गर्हयति निपीयेति। असौ नलः पीयूषरसस्य सुधारसस्य उरसा जनिता औरस्यः आत्मजा इत्यर्थः उरसोऽण् चेत्यण्प्रत्ययः। संज्ञाधिकारात् अभिधेयनियम इति काशिका। ताः सुधारससदृशीः इत्यर्थः आत्मजानाम् आत्मनः तुल्यत्वादिति भावः। स्वस्य आत्मनः कन्दर्पः कामः स एव हुताशनः अग्निः तस्य आहुतीः हवनीयद्रव्याणि उद्दीपिका इति भावः। गिरः वाचः दमयन्त्या इति शेषः। निपीय सादरमाकर्ण्येत्यर्थः स्वम् आत्मानं तया यथोदितं यथोक्तं "कृतं त्वयाप्यन्तकदूततोचित"मिति प्रागुक्तं तदनतिक्रमेणेत्यर्थः यथा सादृश्ये इत्यव्ययीभावः। कृतान्तदूतं यमदूतं न अमन्यत किन्तु ततोऽपि अदयं निर्दयं कृतान्तमेव यममेव अमन्यत। यमदूता हि जीवं यमान्तिकम् आनयन्ति दण्डदाता तु यम एवेति तद्दूतापेक्षया यमस्य निर्दयत्व-

स भिन्नमर्माऽपि तदार्त्तिकाकुभिः स्वदूतधर्मान्न विरन्तुमैहत ।
शनैरशंसन्निभृतं विनिश्वसन् विचित्रवाक्चित्रशिखण्डिनन्दनः ॥७२॥
दिवोधवस्त्वां यदि कल्पशाखिनं कदापि याचेत निजाङ्गनालयम्
कथं भवेरस्य न जीवितेश्वरी न मोघयाञ्चः सखि भीरु! भूरुहः ॥७४॥

---

मिति भावः। दूतकार्य्यव्यापृतत्वेन यमोऽहं जात इति आत्मानं गर्हयामास इति भावः। अत्र कृतान्तमेव अमन्यत इति असम्भवात् सादृश्याक्षेपेण निदर्शनालङ्कारः ॥ ७२ ॥

इत्थं जातनिर्वेदोऽपि दूतकर्त्तव्यतया पुनरपि नलः तामाह स इति। स नलः तस्या दमयन्त्या आर्त्तिः मानसव्यथा तया याः काकवः दीनोक्तयः ताभिः भिन्नं विदीर्णं मर्म यस्याः तथाभूतः व्यथितहृदय इत्यर्थः अपि स्वस्य आत्मनः दूतधर्मात् दूतकर्त्तव्यात् विरन्तुं निवर्त्तितुं नैहत नैच्छत् परप्रेष्योऽहं का मम दयेतिधियेति भावः तत् किम् अकरोत् इत्याह शनैरिति। विचित्रा मनोहारिणी वाक् तस्यां चित्रशिखण्डिनन्दनः वृहस्पतिः जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिज इत्यमरः। वाङ्माधुर्य्ये वृहस्पतिसदृशः स नलः निभृतं गूढं निश्वासेन दुःखप्रकाशात् आत्मप्रकाशशङ्कया इति भावः। विनिश्वसन् शनैः मन्दं मन्दम् इन्द्रादीनामभिप्रायं क्रमेण वा अशंसत् अकथयत्। अत्र विचित्रवाक्चित्रशिखण्डिनन्दन इति रूपकालङ्कारः ॥ ७३ ॥

किमित्याह दिव इति। हे भीरु! भयशीले! वक्तव्यश्रवणात् तव भीतिरवश्यम्भाविनी दुर्लघ्यानिष्टापातशङ्कित्वात् भयशीलेति तत्सम्बुद्धिः भियः क्रुकुकनाविति क्रुप्रत्ययः। ऊङुत इत्यूङ्। अभ्यार्थनयोर्ङ्यः। दिवो धव स्वर्पतिः इन्द्रः कदापि निजम्

शिखी विधाय त्वदवाप्तिकामनां स्वयं हुतस्वांशहविः स्वमूर्त्तिषु
क्रतुं विधत्ते यदि सार्वकामिकं कथं स मिथ्यास्तु विधिस्तु वैदिकः

---

अङ्गनम् अजिरम् अङ्गनञ्चत्वराजिरे इत्यमरः। आलयो यस्य तं स्वाङ्गनवर्त्तिनं न तु दूरवर्त्तिनमिति भावः। कल्पशाखिनं कल्पतरुं त्वां याचेत देहि मह्यं दमयन्तीं फलमिति प्रार्थयेत् यदि। दुह्यादिपाठात् द्विकर्मकत्वम्। तदा त्वम् अस्य दिवो धवस्य इन्द्रस्य जीवितेश्वरो प्राणेश्वरो प्राणप्रीतिकरीत्यर्थः, कथं न भवेः ? अवश्यमेव भवेः इत्यर्थः, हि यतः स भूरुहः वृक्षः मोघा विफला याञ्चा यस्य स मोघयाञ्चः न भवतीत्यर्थः। कल्पतरुर्हि अभीष्टदः यस्मै कस्मैचिदर्थिने अभीष्टं फलं ददाति विशेषतस्तु स्वामिना इन्द्रेण प्रार्थितः अवश्यमेव तस्मै तदभीष्टां त्वा दास्यतीति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ ७४॥

शिखीति। शिखा विद्यतेऽस्येति शिखी अग्निः तव अवाप्तिकामनां प्राप्तिसङ्कल्पं विधाय कृत्वा स्वयमात्मना स्वमूर्त्तिषु स्वावयवेषु दक्षिणाग्निगार्हपत्यो हवनीयस्त्रयोऽग्नय इत्युक्तेषु हुतम् अग्नये स्वाहेति मन्त्रेण प्रक्षिप्तमित्यर्थः स्वांशं स्वदैवतं हविर्हव्यं येन तथाभूतः सन् सर्वे कामाः प्रयोजनान्यस्येति सार्वकामिकं सर्वाभीष्टसम्पादकमित्यर्थः सर्वकामप्रयोजनमिति ठक्। क्रतुं यज्ञं विधत्ते यदि अनुतिष्ठति चेत् तदा वैदिकः वेदविहितः विधिः अनुष्ठानन्तु कथं केन हेतुना मिथ्या अस्तु ? भवतु ? नैव निष्फलो भवेदित्यर्थः, सम्भावनायां लोट्। तस्य विधेर्मिथ्यात्वं नैव सम्भाव्यते इत्यर्थः। अन्येनानुष्ठितस्य यज्ञस्य सर्वकामप्रदत्वं दृश्यते स्वयं वह्निना अनुष्ठितस्य

सदा तदाशामधितिष्ठतः करं वरं प्रदातुं बलिताद्बलादपि।
मुनेरगस्त्याद्वृणुते स धर्मराड् यदि त्वदाप्तिं भण का तदा गतिः॥७६॥
क्रतोः क्रते जाग्रति वेत्ति कः कति प्रभोरपां वेश्मनि कामधेनवः।
त्वदर्थमेकामपि याचते स चेत् प्रचेतसः पाणिगतैव वर्त्तसे॥७७॥

तस्य किं वक्तव्यमिति सर्वथा अग्निहस्तं न अतिक्रमितुं शक्ष्यसीति भावः॥ ७५॥

सदेति। स प्रसिद्धो धर्म्मेण राजते इति धर्मराट् यमः सदा सर्वस्मिन् काले तस्य यमस्य आशां दिशं दक्षिणामिति भावः। अधितिष्ठतः अध्यासीनात् अतएव बलादपि त्वमस्मदधिकारे वससि तस्मात् त्वया अवश्यमेव मह्यं करो देय इति बलमाश्रित्यापि वरम् अभीष्टरूपम्। मुनेर्मम नान्यत् किमप्यस्तीति वर एव कश्चिद् गृह्यतामित्युक्तमिति भावः। करं राजग्राह्यांशम्। भागधेयः करो बलिरित्यमरः। प्रदातुं बलितात् चलितात् उद्यतादित्यर्थः, मुनेः अगस्त्यात् यदि त्वदवाप्तिं दमयन्तीं मह्यं वरं देहीति त्वत्प्राप्तिं वृणुते प्रार्थयते, तदा का गतिः उपायः भविष्यतीति शेषः। भण कथय वाक्यार्थः कर्म। महामुनिवरप्रसादात् त्वमवश्यमेव धर्मराजवशवर्त्तिनी भविष्यसि इति फलितार्थः॥ ७६॥

क्रतोरिति। अपां प्रभोर्जलाधिपस्य वरुणस्य वेश्मनि गृहे क्रतोः क्रते यज्ञहविःसम्पादनार्थं कति कामधेनवः जाग्रति वर्त्तन्ते? को वेत्ति? न कोऽपि इत्यर्थः, बहुसहस्रकाः कामधेनवो वरुणगृहे निवसन्तीत्यर्थः। किं तत इत्याह त्वदर्थमिति। स वरुणः चेत् यदि एकामपि तासां मध्ये कामपि

न सन्निधात्री यदि विघ्नसिद्धये पतिव्रता पत्युरनिच्छया शची।
स एव राजव्रजवैशसात् कुतः परस्परस्पर्द्धिवरः स्वयंवरः ॥७८॥

---

कामधेनुमित्यर्थः, त्वदर्थं दमयन्तीं मे प्रसूय देहीति त्वत्प्राप्त्यर्थं याचते प्रार्थयते तदा प्रचेतसः वरुणस्य पाणिगतैव हस्तगतैव वर्त्तसे। कामधेनुसकाशे यो यत् प्रार्थयते सा तस्मै तदेव प्रसूय ददाति तदेवं वरुणेन पालितानां तासामेका वरुणेन त्वामर्थिता अवश्यमेव त्वां वरुणाय दास्यतीति भावः ॥ ७७ ॥

अन्यच्च भयकारणमस्तीत्याह नेति। पतिव्रता भर्त्तुः त्वदासक्त्वेऽपि पतिपरायणा शची इन्द्राणी पत्युः स्वामिनः अनिच्छया मा स्वयंवरक्षेत्रं याहीति स्वयंवरस्थानगमनेऽननुमोदनेन इत्यर्थः, हेतुना विघ्नसिद्धये स्वयंवरव्याघातसाधनार्थं यदि सन्निधात्री समागन्त्री न भवेदिति शेषः। परस्परं स्पर्द्धन्ते इति परस्परस्पर्द्धिनः अन्योन्यसङ्घर्षशालिन इत्यर्थः, वराः कामयितारो यस्मिन् तथाभूतः स स्वयंवर एव विशसति छिनत्तीति विशसो हिंसकः पचाद्यच्प्रत्ययः। तस्य कर्म वैशसं युवादित्वादण्प्रत्ययः। राज्ञां व्रजः राजव्रजः तस्य राजसङ्घस्य वैशसात् परस्परद्वेषात् कुतः ? न कुतोऽपीत्यर्थः, नलप्राप्तिस्तावत् दूरे तिष्ठतु स्वयंवर एव न घटिष्यते इति भावः। स्वयंवरविघ्नकारिणः शच्या विनाश्यन्ते इत्यागमः सा चेत् पत्यनुरोधेन न सन्निहिता स्यात् तदा स्वयंवर एव विघ्नैर्व्याहनिष्यते तत् कथं ते नलप्राप्तिरिति तात्पर्य्यम्। रघुवंशे च। सान्निध्ययोगात् किल तत्र शच्याः स्वयंवरक्षोभकृतामभाव इति कालिदासः। तस्मादिन्द्रो न कोपयितव्य इति तात्पर्य्यम् ॥ ७८ ॥

निजस्य वृत्तान्तमजानतां मिथो मुधस्य रोषात् परुषाणि जल्पतः।
सुधं किमच्छत्रकदण्डताण्डवं भुजाभुजि क्षौणिभुजां दिदृक्षसे ७८
अपार्थयन् याज्ञिकफुत्कृतिश्रमं ज्वलेद्‌वृथा चेद्वपुषा तु नानलः।
अलं नलः कर्त्तुमनग्निसाक्षिकं विधिं विवाहे तव सारसाक्षि! कम्

एतमेवार्थं दार्ढ्येनाह निजस्येति। मिथः परस्परं रोषात् क्रोधात् परुषाणि कटूनि दुःश्रवाणीति भावः। जल्पतः व्याहरतः निजस्य मुधस्य वृत्तान्तं पूर्वमित्यर्थः, अजानतां केन कीदृशः सम्बन्धः कस्मात् कीदृशं वाच्यमित्येवं ज्ञानवर्जितानामिति यावत् क्षौणिभुजां न सन्ति छत्राणि येषु ते अच्छत्रकाः तथाभूता ये दण्डाः छत्राणां दण्डा इत्यर्थः, तैः तेषां वा ताण्डवं नटनं यस्मिन् तत् तथाभूतं ताण्डवं नटनं नृत्यमित्यमरः। भुजैश्च भुजैश्च प्रहृत्य यद्‌वृत्तं तत् भुजाभुजि हस्ताहस्ति सुधं युद्धं तत्र तेनेदमिति सरूप इति बहुव्रीहाविच् कर्मव्यतीहारे इतीच्प्रत्ययः तिष्ठद्गुपाठादव्ययीभावसंज्ञा। दिदृक्षसे किम्? द्रष्टुमिच्छसि किम्? ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदम्। केचित् तु अच्छत्रकदण्डानां ताण्डवं नटनरूपं सुधं युद्धं दण्डादण्डियुद्धमित्यर्थः, ततश्च भुजाभुजि युद्धमिति गम्यमानार्थत्वात् शब्दाप्रयोग इत्याचक्षते। प्रथममायुधेन तद्भङ्गे दण्डादण्डि तद्भङ्गे च भुजाभुजीति त्रिविधं युद्धं द्रष्टुमिच्छसि न पुनः स्वयंवरार्थिनी असीति भावः॥ ७८॥

अपार्थयन्निति। हे सारसाक्षि पङ्कजनेत्रे! सारसं सरसीरुहमित्यमरः। अनलः अग्निः त्वया अनाहूत इति भावः। तव विवाहे याज्ञिकस्य ऋत्विजः पुरोधस इत्यर्थः, फुत्कृतिश्रमं निर्वाणाग्नेः सन्धुक्षणार्थं फुत्कारजनितप्रयासः तम् अपा-

पतिंवरायाः कुलजं वरस्य वा यमः समभ्याचरितातिथिं यदि।
कथं न गन्ता विफलीभविष्णुतां स्वयंवरः साध्वि! समृद्धिमानपि॥
अपां पतिः स्वामितया परः सुरः स तां निषेधेद्यदि नैषधक्षुधाम्।

---

र्थयन् विफलयन् व्यर्थयन्नित्यर्थः, सन् रुषा त्वां प्रति क्रोधेन हेतुनेत्यर्थः, ज्वलेत् अन्तरिति शेषः। वपुषा तु शरीरेण बाह्येनेति भावः। न ज्वलेत् चेत् यदि तदा अनलः नास्ति अग्निः साक्षी यस्मिन् विधौ सः अनग्निसाक्षिकः तं कं विधिं कल्पं विधानमिति यावत् कर्त्तुम् अलं समर्थः? न केनापि विधिना त्वामुद्वोढुं शक्नुयादित्यर्थः। तस्मात् विफल एव तव प्रयासो भविष्यतीति भावः। तस्मादग्निर्न कोपयितव्य इति तात्पर्य्यम्॥ ८०॥

पतिंवराया इति। हे साध्वि! साधुशीले! यमः पतिं वृणुते इति पतिंवरा वधूः संज्ञायां भृतृवृ इत्यादिना खच्। अरुर्द्विषदजन्तस्य मुम्। तस्याः तवेति भावः वरस्य जामातुर्वा नलस्येति भावः। कुले जातं कुलजं गोत्रजं कमपि अतिथिम् अभ्यागतम् आचरिता यदि करिष्यति चेदित्यर्थः, तदा समृद्धिमानपि महाव्यापारवानपि सर्वसाधनसमन्वितोऽपीत्यर्थः, स्वयं व्रियतेऽस्मिन्निति स्वयंवरः स्वयंवरकर्म ग्रह-वृदनीश्चिगमश्चेत्यप्प्रत्ययः। विफलीभविष्णुतां भुवश्चेतीष्णुच्-प्रत्ययः। कथं न गन्ता? अपि तु गमिष्यत्येवेत्यर्थः। गमेर्लुट्। सगोत्रज्ञातिमरणे अशौचसम्भवात् अशौचे च विवाहादिकर्मनिषेधात् सर्व एव ते प्रयासो विफलो भविष्यतीति भावः। तस्मात् यमो न कोपयितव्य इति तात्पर्य्यम्॥८१॥

अपामिति। परः एभ्योऽन्यः अपां पतिः जलाधिपः स

नलाय लोभायतयाचयेऽपि तत् पिता कथं त्वां वद सम्प्रदास्यते॥८२॥
इदं महत्तेऽभिहितं हितं मया विहाय मोहं दमयन्ति! चिन्तय।
सुरेषु विघ्नैकपरेषु को नरः करस्थमप्यर्थमवाप्तुमीश्वरः॥८३॥

स प्रसिद्धः सुरो देवः स्वामितया स्वस्वाधिकारितया नैषधे नले क्रुध् तया नलं प्रति कोपेन इत्यर्थः, ताः अपः जलानि निषेधेत् चेत् मा यूयं नैषधेन दमयन्त्याः पाणिपीड़ने तत्पित्रा उत्सर्गार्थं तद्धस्ते गच्छतेति निवारयेत् यदि, तत् तदा पिता भीमनृपतिः लोभेन दमयन्तीलालसया आयतः विस्तृतः पाणिर्यस्य तादृशायापि नलाय जलं विनापि जिघृक्षते इति यावत्। त्वां कथं सम्प्रदास्यते? वद कथय वाक्यार्थः कर्म न कथञ्चिदपि दातुं शक्ष्यतीत्यर्थः, उत्सर्गार्थं जलविरहादिति भावः। तस्मात् वरुणोऽपि न प्रकोपयितव्य इति तात्पर्य्यम्॥८२॥

इत्थं देवानां प्रत्येकस्य प्रातिकूल्यमुक्त्वा उपसंहरति। हे दमयन्ति! मया इदं ते तव तुभ्यं वा महत् हितं हितकरं वचः अभिहितम् उक्तं त्वं मोहं अज्ञानजं भ्रममित्यर्थः, विहाय त्यक्त्वा चिन्तय मया हितमुक्तं नवेति विचारय। नात्र प्रतीकार इत्याह सुरेषु इति। सुरेषु देवेषु विघ्नः व्याघातः एकं परं प्रधानं येषां तेषु परं दूरान्यमुख्येषु इत्यमरः। कार्य्यं विहन्तुमिच्छत्सु इत्यर्थः, सत्सु को नरः मानवः करस्थमपि हस्तगतमपि किमुत दूरस्थं मनोरथमात्रविषयं नलरूपं वस्तु इत्यपि शब्दार्थः अर्थं वस्तु अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु इत्यमरः। अवाप्तुं लब्धुं ईश्वरः समर्थः भवेदिति शेषः। न कोऽपि इत्यर्थः। तस्मात् न अलं

इमा गिरस्तस्य विचिन्त्य चेतसा तथेति सम्प्रत्ययमाससाद सा।
निवारितावग्रहनीरनिर्झरे नभोनभस्यत्वमलम्भयद्दृशौ ॥८४॥
स्फुटोत्पलाभ्यामलिदम्पतीव तद्विलोचनाभ्यां कुचकुड्मलाशया।

---

दुरन्तेन बलवद्भिर्विरोधेन इति भावः। सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यासः ॥ ८३ ॥

इत्थं भीषिता भैमी तद्वचनप्रत्ययात् सातिशयं रुरोद इत्याह इमा इति। सा दमयन्ती तस्य नलस्य इमाः प्रागुक्ताः गिरः वचनानि चेतसा चित्तेन विचिन्त्य विचार्य्य तथा इति यदनेन उक्तं तत् सत्यमेवेति सम्प्रत्ययं सम्यग् विश्वासम् आससाद प्राप ततश्च दृशौ नेत्रे निवारितः अवग्रहः वृष्टि-प्रतिबन्धः यस्य तादृशः नीरनिर्झरः अश्रुप्रवाहः याभ्यां तादृश्यौ अतएव नभोनभस्यत्वं श्रावणभाद्रपदत्वम् अलम्भयत् अनयत्। वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समाविति। नभाः श्रावणिकश्च सः। स्युर्नभस्यः प्रौष्ठपदभाद्रपदाः समा इति चामरः। यथा श्रावणभाद्रपदौ मासौ निष्प्रतिबन्धं धारा वर्षतः तथा अविरतमश्रुधारां वर्षन्तौ चकारेति भावः। अत्र लभेः प्राप्त्यर्थत्वेऽपि तदुपसर्जनगत्यर्थविवक्षायां गतिबुद्धीत्या-दिना अणिकर्त्तुः कर्म्मत्वं गत्युपसर्जनप्राप्त्यर्थत्वे तु कर्म्मत्वं नास्त्येव, यथा माघे। सितं सितिम्ना सुतरां मुनेर्वपुरित्यत्र। यदाह वामनः। लभेर्गत्यर्थविवक्षायाम् अणिकर्त्तुः कर्मत्वात् कर्मणि द्वितीयेति। लभेश्चेति नुमागमः। अत्र निवारिताव-ग्रहेति रूपकं दृशोः नभोनभस्यत्वसम्बन्धाभावेऽपि तत्सम्बन्धोक्तेः अतिशयोक्तिश्चेत्यनयोः अङ्गाङ्गिभावेन सङ्करः ॥ ८४ ॥

स्फुटेति। स्फुटाभ्यां विकस्वराभ्याम् उत्पलाभ्यां नीलो-

निपत्य बिन्दू हृदि कज्जलाविलौ मणीव नीलौ तरलौ विलेसतुः ॥८५॥
धुता पतत्पुष्पशिलीमुखाशुगैः शुचेस्तदासीत् सरलौ रसस्य सा।
रयाय बद्धादरयाम्बुधारया सनालनीलोत्पलनीललोचना॥८६॥

---

त्पलाभ्याम् चलिदम्पतीव भ्रमरमिथुनमिव तस्याः भैम्याः विलोचनाभ्यां कज्जलेन अञ्जनेन आविलौ कलुषौ कालिमानं नीतौ इत्यर्थः। बिन्दू अश्रुबिन्दुद्वयमित्यर्थः कुचौ कुड्मलौ इव कलिके इव कुचकुड्मलौ तयोः आशया प्राप्तीच्छयेत्यर्थः हृदि वक्षसि निपत्य नीलौ तरलौ चञ्चलौ मणीव हारमध्यगत-नीलकान्तरत्ने इव विलेसतुः रराजतुः अत एकहल्मध्येन आदेशादेर्लिटीत्वम्यासलोपौ। यथा नीलौ चपलौ भ्रमरौ विकसितोत्पलसङ्कुसुखं बहूपभुज्य पश्चात् अभिनवोत्पलकोरकं प्रति तन्मधुलोभेन निपततः तथा कज्जलमलिनौ तरलौ च अश्रुबिन्दू तदीयनयनोत्पलाभ्यां स्तनकोरकयोः निपत्य तत्र-स्थितहारमध्यगतेन्द्रनीलमणी इव शुशुभाते इत्यर्थः। उपमा-लङ्कारः। ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्य इत्युभयत्रापि प्रगृह्यत्वनिषेधात् सवर्णदीर्घः॥ ८५॥

धुतेति। सा दमयन्ती तदा तस्मिन् समये पतन्तः ये पुष्पशिलीमुखस्य पुष्पशरस्य कामस्य आशु गच्छन्तीति आ-शुगाः शराः तैः अन्यत्र पतन्तः पुष्पेषु उत्पलादिषु शिलीमुखा भ्रमराः आशुगा वायवश्च तैः यद्वा पतद्भिः पक्षिभिः हंसादिभिः पुष्पशिलीमुखैः पुष्पेषु स्थितैः भ्रमरैः आशुगैः वायुभिश्च धुता कम्पिता अतितरां पीड़ितेति यावत् आशुगौ वायुविशिखौ इत्यमरः। तथा रयाय वेगाय बद्धः आदरो यया तथाभूतया वेगेन निष्पतन्त्येत्यर्थः। अश्रुधारया वाष्पजलप्रवाहेण सनालं

अथोद्भ्रमन्ती रुदती गतक्षमा ससम्भ्रमा लुप्तरतिः स्खलन्मतिः ।
व्यधात्प्रियाप्राप्तिविघातनिश्चयान्मृदूनि दूना परिदेवितानि सा॥८७
त्वरस्व पञ्चेषुहुताशनात्मनस्तनुष्व मद्भस्मचयं यथाचयम् ।
विधे ! परेच्छाफलभञ्जनव्रती यतास्य तुष्यन्वसुभिर्ममाफलैः॥८८॥

---

नालसहितं यत् नीलोत्पलं तस्य लीलेव लीला ययोः तथा-लोचने नयने यस्याः सा अतएव शुचेः शृङ्गारस्य विप्र-ति भावः। रसस्य। शृङ्गारः शुचिरुज्ज्वल इत्यमरः। ग्रीष्मस्य रसस्य जलस्य च शुचिः शुद्धेऽनपहते शृङ्गाराषाढयोः स्मृतः। ग्रीष्मे हुतवहेऽपीति विश्वः। सरसी सरः कासारः सरसी सर इत्यमरः। आसीत् बभूव। ग्रीष्मसमये सरसी-जलस्याल्पत्वात् दृश्यमाननालनीलोत्पला भवति चेति तत्-साम्यम्। केचित्तु शुचेः शोकस्य रसस्य सरसी आसीत् इति व्याचक्षते तत्पक्षे शुचधातोर्भावे औणादिकः किप्रत्ययः। अत्र श्लेषेणोपमया च सङ्कीर्णं रूपकमलङ्कारः॥ ८६॥

अथेति। अथ तथा अवस्थानान्तरं सा दमयन्ती प्रियस्य नलस्य अवाप्तिः प्राप्तिः तस्या विघातः प्रतिबन्धः तस्य निश्चयात् सर्वथा न मया नलः प्राप्यते इति निर्णयादित्यर्थः। उद्भ्रमन्ती उन्माद्यन्ती रुदती क्रन्दन्ती गतक्षमा लुप्तधैर्य्या ससम्भ्रमा भीता लुप्ता नष्टा रतिः अनुरागः प्रीतिः वा यस्याः तथोक्ता स्खलन्ती नश्यन्ती मतिः इतिकर्त्तव्यधीः यस्याः सा दूना अतीव दुःखिता च सती मृदूनि करुणानि परिदेवितानि विलाप-वचनानि व्यधात् कृतवती। दूनेति स्वादय ओदित इत्योदि-त्वातिदेशादोदितश्चेति दूओ निष्ठानत्वम्॥ ८७॥

अथ परिदेवितान्याह अयोदशश्लोकैः त्वरस्वेत्यादिभिः।

भृशं वियोगानलताप्यमान ! किं विलीयसे न त्वमयोमयं यदि ।
स्मरेषुभिर्भेद्य ! न वज्रमप्यसि ब्रवीषि न स्वान्त ! कथं न दीर्य्यसे ॥ ८९ ॥
विलम्बसे जीवित ! किं द्रव द्रुतं ज्वलत्यदस्ते हृदयं निकेतनम् ।
जहासि नाद्यापि मृषा सुखासिकामपूर्वमालस्यमहो तवेदृशम् ॥ ९० ॥

हे पञ्चेषुहुताशन ! मदनानल ! त्वरस्व त्वरावान् भव, मम भस्मनां चयं दद्याया मम भस्मराशिम् आत्मनः स्वस्य यशश्चयं यशोराशिं तनुष्व मां दग्ध्वा त्वं स्त्रीहत्याजनितं कीर्त्तिसमूहं विस्तारयेत्यर्थः । हे विधे ! दैव ! विधिर्विधाने दैवे चेत्यमरः । त्वं परेषाम् ईहाफलस्य मनोरथफलस्य यद्भञ्जनं विनाशनं तदेव व्रतं नियमः विद्यतेऽस्येति तथाभूतः सन् अद्य अधुना मम अफलैः नलाप्राप्त्या निष्प्रयोजनैः असुभिः प्राणैः तृप्यन् तृप्तिं लभमानः पत पतितो भव स्त्रीवधपापादिति भावः । यो हि परस्य मनोरथविषयं फलं नाशयति स तेन पातकी भवतीति च गम्यते ॥ ८८ ॥

भृशमिति । हे स्वान्त हृदय ! स्वान्तं हृन्मानसं मन इत्यमरः । त्वम् अयोमयं लोहमयं यदि भवसीति शेषः तदा हे भृशमतिमात्रं वियोगानलेन विरहाग्निना ताप्यमान ! दह्यमान ! किं कथं न विलीयसे ? न द्रवसि ? अयोघनस्यापि तापाद् विलयो दृश्यते तव तु न, तथेति अयोमयमपि नासीति निष्कर्षः । हे स्मरेषुभिः कामशरैः भेद्य ! विदार्य्य ! त्वं वज्रमपि कुलिशमपि न असि न भवसि वज्रस्य शराभेद्यत्वादिति भावः । अथच न दीर्य्यसे न विदलसि कथं न ब्रवीषि किमर्थं न वदसि ? अपितु वक्तव्यमेव तव स्वरूपमित्यर्थः ॥ ८९ ॥

विलम्बसे इति । हे जीवित ! प्राण ! किं कथं विलम्बसे

दृशौ! मृषा पातकिनो मनोरथाः कथं पृथू वामपि विप्रलेभिरे।
प्रियश्रियःप्रेक्षणघाति पातकं स्वमश्रुभिः क्षालयतं शतं समाः ९१।
प्रियं न मृत्युं न लभे त्वदीप्सितं तदेव न स्यान्मम यत्त्वमिच्छसि।

---

चिरयसि? द्रुतं शीघ्रं द्रव गच्छ, किमर्थमित्याह ज्वलतीति यतः इदं ते तव निकेतनम् आवासगृहं ज्वलति अथापि इत्थं निकेतनज्वलनेऽपि मृषा अलीकां सुखासिकां सुखस्थितिं न जहासि? न त्यजसि? धात्वर्थनिर्देशे ण्वुल् वक्तव्यः। तव ईदृशम् एवम्प्रकारं गृहदाहेऽपि तत्त्यागाभावमलप्रयोजनमित्यर्थः। आलस्यम् अपूर्वं नूतनं न केनापि इत्थम् आलस्यं क्रियमाणं दृश्यते इति भावः। अन्यो नितान्तालसोऽपि जनो दह्यमानं गृहं त्यक्त्वा पलायते, त्वन्तु न तथेति आश्चर्यमित्यर्थः॥९०

दृशाविति। हे दृशौ! चक्षुषी! मृषा अलीकाः पातकिनः पापिनः परप्रतारकत्वात् पापशीला इत्यर्थः। मनोरथाः नलदर्शनाभिलाषा इत्यर्थः पृथू विशाले महत्यावित्यर्थः। वामपि युवामपि विप्रलेभिरे प्रतारयामासुः मनोरथानां मनोधर्म्मत्वेन अणुत्वातिशयेऽपि महत्योः विप्रलम्भनं न कथमपि युज्यते नहि महान्तः क्षुद्रैः प्रतारयितुं शक्यन्ते इत्याश्चर्य्यमिति भावः। युवयोः मनोरथा विफला इदानीं संवृत्ता इति तात्पर्य्यम्। अतएव प्रियस्य नलस्य या श्रीः सौन्दर्य्यं तस्याः प्रेक्षणं दर्शनं हन्तीति प्रेक्षणघाति दर्शनविघातकं स्वं निजं पातकं जन्मान्तरकृतमिति भावः। अश्रुभिः नेत्रवारिभिः शतं समाः वत्सरान् अत्यन्तसंयोगे द्वितीया। क्षालयतम्। अन्योऽपि जलेन मलिनं वस्तु क्षालयति। यावज्जीवं रोदनमेव तत्पापप्रायश्चित्तमिति भावः॥९१॥

वियोगमीहस्व मनः! प्रियेण मे तव प्रसादान्न भवत्यसावपि॥८२॥
न काकुवाक्यैरतिवाममङ्गजं द्विषन्तु याचे पवनन्तु दक्षिणम् ।
दिशापि मद्भस्म किरत्वयं तया प्रियो यया वैरविधिर्वधावधिः८३

प्रियमिति। हे मनः! तव ईप्सितं वाञ्छितं प्रियं नलं न तल्लाभे सत्यपि न लभे न प्राप्नोमि ततश्च त्वं यत् इच्छसि अभिलषसि, तदेव त्वदीप्सितं तवेष्टं मम न स्यात् न भवेत्। अतः त्वं मे मम प्रियेण वियोगं विच्छेदमेव इच्छ अभिलष, तथा सति तव प्रसादात् अनुग्रहात् असौ अपि वियोगोऽपि न भवति प्रियलाभो मे भविष्यतीति इति भावः। अत्र संयोगार्थं वियोग-प्रार्थनमिति विचित्रालङ्कारः, तथाच दर्पणः, विचित्रं तद्विरु-द्धस्य कृतिरिष्टफलाय चेदिति ॥ ८२ ॥

नेति। द्विषन्तु विरहिणां वैरिषु मदनचन्द्रदक्षिणानिला-दिषु बहुषु इति भावः। मध्ये अतिशयेन वामं प्रतिकूलं यद्वा अतिक्रान्ता विशेषेण व्यथिता वामाः स्त्रियो येन तं स्त्रीणाम् अतिपीड़कमिति यावत्। रतौ स्वपत्न्यां वामं सुन्दरं निज-पत्नीसुखावहमित्यर्थः। अथच रतौ प्रीतौ विरहिणामिति भावः वामं प्रतीपमिति च गम्यते अङ्गजं कामं काकुवाक्यैः दीन-वचनैः न याचे न प्रार्थये प्रतिकूलत्वात् तद्याचनं विफलमिति भावः। अतिवामम् अङ्गजं पुत्रमपि न कोऽपि याचते वरं दाक्षिण्यवन्तम् अन्यमपि जनं याचते इति व्यज्यते। तु किन्तु दक्षिणं दक्षिणदिग्भवं दाक्षिण्यवन्तञ्च पवनं वायुं याचे इत्यनु-षङ्गः स तु अतिवामः अवाम इति याचितुं योग्य इति भावः। किमित्याह दिशेति। अयं पवनः यया दिशा प्रियो सञ्चरतीति शेषः। तया दिशा मम भस्म किरतु क्षिपतु

अमूनि गच्छन्ति युगानि न क्षणः कियत्सहिष्ये न हि मृत्युरस्ति मे
स मां न कान्तः स्फुटमन्तरुज्झिता न तं मनस्तच्च न कायवायवः
मदुग्रतापव्ययशङ्कशीकरः सुराः ! स वः कैम पपे क्षपार्णवः ।

---

नायां लोट् । यस्मिन् दिग्भागे प्रियो मम विद्यते तत्रैव मन्मस्तक्षेपणं करोतु यथा तेनापि तदङ्गसङ्गः स्यादिति भावः । ननु शत्रुः अयं कथमेवम् उपकरिष्यति इत्यत्राह वैरविधिः शत्रुतासाधनं बधः अवधिः यस्य स बधावधिः मारणान्तः शत्रोः बधे कृते एव तद्वैरं गच्छेत् न अतःपरं तिष्ठेत् प्रयोजनविरहात् इति भावः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८३ ॥

अमूनीति । गच्छन्ति चलन्ति अमूनि युगानि, क्षणो न स्वल्पमात्रसमयो न, प्रवहद्वयं क्षणः बहुयुगवत् आभाति इति भावः । कियत् किं परिमाणं दुःखमित्यर्थः सहिष्ये ? ननु आमृत्योर्दुःखं सहिष्यते भवत्या इत्यत्राह, मे मम मृत्युः नास्ति हि नास्ति एवेत्यर्थः । मृत्योः अभावात् निरवधि दुःखं मया सोढ़व्यमिति भावः । कथं मरणाभाव इत्यत्र आह, स कान्तः प्रियो नलस्तु माम् अन्तः न उज्झिता न त्यक्ष्यति तं कान्तं मनश्च न उज्झिता इत्यनुषङ्गः । तच्च मनः कायवायवः शरीरमारुताः प्राणा इत्यर्थः न उज्झितारः इति वचनविपरिणामेन अन्वयः । स्फुटं निश्चयेनेति सर्वत्रान्वयः । मम एतत् स्थूलशरीरनाशेऽपि लिङ्गशरीरं स्थास्यति, तत्र च अन्तःकरणादयः परस्परशृङ्खलाबद्धा एव स्थास्यन्ति, नलस्तु लिङ्गशरीरस्थमपि अस्मानैव त्यक्ष्यति इति मम एतत् दुःखं चिरं सहनीयमिति निष्कर्षः ॥ ८४ ॥

उदेति कोटिर्नमुदे मदुत्तमा किमाशु सङ्कल्पकणश्रमेण वः ८५
ममैव वाहर्दिवमस्रुदुर्दिनैः प्रसह्य वर्षासु ऋतौ प्रसञ्जिते ।
कथं नु शृण्वन्तु सुषुप्य देवता भवन्त्वरण्ये रुदितं न मे गिरः ८६

---

मदुग्रेति । हे सुराः! देवाः! मम उग्रः दारुणः तापः नला-प्राप्तिजन्यं दुःखमित्यर्थः तस्य व्यये नाशे शान्तौ इत्यर्थः शक्ताः क्षमाः शीकराः कणा यस्य तादृशः लेशमात्रेणापि मम तीव्र-सन्तापशान्तिं कर्त्तुं समर्थ इत्यर्थः स प्रसिद्धः वः युष्माकं कृपा-र्णवः कारुण्याब्धिः केन जनेन पपे पीतः यथा अगस्त्येन मुनिना सागरः पीतस्तथा केनापि मद्दुरदृष्टेन पीत इति मन्ये इति भावः। युष्माकं मल्लोभेन पीत इति चेत् तत्राह उदेतीति। वः युष्माकं सङ्कल्पस्य मनोरथस्य कणः लेशः तस्य श्रमेण स्वल्पेन प्रयासेन इत्यर्थः। मत्त उत्तमा अधिकसुन्दरी-त्यर्थः कोटिः कोटिसंख्याः कामिन्य इति भावः। मुदे प्रीतये आशु शीघ्रं न उदेति किम्? नोत्पद्यते किम्? इत्यर्थः। युष्माकं मानसेनैव मत्तोऽधिकमनोहारिण्यः कामिन्यः सृज्यन्ते तत् किमर्थं मद्विडम्बनेन निष्करुणा भवथेति तात्पर्य्यम्। अत्र कृपार्णव इति रूपकम् ॥ ८५ ॥

ममैवेति। वा अथवा अह्नि च दिवा च अहर्दिवम् अह-रहः इत्यर्थः ममैव अस्रुदुर्दिनैः यद्वा अस्रूण्येव दुर्दिनानि मेघाच्छन्नदिवसदृष्टयः तैः प्रसह्य बलात् वर्षासु ऋतौ वर्षर्त्तौ स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा इत्यमरः। ऋत्यकिति प्रकृति-भावः। प्रसञ्जिते प्रवर्त्तिते सति देवता इन्द्रादयः सुषुप्य सुप्ता वचिस्वपीत्यादिना सम्प्रसारणम्। सुनिदुर्भ्यः सुप्ति स्व समा इति षत्वम्। मे मम गिरः वाचः कथं नु इति

इयं न ते नैषध ! दृक्पथातिथिः त्वदेकतानस्य जनस्य यातना ।
क्रदे क्रदे हा न कियन्न वेधितः स वेधसाऽगोपि खगोऽपि वक्ति यः ॥८७॥

शृण्वन्तु ? सम्भावनायां लोट् । सुषुप्ततया नैव श्रोतुं शक्नुवन्त्विति सम्भाव्यते इति निष्कर्षः । तस्मात् मे गिरः वाचः परिदेवितान्नराणीत्यर्थः । अरण्ये रुदितं क्षेपे इति समासः तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् । तत्तुल्यानीत्यर्थः । न भवन्तु भवन्त्विति पाठे विधेयप्राधान्यात् एकवचनम् । यस्मात् देवाः सुषुप्ततया न मद्वाक्यं शृण्वन्ति तस्मात् मम विलापाक्षरं निष्फलमिति न पुनर्विलपिष्यामीति भावः । केचित् तु अरण्ये रुदितं न भवन्तु ? अपितु भवन्त्येव इति काकुरिति व्याचक्षते । वर्षासु भगवतो हरेः स्वापात् सर्वे विष्णुमया देवा इति वचनेनान्येषामपि देवानां वर्षासु स्वापः सुतरामापतति अतएव शारदीयमहापूजायां बोधनव्यापारश्चलतीति बोध्यम् । अत्र तत्कालस्य अवर्षात्वेन देवानां स्वापसम्बन्धाभावेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः तथा गिरामरण्यरुदितासम्भवेन तत्सादृश्याक्षेपान्निदर्शनेत्यनयोः संसृष्टिः ॥ ८६ ॥

इयमिति । हे नैषध ! निषधाधिप ! नल ! त्वदेकतानस्य त्वन्मात्रायत्तस्य एकतानोऽनन्यवृत्तिरित्यमरः । त्वदनन्यगतिकस्येति यावत् जनस्य स्वस्य एवेत्यर्थः । यातना तीव्रवेदना यातना तीव्रवेदना इत्यमरः । ते तव दृक्पथातिथिः दृष्टिविषयः न भवतीति शेषः त्वं मम इमां यातनां न पश्यसि इत्यर्थः । ननु दूतेन कथमेतत् नलाय न ज्ञाप्यते इत्यत्राह । यः वक्ति नलसमीपं गत्वा मदीयदुःखं निवेदयति, स खगोऽपि पक्षी अपि हंस इत्यर्थः । वेधसा विधात्रा अगोपि गोपितः, ननु कुतोऽस्य गोपनं ज्ञायते इत्यत्राह क्रदे क्रदे प्रति-

ममापि किं नो दयसे दयाधन ! त्वदह्रिमग्नं यदि वेत्थ मे मनः ।
निमज्जयन् सन्तमसे पराशयं विधिस्तु वाच्यः क्व तवागसः कथा॥९८
कथावशेषं तव सा कृते गतेत्युपैष्यति श्रोत्रपथं कथं न ते ।

हृदं प्रतिजलाशयम् इत्यर्थः । कियत् कति वारान् न गवेषितः न अन्विष्टः अपितु बहुवारं गवेषित इत्यर्थः । अतो ब्रह्मणा असौ गोपित इति न दृष्ट इत्यर्थः । हा इति खेदे, विधाता मयि प्रतिकूलस्तत् किं करोमि का गतिरिति खिद्यामि इति भावः ॥ ९७ ॥

ममेति । हे दयाधन ! दयामय ! नल ! यदि त्वं मे मम मनः तव अह्रिमग्नं त्वच्चरणशरणं वेत्थ जानासि ? विदो लटो वेति सिपः स्थलादेशः । तदा ममापि एतदवस्थाया इति भावः किं नो दयसे ? न अनुकम्पसे ? अपितु अवश्यमेव मयि दया त्वया कार्य्येत्यर्थः । अधीगर्थदयेशां कर्मणि इति षष्ठी । भक्त-जनोऽवश्यमेव अनुकम्पनीय इति भावः । अथवा नात्र तव दोष इत्यत्राह निमज्जयन् इति । परस्य आशयं हृदयं सम्यक् तमः सन्तमसं तस्मिन् महामोहे इत्यर्थः । विष्वक् सन्तमस-न्तम इत्यमरः । अवसमन्धेभ्यस्तमस इति समासान्तोऽच्-प्रत्ययः । निमज्जयन् पातयन् विधिस्तु विधातैव वाच्यः उपालभ्यः, तव आगसोऽपराधस्य कथा क्व ? कुत्र ? विधिना मोहितो जनः न किमपि द्रष्टुं ज्ञातुं वा शक्नोति तस्मात् त्वया मामेवं गतां जानतापि विधिना मोहितत्वात् मां प्रति दयां कर्त्तुं न प्रवर्त्तसे इति भावः ॥ ९८ ॥

कथेति । सा दमयन्ती तव कृते त्वन्निमित्तं कथा एव शेषः अवसानं तं गता पञ्चत्वं प्राप्तेत्यर्थः इति वार्त्तेति शेषः

दयाणुना मां समनुग्रहीष्यसे तदापि तावद्यदि नाथ! नाधुना ९९
ममादरीदं विदरीतुमान्तरं तदर्थिकल्पद्रुम ! किञ्चिदर्थये ।
भिदां हृदि द्वारमवाप्य मैव मे हृतासुभिः प्राणसमः समं गमः १००

---

ते तव श्रोत्रपथं श्रवणविषयतां कथं न उपैष्यति ? अपितु उपैष्यत्येव इत्यर्थः । जनमुखात् मां त्वदर्थे मृतां श्रोष्यसि एवेत्यर्थः । हे नाथ ! यदि अधुना इदानीं न अनुगृह्णासि इति शेषः । तदापि तावत् तद्वार्त्ताश्रवणकालेऽपि तावत् दयाणुना कृपालेशेन माम् अनुग्रहीष्यसे, हा दमयन्ती मदर्थं मृता न मया सम्यक् कृतमिति पश्चात्तापयुतोऽनुग्रहीष्यसि एवेत्यर्थः । ग्रहो लिटीतीटो दीर्घः । तव मदर्थमनुतापोऽपि मदनुग्रह इति तात्पर्य्यम् ॥ ९९ ॥

ममेति । हे अर्थिकल्पद्रुम ! अभीष्टदत्वात् अर्थिषु याचकेषु कल्पतरुसदृश ! मम इदम् आन्तरं हृदयं विदरीतुं विदीर्णं भवितुम् आदरि आदरवत् प्रवृत्तमित्यर्थः । तत् तस्मात् विदरणाद्धेतोः किञ्चित् अर्थये याचे । किमित्याह भिदामिति । प्राणसमः प्राणतुल्यः त्वं भिदां भेदं विदारणमित्यर्थः । षिद्भिदादिभ्योऽङ् । द्वारं मार्गम् अवाप्य प्राप्य मे मम हृतासुभिः अनीप्सितप्राणैः समं सहैव । साकं सार्द्धं समं सहेत्यमरः । मा गमः न निर्गच्छ गमेर्लुङ् पुषादीत्यादिना च्लेरङादेशः । न माङ्योग इत्यडागमाभावः । प्राणनिर्गमनकाले त्वया मम हृदयात् न अपगन्तव्यं तथा सति जन्मान्तरेऽपि तव प्राप्तिः प्राप्स्यते इति भावः । उक्तञ्च गीतायां भगवता अर्जुनं । यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तम् कौन्तेय ! सदा तद्भावभावित इति ॥ १०० ॥

इति प्रियाकाकुभिरुन्मिषन् भृशं दिगीशदूत्येन हृदि स्थिरीकृतः
नृपं स योगेऽपि वियोगमन्मथः क्षणं तमुद्भ्रान्तमजीजनत्पुनः॥१०१

महेन्द्रदूत्यादि समस्तमात्मन स्ततः स विस्मृत्य मनोरथस्थितैः।
क्रियाः प्रियाया ललितैः करम्बिता विकल्पयन्नित्थमलीकमालपत्

---

इत्थं भैम्या वचनमाकर्ण्य नलस्य विप्रलम्भातिशयमाह इतीति। स पूर्वसम्भृतः वियोगमन्मथः विरहजनितकामः दिगीशानां दिक्पालानां दूत्येन दूतकार्य्ये प्रेष्यभावेन स्थिरीकृतः नियन्त्रितः अपरित्याज्याहार्य्यः निरुजोऽपि इत्यर्थः निराशत्वादिति भावः। इतीत्थं प्रियाया दमयन्त्याः काकुभिः दीनोक्तिभिः भृशम् अतिशयेन उन्मिषन् उद्बुद्धः सन् योगेऽपि सम्मेलनेऽपि दमयन्तीसन्निधानेऽपि इत्यर्थः, तं नृपं क्षणं पुनः उद्भ्रान्तम् उन्मत्तं विह्वलमित्यर्थः अजीजनत् अकार्षीत् असन्निधौ वियोगः पूर्वं यथा उद्भ्रान्तमकरोत् तथा योगेऽपि दूत्यभावेन नैराश्यबोधात् पुनः अतिशयेन तं नृपं व्यथयामास इति भावः॥१०१॥

तदनुसारेण प्रलापमस्य वर्णयितुमुपक्रमते महेन्द्रेति। ततः उन्मादाविर्भावानन्तरं सः नलः आत्मनः स्वस्य महेन्द्रदूत्यादि इन्द्रादिदेवगणदौत्यमित्यर्थः विस्मृत्य मनोरथस्थितैः मनःकल्पितैः ललितैः विलासैः करम्बिताः मिश्रिताः प्रियाया दमयन्त्याः क्रियाः चेष्टितानि विप्रलम्भजनितान् प्रलापान् इति भावः विकल्पयन् वितर्कयन् सम्भावयन् इत्यर्थः, इत्थं वक्ष्यमाणरूपम् अलीकम् अज्ञानपूर्वकत्वात् मिथ्याभूतं यथा तथा आलपत् प्रलपति स्म इत्यर्थः। यथा पूर्वम् उन्मादावस्था प्रियां मानिनीं सम्भावयन् तदभिमानशमनोचितं प्रलपि

अयि ! प्रिये ! कस्य कृते विलप्यते विलिप्यते हा मुखमश्रुबिन्दुभिः
पुरस्त्वयालोकि नमन्नयन्न किं तिरश्चलल्लोचनलीलया नलः १०३

चकास्ति बिन्दुच्युतकातिचातुरी घनाश्रुबिन्दुस्रुतिकैतवात्तव ।
मसारसाराक्षि ! ससारमात्मना तनोषि संसारमसंशयं यतः १०४

---

वान् तथा अधुनापि तां तत्कृतप्रलापवचनेन मानिनीं तर्कयन् तदनुनयार्थं प्रललाप इति भावः ॥ १०२ ॥

प्रलापप्रकारमाह, अयीत्यादि । अयीति कोमलामन्त्रणे ! अयि प्रिये ! भैमि ! कस्य कृते किमर्थमित्यर्थः विलप्यते विलापः क्रियते त्वया इति शेषः भावे लट् । हा कष्टं मुखम् अश्रुबिन्दुभिः विलिप्यते व्याप्यते अत्रापि कस्य कृते इत्यनुषङ्गः । कर्मणि लट् । पुरोऽग्रे नमन् त्वच्चरणयोः प्रणिपतन् इत्यर्थः । अयं नलः त्वया तिरश्चलतोः वक्रं प्रसरतोः लोचनयोः नयनयोः लीलया विलासेन कटाक्षदृष्ट्या इति भावः । किं कथं न अलोकि ? न दृष्टः ? अलं विलापेन पादानतं मां पश्य इति भावः । अथवा न अलोकि किं ? न दृष्टः किम् ? अपितु दृश्यते एव तत्कथं विलपसीति भावः । तिरश्चलल्लोचनशीलयेति पाठे तिरश्चलत् वक्रं प्रसरत् लोचनयोः शीलं स्वभावो यस्याः तथाभूतया त्वयेत्यस्य कर्त्तृपदस्य विशेषणं शीलं स्वभावे सद्वृत्ते इत्यमरः । अपरोक्षे परोक्षवत्प्रलापोऽयुक्त एवेति भावः॥१०३॥

चकास्तीति । मसारेषु इन्द्रनीलमणिषु मध्ये सारौ श्रेष्ठौ इव अक्षिणी यस्याः तत्सम्बुद्धौ । हे मसारसाराक्षि ! नीलमणिनिभलोचने इत्यर्थः, नीलमणिर्मसारः स्यादिति हारावली । मसारताराक्षीतिपाठे मसाराविव तारे कनीनिके ययोः तादृशे अक्षिणी यस्यास्तत्सम्बुद्धौ । तारकाख्यः कनी-

अपास्त्यापोवहि मायितं करे करोषि लीलाजलिमं किमाननम्
तनोषि सारं कियदश्रुणःस्नवैरदोषनिर्वासितभूषणी हृदि॥१०५॥

निकेत्यमरः । तव घनानां सान्द्राणामविरलानामित्यर्थः, अश्रुबिन्दूनां वाष्पबिन्दूनां कैतवात् छलात् बिन्दोः अनुस्वारस्य च्युतमेव च्युतकं यस्मिन् तद्बिन्दुच्युतकम् अनुस्वारच्यवनेन अर्थान्तरबोधकं विचित्रकाव्यमित्यर्थः, तव अतिचतुरी अतिनैपुण्यं चकास्ति प्रतिभाति त्वं बिन्दुच्युतकं शब्दालङ्कारविशेषवत् किञ्चितं काव्यं विशेषेण जानासीति भावः । अथ च अश्रुबिन्दूनां च्युतकं वर्षणं तव अतिचातुरी अतिमाधुरीति यावत् चकास्ति तव अश्रुबिन्दूनां पातनमपि मनोहरतीति भावः । यतश्चातुर्य्यात् त्वं संसारं जगदित्यर्थः, संसारशब्दस्य आत्मना स्वगुणेन इति भावः । ससारं सारवस्तुयुतमित्यर्थः, बिन्दुच्युतककाव्यनैपुण्येन अनुस्वारभ्रंशनात् ससारशब्दस्य असंशयं निश्चितम् अर्थाभावेऽव्ययीभावः । तनोषि करोषि त्वया स्थितया संसारः स्वतोऽसारोऽपि सारवान् प्रतीयते इति भावः । बिन्दुच्युतकाव्यस्य उदाहरणं यथा । काले तड़िल्लताजाले घनपीनपयोधरे । कान्तः सर्वगुणोपेतो बालेन्दुः खे न लभ्यते इति । अत्र बालेन्दुः नवोदितचन्द्रः खे आकाशे न लभ्यते न दृश्यते इत्यर्थः । अनुस्वारच्युतौ तु । हे बाले कान्तः प्रियः दुःखेन लभ्यते इत्यन्वयः । अत्र कैतवशब्देन अश्रुबिन्दुच्युतिं प्रतिषिध्य वर्णात्मकबिन्दुच्युतकस्थापनादपह्नुतिः तदुपजीविता च ससारमिति श्लेषेण बिन्दुच्युतकाख्यकाव्यकारणोत्प्रेक्षा स चासंशयमिति व्यञ्जकप्रयोगाद् वाच्येत्येताः मङ्गाङ्गिभावेन सङ्करः ॥ १०४ ॥

अपास्येति । हे प्रिये ! अपास्य त्यक्त्वा पाथोरुहं

दृशोरमङ्गल्यमिदं मिलज्जलं करेण तावत् परिमार्ज्जयामि ते।
अथापराधं भवदङ्घ्रिपङ्कजद्वयीरजोभिः सममात्ममौलिना १०६

क्रीड़ाकमलमित्यर्थः, येन तस्मिन् दुःखात् लीलापद्मपरित्यागिनीत्यर्थः, करे पाणौ शायितं निहितमित्यर्थः, आननं मुखं किं किमर्थं लीलानलिनं क्रीड़ापद्मं करोषि लीलाकमलपरिहारेण तत्स्थाने मुखं विन्यस्य कथं विषादं प्रकटयसि इति भावः। किञ्च अदोषेण दोषं विना मत्कृतापराधं विनेति भावः। निर्वासितानि दूरीकृतानि भूषणानि अलङ्काराः यस्मात् तादृशे हृदि वक्षसि अश्रुणः लवैः अश्रुविन्दुभिरित्यर्थः, हारं कियत् किमर्थमित्यर्थः, तनोषि? विस्तारयसि? कथं रोदिषीति भावः। लीलाकमलं करे धारय रोदनञ्च मा कुरु इति तात्पर्य्यम्। अत्र पूर्वार्द्धे लीलानलिनमित्यसम्भवेन लीलानलिनमिवेति सादृश्याक्षेपात् निदर्शनालङ्कारः। द्वितीयार्द्धे अश्रुविन्दुभिर्हारमिति वैयधिकरण्येन रूपकमित्वनयोः संसृष्टिः॥ १०५॥

दृशोरिति। इदं ते तव दृशोर्नयनयोः मिलत् सङ्गच्छमानं मङ्गलाय हितं मङ्गल्यं तत् न भवतीत्यमङ्गल्यम् अकल्याणकरं जलम् अश्रुवारि इत्यर्थः, करेण पाणिना तावत् साकल्येन यावत्तावच्च साकल्ये इत्यमरः। परिमार्जयामि प्रोञ्छामि मृजेर्णौसादिकात्लट्। अथास्रुमार्जनानन्तरम् अपराधम् आत्मवञ्चनकृतमिति भावः। भवत्यास्तव अङ्घ्रिपङ्कजद्वय्याः चरणकमलद्वयस्य रजोभिः धूलिभिः समं सह आत्ममौलिना निजकिरीटेन मौलिः किरीटधम्मिल्लौ इत्यरः। परिमार्जयामीत्यनुषङ्गः। यदि मदीयापराधेन अश्रु मुञ्चसि तदा तदमङ्गल्यमिति प्रथमं परिमार्ज्य पश्चात् चरणनिपतितस्त्वां प्रसादयामीति भावः। अत्र

मम त्वदच्छाङ्घ्रिनखामृतद्युतेः किरीटमाणिक्यमयूखमञ्जरी ।
उपासनामस्य करोतु रोहिणी त्यजत्यजाकारणरोषणि ! रुषम्
तनोषि मानं मयि चेन्मनागपि त्वयि श्रये तद्बहुमानमानतः ।
विनम्य वक्त्रं यदि वर्त्तसे क्रियन्नमामि ते चण्डि! तदा पदावधि१०८

---

रजोभिः सममिति रजःपरिमार्जनापराधमार्जनयोः अभेदाध्यवसायेन अतिशयोक्तिमूलत्वात् सहोक्तिरलङ्कारः । तथा च दर्पणः । सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः । सा सहोक्तिः मूलभूतातिशयोक्तिर्यदा भवेत् ॥ इति ॥ १०६ ॥

ममेति । हे अकारणरोषणे ! निष्कारणकोपने ! क्रुधमण्डार्थेभ्यश्चेति युच्प्रत्ययः । रोहिणी लोहितवर्णा वर्णादनुदात्तात्तोपधात्तो न इति ङीप् नकारश्च । मम किरीटे मुकुटे यत् माणिक्यं पद्मरागमणिः तस्य मयूखानां किरणानां मञ्जरी दीर्घाकारत्वात् वल्लरीरूपा इत्यर्थः, अथ च रोहिणी चन्द्रप्रिया नक्षत्रविशेष इति यावत् अस्य पुरोवर्त्तिनः प्रत्यक्षदृश्यस्य वा तव अच्छोनिर्मलः अङ्घ्रेः चरणस्य यो नखः स एव अमृतद्युतिश्चन्द्रः तस्य उपासनां सेवां करोतु रोहिण्याश्चन्द्रस्य भर्त्तुः सेवौचित्यादिति भावः । रोहिणी कटुरोहिण्यां रोहिणी लोहिताश्वयोः कण्ठरोगान्तरे भे चेति विश्वः । यदि मया अपराधः कृतस्तदाहं त्वच्चरणयोः प्रणामतामेमीति भावः । रुषं कोपं त्यज त्यज आभीक्ष्ण्ये द्विर्भावः । मुञ्च मुञ्च, मा कोपं कुरु इत्यर्थः । उक्तञ्च । प्रणिपातप्रतीकारः संरम्भो हि महात्मनामिति । अत्र रूपकमलङ्कारः ॥ १०७ ॥

तनोषीति । हे चण्डि अतिकोपने ! । चण्डस्त्वत्यन्तकोपन इत्यमरः । चेद् यदि त्वं मयि मनागपि स्वल्पमपि मानं

प्रभुत्वभूम्नानुगृह्णाण वा नवा प्रणाममात्राधिगमेऽपि कः श्रमः ।
क्व याचतां कल्पलतासि मां प्रति क्व दृष्टिदाने तव बद्धमुष्टिता १०।

प्रणयकोपम् ईर्ष्याकोपं वा मानः कोप स तु द्वेधा प्रणयेर्ष्या-समुद्भव इति दर्पणः। मयि मां प्रतीत्यर्थः तनोषि करोषि, तत् तदा अहम् आनतः सन् त्वयि बहुमानं महान्तं गौरवं अर्ये अतिगौरविणी त्वमिति मन्ये इति भावः। यद्वा आनतः सन् अधोमुखः सन् अहमपि महान्तं प्रणयकोपं अर्ये आश्र-यामीत्यर्थः। किञ्च वक्त्रं वदनं कियत् किञ्चित् विनम्य विन-मय्य अधः कृत्वेत्यर्थः, अन्तर्भावितो णिजर्थः वर्त्तसे तिष्ठसि, तदा ते तव पदावधि चरणपर्य्यन्तं नमामि चरणतले पतित्वा तव कोपमपनयामीति भावः। मानभङ्गोपाया दर्पणेनोक्ता यथा। साम भेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम्। तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात्॥ तत्र प्रियवचः साम भेदस्तत्सख्युपार्जनम्। दानं व्याजेन भूषादेः पादयोः पतनं नतिरिति। अत्र प्रथमचतुर्थावुपायौ दर्शितौ॥ १०८॥

प्रभुत्वेति। हे प्रिये! प्रभुत्वस्य प्रभुशक्तेः भूम्ना बाहुल्येन त्वं मे जीवितेश्वरीति तव मयि अतिशयेन प्रभुत्वमस्ति तद्गौर-वेण इत्यर्थः। अनुगृह्णाण वा न अनुगृह्णाण वा मयि अनु-ग्रहानुग्रहयोः तव स्वाच्छन्द्यमिति भावः। किन्तु प्रणाम-मात्रस्य प्रणिपातस्यैव इत्यर्थः अधिगमे अङ्गीकारे ग्रहणे इत्यर्थः। श्रमः प्रयासः कः? नास्त्येव इत्यर्थः। प्रभवः स्वेच्छया भृत्यमनुगृह्णन्ति वा न वा किन्तु तदीयं प्रणामं गृह्णन्त्येव त्वं तु तमपि न गृह्णासीत्ययुक्तं तवेति भावः। तदपि मास्तु दृष्टिदाने तु का क्षतिरित्यवाह क्वेति। त्वं याचताम् अर्थिनां कल्पलतासि कल्पलतावत् अर्थिमनोरथं पूरयसि इत्यर्थः इति

अरेषुबाधां सहसे मृदुः कथं
हृदि द्रढीयःकुचसंहते तव ।
निपत्य वैसारिणकेतनस्य वा
व्रजन्ति बाणा विमुखोत्पतिष्णुताम् ॥ ११० ॥

क ? अमीति त्वमर्थवाक्यालङ्कारयोर्युष्मदर्थानुवादेऽपीति गण व्याख्यानात्। मां प्रति दृष्टिदाने बद्धमुष्टिता कृपणता क ? स्याद् बद्धमुष्टिः कृपणे कृपाणादिषु चेष्यते इति विश्वः। वदान्य-कृपणयोः सामानाधिकरण्यं नैव घटते इति भावः। अतएव अत्र विरूपयोः सङ्घटनाद् विषमालङ्कारभेदः। नाहं अन्यत् किमपि प्रार्थये केवलं दृष्टिदानेन मामनुगृहाणेति तात्पर्य्यम् ॥ १०८ ॥

अरेति। हे प्रिये! मृदुः कोमलाङ्गी त्वं कथं अरस्य इषुभिः शरैः बाधां पीड़नं अरेषुमाथमिति पाठे अरेषुभिः माथं विलोड़नं सहसे? अतिमृदुवस्तूनां कठिनैः बाणैः आहतिः नैव सह्या भवतीति भावः। वा अथवा द्रढीयोभ्यां कठि-नाभ्यां कुचाभ्यां स्तनाभ्यां संहते आहते तव हृदि वक्षसि विसरतीति विसारी स एव वैसारिणः मत्स्य इत्यर्थः। विसा-रिणो मत्स्य इति स्वार्थेऽण्प्रत्ययः। मीनो वैसारिणोऽण्डज इत्यमरः। केतनं ध्वजो यस्य तस्य मीनकेतनस्य कामस्य इत्यर्थः। बाणाः शराः निपत्य विमुखोत्पतिष्णुतां विमुखाः पराङ्मुखाः सन्तः उत्पतिष्णवः उत्पतनशीलाः अलङ्कृञित्यादिना इष्णुच्-प्रत्ययः। तेषां भावः तत्ता तां व्रजन्ति प्राप्नुवन्ति यथा कठिने वस्तुनि पाषाणादौ अतिवेगेन प्रक्षिप्ता अपि शरादयः निपत्य तत्रानिमज्ज्यैव पराङ्मुखीभूय उत्पतन्ति नतु तत्र प्रविशन्ति

स्मितस्य सम्भावय सृक्वणा कणान्
विधेहि लीलाचलमञ्चलं भ्रुवोः।
अपाङ्गरथ्यापथिकीश्च हेलया
प्रसद्य सन्धेहि दृशं ममोपरि॥ १११॥

समापय प्रावृषमश्रुविप्रुषां स्मितेन विश्राणय कौमुदीमुदः।
दृशावितः खेलतु खञ्जनद्वयी विकासिपङ्केरुहमस्तु ते मुखम्॥११२॥

तथा कठिनकुचप्रतिहताः कामबाणाः तव हृदयं न प्रवेष्टुमर्हन्तीति तव कामपीड़ाभावात् ईदृशं मानमाश्रयसि, कामपीड़ायान्तु कुतो मानप्रसङ्ग इति भावः। अत्र वाग्रब्दस्य उत्प्रेक्षाद्योतकत्वात् उत्प्रेक्षालङ्कारः॥ ११०॥

स्मितस्येति। सृक्वणा ओष्ठप्रान्तेन प्रान्तावोष्ठस्य सृक्वणी इत्यमरः। स्मितस्य मृदुहासस्य कणान् लेशान् सम्भावय सम्मानय स्मितं कुरु इत्यर्थः। भ्रुवोरञ्चलं प्रान्तं लीलया विलासेन चलं चञ्चलं विधेहि कुरु, तथा अपाङ्ग एव नेत्रप्रान्त एव अपाङ्गो नेत्रयोरन्त इत्यमरः। रथ्या मार्गः तत्र पन्थानं गच्छतीति पथिकी सञ्चारिणीत्यर्थः। पथष्टन्निति टन्प्रत्यये षिद्गौरादिभ्यश्चेति ङीप्। दृशं मम उपरि मामुद्दिश्येत्यर्थः। षष्ठ्यतसर्थप्रत्ययेनेति षष्ठी। हेलया विलासेन प्रसह्य बलात् सन्धेहि प्रक्षिप ध्वसोरेद्धावभ्यासलोपश्चेत्येकारः। कटाक्षेण मामवलोकयेत्यर्थः। प्रसह्येत्यत्र प्रसद्येति पाठे प्रसद्य प्रसन्ना भूत्वेत्यर्थः। प्रसीदेति पाठे प्रसीद प्रसन्ना भवेत्यर्थः॥ १११॥

समापयेति। अश्रुविप्रुषां वाष्पबिन्दूनां प्रावृषं वर्षणं वृष्टिमित्यर्थः। समापय शान्तिं नय मा रोदीरित्यर्थः। ननु वृष्टेः समापने किं फलमित्यत आह, स्मितेन मृदुहासेन कौमुदी-

सुधारसोद्वेलनकेलिमक्षर-
स्रजा सृजाऽऽस्तर्मम कर्णकूपयोः ।
दृशौ मदीये मदिराक्षि ! कारय
स्मितश्रिया पायसपारणाविधिम् ? ॥ ११३ ॥



---

मुदः ज्योत्स्नाजनिताम् हर्षान् विश्राणय वितर श्रणदाने इति चौरादिकाल्लोट् । दृशौ नेत्रे एव खञ्जनद्वयी खञ्जरीट-पक्षियुगलं खञ्जरीटस्तु खञ्जन इत्यमरः । इतो मयि खेलतु क्रीडतु मां प्रति प्रसरतु इति भावः । तथा ते तव मुखं विकासि विकस्वरं पङ्केरुहं कमलं अस्तु भवतु वर्षापगमे च कौमुदी-विकासः खञ्जनखेलनं पद्मविकासश्च भवतीति भावः । अत्र स्मितेन कौमुदीति वैयधिकरण्येन रूपकं दृशौ खञ्जनद्वयीति मुखं विकासि पङ्केरुहमिति च सामानाधिकरण्ये रूपकमित्येषां संसृष्टिः । खेलत्विति विधेयप्राधान्यादेकत्वम् ॥ ११२ ॥

सुधेति । हे मदिराक्षि ! मदिरे मत्तकारिणी अक्षिणी यस्याः तत्सम्बुद्धौ दृग्गोन्मादकारिणीत्यर्थः । इषितमिमदीत्या-दिना औणादिकः किरन्प्रत्ययः । केचित् तु मदिरो मत्त-खञ्जनः तद्वत् अक्षिणी यस्याः सा मदिराक्षी तत्सम्बुद्धिरिति व्याचक्षते । अक्षरस्रजा वर्णावल्या मम कर्णौ कूपाविव तयोः अन्तः अभ्यन्तरे सुधारसस्य पीयूषजलस्य उद्वेलनं वेलामुत्क्रम्य वर्तनं तस्य केलिं क्रीडां सृज कुरु यथा कर्णयोः अमृतरसंपूर्णं स्यात् तथा मधुरमालपेति भावः । तथा मदीये दृशौ नयने स्मितश्रिया मृदुहासलक्ष्म्या पायसस्य परमान्नस्य परमान्नन्तु पायसे इत्यमरः । पारणाविधिः भोजनव्यापारः तं कारय हृक्रोरन्यतरस्यामिति विकल्पादणिकर्तुः कर्मत्वम् । यद्वा

ममासनार्द्धं भव मण्डनं न न
प्रिये! मदुत्सङ्गविभूषणं भव।
भ्रमाद्भ्रमादालपमङ्ग! मृष्यतां
विना ममोरः कतरत्तवासनम्॥ ११४॥

---

व्रतोपवासस्य पारणा विधीयते तथा त्वद्दर्शनेन उपोषितयोरिव मन्नयनयोः तव स्मितशोभा पारणावत् तृप्तिकरी भवतु इति भावः॥ ११३॥

ममेति। हे प्रिये! मम आसनार्द्धं मण्डनं भव ममासनार्द्धमुपवेशनेन अलङ्कुरु इत्यर्थः। न न, मयोक्तमेतदत्यन्तमनुचितमिति भावः। मम उत्सङ्गस्य क्रोड़स्य विभूषणम् अलङ्करणं भव मम क्रोड़मुपवेशनेन अलङ्कुरु इत्यर्थः। आसनार्द्धापेक्षया उत्सङ्गस्य अधिकसमादरस्थानत्वात् अधिकादरणीयायाः तव तत्रैव उपवेशनं युक्तमिति भावः। न च एतदपि न सम्यगुक्तमित्यत आह, भ्रमादिति भ्रमात् भ्रमात् आलपम् एतदपि अतिभ्रान्त्या अहम् उक्तवान् इत्यर्थः। लपेर्लङ्। अङ्ग भोः! मृष्यतां क्षम्यतां पूर्वोक्तं मद्वचनमिति शेषः। तर्हि किमित्याह विनेति। मम उरः वक्षःस्थलं विना तव आसनं कतरत् बहूनां मध्ये श्रेष्ठतमं किम्? न किमपि इत्यर्थः। तस्मात् उत्सङ्गादपि उत्कृष्टे मम वक्षसि त्वं वस इति निष्कर्षः। चापले द्वे भवत इति वक्तव्यमिति न नेत्यादौ चापले द्विर्भावः। चापलं सम्भ्रमात् निवृत्तिः सम्भ्रमश्चानौचित्यभयादिति बोध्यम्। अत्र भैम्याः क्रमेण आधारवृत्तिकथनात् पर्य्यायालङ्कारः। तथाच दर्पणः क्वचिदेकमनेकस्मिन् अनेकं चैकगं क्रमात्। भवति क्रियते वा चेत् तदा पर्य्याय इष्यते॥ इति॥ ११४॥

अधीतपञ्चाशुगवाणवञ्चने ! स्थिता मदन्तर्यदि हिरेषि चेदुरः ।
स्मराशुगेभ्यो हृदयं बिभेतु न प्रविश्य तत्त्वन्मयसम्पुटे मम ११५
परिष्वजस्वानवकाशवाणता स्मरस्य लग्ने हृदयद्वयेऽस्तु नौ ।
दृढ़ा मम त्वत्कुचयोः कठोरयोरुरस्तटीयं परिचारिकोचिता ११६

---

अधीतेति। अधीता शिक्षिता पञ्चाशुगस्य पञ्चशरस्य बाणानां शराणां वञ्चना प्रतारणाविद्या प्रतारणाकौशलम् इत्यर्थः यया सा तथोक्ता तत्सम्बुद्धौ। हे अधीतपञ्चाशुगबाण-वञ्चने ! कामास्त्रवैफल्यविधायिनी इत्यर्थः प्रायेण मनस्विन्यो लज्जावशंवदतया स्वहृदयप्राणानाञ्च धैर्यातिशयवत्तया च काम-वञ्चनस्वभावा भवन्ति इति भावः। त्वं मम अन्तः अन्तःकरणे हृदये इत्यर्थः स्थिता सततमेव अवस्थिता इदानीं बहिर्बाह्यम् उरः वक्षःस्थलम् एषि चेत् अधितिष्ठसि यदि, तत् तर्हि मम हृदयं कर्त्तृ त्वन्मये त्वदात्मके सम्पुटे पेटिकायां प्रविश्य तिरो-भूय स्मरस्य कामस्य आशुगेभ्यः शरेभ्यः न बिभेतु न भयं प्राप्नोतु, त्वया गुप्तस्य मद्धृदयस्य कुतः कामबाणाद्भयमिति भावः ॥ ११५ ॥

परिष्वजस्वेति। हे प्रिये ! त्वं परिष्वजस्व आलिङ्ग, तथा सति नौ आवयोः हृदयद्वये लग्ने गाढ़ालिङ्गनेन मिथः सङ्घटिते नीरन्ध्रे इति यावत् सति स्मरस्य कामस्य अनव-काशोऽलब्धलक्ष्यप्रदेशो बाणो यस्य स तथोक्तः तस्य भावः तत्ता विफलशरतेत्यर्थः अस्तु भवतु बाणस्य हृदये एव पातनं नियमः तस्मिंस्तु गाढ़ालिङ्गननिरन्तरे कामेन प्रक्षिप्तोऽपि बाणः अव-काशमलब्ध्वा पराङ्मुखत्वं लभतामिति भावः। तथा दृढ़ा वीरत्वादतिकठिना मम इयम् उरस्तटी वक्षःस्थलं कठोरयोः

तवाधराय स्पृहयामि यन्मधु-
स्रवैः श्रवःसाक्षिकमाक्षिका गिरः ।
अधित्यकासु स्तनयोस्तनोतु ते
ममेन्दुलेखाभ्युदयाद्भुतं नखः ॥ ११७ ॥

कठिनयोः तव कुचयोः परिचारिका सेविका उचिता अनुरूपा अस्तु इत्यनुषङ्गः । योग्यं योग्येन युज्यते इति नयेन समानगुणयोः सम्बन्धो युक्त इति मदीयं हृदयमेव तवालिङ्गनयोग्यमिति भावः । अत्र समालङ्कारः । सा समालङ्कृतिर्योगो वस्तुनोरनुरूपयोरिति तल्लक्षणात् ॥ ११६ ॥

तवेति । हे प्रिये ! अहं तव अधराय स्पृहयामि अधरं चुम्बितुम् अभिलषामि इत्यर्थः यस्य अधरस्य मधुस्रवैः मधुक्षरणैः गिरः वाचः श्रवसी कर्णौ साक्षिणौ यस्य तथोक्तं कर्णतृप्तिकरमिति भावः । माक्षिकं मधु यासु तथाभूताः अधरस्य अमृतमयत्वेन तदुत्पन्ना अपि वाचः कर्णामृतानि भवन्ति इति भावः । तथा मम नखः ते तव स्तनयोः अधित्यकासु उपरिभागेषु । उपत्यकाद्रेः आसन्ना भूमिरूर्ध्वमधित्यका इत्यमरः । उपाधिभ्यां त्यकन्नासन्नारूढ़योरिति त्यकन्प्रत्ययः । तेन च स्तनयोः अद्रिसाम्यं गम्यते । इन्दुलेखायाः चन्द्रकलाया अभ्युदयाद्भुतम् उदयाश्चर्यं तनोतु जनयतु । यथा चन्द्रकला उदयाद्रेरधित्यकायामुदिता लोकस्य चमत्कारिणी भवति तथा मदीयनखक्षतरेखा त्वदीयस्तनोपरि वर्त्तमाना सखीनां चमत्कारविधायिनी भवतु इति भावः । अहं तव अधरं पातुं स्तनौ करेण मर्दयितुमिच्छामि इति निष्कर्षः ॥ ११७ ॥

न वर्त्तसे मन्मथनाटिका कथं
प्रकाश्यरोमावलिसूत्रधारिणी ।
तवाङ्गहारे रुचिमेति नायकः
शिखामणिश्च द्विजराड्विदूषकः ॥ ११८ ॥

---

नेति । त्वं प्रकाशते इति प्रकाश्या स्पष्टमाभासमाना या रोमावलिः रोमराजिः सैव सूत्रं तद्धारिणी तव अङ्गहारे कण्ठभूषणविशेषे नायकः मध्यमणिविशेषः रुचिं शोभां दीप्तिमित्यर्थः । एति प्राप्नोति तत्र शिखामणिः शिरोरत्नञ्च द्विजराजं चन्द्रं द्विजराजः शशधरो नक्षत्रेशः क्षपाकर इत्यमरः । विशेषेण दूषयति निन्दतीति [तथाभूतः चन्द्रादपि समधिकसमुज्ज्वलः कान्त्येति भावः । अतः कथं मन्मथं कामं नाटयति नर्त्तयति उद्दीपयतीति भावः । सा मन्मथनाटिका न वर्त्तसे ? न भवसि ? अपितु वर्त्तसे एवेत्यर्थः । यौवनालङ्कारशोभिनी त्वं मम मन्मथोद्दीपनी भवसि इति भावः । आलम्बनगुणश्चैव तच्चेष्टा तदलङ्कृतिः । तटस्था चेति विज्ञेयः चतुर्धा दीपनक्रमः ॥ इति तल्लक्षणात् । अथच मन्मथस्य कवेः नाटिका उपरूपकविशेषः । सा च सूत्रधाररूपप्रधाननटवती, तस्याञ्च नायकः अङ्गहारे अङ्गविक्षेपे । अङ्गहारोऽङ्गविक्षेप इत्यमरः । रुचिं शोभाम् एति, तथा शिखायां मणिमान् शिखामणिः नायकपूज्यत्वात् चूड़ामणिश्च द्विजराट् ब्राह्मणः विदूषकः नायकस्य नर्मसचिवविशेषः अस्ति । नाटिकालक्षणमुक्तं साहित्यदर्पणे, नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका । प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः । स्यादन्तः सम्बन्धा सङ्गीतव्यापृताऽथवा । नवानुरागा कन्यात्र

गिरानुकम्पस्व दयस्व चुम्बनैः
प्रसीद शुश्रूषयितुं मया कुचौ ।
निशेव चान्द्रस्य करोत्करस्य यत्
मम त्वमेकासि नलस्य जीवितम् ॥ ११९ ॥
मुनिर्यथात्मानमथ प्रबोधवान्
प्रकाशयन्तं स्वमसाववुध्यत ।

---

नृपवंशजा । सम्प्रवर्त्तेत नैतास्यां देव्याः त्रासेन शङ्कितः । देवी पुनर्भवेत् ज्येष्ठा प्रगल्भा नृपवंशजा । पदे पदे मानवती तद्वशः सङ्गमो द्वयोः । वृत्तिः स्यात् कौशिकी स्वल्पविमर्षाः सन्धयः पुनः ॥ विदूषकलक्षणञ्चोक्तं तत्रैव यथा । कुसुमवसन्ताद्य-भिधः कर्मवपुर्वेशभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञ इति ॥ ११८ ॥

गिरेति । गिरा सम्भाषणवचसा अनुकम्पस्व दयस्व, चुम्बनैः चुम्बनदानैः दयस्व दयां कुरु । मया कुचौ स्तनौ शुश्रूषयितुं सेवितुं प्रसीद प्रसन्ना भूत्वा स्तनौ करेण मर्दयितुं देहीत्यर्थः । यद् यस्मात् चन्द्रस्यायं चान्द्रः तस्य चन्द्रसम्बन्धिन इत्यर्थः, करोत्करस्य किरणसमूहस्य निशेव रात्रिरिव एका केवला त्वं नलस्य मम इति आत्मनिर्देशः जीवितम् असि भवसि, नान्या कापि त्वत्तः प्रियतमा मेऽस्तीत्येवकारशब्देन गम्यते । त्वदेकायत्तजीवितं मां सम्भाषणादिना समुज्जीवयेति समुदायार्थः ॥ ११९ ॥

इत्थं मोहात् प्रलपन् तदपगमे किञ्चिदुपलब्धज्ञानः आत्मानं प्रकाशमानं मन्यमानः सनिर्वेदमाह मुनिरिति । अथ मोहा-पगमानन्तरम् असौ नलः मुनिर्यथा योगीव प्रबोधवान् उत्-

अपि प्रपन्नां प्रकृतिं विलोक्य ताम्

अवाप्तसंस्कारतयाऽसृजद्गिरः ॥ १२० ॥

अये ! मयात्मा किमनिह्नुतीकृतः

किमत्र मन्ता स तु मां शतक्रतुः ।

पुरः स्वभक्त्याथ नमन् क्रियाविलो

विलोकिताहे न तदिङ्गितान्यपि ॥ १२१ ॥

---

पक्वतत्त्वावबोधः सन् प्रकाशयन्तं प्रकटीभवन्तं स्वं स्वस्वरूपम् आत्मानञ्च अबुध्यत एवं प्रलपन्नहं नलोऽयमित्यनयञ्ज्ञात इति अमन्यतेत्यर्थः, ततश्च अवाप्तः प्राप्तः संस्कारः दूतोऽहमिति पूर्वज्ञानं येन तस्य भावः तत्ता तया हेतुना ताम् भैमीं प्रकृतिं स्वभावं प्रपन्नां नलोऽयमुपस्थितो मामनुकम्पते इति धिया सुस्थतां प्राप्तासि इत्यर्थः, विलोक्यापि दृष्ट्वापि गिरः वाचः दूतधर्मानुसारिणीरिति भावः । असृजत् उवाच इत्यर्थः । मुनिरपि लब्धात्मावबोधो भूत्वा आत्मानं स्वप्रकाशं बुद्ध्वा प्रकृतिं संसारम् आपन्नाम् आपन्नजननीमिति यावत् विलोक्य विज्ञाय अवाप्तसंस्कारतया उद्बुद्धपूर्वपूर्वजन्मान्तरीय-तत्तत्-पापानुष्ठानस्मरणादिति भावः । गिरः वाचः सृजति त्यजति निर्वेदात् मौनभावमवलम्बते इति निष्कर्षः । श्लेषमूलोपमालङ्कारः ॥ १२० ॥

अये इति । अये इति विषादे, अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि चेति मेदिनी । मया आत्मा स्वस्वरूपं किं किमर्थम् अनिह्नुतीकृतः प्रकाशित इत्यर्थः ? अयुक्तमेतत् कृतमिति भावः । अत्र आत्मप्रकाशने स शतक्रतुरिन्द्रस्तु किं मन्ता ? कीदृशं मंस्यते ? अपि तु कुत्सितमेव मंस्यते इत्यर्थः

स्वनाम यन्नाम मुधाभ्यधामहं महेन्द्रकार्य्यं महदेतदुज्झितम्।
हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः॥१२२॥

पुरोऽग्रे भादावित्यर्थः, स्वभक्त्या मयेदानीं भाविलः गर्हिताचरणेन कलुषितः भतएव ह्रिया लज्जया नमन् सन् तस्य शतक्रतोः इङ्गितानि भ्रूभङ्गादिकोपचेष्टितानि भपि न विलोकिताहे नावलोकयितुं प्राप्स्यामीत्यर्थः, भधोवदनत्वादिति भावः। तथा च तददर्शनेन तत्क्रोधज्ञानाभावात् तन्मार्जनोपायोऽपि न सम्भविष्यति इति भावः। सर्वथा देवेन्द्रे भहं नितरामपराद्ध इति तात्पर्य्यम्॥ १२१॥

स्वनामेति। मुधा निरर्थकं स्वनाम भयि प्रिये कस्य कृते इति प्रागुक्तश्लोकेन नलोऽहमिति स्वसंज्ञां यत् भभ्यधां नाम भवोचं खलु एतत् महत् भतिगुरु महेन्द्रकार्य्यं देवेन्द्रदूत्यम् उज्झितं परित्यक्तं नामकथनादेव देवेन्द्रदूत्यपरित्याग इत्यर्थः। तदेतदतीवायुक्तं कृतमित्याशयेनाह हनूमदिति। तथाहि हनूमदाद्यैः रामदूतादिभिः दूतपथः दूतमार्गः यशसा मया पुनः किन्तु द्विषां शत्रूणां हसैः हासैः स्वनहसोर्वेति भप्रत्ययः। सितीकृतः धवलीकृतः यशसो हासस्य च धावल्यं कविसमयसिद्धं तथा च दर्पणः। मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्त्योरिति। केचित् तु हासस्य धवलस्यापि शत्रुहासस्य मालिन्यापादकत्वात् धवलीकृतः मेचकीकृत इत्यर्थः, सितौ धवलमेचकावित्यमरः। इति व्याचक्षते। भत्र हनूमद्ग्रहणं पूर्वकल्पाभिप्रायेण भन्यथा कृतत्रेतावर्त्तिनोर्द्वयोः पौर्वापर्य्यविरोधः स्यादिति सुधीभिर्विभाव्यम्। भत्र उपमानादुपमेयस्य न्यूनतायां व्यतिरेकालङ्कारः तथा च दर्पणः। भाधिक्यमुपमेयस्योपमानात् न्यूनताथवा। व्यतिरेक इति॥ १२२॥

धियात्मनस्तावदचारु नाचरं
परस्तु यद्वेद स तद्वदिष्यति ।
जनावनायोद्यमिनं जनार्दनं
क्षये जगज्जीवपिबं वदन् शिवम् ॥ १२२ ॥
स्फुटत्यदः किं हृदयं त्रपाभरात्
यदस्य शुद्धिर्विबुधैर्विबुध्यताम् ।

---

धियेति । अहम् आत्मनो धिया निजबुद्ध्या निजबुद्धिदोषेण इत्यर्थः, असाधु अशोभनं स्वनामकथनरूपदेवकृत्यवैपरीत्यमिति भावः । तावत् साकल्येन सम्यगित्यर्थः, यावत्तावच्च साकल्ये इत्यमरः । नाचरं नाकरवं किन्तु उन्मादात् कृतवानेव इत्यर्थः । एवं गते जनानां लोकानाम् अवनाय रक्षणाय उद्यमिनम् उद्योगवन्तं विष्णुमिति शेषः । जनान् अर्दयतीति जनार्दनं लोकपीड़कम् अर्दपीड़ायामित्यस्मात् नन्द्यादित्वात् ल्युट्प्रत्ययः । तथा क्षये कल्पान्ते जगतां जीवान् पिबतीति पिबः तं जगत्संहर्त्तारमित्यर्थः रुद्रमिति शेषः । पाघ्रेत्यादिना शप्रत्ययः । शिवं शान्तं मङ्गलस्वरूपमिति भावः वदन् । परोऽन्यो जनः यत् वेद यथाश्रुतं यत् जानाति, स तत् वदिष्यति मया एतत् बुद्धिपूर्वकमबुद्धिपूर्वकं वा उक्तमेतदविचार्य्यैव यथाश्रुतं कथयिष्यति इत्यर्थः । यद्वा तु पुनः स प्रसिद्धो परो दुर्जन इत्यर्थः यद्वदिष्यति यदशोभनं कीर्त्तयिष्यति तदहं वेद जानामि इत्यर्थः । दुर्जनो हि यथावृत्तं नैव वदति केवलं दुर्भाषित्वात् विपरीतमेव ख्यापयतीति भावः । तथाच पुराणम्, विष्णुः प्रजाः पालयति हरः संहरति क्षये इति॥१२

स्फुटतीति । अदः इदं हृदयं त्रपाभरात् आत्मप्रकाशे

विदन्तु ते तत्त्वमिदन्तु दन्तुरं
जनानने कः करमर्पयिष्यति ॥ १२४ ॥
मम श्रमश्चेतनयानया फली
बलीयसाऽलोपि च सैव वेधसा।
न वस्तु दैवस्वरसाद्विनश्वरं
सुरेश्वरोऽपि प्रतिकर्त्तुमीश्वरः ॥ १२५ ॥

---

दौत्यासम्पादनेन च जनितात् लज्जातिशयात् स्फुटति किम्? विदीर्णं भविष्यति किम्? आशंसायां भूतवच्चेति चकारादाशंसायां भविष्यदर्थे वर्त्तमानप्रयोगः। यद् यस्मात् स्फुटनात् अस्य हृदयस्य शुद्धिः निर्दोषता विबुधैर्देवैः विबुध्यतां विशेषेण ज्ञायतां हृदयस्फोटनेन हृदयान्तःस्थितं मदीयं पापमपापं वा आशयं देवा ज्ञातुं शक्ष्यन्तीति भावः। ननु हृदयस्फोटने किं प्रयोजनं यतो देवास्तेऽन्तर्यामित्वात् सर्वमेव जानन्तीत्याशयेनाह, विदन्त्विति। ते देवा इन्द्रादयः तत्त्वं याथार्थ्यं विदन्तु जानन्तु सम्भावनायां लोट्। हृदयस्फोटनेन अन्तर्यामित्वेन च मदीयहृदयशुद्धिज्ञानात् तेषां तुष्टिः सम्भाव्यते इति भावः। तु किन्तु जनानां दुर्जनानाम् आनने मुखे को जनः करं हस्तम् अर्पयिष्यति? दास्यति? न कोऽपि खलवदनं वारयितुं शक्नोतीत्यर्थः। इदं दुर्जनमुखे करप्रदानमित्यर्थः दन्तुरमतिविषममित्यर्थः। जना हि बुद्धिपूर्वकमेव एतदनेन कृतमिति वदिष्यन्ति निरङ्कुशा दुर्जना इति भावः॥ १२४॥

ममेति। मम श्रमः दूत्यकर्मणि प्रयासः अनया पुनरुत्पन्नया चेतनया दूतोऽहमित्येव बुद्ध्या फली फलवान् भवेदिति शेषः। किन्तु सैव चेतनैव बलीयसा अतिप्रबलेन वेधसा

इति स्वयं मोहमयोर्मिनिर्मितं प्रकाशनं शोचति नैषधे निजम्।
तथाव्यथामग्नतदुद्दिधीर्षया दयालुरागाल्लघु हेमहंसराट्॥१२६
नलं स तत्पञ्जरवीक्षवीक्षितं स एष पक्षीति भणन्तमभ्यधात्।
नयादयेनामति मा निराशता मसूनू विज्ञातियमतःपरं परम्१२७

विधिना दैवेन इत्यर्थः पलोपि नाशिता दुर्दैववशात् मया उन्म-
त्तेन आत्मप्रकटनं कृतमिति भावः। ननु चेतनारक्षणे किमिति
यत्नो न कृत इत्यत्राह नेति। दैवस्वरसाद् दैववशात् विनश्वरं
विनाशोन्मुखं वस्तु सुरेश्वरोऽपि इन्द्रोऽपि महेश्वरोऽपीति पाठे
महेश्वरोऽपि शिवोऽपि प्रतिकर्त्तुं प्रतिविधातुं दैवं निराकृत्य
रक्षितुमित्यर्थः। न ईश्वरः न समर्थः मादृशेषु का कथेत्यपि
शब्दार्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥२१५॥
इत्थं शोचति नले हंसस्तत्रागत इत्याह, इतीति। नैषधे
नले इतीत्थं स्वयम् आत्मना मोहमयेन ऊर्मिणा तरङ्गेण अज्ञान-
विलसितेनेत्यर्थः। निर्मितं जनितं निजप्रकाशं स्वनामकथना-
दिना स्वस्वरूपप्रकटनं शोचति तद्विषयपर्य्यालोचनया अनु-
तापं कुर्वति सतीत्यर्थः। हेमहंसराट् सुवर्णहंसाधिपतिः द-
यालुः कृपावान् सन् तथा तादृशी या व्यथा मनस्तापः सागर
इवेति भावः। तत्र मग्नस्य तस्य नलस्य उद्दिधीर्षया उद्धारे-
च्छया तद्व्यथापनोदनार्थमिति भावः। धरतेरुत्पूर्वात् सन्न-
न्तात् स्त्रियामप्रत्यये टाप्। लघु शीघ्रं सद्य एवेत्यर्थः लघु
क्षिप्रमरं द्रुतमित्यमरः। आगात् तत्रागतवान्। अन्योऽपि
जलमग्नं दृष्ट्वा कृपया तदुद्धारार्थं गच्छतीति गम्यते॥१२६॥
नलमिति। स हंसराट् तस्य हंसस्य आत्मन इति भा॰
पञ्जरवेण निर्मित्तेन ऊर्द्ध्वं वीक्षते इति तथोक्तं तम्

सुरेषु पश्यन्निजसापराधता-
मियत्प्रयस्यापि तदर्थसिद्धये।
न कूटसाक्षीभवनोचितो भवान्
सतां हि चेतःशुचितात्मसाक्षिका॥ १२८॥

---

कर्णत्वेन ऊर्द्ध्वमवलोकयन्तमिति यावत्। एष दृश्यमानः स एव पक्षी हंस इति भणन्तं कथयन्तं नलं-अभ्यधात् उवाच। हे अदय! निर्दय! एनां दमयन्तीम् अतिनिराशताम् अति-शयेन नैराश्यं मा नय न प्रापय कुत इत्याह इयं दमयन्ती अतःपरं परं केवलम् असून् प्राणान् विहाता विहास्यति जहाते-र्लुट्। त्यक्ष्यतीत्यर्थः तदेवं यशःकाङ्क्षिणा त्वया स्त्रीवधपातः किना न भवितव्यमिति भावः॥ १२७॥

सुरेष्विति। हे नल! भवान् तदर्थसिद्धये तेषां सुराणां कार्य्यसिद्ध्यर्थम् इयत् प्रयस्यापि एतावन्तं प्रयासं कृत्वापि यसुप्रयत्ने इति धातोः समासे क्त्वो ल्यबादेशः। सुरेषु देवेषु विषये निजसापराधतां स्वस्यानुचितकारित्वमित्यर्थः, पश्यन् विचारयन् सन् कूटसाक्षीभवनोचितः कुटसाक्षिणो भवनं कपटसाक्षिभावः। तत्र उचितः अभूततद्भावे च्विप्रत्ययः। न भव-तीति शेषः। ज्ञानपूर्वकं अन्यथाभाषणमेव कपटसाक्षित्वं तत्तु ते नास्तीति कुतस्ते सापराधत्वशङ्केति भावः। हि तथाहि सतां साधूनां चेतसः चित्तस्य शुचिता निर्दोषता आत्मैव साक्षी यस्याः सा आत्मसाक्षिका स्वप्रमाणिका भवतीति शेषः। आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मन इति वचनात्। तदलमात्मदोषसम्भावनाजनितेन विषादेन इति भावः। सामा-न्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ १२८॥

इतीरिणापृच्छ्य नलं विदर्भजामपि प्रयातेन खगेन सान्त्वितः।
मृदुर्बभाषे भगिनीं दमस्य स प्रणम्य चित्तेन हरित्पतीन्नृपः१२९

ददेऽपि तुभ्यं कियतीः कदर्थनाः सुरेषु रागप्रसवावकेशिनीः।
अदम्भदूत्येन भजन्तु वा दयां दिशन्तु वा दण्डममी ममागसा१३०

इतीति। इति उक्तप्रकारं यथा तथा ईरिणा कथयता खगेन पक्षिणा हंसेन नलं विदर्भजामपि दमयन्तीञ्च आपृच्छ्य साधु यामीति सम्बोध्य प्रयातेन गतेन गन्तुमुद्यतेन इत्यर्थः, सान्त्वितः आश्वासितः स नृपः हरित्पतीन् दिक्पालान् इन्द्रादीन् चित्तेन मनसा प्रणम्य मृदुर्दयार्द्रचित्तः सन् दमस्य भगिनीं दमयन्तीं बभाषे उवाच॥ १२९॥

किमित्याह ददे इति। हे प्रिये! सुरेषु देवेषु रागः अनुरागः तस्य प्रसवे उत्पादने अवकेशिनीः वन्ध्याः अधमा इत्यर्थः, वन्ध्योऽफलोऽवकेशी चेत्यमरः। कियतीः इयत्तारहिता इत्यर्थः, कदर्थनाः क्लेशान् तुभ्यमपि अतिप्रियायै इति अपिशब्देन गम्यते। ददे दत्तवानस्मि। सुरेषु अनुरागवर्द्धनार्थं त्वां बहुभिरलीकवचोभिर्वृथा क्लेशितवानस्मि इत्यर्थः, इत्यक्ते अमी देवाः अदम्भेन अकापटेन दूत्येन दूतकार्य्येण कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इत्यमर। दयां मयि कृपां दिशन्तु वा कुर्वन्तु वा, आगसा अपराधेन मत्कृतेन इति शेषः हेतुना दण्डं दिशन्तु वा कुर्वन्तु वा, यदि मम दौत्ये अकापट्यं स्यात् तदा अमी मयि अनुकम्पिष्यन्ते यदि अपराधं मन्यन्ते तदा दण्डं विधास्यन्ति। तद् यावदहमितःपरं न त्वां कदर्थयामी निष्कर्षः॥ १३०॥

अयोगजामन्वभवं न वेदनां हिताय मेऽभूदियमुन्मदिष्णुता ।
उदेति दोषादपि दोषलाघवं कृशत्वमज्ञानवशादिवैनसः॥१११॥
तवेत्ययोगस्मरपावकोऽपि मे कदर्थनात्यर्थतयागमद्दयाम् ।
प्रकाशमुन्माद्य यदद्य कारयन्मयात्मनो मामनुकम्पतेस्म सः॥११२॥

अयोगजामिति। इयम् उन्मदिष्णुता उन्मादावस्था अलं-कृञित्यादिना इष्णुच्प्रत्ययः। मे मम हिताय हितार्थम् अभूत् यतः अयोगजां वियोगजनितां वेदनां नान्वभवं नानुभूत-वानस्मि इत्यर्थः। उन्मादावस्थायां दुःखस्यापि दुःखत्वेन अननु-भवादिति भावः। तथाहि अज्ञानवशात् अज्ञानरूपदोषा-द्धेतोः एनसः पापस्य कृशत्वम् अल्पत्वमिव दोषादपि दोषाणां लाघवं ह्रास इत्यर्थः, उदेति यथा अज्ञानकृतस्य पापस्य ज्ञानकृतपापापेक्षया लघुत्वं धर्मशास्त्रेषु उक्तं तथा उन्माद-रूपदोषात् दोषस्य वियोगजनितवेदनारूपस्य लाघवं भव-तीत्यर्थः, दोषादपि उन्मादरूपाच्चित्तविकारात् दोषस्य स्वनाम-कीर्त्तनरूपस्य लाघवमिति विज्ञाय देवा न मह्यं तथा कुप्य-न्तीति ध्वन्यते। यदि चोन्मादो दोष एव तथापि मम विरह-पीड़ानुभवस्य प्रतिबन्धकत्वात् गुण एवेति तात्पर्य्यम् ॥ १११ ॥

तवेति। अयोगस्मरपावकः त्वद्वियोगजनितकामाग्निः तव इति पूर्वोक्तप्रकारेण कदर्थनात्यर्थतया अतिशयेन कदर्थी-करणेन मे मम दयाम् अगमत् दयां कृतवानित्यर्थः, यद् यस्मात् अद्य सः अयोगस्मरपावकः उन्माद्य माम् उन्मत्तं कृत्वा मया प्रयोज्येन कर्त्रा आत्मनः स्वस्य मत्स्वरूपस्य इत्यर्थः, प्रकाशं कारयन् माम् अनुकम्पते स्म अनुगृहीत-

अमी समीहैकपरास्तवामराः
स्वकिङ्कर मामपि कर्त्तुमीशिषे।
विचार्य्य कार्य्यं सृज मा विधान्मुधा-
कृतानुतापस्त्वयि पार्ष्णिविग्रहम् ॥ १३३ ॥
उदासितेनैव मयेदमुच्यसे
भयान्न तेभ्यः स्मरतानवान्न वा।

---

वान्। किं बहुना उन्मादस्तथा उपचकार यथा आवां द्वावपि कृतार्थौ जाताविति निष्कर्षः ॥ १३२ ॥

अमी इति। अमी अमराः देवाः तव समीहायां प्राप्तिचेष्टायाम् एकपरा एकाग्राः वर्त्तन्ते इति शेषः। त्वन्तु मामपि अपिकारात् तान् देवांश्च स्वकिङ्करं स्वसेवकं कर्त्तुम् ईशिषे शक्नोषि ईशः से इति ईड़ागमः। इन्द्रादिवरणे मद्वरणे च तव यथेच्छं योग्यतास्तीति भावः। तदत्र कार्य्यं कर्त्तव्यवस्तु विचार्य्य निर्द्धार्य्य सृज कुरु विचारकर्त्तव्यतायां हेतुमाह मेति। कृतस्य अनुतापः कथमेत् मया कृतमित्येवं पश्चात्तापः त्वयि पार्ष्णिविग्रहं पृष्ठानुधाविनः शत्रोः विग्रहं विरोधं तादृशं दुःखमिति भावः। मुधा मिथ्या मा विधात् मा कार्षीत्। अविचार्य्य इन्द्रादि देवानामन्यतमे वृते यदि मनसो न प्रीतिः स्यात् तदा किमिति नलमहं नावरिषं तथा मयि नले वृते यदि ते तथा मनःप्रीतिर्नजायते तदा कथमहं देवं कमपि नावरिषम् एवंरूपं यथा न भवेत् तथा विचार्य्य कार्य्यं क्रियतामिति तात्पर्य्यम्। अस्मादेव कारणात् विजिगीषुर्य्यद्वार्थं यात्राकाले पार्ष्णिग्राहं शोधयतीति गम्यते ॥ १३३ ॥

यदेतन्मयोक्तं तत् माध्यस्थ्येन न तु पक्षपातेनेत्याह,

हितं यदि स्यान्मदसुव्ययेन ते
तदा तव प्रेमणि शुद्धिलब्धये ॥ १३४ ॥

इतीरितैर्नैषधसूनृतामृतैर्विदर्भजन्मा भृशमुल्ललास सा ।

सितेनेति । उदासितेन औदासीन्येन माध्यस्थ्येन इत्यर्थः, भावे क्तः । यद्वा उदासितेन मध्यस्थेन कर्त्तरि क्तः । मया इदम् अमी समीहैकपरास्तवामराः स्वकिङ्करं मामपि कर्त्तुमीशिषे इति प्रागुक्तं वचनम् उद्यसे कथ्यसे वदेः कर्मणि लटि यकि वचिस्वपि इत्यादिना सम्प्रसारणम् । तेभ्यः सुरेभ्यः इन्द्रादिभ्यः भयात् न, स्मरतानवात् कामजनितस्वीयकार्श्यात् भयाद् वा न, इन्द्रादिभीत्या नाहम् अमी समीहैकपरास्तवामरा इति ब्रवीमि, मद्वरणाभावे नाहं कामपीड़ातिशयात् क्षमी· भविष्यामीति भीत्या वा स्वकिङ्करं मामपि कर्त्तुमीशिषे इति ब्रवीमीत्यर्थः किन्तु अपक्षपातित्वेन सर्वं मया पूर्वमुक्तमिति भावः । अथ विसृश्यैव देवे मया वृते तव का गतिरित्यत्राह यदि मम असुव्ययेन प्राणदानेन ते तव हितं स्यात् तदा तव प्रेमणि अनुरागे विषये शुद्धिलब्धये आनृण्यलाभाय सः असुव्यय इति शेषः भवति । देववरणे कामपीड़या मम मृतिरेव स्यात् किन्तु सा तव प्रेमानृण्यलाभात् मम श्रेयस्करी इति भावः । यद्वा विसृश्यैव त्वयि वृते देवानां कोपः स्यात् तत्र का गतिरत्यत्राह यदि मम असुव्ययेन ते तव हितं तदा सोऽपि असुव्ययः तव प्रेमणि शुद्धिलब्धये आनृण्यलाभाय भवति अहं प्राणार्पणेन देवेभ्यः कुपितेभ्यस्त्वां माक्ष रक्षिष्यामीति तात्पर्य्यम् ॥ १३४ ॥

इत्थमस्य वचनश्रवणेन भैम्या हर्षमाह इतीति । सा

ऋतोरधिश्रीः शिशिरानुजन्मनः पिकस्वरैर्दूरविकस्वरैर्यथा १३५

नलं तदावेत्य तमाशये निजे
घृणां विगानञ्च मुमोच भीमजा ।
जुगुप्समाना हि मनो द्रुतं तदा
सतीधिया दैवतदूतधावि सा ॥ १३६ ॥

---

विदर्भजन्मा दमयन्ती इतीत्थम् ईरितैः उक्तैः नैषधस्य नलस्य सूनृतानि प्रियसत्यवचनानि एव अमृतानि तैः शिशिरात् अनु पश्चात् जन्म यस्य तस्य ऋतोः वसन्तस्य इत्यर्थः, अधिका महती श्रीः समृद्धिः शोभा वा दूरं यथा तथा विकसन्तीति दूरविकस्वराः अतिशयाश्राव्या इत्यर्थः, तैः पिकस्य कोकिलस्य स्वरैः यथा भृशमत्यर्थम् उल्ललास जहर्ष । उपमालङ्कारः तेन नलवचनस्य कोकिलकूजितवदुद्दीपकत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १३५ ॥

नलमिति । तदा तस्मिन् काले नलस्य स्वरूपगोपनकाले दैवतदूते धावतीति दैवतदूतधावि देवदूतोऽयमिति निश्चित्वानमिति भावः। मनः सतीधिया पतिव्रता अहं कथमनेन सह सम्भाषे इति बुद्ध्या जुगुप्समाना बीभत्समाना सा भीमजा दमयन्ती तदा नलस्य स्वरूपप्रकटनकाले तं दूतं नलमवेत्य विज्ञाय निजे आशये हृदि घृणामवज्ञां परपुरुषसम्भाषणजनितामिति भावः विगानञ्च धिङ्मामित्यात्मनिन्दाञ्च द्रुतं शीघ्रं सपदीत्यर्थः, मुमोच तत्याज । द्रुतमित्यत्र धृतमिति पाठे दैवतदूतधावि देवदूते प्रसक्तं किन्तु सतीधिया पतिव्रता कथमहम् अनेन परपुरुषेण आलपामीति बुद्ध्या नियन्त्रि मनः जुगुप्समाना हि बीभत्समानैव सा इति योजना ॥१३६॥

मनोभुवस्ते भविनां मनः पिता
निमज्जयन्नेनसि नैव लज्जसे।
अमुद्रि सत्पुत्त्रकथा त्वयेति सा
स्थिता सती मन्मथनिन्दिनी धिया॥ १३७॥

प्रसूनमित्येव तदङ्गवर्णना
न सा विशेषात् कतमत्तदित्यभूत्।
तदा कदम्बं तदवर्णि रोमभिः
मुदश्रुणा प्रावृषि हर्षमागतैः॥ १३८॥

मनोभुव इति। हे मदन! मनसः भूः उद्भवः यस्य तस्य मनोभुवः मनोजस्य ते तव पिता जनकः। तातस्तु जनकः पिता इत्यमरः। भविनां संसारिणां जनानां मनः। तत्पितरं मनः एनसि पापे निमज्जयन् पातयन् न लज्जसे? न लज्जितो भवसि? काकुः अपितु तव लज्जितत्वं युक्तमेवेत्यर्थः। त्वया इत्थं दुश्चरित्रेण इति भावः। सन् पुत्रः सत्पुत्रः तस्य कथा यद्वा सती शोभना पुत्रस्य कथा पुत्रेण लोकान् जयतीत्यादि-स्मृतिवचनमित्यर्थः। अमुद्रि मुद्रिता विलोपं नीतेत्यर्थः। इत्येवं प्रकारेण धिया बुद्ध्या मनसेत्यर्थः। मन्मथं कामं निन्दतीति तथोक्ता कामपीड़या व्यथितत्वात् तच्चरित्रं गर्हयन्तीत्यर्थः। सती पतिव्रता सा दमयन्ती स्थिता कियन्तं कालं तस्थौ इत्यर्थः॥ १३७॥

अथास्या हर्षेणाश्रुरोमाञ्चौ जातावित्याह, प्रसूनमिति। तस्या भैम्या अङ्गवर्णना प्रसूनं पुष्पमित्येव अभूत् तदङ्गं सामान्यतः पुष्पमिति वर्णितमभूदित्यर्थः सा अङ्गवर्णना कतमत् तत् किं जातीयं कुसुममिति विशेषात् नाभूत् तदङ्गं किं पुष्प-

मयैव संबोध्य नलं व्यलापि यत्
स्वमाह मद्वृत्तमिदं विमृश्य तत् ।
असाविति भ्रान्तिमग्राहमस्वसुः
स्वभाषितस्तोद्गमविभ्रमक्रमः ॥ १३९ ॥

---

मिति विशेषेण नैव वर्णितमासीदित्यर्थः । तदा तस्मिन् समये नलोऽयमिति निश्चयावधारणसमये इत्यर्थः, मुदश्रुणा आनन्दवाष्पेण प्रावृषि वर्षाकाले सति हर्षमागतैः हर्षितैः इत्यर्थः । विकासं प्राप्तैरित्यर्थः । रोमभिः लोमभिः तत् तदङ्गरूपं कुसुमं कदम्बं अवर्णि कदम्बकुसुममिति वर्णितम् आसीदिति शेषः । प्रावृषि कदम्बकुसुमानि सकण्टकानि विकसन्ति । भैम्या अङ्गं तदानीं आनन्दाश्रुसिक्तं रोमाञ्चितञ्च सत् वर्षाभवसकण्टककदम्बकुसुमसदृशं जातमिति निष्कर्षः । तदवर्णीत्यत्र निरवर्णीति पाठे निरवर्णि अदर्शीत्यर्थः । निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणमित्यमरः । एतत् च स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यं वेपथू । अश्रु वैस्वर्य्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः । इत्युक्त समस्तसात्त्विकभावोपलक्षणम् । तदङ्गस्य कदम्बाभेदोक्तः भेदेऽप्यभेद इत्यतिशयोक्तिभेदः ॥ १३८ ॥

मयैवेति । मयैव नलं सम्बोध्य इयं न ते नैषध इत्यादिश्लोकेन ननु सम्बोधनपदानि उक्त्वा यद् व्यलापि विलपितम् असौ नलः तत् विलपितं विमृश्य विभाव्य विविच्येत्यर्थः । मद्वृत्तं मया ज्ञातं स्वमात्मानं स्वो ज्ञातावात्मनि स्वमित्यमरः । आह अयि प्रिये कस्य कृते विलप्यते इत्यादिश्लोकैः कथयति स्म प्रकाशितवानित्यर्थः । आहेति भूते मलभ्रमादिति वामनः । अत्र तु वर्त्तमानसामीप्याद् वा गतिरिति । इति एवंरूपा

विदर्भराजप्रभवा ततः परं त्रपासखी वक्तुमलं न सा नलम् ।
पुरस्तमूचेऽभिमुखं यदत्रपा ममज्ज तेनैव महाह्रदे ह्रियः १४०
यदापवार्य्यापि न दातुमुत्तरं शशाक सख्याः श्रवसि प्रियाय सा ।

---

दमस्वसुः दमयन्त्याः भ्रान्तिं भ्रमं स्वेन नलेन भाषितः अये मया किमनिह्नुतीकृतः इत्यादिश्लोकैः प्रकाशित इत्यर्थः । स्वस्य आत्मनः उद्भ्रमविभ्रमस्य उन्मादविलसितस्य क्रमः अवस्थाविशेषः अशात् शमयामास निराचकारेत्यर्थः । मया ज्ञातमात्मानं बुद्ध्वेव नल आत्मानं प्रकाशयामासेति स्वां भ्रान्तिं नलस्य उन्मादविलसितश्रवणेन सा तत्याजेति भावः । यद्वा स्वेन भाषितः कथितः स्वोद्भ्रमस्य स्वकीयोन्मादविलसितस्य क्रमः प्रकारो येन तथाभूतः सन् असौ नलः तां भ्रान्तिम् अशात् खण्डयामासेत्यर्थः । इदन्तु व्याख्यानं न सम्यगिव प्रतिभातीति बोध्यम् ॥ १३९ ॥

अथासौ लज्जातिरेकात् किमपि वक्तुं न शशाकेत्याह, विदर्भेति । सा विदर्भजा दमयन्ती ततः परं नलोऽयमिति ज्ञानानन्तरं त्रपायाः सखी सहचारिणी लज्जितेत्यर्थः, सती नलं वक्तुं न अलं साक्षात् सम्भाषितुं न शशाकेत्यर्थः । कथमित्याह पुर इति । यद् यस्मात् पुरः पूर्वं अत्रपा पूर्वमलज्जा सती तं नलम् अभिमुखं यथा तथा ऊचे उवाच तेनैव हेतुना ह्रियः लज्जायाः महाह्रदे महति लज्जासरसि इत्यर्थः । ममज्ज मग्ना अभूत् । प्रागपरिचितं पुरुषं समक्षमाभाष्य पश्चात् तं स्वनायकत्वेन निश्चित्य अतितरां लज्जते स्त्रिय इति भावः ॥ १४० ॥

यदेति । सा दमयन्ती यदा अपवार्य्य व्यवधायापि मुखं

विह्वस्य सख्येव तमब्रवीत्तदा ह्रियाधुना मौनधना तव प्रिया॥१४१॥
पदातिथेयावलिखितस्य ते स्वयं वितन्वती लोचननिर्झरानियम्।
जगाद यां सैव मुखान्मम त्वया प्रसूनबाणोपनिषन्निशम्यताम्॥१४२॥
असंशयं स त्वयि हंस एव मां शशंस न त्वद्विरहाप्तसंशयाम्।
क्व चन्द्रवंशस्य वतंस ! मद्विधानृशंसता सम्भविनी भवादृशे॥१४३॥

---

परावृत्त्यापि सख्याः श्रवसि कर्णे लगित्वेति भावः। प्रियाय नलाय उत्तरं दातुं न शशाक लज्जातिरेकादिति भावः। तदा सखी एव विह्वस्य तं नलम् अब्रवीत् किमित्याह, ह्रियेति। अधुना तव प्रिया ह्रिया मौनमेव धनं यस्याः तथाभूता जातेति शेषः लज्जया किमपि वक्तुं न शक्नोतीति भावः॥ १४१ ॥

पदेति। इयं दमयन्ती लोचनयोः नेत्रयोः निर्झरान् नयनजलप्रवाहान् लिखितस्य चित्रार्पितस्य ते तव पदयोरातिथेयान् अतिथिषु साधून् पादप्रक्षालनार्थान् इत्यर्थः। पथ्यतिथि वसति स्वपतेर्ढञ्। वितन्वती कुर्वती सती स्वयं यां प्रसूनबाणस्य कामस्य उपनिषदं रहस्यं जगाद उक्तवती प्रागिति शेषः सैव प्रसूनबाणोपनिषत् मम मुखात् त्वया निशम्यतां श्रूयताम्॥ १४२ ॥

तामेवाह, असंशयमिति। हे चन्द्रवंशस्य वतंस! भूषण! वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः इत्यकारलोपः। स हंसः मां तव विरहेण आप्तः प्राप्तः संशयः प्राणसन्देहः यया तथाभूताम् असंशयं निश्चितं त्वयि विषये त्वत्समीपे वा न शशंसैव नैव जगादेत्यर्थः अन्यथा भवादृशे महानुभावे इति भावः। त्यदादिष्वित्यादिना कञ्प्रत्ययः। सर्वनाम्न इत्याकारादेशः। मद्विधात् मम मारणहेतोः नृशंसता घातुकत्वं क्रौर्यत्वाका-

जितस्त्वयास्येन विधुः स्मरः श्रिया
कृतप्रतिज्ञौ मम तौ वधे कुतः।
तवेति कृत्वा यदि तज्जितं मया
न मोघसङ्कल्पधराः किलामराः॥ १४४॥

---

रित्वमित्यर्थः। नृशंसो घातुकः क्रूर इत्यमरः। क्व सम्भविनी ? सम्भविता ? नैव सम्भविनीत्यर्थः। ममैतादृशी भवस्था हंसेनैव त्वत्समीपे नोक्ता तस्मादत्र भवतो न कोऽपि दोष इति भावः। अत्र चन्द्रवंशावतंसस्य ईदृगकार्य्यकरणस्य च सङ्घटनाद् विरूपयोः सङ्घटनेत्युक्तविषमालङ्कारः॥ १४३॥

जित इति। त्वया आस्येन मुखेन विधुः चन्द्रो जितः, श्रिया, रूपशोभया स्मरः कामः जितः, तौ विधुस्मरौ मम अनपराधाया इति भावः। वधे कुतः कस्मात् कारणात् कृता प्रतिज्ञा याभ्यां तौ भैमीं बधिष्याव इति प्रतिज्ञां कृतवन्तौ ? त्वया जितत्वात् त्वामेव जिघांसेतां मम तु कोऽपराधः यत्तौ मां पीड़यत इति भावः। यदि तव अहमिति शेषः इति कृत्वा मत्वेत्यर्थः मद्वधे कृतप्रतिज्ञौ स्त इति शेषः। तत् तदा मया जितं त्वां विना जीवनधारणस्य निष्प्रयोजनत्वात् मरणमेव प्रियमथवा निश्चितं तवैव प्रिया भविष्यामि इति उल्लसितया स्थितमित्यर्थः। तथाहि अमरा देवा मोघः विफलः यः सङ्कल्पः तस्य धरन्तीति धराः पचाद्यच् न किल नैवेत्यर्थः देवा यत् यत् मनसि कुर्वन्ति तत् तदा एव सम्पद्यते तदेवं विधुस्मरौ देवौ अहं तव प्रियेति यदि मनसा निश्चितवन्तौ तदाहं तवैव प्रिया भविष्यामि इति निश्चयात् मया जितमिति निष्कर्षः। अत्र विधुस्मरयोः लज्जितयोः त्वदीयजनापकारकथनात् प्रत्यनीका-

निजांशुनिर्दग्ध मदङ्गभस्मभिः
मुधा विधुर्वाञ्छति लाञ्छनोन्मृजाम् ।
त्वदास्यतां यास्यति तावतापि किं
वधूवधेनैव पुनः कलङ्कितः ॥ १४५ ॥
प्रसीद यच्छ स्वशरान् मनोभुवे
स हन्तु मां तैर्धृतकौसुमाशुगः ।

---

लङ्कारः । तथाचोक्तं दर्पणकारेण, प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि । तदीयस्य तिरस्कारः तस्यैवोत्कर्षसाधक इति ॥ १४४ ॥

निजेति । विधुः चन्द्रः निजैः अंशुभिः किरणैः निर्दग्ध निःशेषेण भस्मीकृतं यत् ममाङ्गं मम शरीरं तस्य भस्मभिः लाञ्छनोन्मृजां कलङ्कमार्जनं मुधा निरर्थकं वाञ्छति अभिलषति षिद्भिदादिभ्योऽङ् । अकलङ्कस्य त्वन्मुखस्य साम्यलाभाय इति भावः । तावतापि मदङ्गभस्मना कलङ्कप्रोञ्छनेनापि तव आस्यतां मुखत्वं त्वन्मुखतुल्यतामिति भावः यास्यति किम् ? प्राप्स्यति किम् ? नैव यास्यति एवेत्यर्थः । यतः वधूवधेन मद्वधेनेत्यर्थः पुनः कलङ्को जातोऽस्येति कलङ्कितः अस्य जाते इतच्प्रत्ययः । यदि च मदङ्गभस्मना पूर्वसञ्चितकलङ्कापगमो भवेत् तथापि पुनः वधूवधेन कलङ्कित्वात् तद्दोषतादवस्थ्यमिति वृथा मद्वधार्थं प्रयास इति भावः । त्वद्विरहे चन्द्रो मामतीव पीड़यति स्म इति तात्पर्य्यम् । अत्र आरब्धस्य वैफल्यमनर्थोत्पत्तिश्चेति विषमालङ्कारभेदः ॥ १४५ ॥

प्रसीदेति । हे नाथ ! प्रसीद प्रसन्नो भव, मनोभुवे कामाय स्वशरान् निजलोहमयबाणान् यच्छ देहि पाशाद्भिन्ना

(१) न—६८

त्वदेकचित्ताहमसून् विमुञ्चती
त्वमेव भूत्वा तृणवज्जयामि तम्॥ १४६ ॥
श्रुतिः सुराणां गुणगायनी यदि
त्वदङ्घ्रिमग्नस्य जनस्य विस्मृतः।
स्तवे रवेरप्यु कृताप्लवैः कृते न
मुद्वती जातु भवेत् कुमुद्वती ॥ १४७ ॥

दानी यच्छादेशः। छृताः कौसुमाशुगाः पुष्पमयाः आशुगाः शरा येन सः कामः तैः त्वद्दत्तैः शरैः इत्यर्थः मां हन्तु छिनत्तु तस्य कौसुमेन शरेण मम पीड़नमेव जातं न तु मारणम् अधुना त्वद्दत्तलोहशरप्रहारेण मम वधो भविष्यतीति भावः। ननु एतावता कस्ते लाभ इत्यत्राह त्वमेव एकः चित्ते यस्याः सा त्वच्चिन्तनैकपरेत्यर्थः अहम् असून् प्राणान् विमुञ्चती त्यजन्ती सती आच्छीनद्योर्नुमिति विकल्पात्नुमभावः। अतएव त्वमेव भूत्वा त्वद्रूपेणोत्पद्य तं कामं तृणवत् तृणेन तुल्यं यथा तथा जयामि जेष्यामि इत्यर्थः आशंसायां वर्त्तमानप्रयोगः। मरणे यादृशी जन्तोर्भावना यस्य जायते। तादृशं लभते जन्म स भूयोऽपि स्वकर्मभिः। इति वचनात्। यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय! सदा तद्भाव-भावितः॥ इति गीतावचनाच्च॥ १४६ ॥

ननु श्रुतयोऽपि देवानेव स्तुवन्ति तत्कथं तेषु ते विराग इत्यत्राह श्रुतिरिति। श्रुतिर्वेदः यदि सुराणां देवानां गुणान् गायतीति गुणगायिनी गुणस्तवकारिणी भवति इति शेषः। आव्दिकर्त्तरि ण्युट् टित्वात् ङीप्। ततः तेन श्रुतिकर्त्तृकदेव-स्तोत्रेण इत्यर्थः तत्राह। तव चरणे मग्नस्य त्वच्चरणैकशरणस्य

कथासु शिष्ये वरमद्य न म्रिये
ममावगन्तासि न भावमन्यथा।
त्वदर्थमुक्तासुतयाशु नाथ! मां
प्रतीहि जीवाभ्यधिक! त्वदेकिकाम्॥ १४८॥

---

इत्यर्थः जनस्य मल्लघणस्य इत्यर्थः किम्? अपितु न किमपि इत्यर्थः। तथाहि अप्सु जलेषु कृतः आप्लवः अवगाहनं यैः तैः ब्राह्मणादिभिः इति शेषः। रवेः सूर्य्यस्य स्तवे स्तुतौ कृते सति कुमुदानि अस्याः सन्तीति कुमुद्वती कुमुदिनी कुमुदनड़वेतसेभ्योड्मतुप् टिलोपे ङीप्। जातु कदाचिदपि मुदस्या अस्तीति मुद्वती प्रमोदवती न भवेत्। या यत्रानुरक्ता सा तत्रैव मोदते न अन्यस्य स्तवादिना न कदापि ततो विमुखीभवति इति भावः। अत्र वाक्ययोः साम्यस्य गम्यमानत्वात् दृष्टान्तालङ्कारः। तथाच दर्पणः, दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनमिति॥ १४७॥

कथास्विति। हे नाथ! अद्य वरं कथासु शिष्ये कथामात्रशेषा भवामि इत्यर्थः म्रिये इति यावत्। मरणं मे मनाक् प्रियम् इति निष्कर्षः। न म्रिये न जीवामि धृङवस्थाने इति धातोस्तौदादिकात् प्राप्तकाले कर्त्तरि लट् रिङ् शयग्लिङ्क्षु इति रिङादेशः। अन्यथा अमरणे इत्यर्थः मम भावम् आशयं त्वयि अनुरागमिति यावत् न अवगन्तासि न ज्ञास्यसि इत्यर्थः गमेर्लुटि सिप्। हे जीवाभ्यधिक! प्राणाधिक! मां त्वदर्थं त्वन्निमित्तं मुक्ताः त्यक्ताः असवः प्राणा यया तथोक्ता तस्या भावः तत्ता तया त्वदप्राप्तौ त्यक्तप्राणतया आशु शीघ्रं त्वमेव एकः मुख्यः। एके मुख्यान्य केवला इत्यमरः। यस्याः तां त्वन्मात्र-

महेन्द्रहेतेरपि रक्षणं भया-
द्यदर्थिसाधारणमस्त्रभृद्व्रतम्।
न सूनबाणाशुगतोऽपि मामवन्
क्षतं तदुच्चैरवकीर्णिनस्तव ॥ १४९ ॥

शरणामित्यर्थः शैषिके कपि कात्पूर्वस्येकारः। प्रतीहि जानीहि विश्वसिहि इत्यर्थः। प्राणाधिकं त्वामलब्ध्वा मया प्राणास्त्यक्ता इत्याकर्णनेन त्वयि मदनुरागं ज्ञास्यसि इति भावः। सुनाथेति पाठे शोभनो नाथः सुनाथः तत्सम्बुद्धिः। यद्वा असुनाथ प्राणनाथ इत्यर्थः अथवा असून् प्राणान् नाथते प्रार्थयते इत्यसुनाथः प्राणग्रहणलुब्ध इत्यर्थः अतिकठिन इति भावः तत्सम्बुद्धिः। उपालम्भपरमिदं सम्बोधनमिति केचित् ॥ १४८ ॥

महेन्द्रेति। महेन्द्रस्य हेतिरस्त्रं वज्रमित्यर्थः तस्मात् यत् भयं तस्मात् रक्षणं परित्राणं भीत्रार्थानां भयहेतुरित्युभयत्रा-ऽपि अपादानात् पञ्चमी। यत् अर्थिषु याचकेषु भीतेषु इति भावः। साधारणं स्त्रीपुरुषाविवेकेन सामान्यमित्यर्थः अस्त्रं बिभ्रतीति अस्त्रभृतः शूराः तेषां व्रतम् अवश्यकर्त्तव्यरूपनियमः तत् सूनं कुसुममेव बाणो यस्य स सूनबाणः कामः तस्य आशु-गतः आशुगात् शरात् अतिकोमलात् इति भावः। अपि मां नावन् अरक्षन् इत्यर्थः। हे नल ! अतएव अवकीर्णिनः क्षत-व्रतस्य शरणागताया मम रक्षणरूपं व्रतमपालयत इत्यर्थः। अवकीर्णी क्षतव्रत इत्यमरः। उच्चैः अतिशयेन क्षतं नष्टं सर्वा-भयदानव्रतिनः तव पुष्पायुधात् त्वदेकशरणाया मम्मारक्षण-मयुक्तमिति भावः ॥ १४९ ॥

तवास्मि मां घातुकमप्युपेक्षसे
मृषामरं हाऽमरगौरवात् स्मरम् ।
अवेहि चण्डालमनङ्गमङ्ग ! तं
स्वकाण्डकारस्य मधोः सखा हि सः ॥ १५० ॥
लघौ लघावेव पुरः परे बुधैः
विधेयमुत्ते जनमात्मतेजसः ।

---

तवेति । हे प्रिय ! अस्मि अहं तव त्वदीया एवाहमस्मीत्यर्थः हा इति खेदे मां त्वां प्रियामिति भावः । घातुकं स्वशरणागतस्त्रीहन्तारमपीत्यर्थः । लषपतेत्यादिना उकञ् न लोकेत्यादिना कर्मणि षष्ठीनिषेधात् द्वितीया । मृषामरं कुत्सितदेवं भगवता हरेण दग्धत्वात् अमरत्वशून्यमिति वार्थः यदि असौ अमरः तदा कथं दग्ध इति भावः । तं स्मरम् अमरगौरवात् अमरोऽयमिति गौरवात् अमरत्वेन पूज्यत्वादिति भावः । यद्वा अमरोऽयमविनाश्योऽयमिति गौरवात् अशक्यमारणत्वादिति भावः उपेक्षसे ? नैतदुपेक्षणं युक्तमिति भावः । ननु सत्यमेतत् तथापि देवत्वसामान्यमस्यास्तीति कथं तद्वधः क्रियते इत्यत्राह अवेहीति । अङ्ग भोः ! हि यतः सः कामः स्वस्य काण्डाः शराः पुष्पमया इति भावः । तान् करोतीति तथाभूतस्य मधोः वसन्तस्य काण्डोऽस्त्रीदण्डबाणेत्यमरः । सखा मित्रं तस्मात् तम् अनङ्गं चाण्डालम् अवेहि जानीहि काण्डकारत्वं चाण्डालधर्मः वसन्तस्य तत्कारत्वात् चाण्डालत्वमेव ततश्च तत्संसर्गिणोऽस्यापि चाण्डालत्वम् अतः तद्वधे को दोष इति भावः ॥१५०॥

ननु लघुत्वात् तदुपेक्षणं नतु गौरवादित्यत्राह, लघाविति । बुधैः विद्वद्भिः पुरः पूर्वं लघौ लघौ एव क्षुद्रे क्षुद्रे एव क्षुद्रप्रकारे इत्यर्थः । प्रकारे गुणवचनस्येति द्विर्भावः । परे अग्नौ

तृणे तृणेढि ज्वलनः खलु ज्वलन्
क्रमात्करीषद्रुमकाण्डमण्डलम् ॥ १५१ ॥
सुरापराधस्तव वा कियानयं स्वयंवरायामनुकम्पता मयि ।
गिरापि वश्यन्ति मखेषु तर्पणादिदं न देवा सुखलज्जयैव ते १५२

---

पूर्वादिभ्यो विकल्पात् सर्वनामाभावः। आत्मतेजसः स्वप्रतापस्य उत्तेजनम् उद्दीपनं विधेयं कर्त्तव्यम्। क्षुद्रशत्रुजयाभ्यासेन क्रमात् महानपि शत्रुः जेतुं शक्यते तस्मात् अभ्यासार्थं प्रथममल्पोऽपि शत्रुर्जेतव्यः नतूपेक्षणीय इति भावः। तथाहि तृणे ज्वलन् ज्वलनः अग्निः नन्द्यादित्वाल्ल्युट्प्रत्ययः। क्रमात् करीषाः शुष्कगोमयाः गोविट् गोमय मस्त्रियां तत् तु शुष्कं करीषोऽस्त्रीत्यमरः। द्रुमकाण्डाः वृक्षस्कन्धाः तेषां मण्डलं राशिं तृणेढि हिनस्ति खलु दहत्येव इत्यर्थः। तृहि हिंसायामित्यस्मात् लट् रुधादिभ्यः श्नम् तृणह इम् गुणधत्वादिकार्य्यम्। अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १५१ ॥

अथ नलस्य देवेषु अपराधशङ्कां निरस्यति सुरापराध इति। स्वयम् आत्मनैव वृणुते इति स्वयंवरा। पचाद्यच्। तस्यां स्वेच्छया पतिं वरीतुं प्रवृत्तायाम् इत्यर्थः। मयि तव अनुकम्पते इति अनुकम्पः तस्य भावः तत्ता अनुकम्पेत्यर्थः। अनुकम्पाया स्वीकार इति भावः। नमिकम्पीत्यादिना ताच्छील्ये रप्रत्यये भावे तल्प्रत्ययः। अयं तव सुरेषु देवेषु अपराधः तद्दिरुद्धाचरणमिति भावः। कियान् वा ? किं परिमाणो वा ? स्वल्प एवेति भावः। तेषामर्थे प्रेषितस्य तव तान् वञ्चयित्वा स्वयं तदीप्सितपरिग्रह एव महान् दोषः अयन्तु न तथा तेषां दौत्यस्य अकापट्येन कृतत्वात् तत्र यदि अहं स्वयमेव

व्रजन्तु ते तेऽपि वरं स्वयंवरं
प्रसाद्य तानेव मया वरिष्यसे ।
न सर्वथा तानपि न स्पृशेद्दया
न तेऽपि तावन्मदनस्त्वमेव वा ॥ १५३ ॥

---

तान् परित्यज्य त्वां वृणे तत्र कस्तव दोषः केवलं तैः प्रेषितस्य तव कथं स्वयं तदिष्टवस्तुस्वीकार एव दोष इति चेत् स लघुरेवेति तात्पर्य्यम्। तदेवमपराद्धत्वेऽपि ते देवा मखेषु यज्ञेषु तर्पणात् प्रीणनात् ते तव मुखलज्जया चक्षुर्लज्जया इति भावः। इदं ते अपराद्धत्वं गिरापि वचनेनापि न वक्ष्यन्ति अपिशब्दात् मनसापि न स्मरिष्यन्तीत्यर्थः। दृश्यते च लोकेषु बहूपकारिणं जनं स्वल्पेऽपराधे मुखलज्जया न किमपि कोऽपि वदतीति। तस्मात् तदपराधशङ्का न कार्य्येति तात्पर्य्यम् ॥ १५२ ॥

व्रजन्त्विति। हे नाथ! ते देवा अपि ते तव सम्बन्धिनं स्वयंवरं व्रजन्तु आगच्छन्तु वरम् एतदपि मनाक्प्रियमित्यर्थः। देवाद्वृते वरःश्रेष्ठे त्रिषु क्लीवे मनाक्प्रिये इत्यमरः। ते ते देवा इति योजना। किं तेनेत्याह प्रसाद्येति मया तान् देवान् प्रसाद्य प्रसन्नान् कृत्वा त्वं वरिष्यसे। ननु त्वद्वरणार्थमागतानां तेषां त्वदप्राप्तौ कथं प्रसाद इत्यत्राह, नेति। तानपि महामहिमशालिनो देवान् अपि दया सर्वथा सर्वप्रकारेण कथमपि इत्यर्थः, न स्पृशेत्? अपितु स्पृशेदेव। यथाकथञ्चित् ते मया दयालवः करणीया एवेति भावः। ते देवा अपि तावत् मदनः कामः त्वमेव वा न। मदनस्त्वञ्चोभौ यथा नितरां निर्दयौ तथा ते नेत्यर्थः ॥ १५३ ॥

इतीयमालेख्यगतेऽपि वीक्षिते
त्वयि स्मरव्रीड़समस्यया ऽनया ।
पदे पदे मौनमयान्तरीपिणी
प्रवर्त्तिता सारघसारसारिणी ॥ १५४ ॥

---

इतीति। आलेख्यगतेऽपि चित्रफलकचित्रितेऽपि त्वयि वीक्षिते दृष्टे सति स्मरव्रीड़योः कामलज्जयोः समस्या समावेशः यस्यां तथाभूतया कामलज्जावत्या इत्यर्थः। यद्वा स्मरेण कामेन या व्रीड़ा लज्जा तस्याः समस्या समावेशो यस्यां तथोक्तया कामावेशजनितलज्जावत्येत्यर्थः। समस्या तु समासार्थेत्यमरः। अनया सख्या दमयन्त्या पदे पदे स्थाने स्थाने मध्ये मध्ये इत्यर्थः आपोऽस्यान्तरित्यन्तरीपं जलान्तर्वर्त्तितटं द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटमित्यमरः। ऋक् पूरित्यादिना समासान्तोऽप्रत्ययः। द्व्यन्तरुपसर्गेभ्योऽप इदितीकारः। मौनमयम् अभाषणरूपम् अन्तरीपं यस्याः सा उक्तमौनान्तरीपेत्यर्थः। सर्वधन्वीतिवदिनन्तो बहुव्रीहिः अटघाड्वित्यादिना णत्वम्। इतीयम् एवम्प्रकारा सरघा मधुमक्षिका तत्कृतं सारघं मध्वित्यर्थः, तस्य सारः श्रेष्ठांशः तस्य सारिणी स्वल्पा नदी सारिणी स्वल्पसरिदिति विश्वः। प्रवर्त्तिता चित्रगतस्यापि तवाग्रे इत्थं कामलज्जावशात् मध्ये मध्ये मौनशालिनी मधुवर्षिणी वागुक्ता अधुना साक्षात्कृते त्वयि अतीव कामलज्जावशवर्त्तिनी मन्मुखेन सर्वमेतदुक्तवतीति भावः। सारिणीत्यत्र स्राविणीति पाठे स्राविणी नदीत्यर्थः। स्रवन्ती स्राविणी धुनीति वचः। अत्र विषयस्य वाचोऽनुपादानेन विषयिण्याः सारघसारसारिण्या एवोपनिबन्धात् तयोः भेदेऽप्यभेदोक्तेरतिशयोक्तिभेदः ॥ १५४ ॥

चण्डालस्ते विषमविशिखः स्पृश्यते दृश्यते न
ख्यातोऽनङ्गस्त्वयि जयति यः किन्तु कृत्ताङ्गुलीकः ।
कृत्वा मित्रं मधुमधिकवनस्थानमन्तश्चरित्वा
सख्याः प्राणान् हरति हरितस्त्वद्यशस्तद् गुषन्ताम् ॥ १५५ ॥

अथ भैम्याः कामपीडातिशयं निवेदयन्तौ सोल्लुण्ठनमाह, चण्डाल इति। विषमविशिखः पञ्चशरः कामः ते तव चाण्डालः वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञयेति स्मृतिवचनात्। मादृशवध्यमारणार्थमेव त्वया राज्ञा नियुक्त इति भावः। स्पृश्यते न दृश्यते च न चाण्डालस्पर्शनिषेधात् दर्शनेऽपि पातकोत्पत्त्यादिति भावः। अथच अनङ्गत्वात् दर्शनस्पर्शनयोरभावः। त्वयि जयति सति कृत्ता छिन्ना अङ्गुली यस्य स कृत्ताङ्गुलीकः किं नु ? यतोऽसौ विषमविशिखः दारुणशरः अतएव नृपाज्ञया देशविशेषेऽस्य तीक्ष्णशरप्रहारित्वेन प्रजाक्षयसम्भावनया अङ्गुलिच्छेदो विधीयते येन असौ शरान् प्रक्षेप्तुं न शक्नोतीति भावः। अतएवासौ अनङ्गः अङ्गुलिरिकत्वात् इति भावः ख्यातः प्रसिद्धः। यद्वा कृतापराधत्वात् वधदण्डयोर्म्यत्वेऽपि तव शरणागत इति किञ्चिद्दण्डविधानार्थं कृत्ताङ्गुलीकः। नद्यृतश्चेति कप्। पथमङ्गुलिविच्छेदमुरो विन्यस्तमक्षरम्। तन्नामकरणं चेति दण्डमेतत् चतुष्टयमिति स्मरणात्। अतएव अङ्गहीनत्वात् अनङ्गः ख्यातः किं नु ? तथापि यः वसन्तमपि मित्रं कृत्वा मत्रायमासाद्य अधिकवनस्थानं वनस्थाने अन्तः अरण्याभ्यन्तरमित्यर्थः चरित्वा भ्रमित्वा सख्यः तव प्रियायाः प्राणान् हरति नाशयति, हरितो दिशः तत्चाण्डालकर्तृकत्वप्रियाप्राणहरणं त्वद्यशः तव कीर्त्तिं गुषन्तां गायन्तु। यथा च इयं

अथ भीमभुवैव रहोऽभिहितां नतमौलिरपत्रपया स गिराम्।
अमरैः सह राजसमाजगतिं जगतीपतिरभ्युपगम्य ययौ॥१५६॥
अस्तस्याः प्रियमाशु मुहुरभितो धाराः स्रजत्या रयात्
नम्रोत्तुङ्गकपोलपालिपुलकैर्वेतस्वतीरश्रुणः।
चत्वारः प्रहराः स्मरार्त्तिभिरभूत् सा यत् क्षपा दुःक्षपा
तत्तस्यां क्षपयाखिलैव विधिना रात्रिस्त्रियामा कृता॥१५७॥

कामचण्डालहस्तात् परित्राणं लभते तथा क्रियताम् अन्यथा ते यशो दिगन्तव्यापकं भविष्यति इति भावः। अत्र कामस्य चाण्डालधर्मयोगित्वेन तस्योत्प्रेक्षणादुत्प्रेक्षालङ्कारः। मन्दाक्रान्तावृत्तम्। मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात्॥ १५५॥

अथेति। अथ अस्या वाक्यश्रवणानन्तरं जगतीपतिः नृपो नलः भीमभुवैव दमयन्त्या एव रहसि एकान्ते अभिहितां व्रजन्तु ते तेऽपीति श्लोकेन कथितां गिरां स्वीयाम् अमरैः इन्द्रादिभिः सह राजसमाजगतिं राजसभारूपस्वयंवरदेशगमनम् अभ्युपगम्य अङ्गीकृत्य अपत्रपया सखीवचनश्रवणजनितया लज्जया नतमौलिरवनतमस्तकः सन् ययौ गतवान्। तोटकावृत्तं, वद तोटकमब्धिसकारयुतमिति तल्लक्षणात्॥१५६॥

अथ तस्मिन् नले प्रस्थिते दमयन्त्या रात्रिः अतिकष्टेनातिवाहितेत्याह अस्त इति। अस्तः परेऽहनि प्रियं नलम् आशुम् उद्धुरा व्यग्रा धीः यस्याः तथाभूतायाः अतएव रयात् वेगात् नम्राश्च उत्तुङ्गाश्च तैः नतोन्नतैः इत्यर्थः कपोलपाल्योः गण्डभित्त्योः पुलकैः रोमाञ्चैः वेतस्वतीः वेतसलतावतीः कुमुदनड्वेतसेभ्योड्मतुप् मदुपधायाश्चेत्यादिना मकारस्य वकारः।

तदखिलमिह भूतं भूतमत्या जगत्याः
पतिरभिमपतिस्म स्वात्मदूतत्वतत्त्वम् ।
त्रिभुवनजनमध्याक्रन्दसाक्षात्-साक्षात्-
कृतिकृतिषु निरस्तानन्दमिन्द्रादिषु द्राक् ॥ १५८ ॥

---

अम्बुनो धाराः हर्षाम्बुप्रवाहान् सृजन्त्याः वर्षन्त्याः तस्या भैम्या चत्वारः प्रहराः चतुर्यामवती सा क्षपा रात्रिः त्रियामा क्षणदा क्षपेत्यमरः । स्मरार्त्तिभिः कामपीड़ाभिः यत् यस्मात् दुःक्षपा दुःखेन क्षपणीया अतिवाहनीया इत्यर्थः अभूत् तत्तस्मात् विधिना विधात्रा तस्यां भैम्यां कृपयैव अनुकम्पयैव अखिला सर्वा रात्रिः त्रियामा त्रिप्रहरैव कृता । यदेषा रात्रिः अद्यापि त्रियामा दृश्यते तत् दमयन्त्यां कृपया विधिनैव तत आरभ्य निर्द्धारितमिवेति भावः । अत्र व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा । सा रात्रिः तया अतिदुःखेनातिवाहितेति तात्पर्य्यम् । रात्रेः आद्यन्तयामयोः दिनवद्व्यवहारात् रात्रेः त्रियामात्वम् । तथाच स्मृतिः, त्रियामां रजनीं प्राहुः त्यक्त्वाद्यन्तचतुष्टयम् । नाड़ीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते ॥ इति । शार्दूलविक्रीड़ितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितमिति तल्लक्षणात् ॥ १५७ ॥

नलोऽपि देवेन्द्रादिसमीपं गत्वा यथावृत्तं तेभ्यः सर्वमाचख्यौ इत्याह, तदिति । जगत्याः पतिः पृथिवीपतिः नलः इह दमयन्तीसमक्षं भूतं वृत्तम् अखिलं समस्तं तत् स्वात्मनः दूतत्वं तस्य तत्त्वं याथार्थ्यं भूतगत्या तथ्यरूपेण त्रयाणां भुवनानां समाहारः त्रिभुवनं तद्धितार्थेत्यादिना समाहारद्विगुः । एकवचनं पात्रादित्वात्र स्त्रीत्वम् । तस्मिन् ये जनाः लोकाः तेषां

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं
संदृब्धार्णववर्णनस्य नवमस्तस्य व्यरंसीन्महा·
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वल

---

यावन्ति वृत्तानि यावद्वृत्तं यावदवधारणे इत्यव्ययीभावः
वृत्तान्त· वार्त्ता तस्य साक्षात्कृतौ प्रत्यक्षदर्शने कृतिनः
तेषु अन्तर्यामितया सर्वजगद्वृत्तदर्शिषु इत्यर्थः इन्द्रादि
सपदि झटितीत्यर्थः। द्राक् झटित्यञ्जसा ह्नायेत्यमरः
रस्तः आनन्दः यस्मिन् तत् दूत्यानिर्वाहात् निरानन्द
षादमिति यावत् यथा तथा अभिलपति स्म आख्
मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैः इ
लक्षणात्॥ १५८॥

श्रीहर्षमिति। सन्दृब्धं ग्रथितम्। ग्रथितं ग्रन्थितं
इत्यमरः। अर्णवस्य समुद्रस्य वर्णनं येन तादृशस्य अर्ण
रूपकाव्यं कृतवत इत्यर्थः। व्यरंसीत् विरतः समा
इत्यर्थः। अन्यत् सर्वं प्राक् व्याख्यातम्। विपूर्वाद्रमः
विपराजीत्यनेन परस्मैपदम्॥ १५९॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
नवमसर्गव्याख्या समाप्ता।